"मुद्गयूषौदनः शीतः ससितः पैत्तिके ज्वरे ॥
स एव शर्करां त्यक्त्वा देयः कफसमुत्थिते" ॥

इत्येवमभिदध्यात्। स एवेति। मुद्गयूषौदन एव। ननु कफजे तावद्यवाग्वा अहितत्वं दर्शितं पैत्तिकेऽन्नकाले सशर्करमुद्गयूषौदनस्य दानं तथा वातिके रसौदनस्य विधिस्तदेवं कतमो दोषो ज्वरे यथोक्तयवागूविधिविषयः। उच्यते। कफजेऽतिमात्रवृद्धे कफे यवाग्वा अहितत्वम्। पित्तज्वरेऽप्यतिवृद्धे पित्ते सशर्करमुद्गयूषौदनो देयः। अनतिवृद्धयोस्तु कफपित्तयोर्यवागूविधिरेव। तथा च तन्त्रान्तरम्—

"कफजेऽपि यदा क्षीणो लङ्घनादिक्रमात्कफः ॥
शस्ता एव यवागूस्तु तथा पित्तेऽप्ययं क्रमः" इति ॥

वातिके तु निरामे वाते दीप्तेऽग्नौ रसौदनः। यदाह सुश्रुत एव—

"उपवासश्रमकृते ज्वरे वाताधिके तथा।
दीप्ताग्निं भोजयेत्प्राज्ञो नरं मांसरसौदनम्" इति ॥

उपवासश्रमाभ्यां निराम एव वातः कुप्यति सामे तु वाते मन्देऽग्नौ यवागूर्दीयत एवेति न कश्चिद्दोषः ॥ ४३ ॥

संप्रति द्वंद्वजेष्वाहारविधिः—

**मुद्गामलकयूषस्तु वातपित्तात्मके हितः ॥**

अत्राऽऽमलकापेक्षयाऽऽहारद्रव्यत्वान्मुद्गस्य भूयसी मात्रा। योगोऽयमन्नपानाध्याये सुश्रुतेन पित्तकफहरत्वेन निर्दिष्टस्तत्कथमिह वातपित्तज्वरेऽभिहितो न विकृतौ तस्याप्यन्यथाशक्तित्वादिति कार्तिकः।

**ह्रस्वमूलकयूषस्तु कफवातात्मके हितः ॥ ४४ ॥**

ह्रस्वमूलकयूषस्त्विति। ह्रस्वमूलकं बालमूलकं शिम्बीधान्यं विना यूषस्य व्यपदेशाभावात्। अत्र मुद्गादीन्यपि देयानीत्याहुः। अन्ये पुनर्यूषशब्देन क्वाथमेव ब्रुवते यथा वाट्यालककृतो यूष इत्यादौ। एवमन्यत्रापि व्याख्येयम् ॥ ४४ ॥

**निम्बकूलकयूषस्तु हितः पित्तकफात्मके ॥**

निम्बकूलकयूषस्त्विति। कूलकं पटोलपत्रम्।

**यथास्वं पाचनैः सिद्धं +वातपित्तकफात्मके ॥ ४५ ॥**

यथास्वं पाचनैरिति। प्रत्येकं वाताद्युक्तपाचनद्रव्यैर्मिलितैः। वातपित्तकफज्वर इति। प्रत्येकं वातादिज्वरे। सिद्धमिति। अतः परमन्नं हितमिति शेषः ॥४५॥

द्वंद्वसंनिपातयोरन्नसाधनाय योगान्तरमाह—

**लघुना पञ्चमूलेन पिप्पल्या सह धान्यया ॥
महत्या पञ्चमूल्या तु व्याघ्रीदुःस्पर्शगोक्षुरैः ॥ ४६ ॥**

+ अत्र टीकानुरोधेन 'वातपित्तकफज्वरे' इति पाठः स्यात्।

**सिद्धानि भिषगन्नानि प्रयुञ्जीत यथाक्रमम् ॥**
**वातपित्ते श्लेष्मपित्ते कफवाते त्रिदोषजे ॥ ४७ ॥**

लघुना स्वल्पेन । व्याघ्रीदुःस्पर्शगोक्षुरैरिति । व्याघ्री कण्टकारी । दुःस्पर्शो दुरालभा ॥ ४६ ॥ ४७ ॥

उक्तयवाग्वादिसाधने जलभेषजयोर्मानव्यवस्थापनाय परिभाषात्रयमाह—

**क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके ॥**
**अर्धशृतेन तेनाथ यवाग्वाद्युपकल्पयेत् ॥ ४८ ॥**

अञ्जलिः पलचतुष्टयम् । श्रपयित्वा पाचयित्वा । जलाढके जलस्य षोडशशरावे । द्रव्यं तावद्द्विविधं वीर्यप्रधानं रसप्रधानं च । वीर्यप्रधानं भेषजद्रव्यं रसप्रधानमाहारद्रव्यम् । तत्र रसप्रधानाहारद्रव्याभिप्रायेणात्र चतुष्पलद्रव्याभिधानं तेन परिभाषेयम् । सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मतेत्यादिकार्यार्थं यवाग्वादयो ज्ञेयाः ॥ ४८ ॥

**वृद्धवैद्याः पलं द्रव्यं ग्राहयन्त्याढकेऽम्भसि ॥**
**भेषजस्यातिबाहुल्यात्कदाचिदरुचिर्भवेत् ॥ ४९ ॥**

वृद्धवैद्यव्यवहारोद्भटव्याख्यातो वृन्देन श्लोकं कृत्वा लिखितः ॥ ४९ ॥

**यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते ॥**
**कर्षमात्रं ततो द्रव्यं साधयेत्प्रास्थिकेऽम्भसि ॥**
**अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥ ५० ॥**

**यदप्सु शृतशीतास्विति** । सप्तमीयं निमित्तात्कर्मयोग इत्यनेन । तेन शृतशीतजलनिमित्तमित्यर्थः । षडङ्गादीत्यत्राऽऽदिशब्दाद्यवाग्वादिपरिग्रहः । अत्र षडङ्गस्य साधनाय मध्यवीर्यस्यापि द्रव्यस्य कर्षो मन्दानलपुरुषविषयो ज्ञेयः । मध्यवीर्यस्य हि द्रव्यस्यार्धपलत्वमग्रे व्यवस्थाप्यम् । इमामेव परिभाषां व्यवहारायाऽऽद्रियन्ते भिषजः ॥ ५० ॥

**कर्षार्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम् ॥ ५१ ॥**
**विनीय पाचयेद्युक्त्या वारि प्रस्थेन चापरान् ॥**
***यूषान्नरसकांश्चैव कल्पेनानेन साधयेत् ॥ ५२ ॥**

कर्षार्धं वेति प्रत्येकम् । कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणं तेन तीक्ष्णद्रव्यस्य कर्षो ग्राह्यः । **कल्कद्रव्यस्य वा पलमिति** । मृदुवीर्यस्याऽऽमलकादेः पलं ग्राह्यम् । अत्र तीक्ष्णमृदुद्रव्ययोः कर्षपलमानव्यवस्थया मध्यवीर्यस्यापि बिल्वाग्निमन्थादेर्मध्यवीर्यविधिनाऽर्धपलत्वमूह्यमित्याहुः । विनीय प्रक्षिप्य । **युक्त्या वारि प्रस्थेन चेति** । युक्त्या प्रस्थेन वारि ग्राह्यम् । अयमर्थः । यस्योत्तमबलानलत्वेन बहु यवाग्वादि

---

* इदमर्धं च. पुस्तके नास्ति ।

युज्यते तस्य युक्त्या जलप्रस्थद्वयत्रयमनुरूपतो दत्त्वाऽन्यतो दर्शनादर्धशृतं कृत्वा यवाग्वादि साधनीयम् । अल्पबलानलस्य तु वारि प्रस्थेन । अपरानिति यूषरसादीन् । चक्रस्त्वपरामिति पठति व्याचष्टे च । अपरामुक्तायाः क्वाथसाध्ययवागूतोऽन्यां कल्कसाध्यामित्यर्थः । तन्मते परिभाषेयं कल्कसाध्ययवागूविषया ज्ञेया । यवाग्वां चास्यां तण्डुलमानं सुश्रुतवचनाद्बोद्धव्यम् । तद्यथा—

'विलेपीमुचिताद्भक्ताच्चतुर्भागकृतां वदेत्' इति ।

तन्त्रान्तरोक्तो विशेषः—

"स्याद्धितः साधितो यूषस्त्वष्टादशगुणे जले ।
चतुर्दशगुणे पेया यवागूः षड्गुणे जले ॥
शृतं पञ्चगुणे भक्तं विलेपी च चतुर्गुणे" इति ॥

अत्र हेमाद्रिव्याख्यानम् । कर्षार्धमित्यादि । अत्र द्वात्रिंशत्पले जले क्वाथ्यस्य कर्षार्धं कर्षः पलं वा तीक्ष्णसौम्यातिसौम्यत्वे सति कणाशुण्ठ्योरिति षडङ्गादीति कल्कद्रव्यस्येति पदैस्तीक्ष्णादीनां ग्रहणात् । यस्य कल्कोऽप्यतिसौम्यत्वात्पातुं न शक्यते किं पुनः क्वाथस्तत्कल्कद्रव्यम् । अपरान्सार्धकर्षद्विकर्षादीन्युक्त्या तीक्ष्णाद्यवयवान्तरविशेषपर्यालोचनया पाचयेत् । आढकेऽञ्जलिः पलं वेत्येतत्प्रस्थे पलं कर्षो वेत्यनेन गतार्थमप्यरुचिर्यथा न स्यात्तथा कल्प्यमित्येतदर्थमुक्तम् ॥ ९१ ॥ ९२ ॥

यवाग्वा अनन्तरं पाचनत्वसामान्यात्सदाप्राणयात्राहेतुत्वेनानिषिद्धत्वाच्च दोषापेक्षया जलमुष्णं शृतशीतं चाऽऽह—

**कफवातज्वरे देयं जलमुष्णं पिपासवे ॥**

जलं सदा प्राणयात्राहेतुत्वेनापि निषिद्धमिति चेत् । न । आदाने सद्योऽत्ययहेतुत्वात् । उक्तं हि हारीते—

"तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी ।
तस्माद्देयं तृषार्ताय पानीयं प्राणधारणम्" इति ॥

तच्चार्धावशिष्टं देयम् । कफवातज्वर इति । व्यस्तसमस्तकफवातज्वरे कफज्वरे वातज्वरे कफवातज्वरे च । पिपासवेऽत्यर्थतृषिताय न स्वल्पतृषिताय । जलं दोषपाकान्तरायत्वात् ।

उक्तं च—"निरिन्धनो हि कायाग्निर्दोषानिन्धनवत्पचेत् ॥
तस्मादनशनं कुर्यात्पक्त्यर्थं तरुणे ज्वरे ।
अत्यर्थतृषितानां च दोषपाकानुकूलयोः" ॥

पित्तमारुतयोरुद्गमाद्दोषपाकान्तरायो नास्ति । एवंगुणमप्युष्णोदकं ज्वरेऽल्पं देयमित्याचार्याः ।

4372

"विपाके मधुरं वीर्ये शीतमुष्णमपि स्मृतम् ॥
यतस्ततोऽल्पयोगेन लाघवाय प्रयोजयेत्" इत्युक्तत्वात् ।

शृतशीतगुणमाह—

**पित्तमद्यविषोत्थेषु तिक्तकैः शृतशीतलम् ॥ ९३ ॥**

एतेन ज्वरे कफवातजेऽर्धावशिष्टमुष्णं जलं हितम् । पित्तजे तिक्तकशृतशीतं जलं हितम् । असंस्कृतं शीतं शृतशीतं च निषिद्धम् । अत्रोच्यते—

"वह्निसादकरं श्लेष्मस्त्यानत्वापादकं तथा ।
पित्तवातावरणकृत्कफवातज्वरे हितम् ॥
तृष्णाकरं च दोषाणां स्रोतसां कठिनत्वकृत् ।
शीतं वा शृतशीतं वा पीतं स्यादुष्णतोऽन्यथा" ॥

**पित्तमद्यविषोत्थेष्विति** । मद्यविषयोरपि पित्तकर्तृत्वात्तज्जन्यज्वरस्य पित्तजन्यत्वेन परिग्रहे सिद्धे पुनस्तदभिधानमन्यस्मिन्नपि मद्यविषोत्थरोगे तिक्तकशृतशीतजलस्य यौगिकबोधनार्थमिति **गदाधरः** । मद्यविषोत्थे ज्वरे कफवातजेऽपि तिक्तकशृतशीतविध्यर्थमित्यन्ये । **तिक्तकैः शृतशीतलमिति** । तिक्तकशृतमेव शीतलम् । तिक्तकानि च वक्ष्यमाणमुस्तादीनि ॥ ९३ ॥

आमज्वरे हि तिक्तकरसः पाचनं तिक्तकस्य बहुत्वाद्यौगिकतिक्तकं च मुस्तादि तदाह—

**मुस्तापर्पटकोशीरचन्दनोदीच्यनागरैः ॥
शृतशीतं जलं दद्यात्पिपासाज्वरशान्तये ॥ ९४ ॥**

अत्र शुण्ठ्यतितिक्ताऽप्यामाशयसमुत्थे ज्वरे पाचनत्वाद्विहितेति **श्रीब्रह्मदेवः** । यद्यप्यतितिक्ता शुण्ठी तथाऽपि प्रक्षेपणीयत्वात्पाचनीयत्वेन यौगिकत्वाच्चास्मिन्षडङ्गादियोगे नागरस्य प्रक्षेप इति । चन्दनं रक्तचन्दनम् । अविशेषोक्तौ च सर्वत्र चन्दनं रक्तचन्दनं गृह्यते । उदीच्यं वालकम् । यदप्सु शृतशीतास्वित्यादिना शृतशीतमेव तत्कर्तव्यम् ॥ ९४ ॥

पञ्चविधकषायकल्पनायां शृतशीतकषायेऽर्धशृतस्यावश्यमन्तर्भावान्नवज्वरे च कषायनिषेधात्षडङ्गादेरपि निषेधः स्यादित्याशङ्क्य **वृन्दः** स्वनिर्मितगाथया सिद्धान्तं कुरुते—

**पादशिष्टः कषायः स्याद्यः षोडशगुणाम्भसा ॥
क्वथितोऽतः षडङ्गादिर्न निषिद्धो नवज्वरे ॥ ९५ ॥**

पादशिष्टः षोडशगुणाम्भसा क्वथितो यः स कषायो मुख्यत्वान्नवज्वरे निषिद्धो न त्वर्धशृतषडङ्गादिरमुख्यत्वात् । अत एवाऽऽह **चक्रः**—

"मुख्यभेषजसंबन्धो निषिद्धस्तरुणज्वरे ।
तोयपेयादिसंस्कारैर्निर्दोषं तेन भेषजम्" इति ।

मुख्यत्वं चान्नपानसाधनव्यतिरिक्तकल्पनोपयोग्यत्वं तन्त्रे साक्षात्कल्पनोपयोज्यत्वं वा । न चेह पादशिष्टकषायनिषेधेनाष्टभागावशिष्टकषायस्य स्वरसादेर्वा प्रसङ्गो येन पादशिष्टकषायो दोषावहमुख्यभेषजोपलक्षणम् । तेनाष्टभागशिष्टकषायस्वरसादेरपि निषेधा बोद्धव्या लघोरर्धशृतषडङ्गादेर्विधानसमर्थनार्थम् । एवंविधायां सृष्टौ का वा कथा गुरुतमाष्टभागशिष्टकषायस्वरसादिविधानस्य । अत एव वृद्धसुश्रुतेन न दद्यात्तत्र भेषजमिति सामान्येनैव नवज्वरे भेषजनिषेधः कृत इति ॥ ९५ ॥

नवज्वरे सामरसदोषे रसनादुष्टावरुचिः स्यात्तस्याः प्रतिकारमाह—

**अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम् ॥**
**धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् ॥ ९६ ॥**

आज्यं घृतम् ॥ ९६ ॥

ज्वरितस्यारुचावपि हितभोजनं नियमयन्नाह—

**ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् ॥**
**अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽपि वा ॥ ९७ ॥**

अस्यायमर्थः । यद्यप्यस्यारुचिः स्यात्तथाऽपि ज्वरितो हितमेवाश्नीयादेवेत्युभयत्रापि नियमः । सिद्धे हि विधिरारभ्यमाणो नियमार्थः । तत्र हि दिनान्ते भोजयेदित्यनेन भुजिक्रियाऽप्युक्ता । हितमप्युक्तमेव । अत एवाभोजनाहितभोजनैर्दोषं वक्ष्यति । अन्ये त्वरुचौ सत्यां हितस्याशितुमप्रतिभासनादपिशब्दं भिन्नक्रमेण योजयित्वा नञं च प्रश्लिष्यान्यथा व्याचक्षते । ज्वरितोऽहितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् । अभुञ्जानस्य क्षयमरणलब्धेः । अस्यां व्याख्यायामुत्तरश्लोकोऽपि नाहितप्रतिषेधायान्यथा व्याख्यानात् । गुर्वभिष्यन्द्यकाले च ज्वरी ना नरोऽद्यात्कथंचन सकृत् । यतो भुक्तं भोजनं तस्य नाहितमायुषे वा सुखाय वा तुशब्दस्य निपातस्यानेकार्थत्वाद्वेति भवत्येवैषा व्याख्या यद्यहितार्थमुपदेशः स्यात्किं तु हितस्यैव सर्वत्रोपदेशः । अथावस्थायां तु तदपि हितमिति चेत्तर्हि हितमिति व्याहृतं तस्माद्धितमेव कल्पनाविधिभिस्तैस्तैर्मनःप्रियं यथा स्यात्तथाऽश्नीयात् । तथाचोक्तं सातत्यादिति । एवं चोत्तरश्लोकोऽप्याहितप्रतिषेधायैव युज्यते ।

**अथ डल्लणव्याख्या**—इदानीं जीर्णज्वरितस्यारुचावपि हितभोजनोपदेशमाह—**ज्वरितो हितमित्यादि** । अस्य जीर्णज्वरिणो यदि हितभोजने कथंचिदरुचिः स्यात्तदा हितमेवानेकप्रकाराभिः कल्पनाभिर्मुखप्रियं कृत्वा रुचितृप्त्यर्थं ज्वरितोऽश्नीयात् ।

तथाच—"सातत्यात्स्वाद्वभावाच्च पथ्यं द्वेष्यत्वमागतम् ॥
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत्पुनः" इति ॥

---

१ घ. ङ. 'रुचारे निर्दो'।

तस्मादेवंविधमपि कृत्वा ज्वरितोऽश्नीयादित्याह—अन्नकाले ह्यभुञ्जान इत्यादि। अन्ये तु यद्यस्य जीर्णज्वरिणोऽरुचिः स्यात्तदाऽहितमप्यश्नीयादिति व्याख्यानयन्ति। ननु यद्यरुचौ सत्यामहितभोजनं क्रियते तर्हि गुर्वभिष्यन्द्यकाले चेत्याद्युत्तरोक्तश्लोकेन सह विरोधः। सत्यम्, अहितस्य सातत्यसेवननिराकरणार्थं गुर्वभिष्यन्द्यकाले चेत्यादि-श्लोक इति ॥ ५७ ॥

किं तदहितं यन्न भोज्यमित्याह—

गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात्कथंचन ॥
न तु तस्याहितं भुक्तमायुषे वा सुखाय वा ॥ ५८ ॥

अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदजनकम्। अकालेऽतीतेऽप्राप्ते वा काले। कथंचन कदाचित् ॥ ५८ ॥

अन्नकालं दर्शयति—

ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ॥
श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा * ॥ ५९ ॥

दिनान्तेऽपराह्णे ॥ ५९ ॥

हिते कुतो हेतोररुचिः स्यादित्याह—

सातत्यात्स्वाद्वभावाच्च पथ्यं द्वेष्यत्वमागतम् ॥
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत्पुनः ॥ ६० ॥

सातत्यात्सततोपयोगात्। स्वाद्वभावात्स्वादुरभीष्टो रसस्तस्याभावात्। स्वाद्वपि द्रव्यं सर्वदोपयोगादप्रियं स्यात्। अस्वादु तु सुतरामप्रियम्। उक्तहेतुभ्यां यदि पथ्यं द्वेष्यं स्यात्तदाऽपि तदेव पथ्यं कल्पनाविधिभिः कल्पनाप्रकारैस्तैस्तैर्भावैः स्वरसादिभिः सूदशास्त्रोक्तैश्च यूषरसपानकादिभिरातुरस्य प्रियत्वं नयेत्। अहितनिवृत्तेरपि चिकित्सितत्वात् ॥ ६० ॥

नवज्वरे निषिद्धान्याह—

परिषेकान्प्रदेहांश्च स्नेहान्संशोधनानि च ॥
दिवास्वप्नं व्यवायं च व्यायामं शिशिरं जलम् ॥
क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी ॥ ६१ ॥

परिषेकान्प्रदेहांश्चेत्यत्र परिषेकावगाहांश्चेति पाठं केचित्पठन्ति व्याख्यानयन्ति च। परिषेकः प्रसेकः। अवगाहो जलपूर्णकटाहादौ निमज्जनम्। अवगाहनिषेधात्स्नाननिषेधो

* खपुस्तके–'दोषधातुमलाम्भोऽम्बवाहिस्रोतोमुखानि यत्। भुक्तं क्लिम्पति पैच्छिल्यादभिष्यन्दि तदुच्यते' इत्यधिकमत्र।

१ च. °स्तथा ॥ ५९ ॥

बोद्धव्यः। स्नेहानिति स्नेहपानमभ्यङ्गं च। संशोधनानि वमनादीनि। संशोधनानीत्यत्र ज्वरे निषिद्धमपि संनिपातज्वरे प्रागेव संज्ञाप्रबोधनार्थं मार्गविशोधनार्थं च धूमाञ्जनावपीडमातुलुङ्गरसगण्डूषादिसंशोधनं वृद्धवैद्यव्यवहाराच्छास्त्रान्तरोक्तत्वाच्च प्रयुज्यते। भोज्यानि गुरूण्यत्र। यदुक्तं **सुश्रुतेन**—सारवन्ति च भोज्यानि वर्जयेत्तरुणज्वरीति। सारवन्ति स्निग्धगुरूणि ॥ ६१ ॥

परिषेकादिसेवनया किं स्यादित्याह—

**शोषच्छर्दिर्मदो मूर्छा भ्रमस्तृष्णा ह्यरोचकः ॥**
**प्राप्नोत्युपद्रवानेतान्परिषेकादिसेवनात् ॥ ६२ ॥**

एतत्तु परिषेकादौ यथार्हं ज्ञेयम्। **हारीतेन** तु प्रत्येकमेव दूषणमुक्तम्—

"व्यायामाज्ज्वरसंवृद्धिर्व्यवायात्स्तम्भमूर्छनम् ॥
मरणं पानतः स्नेहाच्छर्दिर्मूर्छा मदोऽरुचिः ॥
गुर्वन्नभोजनाच्चापि विष्टम्भो दोषकोपनम् ॥
शीतवारिकषायाच्च दोषविष्टम्भनाऽहिते ॥
अग्निसादः खरत्वं च स्रोतसां वातवर्धनम् ॥
तस्मादामज्वरे सर्वान्विषवत्परिवर्जयेत्" इति ॥ ६२ ॥

ननु कियन्तं कालं यावत्तरुणे ज्वरे परिषेकादि न कर्तव्यमित्याह—

**आसप्तरात्रात्तरुणं ज्वरमाहुर्मनीषिणः ॥**
**मध्यं चतुर्दशाहं तु पुराणमत उत्तरम् ॥ ६३ ॥**

**आसप्तरात्रादिति**। सप्तरात्रं व्याप्य। अभिविधावयमाङ्न मर्यादायां निरामज्वरकालत्वेनाष्टाहस्योक्तत्वात्। तरुणमत्यर्थमामम्। पुराणं जीर्णम्। यदुक्तं **जातूकर्णे**—जीर्णस्त्रयोदशे दिवस इति।

"त्रिसप्ताहे व्यतीते तु ज्वरो यस्तनुतां गतः।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते" ॥

इति तन्त्रान्तरमतिजीर्णाभिप्रायेणोक्तम्। मध्यपुराणयोस्तु प्रसङ्गादिहोक्तिः ॥ ६३ ॥

अथ दोषस्य सामतां प्रतिपाद्य निरामतां प्रतिपादयितुं पक्वलक्षणमाह—

**मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ॥**
**पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ६४ ॥**

मृदौ मन्दीभूते। मान्द्यं च ज्वरस्याऽऽमरसे क्षीणे स्रोतसि शुद्धे पुनः कोष्ठगते चोष्मणि भवति। प्रचलेषु प्रकर्षेण चलेष्वविबद्धेष्वित्यर्थः। मलेषु वातपित्तकफशकृदादिषु। पक्वं निरामम्। दोषमित्यनेन दुःखकर्तृत्वाच्छकृदाद्यप्युच्यत इत्याहुः। **देयं तदौषधमिति**। तस्मिन्काले दानार्हमौषधं चात्र शमनं शोधनं वा। तदा पाचनस्य

निरामस्वेनार्हत्वात् । तत्राल्पदोषे स्वस्थानाच्चलितेऽल्पबलस्य शमनम् । प्रभूते च दोषे स्वस्थानस्थे बलस्थस्य शोधनमिति । यदुक्तं दोषाः क्षीणा वर्धयितव्याश्चलिताश्च शमयितव्या वृद्धा निर्हर्तव्या इति ॥ ६४ ॥

ज्वरस्य संतापरूपायाः प्रकृतेर्विकृतिरूपं मृदुत्वं पक्वलक्षणमभिधाय दोषाणां प्रकृतेर्विकृतिरूपं पक्वलक्षणमेकीयमतेनाऽऽह—

**दोषप्रकृतिर्वैकृत्यादेकेषां पक्वलक्षणम् ॥ ६५ ॥**

**दोषप्रकृतिर्वैकृत्यादिति** । ज्वरारम्भकाले यो दोषस्वभावः संप्राप्तिरूपस्तस्यान्यथाभावात्तदन्यत्वादेकेषां पक्वलक्षणम् । अन्ये तु प्रथमाकृतिरामरसमूर्छितानां ज्वरजननसमर्थानां दोषाणां स्वकार्यस्य ज्वरतीक्ष्णत्वदेहगुरुत्वमलविबन्धादेरुत्पादनम् । ततो विपर्ययो वैकृत्यम् । प्रथमाकृतिरप्याम एव । यदुक्तम्—'प्रथमां दोषदुष्टिं तु केचिदामं प्रचक्षते' इति ॥ ६५ ॥

**वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः ॥**
**श्लैष्मिको द्वादशाहेन ज्वरः पाकं नियच्छति ॥ ६६ ॥**

सुगमम् ॥ ६६ ॥

तत्र पक्वदोषस्य बलवतः स्वस्थानस्थस्य शोधनस्याविधाने दोषमाह—

**पक्वो ह्यनिर्हृतो दोषो देहे तिष्ठन्महात्ययम् ॥**
**विषमं वा ज्वरं कुर्याद्बलव्यापदमेव वा ॥ ६७ ॥**

पक्वो लङ्घनस्वेदनतिक्ताम्बुपानपेयादिना स पुनरेवंभूतो भूयान्दोषः शोधनविषयो भवतीति । अनिर्हृतो वमनादिनाऽनिःसारितः । महात्ययं विषमं चातुर्थिकं विषमस्य तस्यैव महात्ययत्वादिति **गदाधरः** । महात्ययं गम्भीरमिति **कार्तिकः** । ननु भूयान्दोषो विषमज्वरं कथमारभते दोषोऽल्पोऽहितसंभूत इत्यनेनाल्पदोषस्यैव विषमज्वरकारणत्वेनोक्तत्वात् । मैवं, भूयसोऽपि दोषस्य लङ्घनादिभिरुपक्षीणशक्तित्वादिति **गदाधरः** । अहितसंभूत इत्यनेन तत्रापि भूयस एव दोषस्य विषमज्वरकारणत्वमिति **कार्तिकः** । बलव्यापदं बलक्षयम् । बलं त्रिविधं कालकृतं युक्तिकृतं सहजं च । तस्य त्रिविधस्यापि व्यापदं व्यापन्नतां करोति ॥ ६७ ॥

दोषपाकं लक्षणतः प्रतिपाद्यैकीयमतेन कालतः प्रतिपादयन्नाह—

**सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम् ॥**
**दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः ॥ ६८ ॥**

सप्तरात्रादेव परं दशदिनपर्यन्तमौषधं पाचनं देयं दानार्हं केचिन्मन्यन्ते न सप्तरात्रादर्वाक् । तथाचोक्तम्—

१ क. घ. 'क्वोऽप्यनि' ।

सप्ताहात्परतोऽस्तब्धे सामे स्यात्पाचनं ज्वर इति । ननु सप्तरात्रादूर्ध्वं ज्वरस्य निरामत्वात्किमर्थं तत्र पाचनम् । यदुक्तं हरिश्चन्द्रेण—अष्टाहं निरामज्वरलक्षणमिति।

अन्ये तु—"सप्ताहेन तु पच्यन्ते सप्तधातुगता मलाः ।
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" ॥

उच्यते । द्विविधा हि सामता । एका दोषस्य तरुणत्वरूपाऽपरा रसस्य मुखवैरस्यतृष्णारोचकादिलक्षणा । तत्र प्रथमाऽष्टाहादपैति । यदुक्तम्—'सप्ताहेन तु पच्यन्ते' इत्यादिना । अपरा पुनरष्टाहात्परतोऽप्यनुवर्तते । तत्र च पाचनं दीयत एव । अतएवाऽऽह सुश्रुतः—

"बहुदोषस्य मन्दाग्नेः सप्तरात्रात्परं ज्वरे ।
लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते ॥
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ।
कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्" इति ।

यद्येवम्—"ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम् ।
पाचनं शमनीयं वा कषायं पाययेत्तु तम्" ॥

इति चरकवचने । तथा—

"पाययेदातुरं सामं पाचनं सप्तमे दिने ।
शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत्" ॥

इति च तन्त्रान्तरे सप्ताह एव पाचनोपदेशः कथं न विरुध्यते । उच्यते । पूर्वश्लोकस्य तावदयमर्थस्तात्पर्याच्चक्रेण व्याख्यातः । षडहेऽतीत इति सप्तमे दिने लघ्वन्नं प्रतिभोजितमष्टमे कषायं पाययेदिति । उत्तरश्लोके चोत्पाददिनत्यागेन गणनया समाधानमुक्तवान्कार्त्तिकः । यथा सुश्रुतोक्तत्र्यहपरिहारकाल एव बस्तिदानदिनं त्यक्त्वा चरकेण द्विगुणः परिहारकाल उक्त इति । पित्तज्वराभिप्रायेण सप्तमे दिने कषायविधिरित्यन्ये ।

उक्तं हि—"पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ।
अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः" इति ।

पैत्तिक इत्यादि । अस्यार्थः । पैत्तिके ज्वरे पित्ते तेजसैव शीघ्रं ज्वरः पाकमागच्छतीत्यल्पकालसमुत्थितेऽपि यदौषधं देयं दातव्यं भवेत्तद्देयमिति पिण्डार्थः । वाशब्दाद्वातश्लेष्मादिज्वरेऽपि दोषपाके सत्यौषधं देयम् ।

उक्तंच—"यदा वातशकृन्मूत्रक्षवोद्गारप्रवर्तनम् ।
अचिरज्वरितस्यापि तदा शमनशोधनम्" इति ।

**दशरात्रात्परं केचिद्दातव्यमिति निश्चिता इति।** दशरात्रात्परं दोषामतारसाम-

तयोः सर्वथा निवृत्तत्वादौषधं शमनं शोधनं वा दानार्हमिति केचिद्व्यवस्थिताः। यत्तु ज्वरितं षडहेऽतीत इत्यादिना तथा—

"सप्ताहात्परतोऽस्तब्धे सामे स्यात्पाचनं ज्वरे।
निरामे शमनं स्तब्धे सामे नौषधमाचरेत्"।

इत्यनेन च सप्ताहादूर्ध्वमेव शमनं विहितं तत्र सामताया अल्पत्वेन निरामत्वं मत्वै· तत्समाधेयम्। किंवा यत्र दोषाणामनतिवृद्धत्वात्सप्ताहेनैव रसामताऽपि निवृत्ता तत्र तच्छमनं प्रत्येतव्यम्। अन्ये तु सप्ताहादूर्ध्वं दशदिनपर्यन्तं पाचनमेव दशदिनादूर्ध्वं तु शमनमिति योग्यतयाऽत्रापि विरोधसमाधानार्थं व्याख्यानयन्ति ॥ ६८ ॥

संप्रति सप्ताहात्पूर्वं कषायद्रव्यकृतं पाचनं कषायमपि निषेधयन्नाह—

**न कषायं प्रशंसन्ति नराणां तरुणज्वरे ॥**
**कषायेणाऽऽकुलीभूता दोषा जेतुं सुदुस्तराः ॥ ६९ ॥**

कषायमिति कषायद्रव्यकृतपाचनविषयं शमनस्यातिप्रसक्तत्वात्। **आकुलीभूता इति**। इतस्ततो भृशं मूर्छिताः ॥ ६९ ॥

निषेधोऽयं कषायकषायस्य न सामान्यतः स्वरसादिकषायनिषेध इत्यत आह—

**न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते ॥**
**यः कषायः कषायः स्यात्स वर्ज्यस्तरुणज्वरे ॥ ७० ॥**

कल्पनमुद्दिश्य स्वरसकल्कादिरूपं कल्पनं लक्षीकृत्य। कषायस्याऽऽमलकादेः कषायः स्वरसादिः। कषायद्रव्यकृतस्वरसादिनिषेधेन मधुरादिद्रव्यकृतस्वरसादीनां दानप्रयोग-प्रसङ्गो नोद्भावनीयः। यतो विहितषडङ्गादेस्तिक्तस्य कषायांश्च विवर्जयेदित्यनेन सम-विरोधसाधनार्थं चरके कषायकषायवचनं न त्वविहितस्वरसादिविधानार्थं स्वरसादिगुरु-भेषजस्य नवज्वरे दोषकर्तृत्वात्। यदुक्तम्—भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वर-मिति। यद्येवं, कषायेतरकषायस्यापि दोपकर्तृत्वात्कषायकपायनिषेधः किमर्थम्। उच्यते। विशेषेण दोषकर्तृत्वख्यापनार्थम्। यथा ज्वरमात्रनिषिद्धस्य मैथुनादेस्तरुण· ज्वरे निषेधः ॥ ७० ॥

ननु कषायकषायकरणे को दोषो येनासौ निषिध्यत इत्याह—

**दोषा बद्धाः कषायेण स्तम्भित्वात्तरुणज्वरे ॥**
**स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम् ॥ ७१ ॥**

बद्धा इत्यनुबद्धाः सानुबन्धा इति यावत्। विबन्धस्थाः स्तभ्यन्त इत्यनेनैवोक्त-त्वात्। स्तम्भित्वादिति स्तम्भनस्वभावत्वात्। उक्तं हि—कषायः स्तम्भनः शीत इत्यादि। **स्तभ्यन्त इति**। प्रबला भवन्ति। **न विपच्यन्त इति**। चिरेणापि सुखं न विपच्यन्ते। चरके त्वस्य श्लोकस्य स्तभ्यन्त इत्यादिकमेव पूर्वार्धम् ॥ ७१ ॥

---

१ च. बद्धाः। च. 'म्भितास्तरु'। ३ च. क्षुभ्यन्ते।

नवज्वरे तथा शोधनमपि निषेधयन्नाह—

**पाययेद्दोषहरणं मोहादामज्वरे तु यः ॥**
**स सुप्तं कृष्णसर्पं तु कराग्रेण परामृशेत् ॥ ७२ ॥**

दोषहरणं संशोधनम् । परामृशेदिति स्पृशेत् । यद्यपि स्नेहं संशोधनादि चेत्यनेन पूर्वं शोधननिषेधो दर्शित एव तथाऽपि महात्ययत्वप्रतिपादनार्थं स पुनरुच्यत इत्यदोषः ॥ ७२ ॥

शोधनं शमनं च यैर्न सेव्यं तानाह—

**पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः ॥**
**न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥ ७३ ॥**

पीताम्बुः सद्य एव पीतोदकः । लङ्घितः सुलङ्घितः । अजीर्ण्यपरिपक्वभोजनः । भुक्त इति भुक्तवान् । कर्तरि क्तः । सद्य एव कृताहार इत्यर्थः । पिपासितस्तृष्णातुरः । अथशब्दः समुच्चये निपातस्यानेकार्थत्वात् । शमनं चेतरदित्यर्थः ॥ ७३ ॥

निषिद्धशोधनस्यापि दुर्बलस्याऽऽवस्थिकं शोधनमाह—

**रोगे शोधनसाध्ये तु यं विद्याद्दोषदुर्बलम् ॥**
**तं समीक्ष्य भिषक्कुर्याद्दोषप्रच्यावनं मृदु ॥ ७४ ॥**

**दोषदुर्बलमिति** । दोषाभिभवेन दुर्बलम् । एवंभूतस्य दोषो हर्तव्य एव दोषहरणेनैवास्य बललाभोदयात् । यस्तूपवासादिकृशो न तस्य दोषहरणमत एवोक्तं समीक्ष्येति । दोषप्रच्यावनं शोधनम् । **मृद्विति** । मृदुवीर्यं चतुरङ्गुलादिकृतम् ॥ ७४ ॥

अपरमपि दुर्बलस्याऽऽवस्थिकं शोधनमाह—

**चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम् ॥**
**अव्यापद्दुर्बलस्यापि शोधनं हि तदा भवेत् ॥ ७५ ॥**

**नेक्षेतात्र बलमिति** । अत्रास्यामेवावस्थायामनतिग्लानिकरत्वाच्छोधनस्य बलं नास्तीति नापेक्ष्यम् । बलं कुतो नापेक्ष्यमित्यत उक्तमव्यापदिति । अल्पदोषमित्यन्ये । स्वयमेव दोषाणां प्रवृत्त्युन्मुखत्वाच्छोधनमल्पदोषं भवतीत्यर्थः । यच्छोधनं दृष्टफलत्वाच्छूलादिव्यापत्तेरजनकमिति तु **गदाधरः** । **तदेति** । तस्यामवस्थायाम् । हि यस्मादर्थे ॥७५॥

भैषज्यद्रव्येषु कर्षादिमानपरिच्छेदार्थं पलव्यवस्थामाह—

**द्विचत्वारिंशता माषैरष्टादशनिबद्धकैः ॥**
**पलं द्वादशबद्धं स्याद्गुञ्जाषट्कसमन्वितैः ॥ ७६ ॥**

अस्यायमर्थः । अष्टादशमाषगुडकैः कृतो यो माषकस्तैर्द्विचत्वारिंशता मिलित्वाऽधिकत्वेन षड्गुञ्जान्वितैः कस्यचित्तन्त्रस्य पल(म्।)बद्धक इत्यत्र स्वार्थे कः । तदेव च पलं सुश्रुतमानाविशिष्टमित्याह—**द्वादशबद्धमिति** । द्वादशमाषगुडकैः कृता ये माषकास्तै-

श्चतुःषष्ठ्या बद्धं सौश्रुतं पलं भवति। अयं तात्पर्यार्थः। अष्टादशमाषगुडकैः कृता ये द्विचत्वारिंशन्माषकास्ते तु द्वादशमाषगुडकैर्माषकं कृत्वा विभक्ताः परिशिष्टषण्माषगुडककृतमाषकार्धैश्चत्वारिंशतैकविंशतिमाषरूपैः सह त्रिषष्टिमाषका एकमाषश्च न्यूनो गुञ्जाषट्केन पूर्यते। अतएवाऽऽह **बकुलकरः** **सुश्रुते** षड्रक्तिकं माषकं **चरके** तु ततो द्विगुणं व्याचष्टे। **चक्रस्तु** सौश्रुतं पञ्चरक्तिकं माषकमिच्छति। यदाह **स्वसंग्रहे**—

"द्वात्रिंशन्माषको माषश्चरकस्य तु तैः पलम्।
अष्टचत्वारिंशता स्यात्सुश्रुतस्य तु माषकः॥
द्वादशभिर्धान्यमाषैश्चतुःषष्ठ्या च तैः पलम्।
एतच्च तुलितं पञ्चरक्तिमाषात्मकं पलम्॥
चरकार्धपलोन्मानं चरके दशरक्तिकैः।
माषैः पलं चतुःषष्ठ्या यद्भवेत्तत्तथेरितम्॥
तस्मात्पलं चतुःषष्ठ्या माषकैर्दशरक्तिकैः।
चरकानुमतं वैद्यैश्चिकित्सासूपयुज्यते" इति॥

ननु **चरकस्याष्ट**चत्वारिंशता माषकैः पलं **सुश्रुतस्य** चतुःषष्ठ्या तत्कथं चरकपलार्धं सौश्रुतं पलम्। उच्यते। **चरके** द्वात्रिंशन्माषगुडकैः कृता येऽष्टचत्वारिंशन्माषकास्ते द्वात्रिंशन्माषगुडकगुणिताः सन्तः षट्त्रिंशन्माषगुडकाधिकानि माषगुडकशतानि पञ्चदश भवन्ति। **सुश्रुते** द्वादशमाषगुडकैः कृता ये चतुःषष्टिमाषकास्ते द्वादशमाषगुडकगुणिताः सन्तोऽष्टषष्टिगुडकाधिकानि माषशतानि सप्त स्युः। इत्थं **चरकमानार्धं सुश्रुतमानमिति** न कश्चिद्विरोधः। **अन्ये** त्वष्टादशरक्तिकाबद्धत्वं माषस्याभिधाय पूर्वोक्तव्याख्याप्रकारेणापरं ग्रन्थं व्याख्याय व्यवह्रियमाणद्वादशरक्तिकचतुःषष्टिमाषकरूपमेव पलमाहुः। गुञ्जाषट्कन्यूनताऽत्र पक्षेऽल्पत्वान्न गणनीया॥ ७६॥

पलं व्यवस्थाप्य पलोपक्रमेणैव पाचनादिकषायेषु भेषजवारिक्वाथशेषाणां प्रमाणं निर्देष्टुं परिभाषाद्वयमाह—

**उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे॥**
**जघन्यस्य पलार्धेन स्नेहक्वाथ्यौषधेषु च॥ ७७॥**

**स्नेहक्वाथ्यौषधेष्विति**। स्नेहक्वाथ्यरूपाण्यौषधानि स्नेहक्वाथ्यौषधानि तेषु। किंवौषधं गुडादि॥ ७७॥

**क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते॥**
**चतुर्भागावशिष्टं तु पेयं पलचतुष्टयम्॥ ७८॥**

**द्विरष्टगुणमिति**। षोडशगुणं पलपर्यन्तं ज्ञेयं तेन पलादर्वागपि षोडशगुणमेव जलम्। तथाचोक्तम्—"कर्षादौ तु पलं यावद्दद्यात्षोडशिकं जलम्" इति॥ ७८॥

दीप्तानलं महाकायं पाययन्त्यञ्जलिं जलम् ॥
अन्ये त्वर्धं परित्यज्य प्रसृतिं तु चिकित्सकाः ॥ ७९ ॥
क्काथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम् ॥
पारंपर्योपदेशेन वृद्धवैद्याः पलद्वयम् ॥ ८० ॥

**अञ्जलिमिति।** पलचतुष्टयं दीप्तानलमित्यादिश्लोकद्वयं वैद्ययुक्त्युपदर्शकं वृन्दस्येति कल्प्यते । अन्ये त्वर्धं परित्यज्येत्यस्य स्थानेऽन्यमर्धं परित्यज्येति पाठेऽन्यं दीप्तानलमहाकायादितरम् ॥ ७९ ॥ ८० ॥

पाचनशमनयोर्वक्तव्ययोर्विषयमाह—

पाययेदातुरं सामं पाचनं सप्तमे दिने ॥
शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत् ॥ ८१ ॥

**सप्तमे दिन इति ।** आरम्भदिनत्यागेन गणनयाऽष्टाह इति फलति । एतच्च सप्तरात्रादित्यादिश्लोकव्याख्याने व्याख्यातमेव ॥ ८१ ॥

सामान्यपूर्वकत्वाद्विशेषस्य पूर्वं सर्वज्वरपाचनमाह—

नागरं देवकाष्ठं च धान्यकं बृहतीद्वयम् ॥
दद्यात्पाचनकं पूर्वं[1] सर्वज्वरेषु पाचनम् ॥ ८२ ॥

**सर्वज्वरेष्विति ।** योगोऽयं द्रव्यगुणपर्यालोचनया वातकफेऽतिभद्रकः। व्याधिप्रत्यनीकतया तु पित्तजेऽपि हितत्वमस्याभ्युपगम्य सर्वज्वरविषयत्वं ज्ञेयमित्याहुः। **बृहतीद्वयमिति ।** बृहतीकण्टकार्यौ । एवं सर्वत्र ॥ ८२ ॥

परिणामप्रयुक्तभेषजगुणमाह—

वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तदामयमसंशयमाशु चैव ॥
तद्बालवृद्धवनितामृदवोऽथ पीत्वा ग्लानिं परां समुपयान्ति बलक्षयं च ॥८३॥

**वीर्याधिकमिति ।** भोजनसमये क्रियमाणौषधापेक्षया वीर्येणोत्कृष्टम्। **अन्नहीनमिति** हेतुगर्भविशेषणम् । अन्नहीनं हि भेषजमितररसानभिभवादखिलमेव स्रोतः प्रतिपद्यते कोष्ठं च सम्यग्भावयति । अन्नहीन इति पाठान्तरे कोष्ठ इति शेषः। बालादीनामभक्तौषधस्य दूषणमभिदधद्बालादिभ्य इतरेऽभक्तविषया इति बोधयति ॥ ८३ ॥

अनुलोमानिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ॥
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः * ॥ ८४ ॥

सुगमम् ॥ ८४ ॥

* "तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् । योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ॥ १ ॥ क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः" इत्यधिकमत्र खपुस्तके ।

१ क. ख. ग. घ. °र्वे ज्वरितानां ज्वरापहम् ।

**क्लमो दाहोऽङ्गसदनं भ्रमो मूर्छा शिरोरुजा ॥**
**अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ ८५ ॥**

सुगमम् ॥ ८५ ॥

भेषजां भेषजाजीर्णेऽन्नस्यान्नाजीर्णे च भेषजस्योपयोगे दोषमाह—

**औषधशेषे भुक्तं पीतं च तथौषधं हि शेषेऽन्ने ॥**
**न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ८६ ॥**

भुक्तं भोजनम् । एतच्चान्नाभ्यवहारोपलक्षणं तेन पानस्याप्यवरोधः । भुक्तमित्यस्य तु संबन्धे न करोति गदोपशममित्यत्रान्तर्भावितण्यर्थो ज्ञेयः । यतः प्रस्तुतत्वादौषधमेव गदोपशमकं युक्तं तेनायमर्थो भेषजाजीर्णे भोजनमौषधमेव गदोपशमं न करोतीति । पीतमित्यन्तःपरिमार्जनाभिप्रायेणोक्तं तेन लेहादयोऽप्यवरुध्यन्ते ॥ ८६ ॥

भोजनसमयोपयुज्यमानभैषज्यगुणमाह—

**शीघ्रं विपाकमुपयाति बलं न हिंस्यादन्नावृतं न च मुहुर्वदनान्निरेति ॥**
**प्राग्भक्तसेवितमथौषधमेतदेव दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥८७॥**

**शीघ्रं विपाकमुपयातीति** । विदाहः स्वल्पकालमस्य भवति । **बलं न हिंस्यादिति** । चिरं विदाहाभावाद्बलं न हन्ति । **न च मुहुर्वदनान्निरेतीति** । आहाराश्रितत्वान्मुहुर्मुहुर्वारं वारं वक्त्राद्बहिर्न निःसरति द्वेष्यमपि भेषजमन्नावृतत्वान्न वम्यत इत्यर्थः । **प्राग्भक्तसेवितमिति** । भक्तात्पूर्वं सेवितमौषधमेतदेवेति प्राग्भक्ताख्यमौषधम् ॥ ८७ ॥

वातज्वरे पाचनमाह—

**बिल्वादिपञ्चमूलाम्बु पाचनं वातिके ज्वरे ॥**

बिल्वादिपञ्चमूलं महत्पञ्चमूलम् । अवचारणाऽप्यनेन क्रियते क्वाथार्थमुक्तपाचनयोगेन गणरूपेणैवावचारणा क्रियते न पुनरगणरूपेणावचारणयोगेनापि गणरूपेण पाचमकषायोऽपि क्रियते तेन धान्यपिप्पल्यादिना न कषायविधिः । क्वाथोक्तपाचनयोगेन गणरूपेणाप्यवचारणं केचिदाहुः ॥

अथ पाचनमभिधाय शमनयोगान्विवक्षुः शमनस्य लक्षणमेव तावदाह—

**न शोधयति यद्दोषान्समान्नोदीरयत्यपि ॥**
**समी करोति यत्क्रुद्धांस्तत्संशमनमुच्यते ॥ ८८ ॥**

**न शोधयति यद्दोषानिति** । दुष्टान्दोषान्यद्देहान्न निःसारयति । एतेन शोधनं व्यवच्छिनत्ति । समान्नोदीरयत्यपि । अदुष्टानपि दोषान्यद्वृद्ध्या न विमार्गी करोति । अनेन पाचनाद्व्यवच्छेदः । पाचनं हि दोषान्वृद्ध्या विमार्गगानपि करोति यथाऽग्निः स्थाल्यां जलतण्डुलादीनि विमार्गीकुर्वन्पचतीति । न कोपयतीति क्वचित्पाठः स च न

संगतो नोदीरयतीत्यनेन पुनरुक्तत्वात् । किंचास्मिन्पाठे शोधनव्यवच्छेदाय पदान्तरं मृग्यम् ॥ ८८ ॥

इदानीं प्रथमं वातज्वरे संशमनमाह—

**किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः ॥**
**सस्थिराकलशीविश्वैः क्वाथो वातज्वरापहः ॥ ८९ ॥**

किरातं किराततिक्तकम् । अब्दो मुस्तकम् । अमृता गुडूची । उदीच्यं वालकम् । स्थिरा शालिपर्णी । कलशी पृश्निपर्णी । विश्वं शुण्ठी । विश्वस्थाने क्वचिद्बिल्व इति पाठः । **वृद्धवैद्य**व्यवहाराद्द्रव्यस्य कनीयसीं मात्रामर्धपलानुरूपामुपादाय षोडशगुणेनाम्भसा निष्क्वाथ्य चतुर्भागावशेषं कषायः कर्तव्यः पाचनशमनक्वाथयोरेवं सर्वत्र ॥ ८९ ॥

**पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ॥**
**कृतः कषायः सगुडो हन्याच्छ्वसनजं ज्वरम् ॥ ९० ॥**

सारिवाऽनन्तामूलम् । द्राक्षाभावे सर्वत्र गम्भारीफलं ग्राह्यम् । हरेणुका रेणुकम् । **सगुड इति** । गुडोऽत्र प्रक्षेपः स च शास्त्रयुक्त्या क्वथनीयद्रव्यापेक्षया पादिकः । **यदुक्तम्**—"सितोपलागुडक्षाराः सामान्यांशप्रकल्पनाः" । अस्यार्थः । सामान्यमुत्सर्गसिद्धं पलत्रिकर्षार्धपलरूपं क्वाथ्यद्रव्यमानं यत्तस्यांशेन चतुर्भागेण प्रकल्पना येषां ते तथा । सितोपलादयश्चात्रोपलक्षणं तेन मध्वादिप्रक्षेपोऽपि पादिक एव ज्ञेयः । अत एवान्यत्र सामान्येनोक्तं प्रक्षेपः पादिकः क्वाथ्यादिति । **अन्ये** समानैषां प्रकल्पनेति पठित्वा प्रक्षेप्यं कर्षमाहुः । समानेति चूर्णसमाना । अन्यत्राप्युक्तम्—"मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्" इति । **वृद्धवैद्य**व्यवहारस्तु प्रायः पञ्चषण्मा(मा)षकप्रक्षेपेण । एवं सर्वत्र । श्वसनजं वातजम् ॥

**अथ डल्लणव्याख्या**—पिप्पल्यादिद्रव्यपलमुदकषोडशभिः पलैरुत्क्वाथ्यं चतुर्भागावशिष्टं पलचतुष्टयं गृहीत्वा गुडकर्षसंयुक्तं पाययेत् ।

तथाच—"भेषजात्षोडशगुणं जलं क्वाथ्यं पलं मतम् ।
चतुर्भागावशेषं तु पेयमेवं सुखार्थिना" इति ।
क्वाथ्यद्रव्यस्य यत्पलप्रमाणं तदुत्तमाङ्गानाम् ।

तथाचोक्तम्—"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्धं च स्नेहक्वाथ्यौषधेषु च" इति ।

**वृद्धवैद्याश्च** मध्यमप्रमाणेनाष्टौ शरावानुदकस्य प्रक्षिप्याष्टभागावशेषितं शरावमेकं गृह्णन्ति शेषं सममेव व्याचक्षते गुडावापमपि **वृद्धवैद्या** न मन्यन्त इति ॥ ९० ॥

**गुडूचीसारिवाद्राक्षाशतपुष्पापुनर्नवाः ॥**
**सगुडोऽयं कषायः स्याद्वातज्वरविनाशनः ॥ ९१ ॥**

सुगमम् ।

"गुडूच्याः स्वरसो ग्राह्यः शतावर्याश्च तत्समः ।
गुडप्रगाढः शमयेत्सद्योऽनिलकृतं ज्वरम् ।
शृतशीतं कषायं वा गुडूच्याः पेयमेव तु ॥
दर्भं बला गोक्षुरकं पाठा पादावशेषितम् ।
शर्कराघृतसंयुक्तं पिबेद्वातज्वरापहम् ॥

तन्त्रान्तरस्यैते प्रयोगाः शर्कराघृतसंयुक्तमत्र क्वाथ्यद्रव्यपादांशेन शर्कराघृतावापः कर्तव्यः । गुडस्य शर्कराघृतयोश्च संयोगशक्तेरचिन्त्यत्वात् । उक्तं च—"ऋषयस्त्वेव जानन्ति योगसंयोगजं फलम्" इति । यद्यप्येवं तथाऽपि **वृद्धवैद्या** गुडप्रक्षेपं न मन्यन्त इति **ब्रह्मदेवव्याख्या** ॥ ९१ ॥

**द्राक्षागुडूचीकाश्मर्यत्रायमाणाः ससारिवाः ॥**
**निष्काथ्य सगुडं क्वाथं पिबेद्वातज्वरापहम् ॥ ९२ ॥**

काश्मर्यं गम्भारीफलम् । **सगुडमिति** । क्वाथोपरि कर्षप्रमाणस्य गुडस्य पश्चान्निक्षेपः । अविशेषेणोक्ता अप्यमी योगा ज्वरे दोषांशबलविकल्पनाः परिकल्प्य रसवीर्यविपाकादींश्च द्रव्यस्य निरूप्य सुज्ञेन भिषजा विशेष एव योजनीयाः ॥ ९२ ॥

**इति वातज्वरचिकित्सा ।**

---

पित्तज्वरे पाचनमाह—

**सक्षौद्रं पाचनं पैत्ते तिक्ताब्देन्द्रयवैः कृतम् ॥ ९३ ॥**

**सक्षौद्रमिति** । क्षौद्रमत्र प्रक्षेपणे । तिक्ता कटुरोहिणी ॥ ९३ ॥

पैत्तिके ज्वरे संशमनमाह—

**लोध्रोत्पलामृतापद्मसारिवाणां सशर्करः ॥**
**क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ ९४ ॥**

**अथवा पर्पटोद्भव इति** । अयमपि क्वाथः सशर्कर एव ॥ ९४ ॥

**दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् ॥**
**जलं पिबेच्छर्करयाऽवगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥ ९५ ॥**

प्रियङ्गुः प्रसिद्धः । भूनिम्बं किराततिक्तकम् । किराँतेति लोके । जलं क्वाथः ।

---

१ घ. 'रायते' ।

**शर्करयाऽवगाढमिति** । सितशर्करयाऽनुगतं तेन प्रक्षेपविधिनैवात्र शर्करा । चक्रस्त्व-वगाढमित्यभिधानात्प्रक्षेपमानाधिका शर्करा सम्यङ्माधुर्यार्थं देयेत्याह ॥ ९५ ॥

**पटोलयवनिष्क्काथो मधुना मधुरीकृतः ॥**
**तीव्रपित्तज्वरामर्दी पानात्तृड्दाहनाशनः ॥ ९६ ॥**

**मधुना मधुरीकृत इति** । यावता प्रमाणेन मधुना मधुरः क्काथो भवति तावदेव प्रक्षेप्तव्यम् ॥ ९६ ॥

**एकः पर्पटकः श्रेष्ठः पित्तज्वरनिबर्हणः ॥**
**किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥ ९७ ॥**

**चन्दनोदीच्यनागरैरिति** । चन्दनं रक्तचन्दनम् । अत्र नागरं कटुकमपि न पित्त-विरोधि मधुरपाकित्वात् ॥ ९७ ॥

**विश्वाम्बुपर्पटोशीरघनचन्दनसाधितम् ॥**
**दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ ९८ ॥**

अम्बु वालकम् । घनो मुस्तम् । **सुशीतलमिति** । व्यजनादिभिराहितशीतगुणम् ॥ ९८ ॥

**पर्पटामृतधात्रीणां क्वाथः पित्तज्वरं जयेत् ॥**

अमृतशब्देनामृता गुडूची । छन्दोनुरोधाद्ध्रस्वत्वम् ॥

**द्राक्षारग्वधयोश्चापि काश्मर्यस्याथवा पुनः ॥ ९९ ॥**

आरग्वधः सुवर्णालुः । अस्य **चरके** फलवर्गे **सुश्रुते** च पत्रवर्गे पाठादन्तःपरिमार्जने फलं बहिःपरिमार्जने कुष्ठादौ पत्रं ज्ञेयम् । काश्मर्यं गम्भारीफलम् । योगद्वयमिदम् । अत्र द्वयोरपि क्वाथ इत्यनुवर्तते ।

"गुडूचीपद्मरोध्राणां सारिवोत्पलयोस्तथा ।
शर्करामधुरः क्वाथः शैतिः पित्तज्वरापहः ॥

अस्यानन्तरं **सुश्रुते** तु योगद्वयमिदं पठितं तत्र च **टीकाकारैः** शर्करानुवृत्तिर्व्याख्याता तेनात्रापि शर्कराप्रक्षेपो ज्ञेयः । द्राक्षाभयेत्यादियोगः **सुश्रुते** पैत्तकफज्वर उक्तः।

तथाच—कटुकाविजयाद्राक्षामुस्तपर्पटकैः कृतः ।
कषायो नाशयेत्पीतः श्लेष्मपित्तभवं ज्वरम्" ॥

अत्र योग आरग्वधो नास्ति । यद्यप्यत्र केवले पित्तभव उक्तस्तथाऽपि चकारादत्र कफजोऽपि गृह्यते ॥ ९९ ॥

**द्राक्षाभयापर्पटकाब्दतिक्ताक्काथं सशम्याकफलं विदध्यात् ॥**
**प्रलापमूर्छाभ्रमदाहशोषतृष्णान्विते पित्तभवे ज्वरे च ॥ १०० ॥**

---

१ घ. °रविनाशनः । किं । २ घ. °ज्वरापहः । अ° । ३ ग्र. शीतपि° । ४ ङ. °भवेऽप्युक्त° ।

**सशम्याकफलमिति** । शम्याकः सुवर्णालुः शम्याकफलं च प्रक्षेप्यं क्वथनीयं वा ॥ १०० ॥

**पर्युषितं धान्यजलं प्रातः पीतं सशर्करं पुंसाम् ॥**
**अन्तर्दाहं शमयेत्प्रवृद्धमपि तत्क्षणादेव ॥ १०१ ॥**

**पर्युषितं धान्यजलमिति** । धान्याकक्वाथ एव पर्युषितः कार्यः शीतकषायो वा । शीतकषायविधिश्च भेषजपलं क्षुण्णमुष्णाम्बुचतुष्पलेनाऽऽप्लुतं रात्रिस्थितं पूतं ग्राह्यमिति । तथाच **तन्त्रान्तरम्**—"द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात् ॥
कषायो योऽभिनिर्याति स शीतः समुदाहृतः ।
षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः ॥
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्" ॥

इति शास्त्रयुक्तिः । भिषजस्तु भेषजार्धपलं जलं पलम् । **सशर्करमिति** । शर्कराऽत्र प्रक्षेपः । एते सर्वे एवानन्तरोक्ताः पाच्यकषायशीतकषाया दोषादिबलं दृष्ट्वा **वैद्येन** योज्याः ॥ १०१ ॥

पित्तज्वरे दाहः प्रबलो भवत्यतस्तत्प्रतीकारार्थमाह—

**अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् ॥**
**बदरीपल्लवोत्थेन फेनेनारिष्टकस्य च ॥ १०२ ॥**

अम्लं काञ्जिकम् । पलाशतरुजैः पलाशपल्लवैः । दिहेल्लिम्पेद्बाह्यदाहनिवारणायेति **ब्रह्मदेवः** ॥

**बदरीपल्लवोत्थेन फेनेनारिष्टकस्येति** । बदरीपल्लवकल्कस्थकाञ्जिकस्य मथनोत्थेन फेनेनेत्यर्थः । **अरिष्टकस्येति** । निम्बस्य फेनिलवृक्षस्य वा द्वयोरपि शीतत्वात् । अत्रापि फेनेनेत्यनुवर्तते । फेनकल्पनामाह । बदरीपल्लवान्काञ्जिकपिष्टान्काञ्जिकपूर्णभाजने निक्षिप्य करेण विलोडयेत्फेन उत्तिष्ठेत्तेन लिम्पेदिति **डल्लणः** ॥ १०२ ॥

**विदारी दाडिमं लोध्रं दधित्थं बीजपूरकम् ॥**
**एभिः प्रदिह्यान्मूर्धानं तृड्दाहार्तस्य देहिनः ॥ १०३ ॥**

विदारी विदारीकन्दः । दाडिमं दाडिमफलम् । दधित्थं कपित्थम् । अयं च विधिः प्रायः पुराण एव ज्वरे प्रचरति ॥ १०३ ॥

**उत्तानसुप्तस्य गभीरताम्रकांस्यादिपात्रं प्रणिधाय नाभौ ॥**
**तत्राम्बुधारा बहला[1] पतन्ती निहन्ति दाहं त्वरितं सुशीता ॥ १०४ ॥**

सुगमम् ॥ १०४ ॥

**वा[illegible]ः कमलहासिन्यो दलयन्त्रगृहाः शुभाः ॥**
**नार्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥ १०५ ॥**

---

[1] क. बहुलं ।

सुगमम् ॥ १०५ ॥

हर्म्ये शुभ्राभ्रसंकाशे शशाङ्ककरशीतले ॥
मलयोदकसिक्ते वा स्वप्यात्पित्तज्वरी नरः* ॥ १०६ ॥

सुगमम् ॥ १०६ ॥

पित्तज्वर एव जिह्वाताल्वादिगतं पित्तं शोषं जनयति तत्र प्रतिक्रियामाह—

जिह्वातालुगलक्लोमशोषे मूर्ध्नि तु दापयेत् ॥
केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ १०७ ॥

क्लोम तिलकम् । मूर्ध्नि मस्तके । मूर्धप्रलेपोऽयम् । अत्र सुश्रुतपाठक्रमे **श्रीडल्लणाचार्यो** व्याख्याति—"पद्मकं मधुकं द्राक्षां पुण्डरीकमथोत्पलम् ।

यवान्भृष्टानुशीराणि समङ्गां काश्मरीफलम् ।
निदध्यादप्सु चाऽऽलोड्य निशापर्युषितं ततः ॥
क्षौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः ।
जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत् ॥
केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ।
शर्करादाडिमाभ्यां च द्राक्षाखर्जूरयोस्तथा ॥
वैरस्ये धारयेत्कल्कं गण्डूषं च यथाहितम्" ।

इत्यस्मिन्सौश्रुते पाठ एक एवं व्याख्यानयन्ति । पित्तज्वरस्यावस्थायां शीतकषायमाह—पद्मकमित्यादि ज्वरदाहौ प्रशाम्यत इत्यन्तम् । समङ्गाऽञ्जलिकारिका वाराहक्रान्तामपरे । काश्मरीफलमित्युक्तेऽपि काश्मरीफलमज्जा ग्राह्योऽत्यन्तापित्तहरत्वात् । निदध्याद्धारयेत् । अप्सु चाऽऽलोड्येति । अर्धक्वथिताम्बुनि प्रतप्त आलोड्येत्यर्थः । अथवाऽनुष्णमपि वार्यौषधान्वितं पर्युषितं शीतकषायमविशेषात् । ज्वरदाहौ प्रशाम्यत इति । ज्वरश्च दाहश्च तौ शाम्यतः । एतेन ज्वरसंयुक्तो दाहः प्रशाम्यति ज्वरं विनाऽपि यो दाहः सोऽपि शाम्यतीत्यर्थः । पित्तज्वरेऽवस्थायां मूर्धप्रलेपमाह—जिह्वाताल्वित्यादि दापयेदित्यन्तम् । जिह्वाताल्वादिशोषे मूर्ध्नि च तं शीतकषायं दापयेत् । एतेन पद्मकादिशीतकषायस्य जिह्वादिशोषेऽभ्यन्तरमुपयोगः स्पर्शतश्च । पित्तज्वर आवस्थिकं क्रममाह—केसरमित्यादि । मातुलुङ्गस्य केसरं मधुसैन्धवसंयुतं वैरस्ये मुखवैरस्ये धारयेन्मुख इति वाक्यशेष इत्येको योगः । तथा शर्करादाडिमाभ्यां सह द्राक्षाखर्जूरयोः कल्कं वैरस्ये धारयेदिति द्वितीयो योगः । यद्यपि मुखवैरस्यं वातलिङ्गं तथाऽपि पित्तादपि

* ख. पुस्तके "स्तनाढ्या रूपसंपन्नाः कुशला नवयौवनः । भजेयुः समदाः कान्ताः शीतैर्दैन्यहरा मताः ॥ १ ॥ शरच्छशाङ्कवदना नीलोत्पलनिभेक्षणाः । चलितभ्रूलतापाङ्गललाटफलकोज्ज्वलाः" ॥ २ ॥ इत्यधिकमत्र ।

वैरस्यं ज्ञेयम् । 'कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्याल्लवणं च वक्त्रम्' इति तन्त्रान्तरोक्तत्वात् । गण्डूषं च यथाहितं विशिष्टदोषारब्धज्वरप्रत्यनीकमिति ॥ १०७॥

इति पित्तज्वरचिकित्सा ।

---

कफजे पाचनमाह—

**पिप्पल्यादिकषायं तु पाचनं कफजे ज्वरे ॥**

**पिप्पल्यादिकषायमिति** । पिप्पली पिप्पलीमूल इत्यादिकः **सौश्रुतो** गणः ॥

कफजे संशमनमाह—

**कुष्ठमिन्द्रयवं मूर्वा पटोलं चापि साधितम् ॥**
**पिबेन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे ॥ १०८ ॥**

मूर्वा स्वनामख्याता तदभावे जिललमूलम् । पटोलं पटोलपत्रम् । 'पटोलादेश्छदं तथा' इति वचनात् । साधितमित्यतः परं कषायमिति शेषः । पिबेत्परं शीतं कृतं मधुन उष्णेन सह निषिद्धत्वात् । मधु पुराणमत्यन्तकफप्रत्यनीकम् । उक्तं च—'न कफो मधुना सार्धं चिरं देहेषु तिष्ठति । **मरिचसंयुक्तं सक्षौद्रमिति** । मरिचमधुनी प्रक्षेप्ये तत्र मरिचस्य तीक्ष्णवीर्यत्वान्माषकत्रयं व्यवहरति मधुनो मृदुवीर्यत्वात्पञ्च वा षण्माषकाः । सक्षौद्रमित्यत्र सगुडमित्यन्ये पठन्ति ॥ १०८ ॥

**त्रिफला पटोलवासा छिन्नरुहा तिक्तरोहिणी च षड्ग्रन्था ॥**
**मधुना श्लेष्मसमुत्थे दशमूलीवासकस्य वा क्वाथः ॥ १०९ ॥**

वासाया मूलम् । छिन्नरुहा गुडूची । तिक्तरोहिणी कटुरोहिणी । षड्ग्रन्था वचा । अयं योगः क्वाथप्रस्तावात्क्वाथ एव । **दशमूलीवासकस्येति** । दशमूलवासकाभ्यां क्वाथः । अत्रापि मधुप्रक्षेपः ॥ १०९ ॥

मध्वादीनां प्रक्षेपाणां मात्रामाह—

**मात्राक्षौद्रघृतादीनां क्वाथस्नेहेषु चूर्णवत् ॥ ११० ॥**

आदिशब्दाद्गुडतैलादीनि । **चूर्णवदिति** । कर्षो मात्रान्तरं व्यवहारश्च यादृशः स सगुड इत्यस्य व्याख्याने दर्शित एवास्माभिः ॥ ११० ॥

**आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ॥**
**सर्वज्वरकफातङ्कभेदी दीपनपाचनः * ॥ १११ ॥**

सुगमम् ॥ १११ ॥

कफजेऽवलेहद्वयमाह—

---

* ख पुस्तके "यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् । मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते" इत्यधिकमत्र ।

---

१ ङ. °यवा मू° ।

**कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ॥**
**श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ ११२ ॥**

कट्फलं स्वनामख्यातम् । पुष्करं पुष्करमूलं तदभावे सर्वत्र कुष्ठम् । कृष्णा पिप्पली शृङ्गी कर्कटशृङ्गी चातुर्भद्रिकावलेहः ॥ ११२ ॥

**क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः ॥**
**प्लीहानं हन्ति हिक्कां च बालानां तु प्रशस्यते ॥ ११३ ॥**

सुगमम् ॥ ११३ ॥

अवलेहचूर्णद्रव्ययोर्मानं दर्शयितुं परिभाषामाह-

**कर्षश्चूर्णस्य कल्कस्य गुटिकानां तु सर्वशः ॥**
**द्रवशुक्त्याऽवलेढव्यः पातव्यश्च चतुर्द्रवः ॥ ११४ ॥**

द्रवशुक्त्येति । द्रवस्यार्धपलेन चतुर्द्रवश्चतुर्गुणद्रवः । कर्षश्चोत्तमबलानलपुरुषविषयस्तेन मध्यमजघन्यबलानलापेक्षया तु कर्षादपकर्षो ज्ञेयः । अत एवानन्तरं वक्ष्यति 'मात्राया नास्त्यवस्थानम्' इत्यादि । प्रचारस्तु द्वित्रैश्चूर्णमाषकैर्यावता लेहयोग्यता तावन्मध्विति । अयं च लेहः प्रायेणोर्ध्वजत्रुगरोगहरत्वात्सायमुपयुज्यते यस्त्वधोभागदोषहरः स भोजनात्पूर्वम् । अधिकमानं च किंचित् । तथाच चक्रः—

"ऊर्ध्वजत्रुगरोगघ्नी सायं स्यादवलेहिका ।
अधोरोगहरी या तु सा पूर्वं भोजनान्मता" इति ॥ ११४ ॥

**मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ॥**
**व्याधिं द्रव्यं च कोष्ठं च वीक्ष्य मात्रां प्रयोजयेत् ॥ ११५ ॥**

सुगमम् ॥ ११५ ॥

संसर्गे पाचनमाह—

**संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ॥**

संसृष्टं मिश्रम् । ननु सांनिपातिके कुतः पाचनं नोक्तम् । उच्यते । संसृष्टशब्देन त्रिदोषजस्यापि ग्रहणात् ॥

**त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः ॥**
**शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ११६ ॥**

शाल्मली शिवली (सावरी)मूलम् । राजवृक्षः सुवर्णालुकस्य फलम् । आटरूषको वासा । अम्बु क्वाथः ॥ ११६ ॥

नवाङ्गमाह—

**विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ॥**
**कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥ १७ ॥**

१ क. सर्वतः ।

पञ्चमूली स्वल्पा ॥ ११७ ॥

किराततिक्तममृतां द्राक्षामामलकीं शठीम् ॥
निष्काथ्य पित्तानिलजे तत्क्वाथं सगुडं पिबेत् ॥ ११८ ॥

सुगमम् ॥ ११८ ॥

निदिग्धिकाबलारास्नात्रायमाणामृतायुतैः ॥
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥ ११९ ॥

**मसूरविदलैः क्वाथ इति ।** व्रीहिमसूरस्य विदलैरिति बकुलः । अन्ये तु श्यामां मसूरविदलमित्याहुः । अतस्तत्पलम् । यद्यप्यस्याः पर्याये मसूरविदलाशब्दः पठ्यते तथाऽपि लिङ्गेऽनादरः । अस्या द्रव्यगुणे ज्वरहरत्वम् । व्यवहारस्तु क्वचिदनया क्वचि-न्मसूरविदलेनोचितः ॥ ११९ ॥

गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् ॥
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥ १२० ॥

गुडूचीत्यादिको योगः क्वाथाधिकारात्क्वाथो वातपैत्तिके ॥ १२० ॥

किरातं नागरं मुस्तं गुडूचीं च कफाधिके ॥
पाठोदीच्यमृणालैश्च सह पित्ताधिके पिबेत् ॥ १२१ ॥

**पाठोदीच्यमृणालैश्च सह पित्ताधिके पिबेदिति ।** किरातादि पाठादिभिः सह मिलित्वा पिबेत् । अतः पाठासप्तकत्वम् । अत्र मृणालमुशीरम् । पित्ताधिक इत्यत्र कफ इति शेषः । जातूकर्णेनाप्युक्तम्—भूनिम्बघनगुडूचीशुण्ठ्यस्ता वा सवार्यभयपाठा इति । चातुर्भद्रकपाठासप्तकौ ॥ १२१ ॥

कण्टकार्यमृताभार्ङ्गीनागरेन्द्रयवासकम् ॥
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥ १२२ ॥
कषायं पाययेदेनं पित्तश्लेष्मज्वरापहम् ॥
दाहतृष्णाज्वरच्छर्दिकासहृत्पार्श्वशूलनुत् ॥ १२३ ॥

भार्ङ्गी ब्राह्मणयष्टिः । इन्द्रं इन्द्रयवम् । यवासं दुरालभा । एष योगः पित्तोत्तरश्ले-ष्माणि प्रचरति । कण्टकार्यादिः ॥ १२२ ॥ १२३ ॥

गुडूचीनिम्बधान्याकं[1] चन्दनं[2] पद्मकानि[3] च ॥ १२४ ॥
एष सर्वज्वरान्हन्ति गुडूच्यादिस्तु दीपनः[4] ॥
हृल्लासारोचकच्छर्दिःपिपासादाहनाशनः ॥ १२५ ॥

कुस्तुम्बुरु धान्याकम् । पद्मकं पद्मकाष्ठम् । यत्र तु पद्ममित्यस्ति तत्र प्रायः पद्म-केसरम् । गुडूच्यादिः ॥ १२४ ॥ १२५ ॥

१ क. च. 'ब्दारुचिच्छ'। २ च 'कं पद्मकं चन्दनान्वितम् । ए'। ३ क. कुस्तुम्बुरु चन्दनानि पद्मकं चेति । ४ च. 'दिश्च पाचनः ।

**पटोलं चन्दनं मूर्वापाठातिक्तामृतागणः ॥**
**पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहः ॥ १२६ ॥**

सुगमम् । पटोलादिः ॥ १२६ ॥

**सपत्रपुष्पवासाया रसः क्षौद्रसितायुतः ॥**
**कफपित्तज्वरं हन्ति सासृक्पित्तं सकामलम् ॥ १२७ ॥**

**सपत्रपुष्पवासाया रस इति** । रसः स्वरसः क्वाथो वा । स्वरसस्तु गुरुत्वादर्धपलः प्रायेणोपयुज्यते । सितामधुनोः प्रत्येकं चतुर्माषकयोरत्र प्रक्षेपः ॥ १२७ ॥

**सशर्करामक्षमात्रां कटुकामुष्णवारिणा ॥**
**पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥ १२८ ॥**

**सशर्करामक्षमात्रां कटुकामित्यादि** । शर्कराकटुरोहिण्योस्तुल्यमानेन मिलित्वा कर्षः । वैद्यप्रसारके सम एव भाग उक्तः । चक्रस्तु कटुरोहिण्या द्वादश माषकाः सिताया माषचतुष्टयमित्येवं कर्षमित्याह । विरेचनार्थे चैष योगः ॥ १२८ ॥

**पटोलं पिचुमन्दं च त्रिफलां मधुकं बलाम् ॥**
**साधितोऽयं कषायः स्यात्पित्तश्लेष्मोद्भवे ज्वरे ॥ १२९ ॥**

सुगमम् ॥ १२९ ॥

**दीपनं कफविच्छेदि पित्तवातानुलोमनम् ॥**
**ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥ १३० ॥**

**धान्यपटोलयोरिति** । धान्याकस्य दश माषकाः पटोलस्य षण्माषका इत्येवं कर्षः । व्यवहारस्तु व्यञ्जनेन पित्तश्लैष्मिके ॥ १३० ॥

**खर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः ॥**
**शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ १३१ ॥**

**वालुकास्वेद इति** । वालुकैव स्वेदो वालुकास्वेदः । स्विद्यतेऽनेनेति व्युत्पत्त्या स्वेदः । एतेन खर्परभृष्टत्वादिविशेषणयोगः संगतः ॥ १३१ ॥

**स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ॥**
**हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥ १३२ ॥**

तथाचाग्निवेशः—"प्रवेपमाने ज्वरिते शीते हृष्टतनूरुहे ॥
कटयूरुजङ्घापार्श्वास्थिशूलिने स्वेदनं हितम् ॥
सोऽस्य मूत्रशकृद्भेदी प्रवर्तयति मारुतम् ॥
संधिश्रितांस्ततो दोषान्मार्दवी कुरुते भृशम् " ॥ इति ।

वालुकास्वेदः ॥ १३२ ॥

**मातुलुङ्गफलकेसरो धृतः सिन्धुजन्ममरिचान्वितो मुखे ॥**
**हन्ति वातकफरोगमास्यगं शोषमङ्गजडतामरोचकम् ॥ १३३ ॥**

सुगमम् ॥ १३३ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ १३४ ॥

एतानि कोलप्रमाणोपयोगित्वात्पञ्चकोलकानीत्युच्यन्ते । तथाच खारणादिः—

"पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम् ॥
कोलमात्रोपयोगित्वात्पञ्चकोलकसंज्ञितम् " इति ।

पञ्चकोलकम् ॥ १३४ ॥

आरग्वधग्रन्थिकमुस्ततिक्ताहरीतकीभिः कथितः कषायः ॥
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च ॥ १३५ ॥

गिरिमालापञ्चकम् । ग्रन्थिकं पिप्पलीमूलम् । तिक्ता कटुरोहिणी ॥ १३५ ॥

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ॥
वातश्लेष्मविकारघ्नं प्लीहघ्नं ज्वरनाशनम् ॥ १३६ ॥

पिप्पलीभिः शृतमिति । पिप्पल्याः कटूष्णत्वादर्धपलादिमानेन तावत्क्काथो न युज्यते । तेन तस्याः कर्षमेकमल्पं वा गृहीत्वा क्काथः कार्यः । प्रजलश्लेष्मणि वाते प्रयोज्यः ॥ १३६ ॥

मुस्तपर्पटदुस्पर्शगुडूचीविश्वभेषजम् ॥
कफवातारुचिच्छर्दिदाहशोषज्वरापहम् ॥ १३७ ॥

दुस्पर्शो दुरालभा ॥ १३७ ॥

क्षुद्रामृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोत्तरे ॥
सश्वासकासारुचिपार्श्वरुक्करे ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥ १३८ ॥

क्षुद्रा कण्टकारी । क्षुद्रादिः ॥ १३८ ॥

दशमूलीरसः पेयः कणायुक्तः कफानिले ॥
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ १३९ ॥

कणायुक्त इति । कणा पिप्पली । सा च माषद्वयरूपा चूर्णीकृता प्रक्षेप्या वातश्लैष्मिके ॥ १३९ ॥

संप्रति संनिपातज्वरे चिकित्साविधिः—

श्लेष्मनिग्रहमेवाऽऽदौ कुर्याद्व्याधौ त्रिदोषजे ॥
निरस्ते श्लेष्मणि ह्यस्य स्रोतःसूक्ष्मातिगेषु च ॥
लाघवं जायते सद्यस्तन्द्रा चैवोपशाम्यति ॥ १४० ॥

आमाशयाश्रयण॥सर्वस्मिन्नेव नवज्वरे लब्धसंनिधिः श्लेष्मा स्रोतोरोधहेतुः । संनिपातजे तु सुतरामतः स एवाऽऽदौ जेतव्यः । भोजेऽप्युक्तम्—

१ ख. ॰श्वजं जलम् । २ क. ॰द्यस्तृष्णा चै॰ ।

'संनिपातज्वरे सर्वं कुर्यादामकफापहम् ।
पश्चाच्छ्लेष्माणि संक्षिप्ते शमयेत्पित्तमारुतौ' इति ॥

ननु तन्त्रान्तरे पित्तस्याऽऽदौ प्रतिक्रियोक्ता तथाऽन्यत्र वातस्य । तद्यथा—

"शमयेत्पित्तमेवाऽऽदौ ज्वरेषु समवायिषु ।
दुर्निवारतरं तद्धि ज्वरार्तेषु विशेषतः ॥
वातस्यानु जयेत्पित्तं पित्तस्यानु जयेत्कफम् ।
त्रयाणां वा जयेत्पूर्वं यो भवेद्बलवत्तमः" इति ॥

तत्कथमुच्यते श्लेष्मनिग्रहमेवाऽऽदौ कुर्यादिति । उच्यते । तत्र त्रयस्याप्यवस्थायां चरितार्थत्वं बोद्धव्यम् । तथाहि—सामे ज्वरे कफमेवाऽऽदितः प्रतिकुर्यात् । आमपाकान्ते पित्तमेवाऽऽदौ मारुतमेवाऽऽदाविति । अत्रार्थे तन्त्रान्तरम्—

'ज्वरे त्रिदोषजे सामे शमयेत्कफमादितः ।
पाकान्तमागते पित्तं चिरजे विषमेऽनिलम्' इति ॥

अन्ये तु वातस्यानु जयेत्पित्तमित्यादिश्लोकमतिसारविषयं वर्णयन्तीति । ननु वातादीनां विभिन्नचयप्रकोपकालत्वेन युगपदवस्थानाभावात्संचयप्रकोपकालादीनां युगपदुदयस्थापनाभावात्कथं संभूय संनिपातज्वरारम्भकत्वम् । अथ मन्यसे त्रिदोषकरनिदानबलेन प्रकोपादेषां युगपदुपस्थितिरिति । तदपि न हृद्यं सति निदानोपसेवनेऽपि दोषाणां विपरीतैर्गुणैः परस्परमुपशमात्प्रकोपस्यानुपपत्तेः । उच्यते । न खलु निखिल एव गुणो विपरीतः समानस्यापि कतिपयगुणस्य सद्भावात् । समानेन हि गुणेन दोषाणामन्योन्यप्रकोपः संभावी । तथाहि रौक्ष्यलाघववैशद्यैर्वायुः पित्तं प्रकोपयति । पित्तमप्येवमेव वायुम् । वायुरपि शैत्यात्कफम् । कफोऽपि शैत्याद्वायुम् । पित्तं च द्रवत्वेन कफम् । कफोऽपि पित्तमिति गुणसामान्यम् । विपरीतस्तु गुणो भूयानल्पं समानं गुणमभिभूय प्रशममेव कुतो न करोतीति न कल्पनीयम् । यतः कर्मापेक्षया त्रिदोषकरद्रव्यप्रभावाद्दोषगुणा दूषयन्ति परं तु न शमयन्तीति । दृढबलस्तु समादधाति—

'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वाद्विषं घोरमहीनिव' इति ॥

किंत्वत्र तद्वद्बलासं बस्तिस्थं *स रौक्ष्याद्धन्ति सोऽनिल इत्यादिवचनैः सहजसात्म्यत्वेऽपि दोषाणामन्योन्यमुपघाताभिधानान्न घ्नन्तीत्येतत्सर्वथा न विनाशयन्तीत्यभिप्रायेण वर्णयितव्यमिति संक्षेपः ॥ १४० ॥

संनिपाते त्वरया चिकित्साकरणार्थमाह—

**दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया बुधः ॥**
**गृह्णीयात्तलमप्राप्तं तथाऽभिन्यासपीडितम् ॥ १४१ ॥**

---

* स सौक्ष्म्यादिति बहुपुस्तकेषु पाठः ।

अभिन्यासपीडितमिति । अभिन्यासः संनिपातज्वरविशेषस्तेन पीडितम्॥ १४१॥

अभिन्यासमेवाऽऽह—

**निद्रोपेतमभिन्यासं क्षीणं विद्याद्धतौजसम् ॥ १४२ ॥**

अस्यायमर्थः । संनिपातज्वरमिति निद्रोपेतमभिन्यासं विद्यात् । क्षीणं तं हतौजसमित्येतच्छ्लोकात्पूर्वम् । यदाह सुश्रुत एव—

'अभिन्यासं तु तं प्राहुर्हतौजसमथापरे ॥
संनिपातज्वरं कृच्छ्रमसाध्यमपरे जगुः' इति ॥

क्षीणबलत्वेन क्षीणम् ॥ १४२ ॥

**लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ॥**
**अवलेहोऽञ्जनं चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ १४३ ॥**

सुगमम् ॥ १४३ ॥

**त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ॥**
**लङ्घनं संनिपातेषु कुर्यादारोग्यदर्शनात् ॥ १४४ ॥**

त्रिरात्रादिलङ्घनविधिविकल्पो यथाक्रममुल्बणवाताद्यपेक्षया विज्ञेयः । कुर्यादारोग्यदर्शनादित्यभिधानं समवृद्धदोषत्रयापेक्षया बलसंपदि वा ॥ १४४ ॥

एतावन्तं कालं कथं लङ्घनं सह्यत इत्याशङ्क्याऽऽह—

**दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ॥**
**न तु दोपक्षये कश्चित्सहते लङ्घनादिकम् ॥ १४५ ॥**
**कफपित्ते द्रवे धातू सहेते लङ्घनं महत् ॥**
**आमक्षयादूर्ध्वमपि वायुर्न सहते क्षणम् ॥ १४६ ॥**

सुगमम् ॥ १४५ ॥ १४६ ॥

**आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम् ॥**
**आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः ॥ १४७ ॥**
**तेनास्य हृद्गतः श्लेष्मा मन्यापार्श्वशिरोगलात् ॥**
**लीनोऽप्याकृष्यते शुष्को लाघवं चास्य जायते ॥ १४८ ॥**
**पर्वभेदो ज्वरो मूर्छा निद्राकासगलामयाः ॥**
**मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति ॥ १४९ ॥**

आर्द्रकस्वरसः कोष्णः कार्यः ॥ १४७ ॥ १४८ ॥ १४९ ॥

**सकृद्द्वित्रिचतुः कुर्याद्दृष्ट्वा दोषबलाबलम् ॥**
**एतद्धि परमं प्राहुर्भेषजं संनिपातिनाम् ॥ १५० ॥**

---

१ क. घ. हृदयाच्छ्लेष्मा । २ क. घ. 'द्रा श्वास' ।

वलग्रहः ॥ १९० ॥

ातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ॥
अन्यद्वा सिद्धिविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥ १९१ ॥
न प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते ॥
शिरोत्हृदयकण्ठास्यपार्श्वरुक्कोपशाम्यति ॥ १९२ ॥

त्रिलवणान्वितमिति । सौवर्चलसैन्धवबिडानि तैर्युक्तं नस्यमेतत् । अन्यद्वा सिद्धिविहितमिति । भालुकितन्त्रोक्तत्वादस्य योगस्य भालुकितन्त्रस्यैव सिद्धिस्थानं ज्ञेयम् ॥ १९१ ॥ १९२ ॥

मधूकसारसिन्धूत्थवचोषणकणाः समाः ॥
श्लक्ष्णं पिष्ट्वाऽम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ १९३ ॥

इति नस्यदानम् । ऊषणं मरिचम् । अम्भसा कोष्णेन ॥ १९३ ॥

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः ॥
अञ्जनं स्यात्प्रबोधाय सरसोनशिलालकैः[1] ॥ १९४ ॥

शिला मनःशिला ॥ १९४ ॥

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ॥
श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥ १९५ ॥
एषाऽवलेहिका हन्ति संनिपातं सुदारुणम् ॥
हिक्कां श्वासं च कासं च कण्ठरोधं नियच्छति ॥
एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजै रसैः ॥ १९६ ॥

व्योषं त्रिकटुकम् । यासो दुरालभा । कारवी कृष्णजीरकम् । अष्टाङ्गावलेहिका ॥ १९५ ॥ १९६ ॥

सर्वेषु संनिपातेषु न क्षौद्रमवचारयेत् ॥
शीतोपचारि क्षौद्रं स्याच्छीतं चात्र विरुध्यते ॥ १९७ ॥

सर्वेषु संनिपातेषु न क्षौद्रमवचारयेदिति । सर्वसंनिपातज्वरेषु स्वेदस्य सर्वदा हितत्वेनाग्निसंबन्धादनुबन्धभूतं देहस्योष्णत्वमुष्णविरोधि च मधु तस्मान्नावचारणीयम् । चक्रेणाप्युक्तम्—विरोध्युष्णे मधु त्यक्त्वा कार्यैषाऽऽर्द्रकजै रसैरिति । शीतोपचारोऽस्यास्तीति शीतोपचारि शीतोपचारोचितमित्यर्थः ॥ १९७ ॥

ननु—"क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः" ॥

इत्यनेन क्रियासंकरो निषिद्धः । तत्कथमत्र नस्यनिष्ठीवनाञ्जनादयो युगपद्विधीयन्त इत्यत आह—

---

1 क. घ. °लावकैः ॥ १५४ ॥

**क्रियाभिस्तुल्यरूपाभिः क्रियासांकर्यमिष्यते ॥**
**भिन्नरूपतया तास्तु तन्न कुर्वन्ति दूषणम् ॥ १५८ ॥**

**तुल्यरूपाभिरिति** । वीर्येण कल्पनया तुल्याभिः । **क्रियासांकर्यमिष्यत इति** । क्रियासांकर्यदोष इष्यत इत्यर्थो ज्ञेयः । परतस्तु तन्न कुर्वन्ति दूषणमित्युक्तेः । सांकर्यं मिश्रता । तुल्यरूपाणामपि बह्वीनां क्रियाणामेकदा करणेऽग्निमन्दता । **भिन्नरूपतयेति** । कल्पनया वीर्येण वाऽतुल्यरूपतया । ता इति क्रियाः । **तन्न कुर्वन्ति दूषणमिति** । सांकर्यदूषणं न कुर्युः । भिन्नरूपता च विरोधासंभवे सति हेतुः । तेन नस्यनिष्ठीवनाञ्जनादीनां भिन्नवीर्यकल्पनानामनवस्थितत्वेनापरिणामित्वादविरुद्धानां तथाऽवलेहादेश्चातुल्यवीर्यकल्पनस्य प्रधानकाथाद्यौषधाङ्गत्वेन वृद्धवैद्यैर्व्यवह्रियमाणत्वाद्दोषादर्शनाच्चाविरुद्धस्य न सांकर्यदोषः । यासां तुल्यवीर्यकल्पनानां क्रियाणां युगपत्करणेऽभिमतकार्याजनकत्वेन विरोधो दृश्यते ताभिः सांकर्यदोषोऽङ्गी क्रियत एवेति ज्ञेयः । अन्ये त्वाहुः । क्रियाभिरित्यादिश्लोकार्धमन्तःपरिमार्जनाभिप्रायेण वर्णनीयम् । परिशिष्टं तु श्लोकार्धं बहिष्परिमार्जनाभिप्रायेण । तेनायमर्थः । एकस्मिन्नन्तःपरिमार्जने भक्षिते यद्यपरमन्तःपरिमार्जनमिष्यते तदा सांकर्यदूषणं न बहिष्परिमार्जने तु कर्तव्येऽवलेहभक्षणे न सांकर्यदोषः । तस्य क्वाथाद्यङ्गत्वेन व्यवहारात् ॥ १५८ ॥

**शस्तं[१] सुलङ्घितस्याऽऽदौ विधाय कवलग्रहम् ॥**
**लाजसक्तुकपथ्यं स्यात्सैन्धवेनावचूर्णितम् ॥ १५९ ॥**

लाजसक्तुकपथ्यं स्यादिति कस्यचिन्मतम् ॥ १५९ ॥

**रक्तपित्तहितत्वेन दाहज्वरेहृतेस्तथा[२] ॥**
**सक्तवः शीतवीर्याः स्युर्लाजपूर्वा हिता न ते ॥ १६० ॥**

तद्दूषयति—**सक्तवः शीतवीर्याः स्युर्लाजपूर्वा हिता न त इति** । लाजपूर्वाः सक्तवो लाजसक्तवः शीतवीर्या अतः संनिपातज्वरे हिता न स्युः ॥ १६० ॥

**पाचनो दीपनो लाजमण्डस्तेनोष्ण इष्यते ॥ १६१ ॥**
**अतोऽयं दशमूलादिसाधितो भिषजां मतः ॥**
**तच्चेज्जीर्यत्यविघ्नेन ज्वरी जीवेत्तदा ध्रुवम् ॥ १६२ ॥**

सुगमम् ॥ १६१ ॥ १६२ ॥

**पञ्चमुष्टिकयूषेण त्रिकण्टककृतेन वा ॥**
**आ दोषशमनात्पथ्यं त्रिकण्टेनैव साधयेत् ॥ १६३ ॥**

**त्रिकण्टककृतेन वेति** । त्रिकण्टकानि कण्टकारीदुरालभागोक्षुरकास्तैः कृतेन यूषेण ॥ १६३ ॥

---

१ घ. °स्तं तु ल° । २ घ. °रकृतेऽथवा । स° ।

यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः ॥
एकैकं मुष्टिमाहृत्य पचेदष्टगुणे जले ॥ १६४ ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ॥
शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे* ॥ १६५ ॥

एकैकं मुष्टिमाहृत्येति । प्रत्येकमेषामन्तर्नखमुष्टिमाहृत्य न तु मुष्टिः पलं द्रव्यस्य बहुत्वादयमेव पक्षः प्रचारी । एकैकमाहृत्य मिलितानां मुष्टिं पलं पचेदित्यर्थः । चक्रस्तु प्रत्येकमेषां च पलं द्रव्यबहुत्वं चाऽऽहारद्रव्यत्वान्न दोषायेत्याह । पञ्चमुष्टिकयूषः ॥ १६४ ॥ १६५ ॥

पञ्चमूली किरातादिर्गणो योज्यस्त्रिदोषजे ॥
पित्तोत्कटे च मधुना कणया वा कफोत्कटे† ॥ १६६ ॥

पित्तोत्कटेऽल्पा पञ्चमूली कफोत्कटे तु महती । किरातं नागरं मुस्तं गुडूची चेति किरातादिः क्वाथोऽयम् । अत्र पित्तोत्कटे मधु कणा वा प्रक्षेपः । चातुर्भद्रकपञ्चमूलम् ॥ १६६ ॥

बिल्वस्योनाकगम्भारीपाटलीगणकारिका ॥
दीपनं[1] श्लेष्मवातघ्नं पञ्चमूलमिदं महत् ॥ १६७ ॥

महदिति । महातरुसंभवत्वान्महत् । वक्ष्यमाणशालिपर्ण्यादीनामपि स्वल्पपञ्चमूलत्वं स्वल्पतरुसंभवत्वात् ॥ १६७ ॥

शालिपर्णी पृथक्पर्णी बृहतीद्वयगोक्षुरम् ॥
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥ १६८ ॥

सुगमम् ॥ १६८ ॥

---

* ख पुस्तके "कारवीपुष्करैरण्डत्रायन्तीवासकामृताः । दशमूली शठी शृङ्गी पाठा भार्गी पुनर्नवा ॥ १ ॥ तुल्यं मूत्रेण निष्क्वाथ्य पीताश्चैता विशोधनम् । अभिन्यासं ज्वरं घोरमाशु हन्ति समुच्छ्रितम् ॥ २ ॥ मातुलुङ्गरसं तस्य हिङ्गुशुण्ठीयुतं मुखे । दद्यादाबोधनं तीक्ष्णं कटुतिक्तोपसंहितम् ॥ ३ ॥ कृते क्रियाविधानेऽपि संज्ञा यस्य न जायते । पादयोस्तु ललाटे वा दहेल्लोहशलाकया" ॥४॥ इत्यधिकमत्र ।

† ख पुस्तके—"वाताधिके संनिपाते दशमूलं प्रयोजयेत् । पित्तोत्तरे च शठ्यादि बृहत्यादि कफाधिके ॥ १ ॥ भूनिम्बकारवी तिक्ता वचा कटुफलं रजः । उद्धूलनं त्रिदोषोत्थे स्वेदोऽभिष्यन्दिजे ज्वरे ॥ २ ॥ दशमूलीशठीशृङ्गीव्योषक्वाथं पिबेन्नरः । संनिपातज्वरं हन्ति इत्याह कपिलो मुनिः ॥ ३ ॥ संज्ञानाशो हृदिस्तम्भो विष्टम्भो गौरवारुची । अरतिर्बलहानिश्च धातुपाकस्य लक्षणम् ॥ ४ ॥ पञ्चदशाङ्गः" इत्यधिकमत्र ।

१ घ. 'नं कफवा'

उभयं दशमूलं तु संनिपातज्वरापहम् ॥
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥ १६९ ॥

सुगमम् । दशमूलम् ॥ १६९ ॥

चिरज्वरे वातकफोल्बणे वा त्रिदोषजे वा दशमूलमिश्रः ॥
किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृता विमिश्रः ॥१७०॥

शुद्ध्यर्थिने वा त्रिवृता विमिश्र इति । मलविबन्धे सति शोधनार्थं त्रिचतुरत्रिवृ-माषकाणां प्रक्षेपः । क्वाथोऽयं चतुर्दशाङ्गः ॥ १७० ॥

दशमूली शठी शृङ्गी पौष्करं सदुरालभम् ॥
भार्गी कुटजबीजं च पटोलं कटुरोहिणी ॥ १७१ ॥
अष्टादशाङ्ग इत्येष संनिपातज्वरापहः ॥
कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहरः ॥ १७२ ॥

वातश्लेष्महरोऽष्टादशाङ्गः ॥ १७१ ॥ १७२ ॥

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणाकषायः ॥
तन्द्राप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति ॥ १७३ ॥

दारु देवदारु । तिक्ता कटुरोहिणी । इन्द्रबीजमिन्द्रयवः । धनिकं धान्यम् । इभकणा हस्तिपिप्पली । अष्टादशाङ्गः ॥ १७३ ॥

द्राक्षाऽमृता शठी शृङ्गी मुस्तकं रक्तचन्दनम् ॥ १७४ ॥
नागरं कटुकं पाठा भूनिम्बं सदुरालभम् ॥
उशीरं पद्मकं धान्यं वालकं कण्टकारिका ॥ १७५ ॥
पुष्करं पिचुमन्दं चाष्टादशाङ्गमिदं शुभम् ॥
जीर्णज्वरारुचिश्वासकासश्वयथुनाशनम् ॥ १७६ ॥

इत्यष्टादशाङ्गः । सुगमम् ॥ १७४ ॥ १७५ ॥ १७६ ॥

कट्फलं पौष्करं शृङ्गी मुस्तकं कटुकं शठी ॥
समांशान्येकशो वाऽपि श्लक्ष्णचूर्णानि कारयेत् ॥ १७७ ॥
आर्द्रकस्वरसक्षौद्रं लिह्यात्कफविनाशनम् ॥
शूलानिलारुचिच्छर्दिकासश्वासक्षयापहम् ॥ १७८ ॥

सुगमम् ॥ १७७ ॥ १७८ ॥

१ घ. 'कट्वर' ।

मुस्तापर्पटकोशीरदेवदारुमहौषधम् ॥
त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत् ॥ १७९ ॥
किराततिक्तकं पाठा बला कटुकरोहिणी ॥
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते ॥ १८० ॥
अष्टादशाङ्गमुदितमेतद्वा संनिपातनुत् ॥
पित्तोत्तरे संनिपाते हितं चोक्तं मनीषिभिः ॥
मन्यास्तम्भ उरोघात उरःपार्श्वशिरोग्रहे ॥ १८१ ॥

नीली कम्पिल्लकमिति । नीली । नीलिवुह्वा(?)। स्वनामप्रसिद्धेति चक्रः । कम्पिल्लकं गुडारोचनिका । अष्टादशाङ्गः ॥ १७९ ॥ १८० ॥ १८१ ॥

बृहत्यौ पौष्करं भार्गी शठी शृङ्गी दुरालभा ॥
वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥ १८२ ॥
बृहत्यादिर्गणः प्रोक्तः संनिपातज्वरापहः ॥
कासादिषु च सर्वेषु हितः सोपद्रवेषु च ॥ १८३ ॥

कासादिषु च सर्वेष्विति । शठ्यादियोगोक्तेषु । चरके शठ्याद्यनन्तरं बृहत्यादिपाठाद्बृहत्यादिः पित्तश्लेष्मोत्तरे हितः शठ्यादिश्च वातश्लेष्मोत्तरे । बृहत्यादिः ॥ १८२ ॥ १८३ ॥

शठी पुष्करमूलं च व्याघ्री शृङ्गी दुरालभा ॥
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥ १८४ ॥
एष शठ्यादिको वर्गः संनिपातज्वरापहः ॥
कासहृद्ग्रहपार्श्वार्तिश्वासे तन्द्र्यां च शस्यते* ॥ १८५ ॥

सुगमम् । शठ्यादिः ॥ १८४ ॥ १८५ ॥

स्वेदोद्गमे भृष्टकुलत्थचूर्णनिपातनं शस्तमिति ब्रुवन्ति ॥ १८६ ॥

स्वेदोद्गमे भृष्टकुलत्थचूर्णनिपातनमिति । कुलत्थस्य स्तम्भनत्वाच्छोषकत्वाच्च स्वेदे हितत्वम् ॥ १८६ ॥

मृत्युश्च तस्मिन्बहुपिच्छिलत्वाच्छीतस्य जन्तोः परितः सरत्वात् ॥
स्वेदो ललाटे हिमवान्नरस्य शीतार्दितस्यैति सुपिच्छिलश्च ॥
कण्ठस्थितो यस्य न याति वक्षो नूनं यमस्यैति गृहं स मर्त्यः ॥१८७॥

स्वेदविशेषविषयमसाध्यत्वं ख्यापयितुमधिकश्च ग्रन्थः क्वचित्पठ्यते ।

---

* खपुस्तके "शठी पुष्करमूलं च गुडूची विश्वभेषजम् । तिक्तकं त्रायमाणं च दुरालभा च पिप्पली ॥ १ ॥ व्याघ्रीपर्पटकौ रास्ना अभया कटुरोहिणी । देवदारु च भार्ङ्गी च समभागानि कारयेत् ॥ २ ॥ बृहच्छठ्यादिको वर्गः संनिपातज्वरापहः । कासं श्वासं दिवा निद्रां रात्रौ जागरणं तथा ॥ ३ ॥ मुखशोषं च तृष्णां च दाहं च शमयत्यपि" । इत्यधिकमत्र ।

तद्यथा—"स्रुतस्वेदो ललाटाद्यः श्लथसंधानबन्धनः ।
मुह्येदुत्थाप्यमानस्तु स स्थूलोऽपि न जीवति ॥
यस्य स्वेदोऽतिबहुलः पिच्छिलो याति सर्वतः ।
रोगिणः शीतगात्रस्य तदा मरणमादिशेत् " ॥ १८७ ॥

जीर्णसंनिपातजे योगमाह—

**त्रिवृद्विशालाकटुकात्रिफलारग्वधैः कृतः ॥**
**सक्षारो भेदनः क्राथः पेयः सर्वज्वरापहः ॥ १८८ ॥**

विशाला गोरक्षकर्कटी । कटुका कटुरोहिणी । सक्षार इति । क्षारो यवक्षारः स च प्रक्षेपः । सर्वज्वरापह इति । सर्वज्वरहन्ता । योगोऽयं जीर्णसंनिपातज्वराभिप्रायः ॥ १८८ ॥

संनिपातज्वरस्य मोक्षवधयोरवधिमाह—

**पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् ॥**
**हन्ति विमुञ्चति पुरुषं त्रिदोषजो धातुमलपाकात् ॥ १८९ ॥**

पित्तवृद्ध्या दशाहात् । कफवृद्ध्या द्वादशाहात् । अनिलवृद्ध्या सप्ताहात् । पित्तवृद्ध्येव पित्तानिलवृद्ध्या कफवृद्ध्येव कफानिलवृद्ध्या योगवाहित्वाद्वायोः पित्तकफवृद्ध्या तु मध्यविधयैकादशाहादिति ज्ञेयम् । धातुपाकाद्धन्ति । मलपाकाद्विमुञ्चति । धातुमलपाके च प्राक्तनं कर्म कारणं तत्र यदि जीवनसंवर्तकं कर्मास्ति तदा मलपाकोऽन्यथा धातुपाकः स च मज्जशुक्रादिपातादवगन्तव्यः । दशाहादिव्यवस्था च मध्यमन्दशीघ्रशक्तित्वाद्दोषाणाम् । यथोक्तकालनियमश्च तथास्वभावाद्व्याधेः । विचित्रा हि व्याधिविशेषस्य स्वभावाः । तथाहि—अग्निरोहिणी सप्ताहान्निहन्ति न तथाऽन्ये विकारा इति ॥ १८९ ॥

**सप्तमी द्विगुणा या तु नवम्येकादशी तथा ॥**
**एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ १९० ॥**

वातवृद्ध्या सप्तमी द्विगुणा पित्तवृद्ध्या नवमी द्विगुणा कफवृद्ध्यैकादशी द्विगुणा । अत्र सर्वत्र रात्रिरित्यध्याहार्यं तेन सप्तमी रात्रिर्नवमी रात्रिरित्यर्थो भवति । अत्र निपातस्यानेकार्थत्वात्तुशब्दश्चार्थे तेनाद्विगुणा अपि सप्तम्यादयो ग्राह्याः । एतत्संवादात्पूर्वश्लोकेऽपि दशमदिनप्रत्यासत्त्या नवम्येकादशी च ग्राह्या । वृद्ध्येति पदमावर्त्य च सर्वत्र द्वैगुण्यमपि ज्ञेयम् । तथाऽत्रापि श्लोक एकादशीत्यस्यैकेति पदमावर्तनीयं तच्च मत्वर्थीयप्रत्ययान्तं प्रत्येतव्यं तेन नवम्येकया सहिता दशम्येकादेश्यकसहिता द्वादशीति मिथोऽविरोधः ।

---

१ क. यावत्रव ।

"सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा" ॥

इत्यत्र सुश्रुतवचनेऽपि पुनःशब्देऽपि द्वैगुण्यं व्याख्येयम्। प्रत्यासत्त्या च नवमैकादशदिनपरिग्रहः। एवमेवंभूतमन्यदपि वचनं समाधेयम्। चतुर्विंशत्यधिकश्च मर्यादादिवसो नास्त्यागमादर्शनात् ॥ १९० ॥

संनिपाते प्रकम्पन्तं विलपन्तं च यो नरम् ॥
भोजयेत्पिशितैः सार्धं स वैद्याख्यां व्रजेत्कथम् ॥ १९१ ॥

सुगमम् ॥ १९१ ॥

संनिपाते प्रकम्पन्तं विलपन्तं च यो घृतम् ॥
भोजयेत्पाययेच्चापि तौ स्यातां च कथं शुभौ ॥ १९२ ॥

सुगमम् ॥ १९२ ॥

संनिपातेषु दाहार्तं यः सिञ्चेच्छीतवारिणा ॥
आतुरः स कथं जीवेद्भिषग्वा स कथं भवेत् ॥ १९३ ॥

सुगमम् ॥ १९३ ॥

संनिपातार्णवे मग्नं योऽभ्युद्धरति मानवम् ॥
कस्तेन न कृतो धर्मः कां तु पूजा न सोऽर्हति ॥ १९४ ॥

सुगमम् ॥ १९४ ॥

मृत्युना सह योद्धव्यं संनिपातं चिकित्सता ॥
यश्च तत्र भवेज्जेता स जेताऽऽमयसंकरे ॥ १९५ ॥

आममयसंकर इति। रोगसंकरे ॥ १९५ ॥

संनिपातान्तकर्णस्य शोफे महति दारुणे* ॥ १९६ ॥

संनिपातान्तकर्णस्य शोथ इत्यत्र चिकित्सोच्यत इति शेषः ॥ १९६ ॥

रक्तावसेचनैः पूर्वं सर्पिष्पानैश्च तं जयेत् ॥
प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः ॥ १९७ ॥

सर्पिष्पानैरिति। सर्पिः पञ्चतिक्तादि तस्य सर्पिषः पानैः प्रदेहैः। कफपित्तघ्नैरिति। कफपित्तहरद्रव्यकृतैः प्रलेपैः ॥ १९७ ॥

बीजपूरकमूलानि अग्निमन्थस्तथैव च ॥
सनागरं देवदारु रास्नाचित्रकपेषितम् ॥ १९८ ॥

---

*ख. पुस्तके "संनिपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः संजायते तेन कश्चिदेव विमुच्यते" इत्यधिकम्।

**प्रलेपनमिदं श्रेष्ठं गलशोथविनाशनम् ॥**
**कुलत्थं कट्फलं शुण्ठी कारवी च समांशकैः ॥**
**सुखोष्णैर्लेपनं कार्यं कर्णमूले मुहुर्मुहुः* ॥ १९९ ॥**

सुगमम् ॥ १९८ ॥ १९९ ॥

क्रमप्राप्तामागन्तुचिकित्सामाह—

**अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् ॥**

अभिचारोऽथर्ववेदविदां श्येनादियागे विपरीतमन्त्रैर्लेहे स्रुचा सर्षपादिहोम इत्याहुः। डल्लणस्त्वभिचारो यन्त्रमन्त्रादिभिरवपीडनमित्याह। अभिशापो गुरुवृद्धादीनामनिष्टाभिशपनं तदुत्थौ। होमादिनेत्यत्राऽऽदिग्रहणेन प्रायश्चित्तबलिमङ्गलजाप्यादयो गृह्यन्ते॥

**दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ॥ २०० ॥**

**दानस्वस्त्ययनातिथ्यैरिति**। दानं देवब्राह्मणादिभ्यः सुवर्णाद्युपढौकनम्। स्वस्त्ययनमाशीर्वादः। आतिथ्यमतिथिपूजा। **उत्पातग्रहपीडजाविति**। उत्पातजं ग्रहपीडाजं च। उत्पातोऽनिष्टसूचकं निर्घातादि। ग्रहा आदित्यादयः। ङ्यापोः संज्ञाछन्दसोर्बहुलमित्यनेन पीडाशब्दस्याऽऽकारस्य ह्रस्वत्वम् ॥ २०० ॥

**ओषधीगन्धविषजौ विषपित्तप्रबाधनैः ॥**
**जयेत्कषायैर्मतिमान्सर्वगन्धकृतैर्भिषक् ॥ २०१ ॥**

**ओषधीगन्धविषजाविति**। तीव्रौषधीगन्धाघ्राणस्थावरविषभक्षणकृतौ। **विषपित्तप्रबाधनैरिति**। विषपित्तचिकित्सितैः। कैस्तैरित्यत उक्तम्—**जयेत्कषायैरित्यादि**। **सर्वगन्धकृतैरिति**। सर्वगन्ध एलादिगणस्तत्कृतैः सौश्रुतत्वादस्य योगस्य।

यत्तु—'चातुर्जातककर्पूरकङ्कोलागरुसिह्लकम् ॥
लवङ्गसहितं चैव सर्वगन्धं विनिर्दिशेत्' ॥

इति निघण्टुकारवचनं क्वचिच्छ्रूयते तदुद्वर्तनादिविषयं ज्ञेयम्। अन्ये विषपीतप्रसाधनैरिति पठन्ति व्याख्यानयन्ति च विषपीतस्य यानि चिकित्सितानि तैरित्यर्थः ॥ २०१ ॥

**क्रोधजे पित्तजित्काम्या अर्थाः सद्वाक्यमेव च ॥ २०२ ॥**

**सद्वाक्यमिति**। सान्त्वनार्थं साधुवचनम् ॥ २०२ ॥

---

* ख पुस्तके "कट्फलाब्दवचापाठापुष्कराजाजिपर्पटैः। देवदार्वभयाशृङ्गीकणाभूनिम्बनागरैः ॥ १ ॥ भार्गीकलिङ्गकटुकाशठीकट्तृणधान्यकैः। समांशैः साधितः क्वाथो हिङ्ग्वार्द्रकरसैर्युतः ॥ २ ॥ सर्वान्गलामयान्हन्ति स्वरभेदं कफात्मकम्। कर्णमूलोद्भवं शोथं हन्ति मन्यागलोद्भवम् ॥ ३ ॥ कफवातज्वरं कासं तथा हन्ति गलामयान्" इत्यधिकमत्र।

---

१ घ. संनिपाते।

**अभ्यासनेष्टलाभेन वाय्वोः प्रशमनेन च ॥**
**हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥ २०३ ॥**

हर्षणैश्चेति चकारः क्रोधादिभिः परस्परं प्रतिद्वंद्वैरिति समुच्चिनोति । यदुक्तम्—"कामात्क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः ॥
याति ताभ्यामुभाभ्यां तु भयशोकसमुद्भवः" इति ॥ २०३ ॥

भूतज्वरचिकित्सितमतिदेशेनाऽऽह—

**भूतविद्यासमुद्दिष्टैर्बन्धावेशनपूजनैः ॥**
**जयेद्भूताभिषङ्गोत्थं मनःसान्त्वैश्च मानसम् ॥ २०४ ॥**

**बन्धावेशनपूजनैरिति** । अन्तर्निविष्टस्य भूतस्य पुनरपसरतः संयमनं बन्धः । मन्त्रेणाऽऽकृष्य मस्तकनिवेशनमावेशनम् । तोयर्धिबल्यादिदानं पूजनं तैः । पूजनशब्दस्य स्थाने क्वचित्ताडनशब्दस्य पाठः । ताडनं सर्षपादिभिः समन्त्रैरभिहननम् । **भूताभिषङ्गोत्थमिति** । भूतसंबन्धसमुत्थमिति । मनःसान्त्वैरित्यत्र विज्ञानाद्यैरिति केचित्पठन्ति ॥ २०४ ॥

संप्रति जीर्णज्वरचिकित्साया अवसरः—

**निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम् ॥**
**जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥ २०५ ॥**

निदिग्धिका कण्टकारी । **मिश्रितपिप्पलीकमिति** । प्रक्षिप्तपिप्पलीचूर्णम् । पिप्पलीचूर्णस्य माषकद्वयं प्रक्षेपः प्रचारात् । एवमन्यत्रापि । निदिग्धिकादिर्वातकफे क्रियते । पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु क्षिपन्ति **वृद्धाः** । पुराणप्रतिश्याये दृष्टफलोऽयं योगः ॥ २०५ ॥

अस्य सोपपत्तिं वृद्धवैद्यव्यवहारसिद्धमुपयोगसमयं **वृन्द** आह—

**हन्त्यूर्ध्वजानयं प्रायः सायं तेनोपयुज्यते ॥**

किंतु प्रातरुत्थाय तां पिबेदिति बिन्दुसारदर्शनात्प्रातःसमयेऽपि कर्तव्योऽसौ ।

**कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत् ॥**
**जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली ॥ २०६ ॥**

शस्यते गुडपिप्पलीति । गुडपिप्पल्योः प्रायः प्रत्येकं माषत्रयेण प्रचारः ॥२०६॥

**पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नोद्भवोद्भवः ॥**
**जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ॥ २०७ ॥**

**छिन्नोद्भवोद्भव इति** । छिन्नोद्भवा गुडूची । **पञ्चमूलीकृतोऽथवेति** । पञ्चमूली महती । अत्रापि पिप्पलीचूर्णप्रक्षेपः । एतत्क्वाथद्वयं प्रायः सायमुपयुज्यते ॥ २०७ ॥

१ ड. °नताडनैः ।

**शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ॥**
**जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥ २०८ ॥**

जीर्णज्वरे न तरुणे। सांनिपातिके पुनः संज्ञाप्रबोधनार्थं तरुणेऽपि प्रयुज्यते शीर्षविरेचनमिति नस्यम् ॥ २०८ ॥

इदानीं दुर्बलस्य चिरोत्थिते ज्वरे पथ्यसंभोजनैर्बृंहणविधिमाह—

**संततं विषमं वाऽपि क्षीणस्य सुचिरोत्थितम् ॥**
**ज्वरं संभोजनैः पथ्यैर्लघुभिः समुपाचरेत् ॥ २०९ ॥**

संततमिति नित्यानुषक्तं न तु पारिभाषिकम्। तस्य विषममित्यनेनैव गृहीतत्वात्। विषमं सततान्येद्युष्कादिकम्। संभोजनैरिति बृंहणैः। पथ्यैरिति लघुहितैः। अन्यत्राप्युक्तम्—

"दौर्बल्याद्देहधातूनां ज्वरो जीर्णोऽनुवर्तते ॥
बल्यैः संबृंहणैस्तस्मादाहारैः समुपाचरेत्" इति ॥ २०९ ॥

किं तत्संभोजनं पथ्यमित्यत आह—

**तण्डुलीयकवास्तूकबालमूलकपर्पटान् ॥ २१० ॥**
**पटोलममृतापत्रं शाकार्थं दार्विपत्रिकाम् ॥**
**मांसार्थमेणलावादीन्दद्याद्युक्त्या विचक्षणः ॥ २११ ॥**

दार्विपत्रिका दार्विकाशाकम् ॥ २१० ॥ २११ ॥

**ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ॥**
**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ २१२ ॥**

काममित्यनुमतम्। पयसेति दुग्धपानेन। दुग्धं त्वनुलोमकतया दोषहरं भवत्येव ॥ २१२ ॥

अतः परं ज्वरोपशमेऽरोचकादिप्रतिषेधार्थमाह—

**अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ॥**
**शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः ॥ २१३ ॥**

गात्रसादोऽङ्गग्लानिः। **वैवर्ण्येऽङ्गमलादिष्विति।** देहमूत्रपुरीषादिषु वातपित्तकफैः क्रमादरुणपीतशुक्ललक्षणविपरीतवर्णयोगे कृते सति। अनेन मलाश्रितदोषकृतवैवर्ण्यवचनेन दोषस्य कोष्ठगतत्वं प्रतीत्य शोधनविषयत्वमुक्तम्। **शान्तज्वरोऽपीति।** शान्त इव शान्तो लीनज्वर इत्यर्थः। सर्वथा शान्तस्यारोचकादिकर्तृत्वानुपपत्तेः। **शोध्य इति।** शोधयितव्यः शोधनजितानां व्याधीनामपुनर्भवतेः।

यदुक्तम्—"दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः" इति।

**अनुबन्धभयादिति** । अनुबन्धः पुनरुद्भवस्तस्य शङ्कातः ॥ २१३ ॥

क्षीरावस्थामाह—

**जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ॥**

**कफे क्षीण इति** । कफक्षयाद्वातपित्तोत्तरतायां जातायां क्षीरममृतायते ।

यदुक्तम्—"दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् ।
बद्धप्रच्युतदोषं वा निरामं पयसा जयेत्" इति ।

क्षीरस्यानेकविधिमाहुस्तन्त्रान्तरीयाः—

"संस्कृतं शीतमुष्णं वा दद्याद्धारोष्णमेव वा ।
विभज्य काले भुञ्जीत ज्वरिणं हन्त्यतोऽन्यथा" इति ॥

क्षीरं तरुणज्वरे पीतं सात्किं कुर्यादित्याह—

**तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥ २१४ ॥**

तदेवेति पयः । तरुणे तरुणज्वरे । यद्यप्यस्य जीर्णज्वरे विधानात्तरुणे दोषकरत्वावगतिस्तथाऽपि प्रमादादपि तरुणे न प्रयोक्तव्यमिति तद्दूषणाभिधानम् ॥ २१४ ॥

**कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलात्सपीनसात् ॥**
**मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ २१५ ॥**

**पञ्चमूलीशृतमिति** । पञ्चमूल्यत्र कनीयसी वातपित्तहरत्वात् । क्षीरपाकपरिभाषया पञ्चमूलीद्रव्यार्धपले क्षीरपलचतुष्टयं षोडशजलपलानि दत्त्वा क्षीरशेषः कार्यः एवं सर्वत्र ॥ २१५ ॥

**त्रिकण्टक[1]वचाव्याघ्रीगुडनागरसाधितम् ॥**
**वर्चोमूत्रविबन्धघ्नं शोषज्वरहरं पयः ॥ २१६ ॥**

**गुडनागरसाधितमिति** । गुडो द्रव्यान्तरतुल्यमान एवात्र प्रक्षेपः । गुडक्वाथस्य निष्प्रयोजकत्वादिति केचित् ॥ २१६ ॥

ग्रन्थान्तरात्क्षीरपाकस्य विशेषविधिः—

**द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ॥**
**क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः ॥ २१७ ॥**

"नस्यान्मुक्तरसं सम्यग्द्रव्यं क्षीरादिभिः सह ॥
तन्निर्दिशेद्वारि पूर्वं पादवत्साधयेद्भिषक् ॥

इत्यनेन पूर्वं षोडशभागं वारि चतुर्भागावशेषं साधयेत्पश्चात्तेन वारिणा तुल्यानि क्षीरादीन्यावारिक्षयात्पचेत् ॥ २१७ ॥

---

१ क. 'कवलाव्या' ।

पञ्चमूलीशृतं क्षीरं चतुर्गुणजलेन वा ॥
शिंशपागण्डिकाभिर्वा धारोष्णं वा ज्वरापहम् ॥ २१८ ॥

पञ्चमूलीशृतं क्षीरं चतुर्गुणजलेन वेत्येको योगः। चतुर्गुणजलेन निरौषधमेव क्षीरं साध्यमित्यन्यः। पञ्चमूलीशृतं क्षीरमुक्तमपि समस्तश्लोकानुरोधात्पुनर्लिखितम्। **शिंशपागण्डिकाभिरिति**। शिंशपा शिंशवीति लोके। तस्या गण्डिका खण्डगण्डिका ताभिः। अयं च क्षीरविधिः **सुश्रुतमतेन**। **चरके** तु कषायानन्तरं सर्पिस्ततः क्षीरम्। तद्यथा—ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनमिति ॥ २१८ ॥

सतताद्विविषमज्वराणां चिकित्सां विवक्षुस्तेषां संप्राप्तिमाह—

कृशानां ज्वरमुक्तानां मिथ्याहारविहारिणाम् ॥
दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः ॥ २१९ ॥
सततान्येद्युष्कत्र्याख्यचतुर्थान्सप्रलेपकान् ॥
कफस्थानविभागेन यथासंख्यं करोति हि ॥ २२० ॥
अहोरात्रादहोरात्रात्स्थानात्स्थानं प्रपद्यते ॥
ततश्चाऽऽमाशयं प्राप्य दोषः कुर्याज्ज्वरं नृणाम् ॥ २२१ ॥

अस्यायमर्थः। कृशानां मिथ्याहारविहारिणां ज्वरमुक्तानां च मिथ्याहारविहारिणां दोषः पूर्वं पथ्यसेवया स्वल्पोऽपि मिथ्याहारविहाराभ्यामतिसंवृद्धो लब्धबलोऽनिलेरितो वातप्रेरितः सन्सततादीञ्जनयति। **कफस्थानविभागेनेति**। आमाशयहृदयकण्ठशिरःसंधय इति पञ्च कफस्थानानि तेषां विभागेन। यथासंख्यं दोषैरहोरात्रात्स्थानात्स्थानं प्रपद्याऽऽमाशयं गत्वा सततादयः क्रियन्ते। तदयमर्थः। आमाशयस्थो दोषोऽहोरात्रात्सततं करोति द्विकालम्। न च सर्वदा। आमाशयप्राप्त्या सदाऽस्य संभवप्रसङ्गः। अहोरात्रात्स्वकोपकालापेक्षया तदुत्पत्तेः। हृदयस्थो दोष आमाशयं प्रपद्यान्येद्युष्कमेककालं करोति सततारम्भकदोषापेक्षयाऽस्य व्यवहितत्वात्। कण्ठस्थो दोष एकस्मिन्दिने हृदयमायाति। अपरास्मिन्दिन आमाशयमागम्य तृतीयेऽह्नि तृतीयकं कुर्यात्। शिरस्थो दोषः कण्ठहृदयामाशयांस्त्रिभिर्दिनैः क्रमेण प्राप्य चतुर्थेऽह्नि चतुर्थकं करोति। संधिस्थस्तु प्रलेपकं कुर्यात्। संधयश्चाऽऽमाशयेऽपि सन्तीति। अयं सर्वदा भवतीति। प्रभावाच्च शोषिणामेव स्यात्। अयं त्वविषमः। अन्ये चत्वारो मुक्तानुबन्धत्वेन विषमाः। सर्वेषु कफस्थानेषु व्यवस्थितो दोषः संततं करोतीति ज्ञेयं तन्त्रान्तरोक्तत्वात्। दोषशब्दोऽत्र पृथग्द्वंद्वसमस्तरूपो वातादिर्ग्राह्यः। अनिलेरितत्वं च वातस्यापि स्थितस्य बाह्यहेतुप्रचुरीभूतेनापरेण वातेन संभवति ॥ २१९ ॥ २२० ॥ २२१ ॥

अपरो विषमो रात्रिज्वरो दिवाज्वरश्च तावाह—

समौ वातकफौ यस्य हीनपित्तस्य देहिनः ॥
प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य च ॥ २२२ ॥

**दिवाहीनकफस्य चेति** । हीनकफस्य चकारात्समवातपित्तस्य दिवाज्वरो भवति ॥ २२२ ॥

प्रलेपकस्त्वविषमः प्रायः क्लेशाय शोषिणाम्* ॥
कलिङ्गकाः पटोलस्य पत्रं च कटुरोहिणी ॥ २२३ ॥

सुगमम् ॥ २२३ ॥

पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्बं पटोलं त्रिफला मृद्वीकामुस्तवत्सकैः ॥ २२४ ॥
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
गुडूच्यामलकं मुस्तमर्धश्लोकसमापनाः ॥
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ॥ २२५ ॥

**पञ्चविधं ज्वरमिति** । प्रलेपकवर्जं संततसततान्येद्युष्कतृतीयकचतुर्थकम् । यतश्चरकस्यैते पञ्च योगाः । तत्रैतत्पञ्चकमेव पठित्वाऽमी योगा उक्ताः । **संग्रहकारस्तु** सततान्येद्युष्कत्र्याख्यचतुर्थकप्रलेपकान्पठित्वा योगानिमाँल्लिखितवानिति न मनोहरम् । एते च योगाः पञ्च पञ्चसु यथासंख्यं ज्ञेयाः । सर्वे वा सर्वत्रेत्यन्यः ॥२२४॥२२५॥

कषायाः संततादीनां पञ्चैते चरकादिना ॥
प्रलेपकं विहायैव तथा वातबलासकम् ॥ २२६ ॥
गद्यम्—कषायाः क्रमेण व्यतिक्रमेण वा क्रियन्ते ॥ २२७ ॥

सुगमम् ॥ २२६ ॥ २२७ ॥

अजाजी गुडसंयुक्ता विषमज्वरनाशिनी ॥
अग्निमान्द्यं जयेत्सम्यग्वातरोगांश्च नाशयेत् ॥ २२८ ॥

**अजाजी गुडसंयुक्तेति** । अजाजी कृष्णजीरकं प्रचारात् । तच्च समेन गुडेन योज्यम् । सितजीरकमित्यन्ये ॥ २२८ ॥

गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ॥

गुडप्रगाढां किंचिदधिककर्षप्रतिवापगुडयुतां त्रिफलां पिबेत्कथितामिति शेषः । विषमार्दितो विषमज्वरपीडितः । ज्वरशब्दलुप्तनिर्देशात् ॥

गुडूचीनिम्बधात्रीणां कषायं वा समाक्षिकम् ॥ २२९ ॥

---

* ख. पुस्तके "क्षीरेण पञ्चवृद्ध्या वा दुग्धान्नाशी कणां पिबेत् ॥ यावत्पूर्णं शतं तु स्यात्तां तथैवापकर्षयेत् ॥ १ ॥ त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा दशभिरथ विवृद्धं पिप्पलीवर्धमाना ॥ पिबति च पयसा यस्तस्य न श्वासकासौ ज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ २ ॥ कफवातश्वासपाण्डुगुल्मशोफोदरापहम् ॥ विषमज्वरे च तद्दृष्ट्यं पिप्पलीवर्धमानकम्" ॥ ३ ॥ इत्यधिकमत्र ।

धात्री, आमलकी। एष योगश्चतुर्थकज्वरघ्नः समानतश्चोक्तत्वात् ॥ २२९ ॥

**मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः ॥**
**पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ २३० ॥**

सुगमम् ॥ २३० ॥

**प्रातः प्रातः ससर्पिर्वा रसोनमुपकल्पयेत् ॥**

सुगमम् ॥

**पिप्पलीवर्धमानं वा पिबेत्क्षीररसाशनः ॥ २३१ ॥**

पिप्पलीवर्धमानं वातकफजे प्लीहोदरोक्तमात्रया। क्षीररसाशन इत्यभिधानमधिकविधानार्थं ज्ञेयम्। क्षीरं मांसरसश्च प्रयोगसात्म्यं पिप्पलीवर्धमानकविधाने क्षीररसाशनस्य दर्शितत्वात्। अत्र पुनरभिधानमधिकमात्रार्थमिति कार्तिकः ॥ २३१ ॥

**दिनमेकं तु विश्रम्य प्रत्येति स तृतीयकः ॥**
**दिनद्वयं तु विश्रम्य प्रत्येति स चतुर्थकः* ॥ २३२ ॥**

सुगमम् ॥ २३२ ॥

वृन्दस्तु तृतीयकचतुर्थकयोः स्वरूपं दर्शयित्वा तयोश्चिकित्साविशेषं वक्तुं चरकार्धश्लोकेन सममात्मनः श्लोकार्धं ब्रूते—

**कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ ॥**
**अतस्तौ प्रतिकर्तव्यौ विशेषोदितभेषजैः ॥ २३३ ॥**

साधारणं ज्वरमात्रसाधारणं विषमज्वरसाधारणं वा कर्म तृतीयकचतुर्थकौ कर्मभूतौ जह्यात्त्यजति न स्फोटयतीति यावत्। अतः साधारणक्रियां त्यक्त्वा प्रतिपदोक्तक्रियया चिकित्स्याविर्यं वृन्दाभिप्रायेण व्याख्या। चरके तु कर्म साधारणमित्यादेरर्थः साधारणं कर्म दैवयुक्तिव्यपाश्रयं तृतीयकचतुर्थकौ जह्यादन्तर्भावितण्यर्थत्वेन हापयतीति टीकाकारैरागन्तुरनुबन्धो हि प्रायशो विषमज्वर इति चरकोक्तहेत्वनुरोधाद्व्याख्यातः।

अस्य श्लोकस्येशानदेवोक्ता व्याख्या लिख्यते—कर्म साधारणमित्यादि। कुतः। यस्मादागन्तुरनुबन्धः प्रायशो विषमज्वरे भवति। विषमज्वरग्रहणाच्च केचिद्देतावेव द्वौ तृतीयकचतुर्थकौ विषमज्वराविति प्रतिपन्ना न तु सततान्येद्युष्कौ। यद्यपि तौ विषमं ज्वरयतः। अत्र संशयः। साधारणं कर्म दैवयुक्तिव्यपाश्रयमुत वा निजागन्त्वोर्द्वयोरपि यद्योगं ददाति तत्साधारणं कर्म। यथा पयसा सह वृषदंशशकृत्पयो निजं दोषं जयति बिडालशकृत्त्वागन्तुम् ॥ २३३ ॥

* ख. पुस्तके "नखे...त्पाटिताः सहदेवीमूलाकर्णबन्धनात्। ज्वरं चातुर्थिकं हन्ति भानुवारे न संशयः" ॥ १ ॥ इत्यधिकमत्र।

**महौषधामृतामुस्तचन्दनोशीरधान्यकैः ॥**
**क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः* ॥ २३४ ॥**

सुगमम् ॥ २३४ ॥

**अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः ॥**
**बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ २३५ ॥**

**अपामार्गजटेति** । जटा मूलम् ॥ २३५ ॥

**गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः ॥**
**तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको[1] ज्वरः† ॥ २३६ ॥**

**तस्मै तिलोदकमिति** । अत्रोदकमनुदये नवपात्रानीतं भूमावनवस्थापितं ग्राह्यं प्रचारात् । कुशाश्वत्थपत्रहस्तस्य च तर्पणम् ॥ २३६ ॥

**वासाधात्रीस्थिरादारुपथ्यानागरसाधितः ॥**
**सितामधुयुतः क्वाथश्चातुर्थिकनिवारणः* ॥ २३७ ॥**

सुगमम् ॥ २३७ ॥

**अगस्तिपत्रस्वरसेन नस्यं निहन्ति चातुर्थिकमुग्ररूपम्[2]† ॥**

अगस्तिपत्रस्वरसेन तद्रसेन ॥

यथोक्तविषमज्वरविपरीतानपरानपि विषमप्रकारानाह—

**कफस्थानेषु वा तिष्ठन्दोषो द्वित्रिचतुर्षु वा ॥**
**विपर्ययाख्यान्कुरुते विषमान्कष्टसाधनान् ॥ २३८ ॥**

अस्यार्थः । कफस्थानेष्वामाशयादिषु द्वयोस्त्रिषु चतुर्षु वा तिष्ठन्दोषो वातादिको विपर्ययान्कुरुते तत्र द्वयोः कफस्थानयोरामाशयहृदययोस्तिष्ठन्दोषो वातादिरन्येद्युष्कविपर्ययं कुर्यात् । विपर्ययश्च सततस्याहोरात्रे पूर्वाह्णादीनां मध्ये कालमेकं त्यक्त्वा सर्वाहोरात्रभवनम् । एवं त्रिषु कफस्थानेष्वामाशयहृदयकण्ठेषु तिष्ठन्दोषस्तृती-

* ख पुस्तके—उपकुल्यां पिबेत्पिष्टां क्षीरेण सुसमाहितः । पिप्पलीवर्धमानं वा विषमज्वरपीडितः ॥१॥ मधु सर्पिः सिता कृष्णा शृतक्षीरविलोडिता । विषमज्वरहृद्रोगक्षतकासज्वरापहा ॥२॥ इत्यधिकमत्र ।

† ख. पुस्तके—वानरस्य मुखं दिव्यमादित्योदयसंनिभम् । ज्वरमेकान्तरं घोरं दर्शनादेव नश्यति ॥ १ ॥ अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । वाराणस्यां च यद्वृत्तं तन्म स्मर शिवं चरम् ॥२॥ लिखित्वाऽश्वत्थपत्रेषु धारयेद्दक्षिणे करे । इत्यधिकमत्र ।

* ख. पुस्तके—षोडशाष्टचतुर्भागं वातपित्तकफार्तिषु । क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥ १ ॥ इत्यधिकमत्र ।

† ख पुस्तके—कृष्णामलकीरामठदार्वीवचाराजसर्षपरासनैः । छागलमूत्रनिपिष्टैर्नस्यं त्वैकाहिकाज्वरम् ॥ १ ॥ इत्यधिकमत्र ।

1 क. घ. °श्चत्यैका° । 2 क. घ. °प्रवीर्यम् ।

यकविपर्ययं करोति। यत्र दिने हृदयस्थो दोष आमाशयमागत्य ज्वरयति तत्र दिने कण्ठस्थो दोषो त्हृदयमायाति । अपरास्मिन्दिने सोऽप्यामाशयमागत्य ज्वरयति । एवं दिनद्वयं भूत्वा तृतीये दिने न भवतीति तृतीयकविपर्ययः । चतुर्ष्वामाशयहृदयकण्ठशिरस्सु कफस्थानेषु तिष्ठन्दोषश्चतुर्थकविपर्ययं करोति । यस्मिन्दिने हृदयस्थो दोष आमाशयमागत्य ज्वरयति तास्मिन्नेव दिने कण्ठस्थो हृदयं शिरस्थश्च कण्ठमेति । अपरास्मिन्दिने हृदयस्थ आमाशयमागत्य ज्वरयति कण्ठस्थश्च हृदयमेति । अपरदिने हृदयस्थ आमाशयमागत्य ज्वरयति। एवं दिनत्रयं भूत्वा चतुर्थेऽह्नि न भवतीति चतुर्थकविपर्ययः । सततकस्य विपर्ययो नास्ति । एकास्मिन्नेव कफस्थाने स्थितेन दोषेण तत्करणादिति कार्तिकः । केचिदुदाहरणमात्रमेतदिति मन्यमानाः सततकस्यापि विपर्ययं ब्रुवते । कालद्वयं त्यक्त्वा सकलमहोरात्रं ज्वरयतीति सततकविपर्ययः। अन्यैः पुनरन्यादृशोऽपि तृतीयकादिविपर्ययो दर्शितः। तद्यथा। तेषां कालविभागमाह । तत्र प्रत्यहोरात्रं सत्रिभागाः प्रहराः षट्कालाः पूर्वाह्णमध्याह्नापराह्णप्रदोषार्धरात्रप्रत्यूषभेदेन । तत्रान्येद्युस्त्वहोरात्र एककालं सत्रिभागं प्रहरं प्रवर्तते । तद्विपर्ययस्त्वेककालं मुञ्चति । तृतीयकस्तृतीयेऽह्न्येककालं सत्रिभागं प्रहरं प्रवर्तते । तद्विपर्ययस्तु तृतीयेऽह्न्येकं कालं विमुञ्चति चतुर्थकश्चतुर्थेऽहन्येककालं प्रवर्तते । तद्विपर्ययस्तु चतुर्थेऽहन्येककालं विमुञ्चति । संततसततप्रलेपकानां विपर्यया नोक्तास्तेषामसंभवात् । अत्र संतताादिषु विपर्ययेषु च दोषादिबलतः प्रोक्तकालाद्भिनाऽऽधिक्यमपि स्यादिति ज्ञेयम् । कफस्थानेषु वा दोष इत्यत्र दोषशब्दः पृथग्द्वंद्वसमस्तप्रतिपादकः सामान्येनोक्तत्वात् । तन्त्रान्तरेऽप्युक्तम्—

"कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ॥
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥
चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ॥
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्थोऽनिलसंभवः" इति ॥

यस्य यो विपर्ययस्तस्यैव तत्र चिकित्सा कार्या ॥ २३८ ॥

**रसोनकल्कं तिलतैलयुक्तं योऽश्नाति नित्यं विषमज्वरार्तः ॥**
**विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥२३९॥**

सुगमम् ॥ २३९ ॥

**रक्ताश्वमारपुष्पं च धात्री धान्यं वचामयम् ॥**
**पिष्ट्वा कोष्णो ज्वरे कार्यो लेपो मूर्धरुजापहः ॥ २४० ॥**

सुगमम् ॥ २४० ॥

विषमज्वरेऽष्टाङ्गधूपमाह—

**पलंकषा निम्बपत्रं वचा कुष्ठं हरीतकी ॥**
**सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ २४१ ॥**

पलंकषा गुग्गुलुः । विषमज्वरोक्तोऽप्यसौ योगो जीर्णज्वरे भूतविषमज्वरे च प्रयोक्तव्यः समानतन्त्रोक्तत्वात् ॥ २४१ ॥

अवस्थाविशेषेण धूपनमाह—

**बैडालं वा शकृद्योज्यं वेपमानस्य धूपने ॥ २४२ ॥**

बैडालं शकृद्बिडालविष्ठा ॥ २४२ ॥

आगन्त्वनुबन्धप्रतिषेधार्थं दैवव्यपाश्रयां चिकित्सामाह—

**सोमं सानुचरं देवं समातृगणमीश्वरम् ॥**
**पूजयन्प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ २४३ ॥**

सोममुमया सहितम् । सानुचरं सनन्द्यादिगणम् । समातृगणं मातृसमूहयुक्तम् । प्रयतः पवित्रः । ईश्वरादिपूजनाद्दुरितोपशान्तिर्धर्मोत्पत्तिश्च ॥ २४३ ॥

**विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ॥**
**स्तुवन्नामसहस्रेण ज्वरान्सर्वान्व्यपोहति ॥ २४४ ॥**

**सहस्रमूर्धानमिति** । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्यादिना चोक्तम् । नामसहस्रेण **भारतोक्तेन** । ज्वरस्यापि देवतात्मकत्वात्पूजा कार्या । तथाच **विदेहः**—

"तीर्थायतनदेवाग्निगुरुवृद्धोपसर्पणैः ।
ज्वरश्च पूजनैश्चापि सहसैवोपशाम्यति" इति ॥ २४४ ॥

**मूलं भूमिजयन्त्याश्च सहदेवोद्भवं तथा ॥**
**तण्डुलीयकमूलं वा बद्धं मूर्ध्नि ज्वरापहम् ॥ २४५ ॥**

सुगमम् ॥ २४५ ॥

**विषमज्वरेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ॥**

ऊर्ध्वं शोधनं वमनम् । तच्च कफाधिके विषमज्वरे । अधःशोधनं विरेचनम् । तच्च पित्ताधिके । एतेन सर्वेष्वेव विषमज्वरेषु कफपित्ताधिकतया वमनविरेचने प्रयोक्तव्ये इत्युक्तं **तन्त्रान्तरे** कफपित्तयोर्वमनविरेचनयोरुपदेशात् ।

तद्यथा—"वमनं पाचनं रूक्षमन्नपानं विलङ्घनम् ।
कषायोष्णं च विषमे ज्वरे शस्तं कफोत्तरे" इति ॥

तथा—"विरेचनेन पयसा सर्पिषा संस्तुतेन च ।
विषमं तिक्तशीतैश्च ज्वरं पित्तभवं जयेत्" इति ॥

**अन्ये** तु विषमज्वरेष्वित्यत्र यद्यपि विषमज्वरशब्देन संततं विहायान्ये विषमज्वराः

प्रोक्तास्तथाऽप्यत्र तृतीयकचतुर्थकावेव विषमज्वरौ ग्राह्यौ। यतस्तयोरेव साधारणं कर्म वातपित्तश्लेष्महरमास्थापनं विरेचनं वमनादिकं युक्तमिति व्याचक्षते ॥

शान्तिं नयेत्त्रिवृद्वाऽपि सक्षौद्रा विषमज्वरम् ॥ २४६ ॥

त्रिवृद्वाऽपि सक्षौद्रेति। लेहोऽयं विरेचकार्थम्। अत्र विषमज्वरमिति पाठोऽनार्षः। चरकसुश्रुतयोरस्य योगस्य नित्यज्वर एव विहितत्वात्। प्रबलज्वरमिति पाठः साधुः। अस्यार्थः। प्रबलज्वरं प्रकृष्टबलस्य ज्वरं प्रकृष्टबलं वा ज्वरं बहुदोषबल एव शोधनस्य योग्यत्वात् ॥ २४६ ॥

मधुना वाऽभया लीढा हन्त्याशु विषमज्वरम् ॥

सुगमम् ॥

ज्वरवेगं च कालं च चिन्तयञ्ज्वर्यते तु यः ॥
तस्येष्टैरद्भुतैर्वाऽपि विषयैर्नाशयेत्स्मृतिम् ॥ २४७ ॥

चिन्तयन्नित्यतो मानसज्वरप्रकारोऽयम्। अतस्तस्येष्टैर्विचित्रैश्च विषयैर्ज्वरकालो विस्मारणीयः। ज्वरस्य वेगकालयोः स्मरणेन मनोविषादाज्ज्वरसंवृद्धिः। तदुक्तम्— विषादो रोगवर्धनानामिति वचनात् ॥ २४७ ॥

ज्वरे घृतप्रयोगान्विवक्षुर्घृतस्य कालं विषयं चाऽऽह—

घृतं द्वादशरात्रात्तु देयं क्षीणकफे ज्वरे ॥ २४८ ॥

लङ्घनलघुभोजनादिभिः कफे क्षीणे रूक्षस्य द्वादशरात्रादेव घृतं देयम्। तेन हि दोषाणां सर्वथा निरामतया स्वाशयगतेः। यदुक्तं सुश्रुते—

"घृतं द्वादशरात्रे तु देयं सर्वज्वरेषु वै ॥
तेनान्तरेणाऽऽशयं स्वं गता दोषा भवन्ति हि" इति ॥

अस्यार्थः। ननु दशाहात्परमौषधदानाभ्यनुज्ञानाद्दशाहेन दोषपाकप्रदर्शनात्कथमेवमिति चेत्। सर्वज्वरेष्वित्यभिधानात्। यतः संनिपाते द्वादशाहादपि पाको भवति। अथ पाके सति दोषाणां कथं स्वाशयगमनं भवतीति चेत्। न। दोषाणां ह्रासं विना मार्दवसंभूतिः। ततश्च ह्रासेन दोषाणां स्वाशयगतिः। क्वचित्पाकाद्विकारोपशान्तिरपि स्यात्तत्र सर्वभावेनैव दोषाणां स्वाशयप्राप्तिरिति ॥ २४८ ॥

पिप्पल्यादिघृतमाह—

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ॥
कलिङ्गकास्तामलकी सारिवाऽतिविषा स्थिरा ॥ २४९ ॥

---

१ घ. 'दिकं यु'। २ घ. 'र्दवासं'।

द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका ॥
सिद्धमेभिर्घृतं सद्यो ज्वरं जीर्णं व्यपोहति ॥ २५० ॥
क्षयं कासं शिरःशूलं पार्श्वशूलमरोचकम् ॥
अंसाभितापमग्निं च विषमं संनियच्छति ॥ २५१ ॥

कलिङ्गमिन्द्रयवम् । तामलकी भूम्यामलकी । बिल्वं बिल्वशलाटुः । अत्रैके विशेषानुक्तेः पिप्पल्यादीनां क्वाथकल्करूपतां वर्णयन्ति । अन्येत्वेषां कल्कमेवेच्छन्ति । द्रवं तु जलमेव देयम् । द्रवेऽप्यनुक्ते जलमेव देयमिति वचनात् । गण एव हि क्वाथस्य कल्कस्य च कारणम् । उक्तं च सुश्रुते—क्वाथकल्कावनिर्देशे गणात्तस्मात्समावपेदिति । गणेऽपि यत्राधिकरणत्वेन कीर्तनं तत्रैव क्वाथकल्कविधिः । तथा च तन्त्रान्तरम्—

"यत्राधिकरणे नोक्तिर्गणे स्यात्स्नेहसंविधौ ॥
तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना " इति ॥

प्रचारोऽपि कल्कमात्रेण । तस्मात्पिप्पल्यादीनां कल्के जलं चतुर्गुणमत्र । एवमेवंजातीयेऽन्यत्रापि विज्ञेयम् । पिप्पल्याद्यं घृतम् ॥ २४९ ॥ २५० ॥ २५१ ॥

कल्काच्चतुर्गुणः स्नेहः स्नेहात्क्वाथश्चतुर्गुणः* ॥
क्वाथ्याच्चतुर्गुणं वारि क्वाथः क्वाथ्यसमो मतः* ॥ २५२ ॥

क्वाथ्याच्चतुर्गुणमिति । चतुर्गुणं तु द्विगुणं बोद्धव्यम् । यदुक्तम्—चतुर्गुणं त्वष्टगुणं द्रवद्वैगुण्यतो भवेदिति वचनात् । तन्त्रान्तरेऽप्यष्टगुणमेव तोयम् ।

यदुक्तम्—"क्वाथ्यादष्टगुणं तोयं क्वाथः स्याज्जलपादिकः ।
क्वाथाच्च पादिकः स्नेहः कल्कश्च स्नेहपादिकः" इति ॥

क्वाथः क्वाथ्यसमो मत इति मानेऽनियतोऽतस्तावत्सर्वत्र घृतस्य प्रस्थः पक्तव्यः । प्रस्थे च षोडशपलरूपे क्वाथः पाकार्थमुत्सर्गसिद्धश्चतुर्गुणः । स च चतुःषष्टिपलरूपः । चतुर्गुणश्च क्वाथश्चतुःषष्टिपले क्वाथनीयद्रव्ये चतुर्गुणजलेन द्वात्रिंशच्छरावरूपेण पादशिष्टेन । एवं क्वाथशेषः क्वथनीयद्रव्यसमः स्नेहाच्चतुर्गुणेन भवति । एषा च गणना द्रवद्वैगुण्यमगृहीत्वा ज्ञेया । अन्यत्राप्युक्तम्—क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात्स्नेहसमं क्षीरमित्यादिपरिभाषार्थमृजुं बुद्ध्वा क्षीरयोगे सर्वत्रैवमेव पाकं व्याचष्टे । चक्रस्त्वाह—यत्र क्वाथः क्षीरं चास्ति तत्र क्षीरेणैव सह स्नेहाच्चतुर्गुणं जलं कार्यं येन स्नेहपाके चतुर्गुणमेव द्रवमुत्सर्गसिद्धं स्नेहात्तोयं चतुर्गुणमित्यत्र तोयस्य द्रवोपलक्षणत्वा-

---

* ख. पुस्तके—स्नेहात्शेषं कर्तव्यं स्नेहपाके त्वयं विधिः । इत्यधिकमत्र ।
* ख. पुस्तके—मृदौ चतुर्गुणं दद्यात्कठिनेऽष्टगुणं तथा ॥ कठिनात्कठिनं यच्च देयं षोडशकं जलम् ॥१॥ मृद्वादिक्वाथ्यसंघाते मानानुक्तौ चिकित्सकाः ॥ मध्यस्योभयगामित्वादिच्छन्त्यष्टगुणं जलम् ॥२॥ इत्यधिकमत्र ।

दिति। तन्मतेन क्वाथोऽत्र त्रिगुणः क्षीरं स्नेहसमम्। एवं सर्वत्रान्यत्रापि ज्ञेयम्। क्षीरं च सर्वत्र गव्यं ग्राह्यं श्रेष्ठगुणत्वात्॥ २९२॥

**दशमूलीरसैः सर्पिः सक्षारैः पञ्चकोलकैः॥**
**सक्षीरं हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताम्॥**
**वातपित्तकफव्याधीन्प्लीहानं वाऽपि पाण्डुताम्॥ २९३॥**

**सक्षारैरिति**। क्षारो यवक्षारः। पञ्चकोलयवक्षाराः प्रत्येकं पालिकाः। भावियोगकल्कमानसाहचर्यात्षट्पलत्वान्यथानुपपत्तेश्च। दशमूलषट्पलं घृतम्॥ २९३॥

**पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम्॥**
**सर्पिः प्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत्॥ २९४॥**

**पयसा सममिति**। अन्ये तुल्यार्थतास्वीकारेण स्नेहसमं क्षीरं त्रिगुणं च जलमशीसिदर्शितषट्पलकसंवादाद्ब्रुवते। तद्यथा—

सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके। समक्षीरं घृतप्रस्थमित्यादि।

"क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित्।
चतुर्गुणं जलं तत्र वीर्याधानार्थमावपेत्"॥

इति परिभाषां तु क्षीरयोगे चतुर्गुणजलदानार्थमुक्तां नाऽऽद्रियन्ते। सममित्यस्य सहार्थतामाश्रित्य चक्रस्त्वाह—

"यत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्"॥ इति।

एतत्तु न मनोहरम्। यतः सुश्रुतोक्तोदरचिकित्सितषट्पलकेऽस्मिन्घृतप्रस्थं तुल्यक्षीरमिति पठ्यते परं तु तत्र जैज्जटकार्तिकभोजादिभिस्तुल्येनैव पयसा जलं विना पाको दर्शितः। तथा चरके गुल्मेऽस्मिन्घृते घृतप्रस्थं विपाचयेत्क्षीरप्रस्थेनेत्येवं परं पठितम्। प्रचारी तु पाकः प्रायश्चतुर्गुणोदकेन। षट्पलकं घृतम्॥ २९४॥

पानीयकल्याणकमाह—

**विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्॥ २९५॥**
**स्थिरा नतं हरिद्रे द्वे सारिवे द्वे प्रियङ्गुका॥**
**नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेसरम्॥ २९६॥**
**विडङ्गं पृश्निपर्णी च कुष्ठचन्दनपद्मकैः॥**
**तालीसपत्रं बृहती मालत्याः कुसुमं नवम्॥ २९७॥**
**अष्टात्रिंशतिभिः कल्कैरेतैरक्षसमन्वितैः॥**
**चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत्॥ २९८॥**

अपस्मारे ज्वरे कासे शोषे मन्देऽनले क्षये ॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ॥ २५९ ॥
छर्द्यर्शोमूत्रकृच्छ्रे च विसर्पोपद्रवेषु च ॥
कण्डूपाण्ड्वामयोन्मादविषमेहगरेषु च ॥ २६० ॥
भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥
शस्तं स्त्रीणां च वन्ध्यानामायुर्वर्णबलप्रदम् ॥ २६१ ॥
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहनिवारणम् ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ २६२ ॥

विशाला गोरक्षकर्कटी । त्रिफला हरीतक्यामलकविभीतकानि । एषां च प्रत्येकमक्षभागता द्रव्यप्रधानत्वान्निर्देशस्य । यत्र हि द्रव्यप्रधानो निर्देशस्तत्र प्रत्येकमेव भागपरिग्रहः । यथा—त्रिफला दशमूलानि पालिकानीति । यत्र तु द्रव्यस्य षष्ठ्यन्तनिर्देशान्मानं प्रधानं तत्र समुदितस्य भागः । यथा—त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य चेति । अन्ये त्वत्राष्टाविंशतिभिरिति पदस्य तात्पर्येण त्रिफलायाः प्रत्येकं भागमाहुः । त्रिफलाशब्देन यद्यपि द्राक्षाकाश्मर्यपरूषकाण्यप्युच्यन्ते ।

यदुक्तम्—"पथ्याविभीतकधात्रीभिस्त्रिफला महती स्मृता ।
ह्रस्वा काश्मर्यमृद्वीकपरूषकफलैर्भवेत्" इति ।

तथाऽपि सर्वत्र विशेषानुक्तौ गुणप्राधान्याद्धरीतक्यादय एव त्रिफलाशब्देन गृह्यन्ते । कौन्ती रेणुकम् । एलवालुकं स्वनामख्यातम् । स्थिरा शालिपर्णी । नतं तगरपादिका । तदभावे सर्वत्र शीयलीछोडः । हरिद्रे द्वे हरिद्रा दारुहरिद्रा । सारिवे द्वे अनन्तमूला श्यामालता च । दाडिमं दाडिमफलम् । केसरं नागकेसरम् । तालीसपत्रं स्वनामख्यातम् । मालत्याः पुष्पं जातीपुष्पम् । पाठादेवात्र कल्कानामष्टाविंशतित्वे सिद्धेऽष्टाविंशतिभिरित्यस्योपादानं दाडिमस्य केसरं दाडिमकेसरमित्येकद्रव्यसंदेहः स्यात्तथा(स्य) तालीसं च पत्रं चेति तालीसपत्रमिति द्रव्यद्वयशङ्कायाश्च निरासार्थम् । किंच—अष्टाविंशत्यौषधस्य सर्पिषः पानमिष्यत इत्यादावष्टाविंशत्यौषधसंज्ञया संव्यवहारार्थमस्याभिधानम् । अष्टाविंशत्येति प्रयोगे प्राप्तेऽष्टाविंशतिभिरिति निर्देशो विंशत्याद्याः सदैकत्वे स्त्रियां संख्येयसंख्ययोरिति वचनस्य प्रायिकत्वपरिकल्पनात् । तेन पञ्चाशद्भिरथायुतैरिति प्रयोगोऽपि साधुः । कल्कैरक्षसमैरेतैर्विंशत्याऽष्टाभिरेव चेति **चरके** बहुपुस्तकेषु पाठो निर्दोषः । चतुर्गुणं जलमित्येतत्परिभाषासिद्धमपि तदर्थदार्ढ्यार्थमुक्तम् ॥ ॥ २५५ ॥ २५६ ॥ २५७ ॥ २५८ ॥ २५९ ॥ २६० ॥ २६१ ॥ २६२ ॥

इदानीमन्तःपरिमार्जनमभिधाय बहिष्परिमार्जनार्थं षट्कट्वराख्यं तैलमाह—

१ क. घ. 'तरोगे प्र' ।

**सुवर्चिकानागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः ॥**
**तैलं ज्वरे षड्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुत्स्यात् ॥२६३॥**

सुवर्चिका स्वर्जिकाक्षारः । लोहितयष्टिका मञ्जिष्ठा ।

"लाक्षा निशा कुष्ठशुण्ठी मञ्जिष्ठा च सुवर्चिका ।
मूर्वाचन्दनसंसिद्धं तैलं तक्रेऽथ षड्गुणे"॥

इति विदेहदर्शनादत्र लोहितं रक्तचन्दनं यष्टिका मञ्जिष्ठेति केचिद्व्याचक्षते ।

परं तु—"स्वर्जिकाविश्वमञ्जिष्ठालाक्षामूर्वानिशामयैः ॥
तैलं षड्गुणतक्रेण सिद्धं ज्वरहरं परम् " ॥

इत्यत्र तन्त्रे रक्तचन्दनस्य(स्या) पाठाद्विदेहोक्तं प्रयोगान्तरं कल्पनीयम् । प्रचारोऽपि मञ्जिष्ठयैव । अभ्यञ्जनाच्छीतविदाहनुदिति । प्रभावादभ्यङ्गेन तैलमिदं शीतं दाहं च हन्ति । षट्कट्वरं तैलम् ॥ २६३ ॥

**दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते ॥**

भाष्यान्तरात्—दध्नः ससारकस्यात्र तक्रं कट्वरमिति । अस्नेहं दधि ।

अन्ये तु—"सौवीरासुताद्यत्यम्लं काञ्जिकं कट्वरं विदुः ॥
अन्ये तु तदधोभागं तक्रं वाऽत्यम्लतां गतम् ॥
सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम् " इति ॥

**घृततैलगुडादींश्च एकाहान्नैव साधयेत् ॥**
**उषितास्तु प्रकुर्वन्ति विशेषेण गुणान्यतः ॥ २६४ ॥**

सुगमम् ॥ २६४ ॥

**स्नेहकल्को यदाऽङ्गुल्या वर्तितो वर्तिवद्भवेत् ॥**
**वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥ २६५ ॥**

सुगमम् ॥ २६५ ॥

**शब्दव्युपरमे प्राप्ते फेनस्योपरमे तथा ॥**
**गन्धवर्णरसादीनां संपत्तौ सिद्धिमादिशेत् ॥ २६६ ॥**

तथेति । तथा तेन फेनोपरमप्रकारेण गुडगुडाशब्दस्य व्युपरमे सति स्नेहे गुडगुडाशब्दफेनयोरपि द्रवकार्यत्वात् । गन्धवर्णरसादीनां संपत्ताविति । गन्धादीनां स्नेहभेषजागतानां सम्यगुदये । स्नेहपाकस्तु मृदुमध्यखरभावात्रिविधः । एषां विषयोपलक्षणं च दृढबलेनोक्तम्—

१ क. घ. 'हानावतारये' । २ क. घ. पक्कं ।

"तुल्ये कल्केन निर्यासे भेषजानां मृदुः स्मृतः ।
संयावद्रवनिर्यासे मध्यो दर्वी विमुञ्चति ॥
शीर्यमाणे तु निर्यासे वर्तमाने खरः स्मृतः ॥
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च मध्यमः " इति ॥

अत्र तुल्ये कल्केन निर्यास इति प्रथमक्षिप्तकल्कनिभे निर्यासे सति। निर्यासं किट्टम्। **संयाव इति** । संयावः समघृतगुडः कणिकचूर्णः । मृदुपाके द्रवसद्भावात्किट्टं सर्वथा न पीडनीयम् । मध्ये मनाक्पीडनं द्रवाल्पत्वात् । खरे तु यथेष्टं पीडनीयं द्रवविरहात् । मध्यपाकस्तु श्रेष्ठः ।

उक्तं हि—"सर्वेषामेव पाकानां मध्यः पाकः प्रशस्यते ।
वरं पाको मृदुः कार्यः स्नेहस्य न खरो मतः ॥
किंचिच्च वीर्यमादत्ते तज्जहाति खरः सदा" इति ॥ २६६ ॥

**घृतस्यैवं विपक्वस्य जानीयात्कुशलो भिषक् ॥**

सुगमम् ॥

**फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥ २६७ ॥**

सुगमम् ॥ २६७ ॥

**मुकुन्द गोविन्द हरे मुरारे वैकुण्ठ शौरे कुरु मेऽनुकम्पाम् ॥**
**लोकत्रयत्राणविधानदक्ष क्षमस्व दोषं द्रुहिणाद्य वैद्य ॥ २६८ ॥**

सुगमम् ॥ २६८ ॥

**चन्दनाद्यं हितं तैलं शोषाधिकारकीर्तितम् ॥**
**तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ २६९ ॥**

सुगमम् ॥ २६९ ॥

**मूर्वालाक्षाहरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी ॥**
**बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥ २७० ॥**
**आरनालाढकेनैवं तैलं प्रस्थं विपाचयेत् ॥**
**तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् ॥ २७१ ॥**

मञ्जौ श्रेष्ठे वर्णे तिष्ठतीति नैरुक्तेन विधिना मञ्जिष्ठा व्युत्पाद्यते । अङ्गारकं तैलम् ॥ २७० ॥ २७१ ॥

**अब्दादूर्ध्वं घृतं पक्वं हीनवीर्यं च तद्भवेत् ॥**
**तैले विपर्ययं विद्यात्पक्वे चापक्व एव च ॥ २७२ ॥**

सुगमम् ॥ २७२ ॥

निःशेषदोषनिवृत्तिप्रतिपादनाय ज्वरमुक्तिलक्षणमाह—

**देहो लघुर्व्यपगतक्लममोहतापः पाको मुखे करणसौष्ठवमव्यथत्वम् ॥**
**स्वेदः क्षवः प्रकृतियोगिमनोऽन्नलिप्सा कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥२७३॥**

पाको मुखे ज्वरोष्मकोपितात्पित्तात् । यत्तु पूर्वं नाकार्षीन्मुखादन्यत्र वा स प्रभावः । स्वेदः शोषकोष्मव्यपगमात्स्रोतःस्फुटत्वाच्च । अन्नलिप्साऽन्नाकाङ्क्षा । सा च ज्वरप्रभावजाऽरोचकनिर्गमात् । कण्डूश्च शिरसि विरोधिज्वरोष्मापगमात्स्वस्थाने लब्धबलेन श्लेष्मणा ॥ २७३ ॥

ज्वरमुक्तस्यापि व्यायामादिनिषेधार्थमाह—

**व्यायामं च व्यवायं च स्नानं चंक्रमणानि च ॥**
**ज्वरमुक्तो न सेवेत यावन्न बलवान्भवेत्* ॥ २७४ ॥**

व्यायामं कृत्वाऽपि व्यवायं चेत्युक्तमात्यन्तिकनिषेधार्थम् । स्नानमूर्जस्करमपि प्रभावाज्ज्वरं प्रत्यानयति ॥

**यदुक्तम्**—" स्नानमाशु ज्वरं कुर्याज्ज्वरमुक्तस्य देहिनः ॥
तस्मान्मुक्तज्वरः स्नानं विषवत्परिवर्जयेत् " इति ॥ २७४ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्री-श्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां प्रथमो ज्वराधिकारः समाप्तः ॥ १ ॥**

## अथ द्वितीयो ज्वरातिसाराधिकारः ।

ज्वरस्योपद्रवत्वेनातिसारस्य संभवाज्ज्वरचिकित्सानन्तरं ज्वरातिसारचिकित्सितप्रणयनम् । ज्वरातिसारमेलकश्च ज्वरातीसाराभ्यामनन्यत्वान्माधवकारेण **निदानसंग्रहे** पृथङ्न दर्शितः । चिकित्साविशेषं तु वक्तुं **वृन्दः** पृथगमुं कल्पितवान्—

**पृथगुक्तनिदानेन ज्वरातीसारनिर्णयः ॥**
**कर्तव्यो भिषजा चात्र तत्क्रमेण विधिर्यतः ॥ १ ॥**

**पृथगुक्तनिदानेनेति** । पृथग्दर्शितं यन्निदानं तेन मिलितेन ज्वरातीसारमेलकस्य निर्णयः कार्यः । **तत्क्रमेण विधिर्यत इति** । तस्मिञ्ज्वरेऽतीसारे च यो दोषस्य पुरीषस्य चाऽऽमपक्वताक्रमस्तेन क्रमेणेहापि विधिर्यस्मात् । विधिराहाराचारादिर्न तु भेषजम् । तस्यानन्तरं

---

* ख पुस्तके—दग्ध्वेन्धनं यथा वह्निर्धातून्हत्वा यथा विषम् ॥ कृतकृत्यो व्रजेच्छान्तिं देहं हत्वा तथा ज्वरः ॥ १ ॥ इत्यधिकमत्र ।

निषिद्धत्वात् । अयमर्थः । ज्वरे चातिसारे चाऽऽमपक्वताक्रमेण यदुक्तमाहारादि तन्मिलितेऽपि क्रियत इति चेत् । अतस्तयोरुक्तनिदानेनैव मिलितेन ज्वरातिसारौ निश्चेतव्यावित्यर्थः ॥ १ ॥

ज्वरातिसारयोरुक्तं भेषजं यत्पृथक्पृथक् ॥
न तन्मिलितयोः कार्यमन्योन्यं वर्धयेद्यतः ॥ २ ॥

अन्योन्यं वर्धयेदिति । प्रायेण ज्वरहरमौषधमनुलोमनमतीसारहरं च स्तम्भनमतः परस्परं विरुद्धत्वान्मिलित्वा भेषजं न कर्तव्यम् ॥ २ ॥

अतस्तौ प्रतिकुर्वीत विशेषोदितभेषजैः ॥

सुगमम् ॥

लङ्घनमुभयोरुक्तं मिलिते कार्यं विशेषतस्तदनु ॥
उत्पलषष्ठकसिद्धं लाजामण्डादिकं सकलम् ॥ ३ ॥

सुगमम् ॥ ३ ॥

पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥
ज्वरातिसारी पेयां वा पिबेत्साम्लां शृतां नरः ॥ १४ ॥

पेयां वेति । वाशब्दश्चरके यवाग्वन्तरापेक्षया यूषादावप्युपसंग्रहार्थं साम्लामित्यस्यानन्तरं वा द्रष्टव्यः । तेनानम्लामपीति फलति । अतिसारे हि पुरीषातिस्रुतत्वात्प्रायेण वातप्रकोपः । तेन साम्लामित्युक्तम् । साम्लामीषदम्लाम् । साम्लत्वं च दाडिमरसादिना । एतच्च न प्रचरति । उत्पलषष्ठकम् ॥ ४ ॥

नागरातिविषामुस्ताभूनिम्बामृतवत्सकैः ॥
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ५ ॥

सुगमम् ॥ ५ ॥

पाठेन्द्रयवभूनिम्बमुस्तापर्पटकामृताः ॥
जयन्त्यामामतीसारं ज्वरं च समहौषधाः ॥ ६ ॥

अयं योगः क्वाथः ॥ ६ ॥

ह्रीवेरातिविषामुस्ताबिल्वनागरधान्यकम् ॥ ७ ॥
पिबेत्पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥
सरक्तं हन्त्यतीसारं सज्वरं वाऽथ विज्वरम् ॥ ८ ॥

वातश्लेष्माणि योगोऽयमवचारणया क्रियते ॥ ७ ॥ ८ ॥

गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दवालकैः ॥
पाठाभूनिम्बकुटजैश्चन्दनोशीरपद्मकैः ॥ ९ ॥

कषायः शीतलः पेयो ज्वरातीसारशान्तये ॥
हृल्लासारोचकच्छर्दिःपिपासादाहनाशनः ॥ १० ॥

कुटजेन कुटजफलं ग्राह्यं लघुत्वात्पाचनत्वाच्च । एवमन्यत्राप्यतीसारे । अयं पित्तश्लेष्मणि । बृहद्गुडूच्यादिः ॥ ९ ॥ १० ॥

कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम् ॥
ज्वरातीसारसंतापं नाशयेदविकल्पतः ॥ ११ ॥

यवासकं दुरालभा । अयं पित्तोत्तरे वक्ष्यमाणयोगद्वयं च ॥ ११ ॥

वत्सकस्य फलं दारु रोहिणी गजपिप्पली ॥
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यवानिका ॥ १२ ॥

द्वावप्येतौ सिद्धयोगौ श्लोकार्धेनाभिभाषितौ ॥
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ ॥ १३ ॥

रोहिणी कटुका ॥ १२ ॥ १३ ॥

पञ्चमूलीबलाविल्वगुडूचीमुस्तनागरैः ॥
पाठाभूनिम्बह्रीवेरकुटजत्वक्पलैः शृतम् ॥ १४ ॥

हन्ति सर्वानतीसाराञ्ज्वरदोषं वमिं तथा ॥
सशूलोपद्रवं श्वासं कासं हन्यात्सुदुस्तरम् ॥ १५ ॥

पञ्चमूलीति सामान्याद्योज्या पित्ते कनीयसी ॥
महती पञ्चमूली तु वातश्लेष्माधिके हिता ॥ १६ ॥

सुगमम् । पञ्चमूल्यादिः ॥ १४ ॥ १५ ॥ १६ ॥

उत्पलं दाडिमत्वक्च पद्मकेसरमेव च ॥
पिबेत्तण्डुलतोयेन ज्वरातीसारनाशनम् ॥ १७ ॥

दाडिमत्वगिति । दाडिमफलत्वक् । फलं स्याद्दाडिमादीनामिति वचनात् । एवं सर्वत्र । उत्पलादिद्रव्यं कल्कं चूर्णं वा कृत्वा तण्डुलोदकेन पेयम् । तण्डुलोदकविधिश्च—

"जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् ।
भावयित्वा ततो देयं तण्डुलोदककर्मणि" इति ।

योगोऽयं रक्ते पित्ते चातिसारे ॥ १७ ॥

उशीरं वालकं मुस्तं धान्यकं विल्वमेव च ॥
समङ्गा धातकी रोध्रं विश्वं पाचनदीपनम् ॥ १८ ॥

इन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ॥
सशोणितमतीसारं सज्वरं वाऽथ विज्वरम् ॥ १९ ॥

समङ्गा वराहक्रान्ता । उशीरादिः ॥ १८ ॥ १९ ॥

दशमूलीकषायेण विश्वमक्षसमं पिबेत् ॥
ज्वरे चैवातिसारे च सशोफे ग्रहणीगदे ॥ २० ॥

दशमूलीकषायेण विश्वमक्षसममिति । काथोऽत्र दशमूलस्यार्धपलमेव गृहीत्वा कर्तव्यः । न तु चूर्णाच्चतुर्गुणः । विश्वचूर्णापेक्षयाऽतीसारे दशमूलस्य पाचनदीपनत्वेनातियौगिकत्वात् । एवमन्यत्रापि काथेन कल्कस्य चूर्णस्य च पाने । अमुमर्थं वृन्दोऽपि रुचकादिचूर्णे दर्शयिष्यति ।

तद्यथा—"काथेन चूर्णपानं यत्तत्र काथप्रधानता ।
प्रवर्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः" इति ।

विश्वं शुण्ठी तस्याश्चूर्णमत्र प्रक्षेपः । अक्षं विभीतकफलं तत्समममक्षसमं कर्षमानमित्यर्थः । शुण्ठीत्रिचतुरमाषकैस्तु प्रचारः ॥ २० ॥

विडङ्गाऽतिविषा मुस्तं दारु पाठा कलिङ्गकम् ॥
मरिचेन समायुक्तं शोफातीसारनाशनम् ॥ २१ ॥

सुगमम् ॥ २१ ॥

गुडूचीचित्रबिल्वाब्दरक्तचन्दनवालकैः ॥
कलिङ्गकसमायुक्तैर्ज्वरातीसारशोफनुत् ॥ २२ ॥

सुगमम् ॥ २२ ॥

किराताब्दामृतानिम्बचन्दनोदीच्यवत्सकैः ॥
शोषातीसारशमनं विशेषाज्ज्वरनाशनम् ॥ २३ ॥

सुगमम् ॥ २३ ॥

सिताञ्जनकणालाजमधुकं नीलमुत्पलम् ॥
पित्तज्वरातिसारघ्नं प्रलीढं मधुना सह ॥ २४ ॥

सुगमम् ॥ २४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
द्वितीयो ज्वरातिसाराधिकारः समाप्तः ॥ २ ॥

१ क. ख. 'ताविश्व' । २ क. घ. शोफाती' ।

## अथ तृतीयोऽतिसाराधिकारः ।

ज्वरोपद्रवभूतस्यातीसारस्य चिकित्सां निर्दिश्य वह्न्युपघातजत्वादामपक्वावस्थायोगसाधर्म्यात्संप्रति स्वतन्त्रस्य तस्य चिकित्सारम्भः । गुदेन द्रवस्यातिसरणमतीसारः ।

तदुक्तम्—"अतिरतिक्रमणेऽधस्तात्सरतिर्गतिकर्मणि ॥
मलाद्यत्यर्थगमनादतीसारः स्मृतो बुधैः" इति ॥

**लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः ॥**
**समुदीर्णं दोषनिचयं शमयति तत्पाचयत्यपि च ॥ १ ॥**

लङ्घनं केवलमादौ प्रशस्तमतिशयमुपहतत्वादग्नेरतिसामत्वाच्च दोषाणाम् । समुदीर्णं दोषचयं समन्ताद्भूतं दोषचयं लङ्घनं पाचयति पाकद्वारेणैव तदुद्रुतमुपशमयति ॥ १ ॥

लङ्घन एवं पिपासातिरेके दोषपाकार्थं षडङ्गविधिना कृतार्धशृतजलस्य चतुरो योगानाह—

**धान्योदीच्यशृतं तोयं तृष्णादाहातिसारिणे ॥**
**ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा ॥**
**मुस्तोदीच्यशृतं तोयं देयं[1] चातिपिपासवे ॥ २ ॥**

तोयग्रहणं चात्र शृतोदकत्वमेषां दर्शयति कषायत्वं च निषेधयति । तोयान्येतानि चत्वारि तृष्णोपशमनार्थमतीसारिभिः पेयानि न त्वेतानि कषायाणीति । अत्रोच्यते । द्वे द्वे द्रव्ये प्रत्येकं कार्षिके भागे शृतोदकसंस्कारार्थं गृह्येते इति ॥ २ ॥

**नागरातिविषामुस्तैः शृतं वा धान्यनागरैः ॥**
**तृष्णाशूलातिसारघ्नं रोचनं दीपनं परम् ॥ ३ ॥**

ननु नागरस्योष्णतीक्ष्णत्वात्तृष्णाग्रहणाभिधानं नोपपन्नम् । उच्यते । मधुरविपाकित्वान्मधुरस्य च विपाकस्यावश्यं तृष्णाप्रशमने सामर्थ्यमिति ॥ ३ ॥

**ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा ॥**
**आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ ४ ॥**

सुगमम् ॥ ४ ॥

**शालिपर्ण्यादिकाद्यैस्तु साधितेन ससिन्धुजम् ॥**
**मसूरजेन यूषेण पथ्यं स्याल्लाजसक्तुभिः ॥ ५ ॥**

शालिपर्ण्यादिर्महानल्पो वा । आदिशब्दाद्धान्यपञ्चकादिपरिग्रहः । **ससिन्धुजमिति ।**

---

१ क. घ. 'यं वाऽपि पि' ।

ससैन्धवं लाजसक्तुजपथ्यं पित्तश्लेष्मणि युक्तं ज्ञेयम् । अन्यत्रैवंविधे विषय एवास्य विहितत्वात् ॥ ५ ॥

गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्ययात् ॥
सक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ ६ ॥

गुर्वी पिण्डी खराऽत्यर्थमिति । अतिकठिना लाजसक्तुपिण्डिका गुर्वी स्यात् । लघ्वी सैव विपर्ययादिति । मृद्वी सा लघ्वी भवति । अवलेहिकाऽवलेहनयोग्या पिण्डी ॥ ६ ॥

लाजमण्डकृतैर्योगैस्तैः कृता हस्तमण्डिका ॥ ७ ॥
वस्त्रस्नुता यवागूर्वा प्रस्नुतं क्षुद्रभक्तकम् ॥
सुनिषण्णकवार्ताककश्चटं हितमुच्यते ॥ ८ ॥

योगैरिति । धान्यपञ्चकादिभिः । यवागूर्वस्त्रस्नुतेति वस्त्रात्सृता यवागूरपरिस्नुतमण्डा पेया हस्तपिण्डिका वा । ननु लाजमण्डादिविधानमत्रविरुद्धमतीसारे द्रवान्नस्य निषिद्धत्वात् ।

यदुक्तम्—"वर्जयेद्द्विदलं शूली कुष्ठी मांसं क्षयी स्त्रियम् ।
द्रवमन्नमतीसारी सर्वं च तरुणज्वरी" ।

भोजेऽप्युक्तम्—

"व्रणोदरास्थापनपीडितानां प्रमेहिणे छर्द्यतिसारिणे च ।
द्रवं न दद्यादथवाऽपि कोष्णं स्वल्पं हितं भेषजसंप्रयुक्तम्" इति ।

नैवम् । अविहितद्रवान्ननिषेधार्थमेतद्वचनं ज्ञेयम् । विहितं तु लाजमण्डादि विधान-सामर्थ्यान्न निषिध्यत एव ।

अत एवाऽऽह सुश्रुतः—

"कार्यं चानशनस्यान्ते प्रद्रवं लघुभोजनम्" इति ।

प्रद्रवं प्रकृष्टद्रवं लघु । तच्च विहितलाजमण्डादिकमेवेति । अन्ये तु प्रगतं द्रवं प्रद्रवं यथा प्रणायको देशः प्रगतनायक इति कथयन्ति । तन्न । अतीसारे यवाग्वाद्युपदेशात् ॥ ७ ॥ ८ ॥

पेयाद्युपभोगद्रव्याण्याह—

शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥
बलाऽश्वदंष्ट्रा बिल्वानि पाठा नागरधान्यकम् ॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ ९ ॥

१ क. °भद्रकम् । २ क. घ. °तमिष्यते ।

बिल्वानि बिल्वशलाटवः संग्राहित्वात् ।

यदुक्तम्—"कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ।
कटुतिक्तकषायोष्णं बिल्वमाममुदाहृतम्" इति ।

एवं सर्वत्र स्तम्भनयोगे । छर्द्यां तु बिल्वस्य मूलम् । बिल्वमूलं मरुच्छ्लेष्मच्छर्दिघ्नं न च पित्तकृदिति गुणपाठात् । पाठानागरधान्यकमिति । नागरस्य ग्राहिवर्गमध्यपाठाद्विपाकमधुरस्यापि सृष्टपुरीषता विचार्यत इति केचित् । विपाकमधुरत्वात्सृष्टपुरीषत्वस्य संग्राहित्ववर्गपाठात्संग्राहित्वस्य च सिद्धिरित्युभयात्मकत्वम् । तत्क्षीरवदित्यन्ये । एष शालिपर्ण्यादिः । आहारसंयोग इति । आहारस्य संयोजने पेयादिसंस्कारं(र इति) यावत् । हितं सर्वातिसारिणामिति । आमपच्यमानपक्वातिसारिणां प्रत्येकं दोषद्वंद्वसंनिपातातिसारिणां चेति । युज्यते तद्वातश्लेष्मणि चरकसंवादात् ।

यथा—"वातश्लेष्महरो ह्येष गणो दीपनपाचनः ।
ग्राही बल्यो रोचनश्च तस्माच्छस्तोऽतिसारिणाम्" इति ।

वैद्यास्तु रक्तपित्तरक्तातिसारेऽप्येतत्प्रयुञ्जत एव । संस्कारश्च शालिपर्ण्यादिद्रव्यपलचतुष्टयं जलाढके साधयित्वाऽर्धशृतेन तेन पेयादि साधनीयम् । वृद्धवैद्यास्तु बहुद्रव्यसाधिताम्बुसंस्कृताहारस्यारुचिकरत्वादाढकेऽम्भसि पलमात्रं द्रव्यं साधयन्ति । भक्तादिसाधने द्रवप्रमाणं तन्त्रान्तराज्ज्ञेयम् ।

तथा हि—"भक्तं पञ्चगुणे तोये यवागूं षड्गुणे पचेत् ।
चतुर्दशगुणे पेयां विलेपीं च चतुर्गुणे" ॥

एष शालिपर्ण्यादिर्दशाङ्गत्वेन प्रसिद्धः । बृहच्छालिपर्ण्यादिः ॥ ९ ॥

**शाकमांसफलैर्युक्ता विलेप्योऽम्लाश्च दुर्जराः ॥ १० ॥**

शाकमांसफलैरिति व्यञ्जनोपलक्षणम् । तथाचोक्तम्—यवागूमुपयुञ्जानो न तु व्यञ्जनमाचरेदिति । अम्ला इति । अम्लपाकाः ॥ १० ॥

**शालिपर्णीबलाबिल्वैः पृथक्पर्ण्या च साधिता ॥**
**दाडिमाऽम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ ११ ॥**

सुगमम् । शालिपर्ण्यादिः ॥ ११ ॥

**धान्यपञ्चकसिद्धो वा धान्यविश्वकृतोऽपि वा ॥**
**आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् ॥ १२ ॥**

सुगमम् ॥ १२ ॥

**लघुना पञ्चमूलेन वातपित्ते प्रशस्यते ॥**

सुगमम् ॥

अतीसारचिकित्साया आमपक्वक्रमेण प्रवृत्तेरतीसारस्याऽऽमपक्वलक्षणैरवश्यज्ञेयतामाह—

**आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ॥**
**अतः सर्वेऽतिसारास्तु ज्ञेयाः पक्वामलक्षणैः ॥ १३ ॥**

सुगमम् ॥ १३ ॥

आमाऽऽमान्विता । पक्वा निरामा । द्वयोरप्यामपक्वलक्षणयोरपवादमाह—

**मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ॥**
**विनाऽतिद्रवसंघातशैत्यश्लेष्मप्रदूषणात् ॥ १४ ॥**

**विनेत्यादि** । अतिद्रवरूपत्वादत्राऽऽमाऽपि विडुत्प्लवते । अतिसंहतादतिकाठिन्यात् । तथा शैत्यजातश्लेष्मदूषणात्कफकृद्गौरवेण पक्वाऽपि मज्जति । शैत्यस्थाने श्वैत्यपाठे श्वैत्यं श्वेतवर्णता । अतो द्रवत्वादिकं विना मज्जनोत्प्लवने सामनिरामविलक्षणे ज्ञेये । किंच सर्वाऽपि विट् पक्वाऽनुत्प्लवाऽत इत्याह—**विनेति** । अतिद्रवा पक्वाऽपि जलेन सहैकतां गतत्वादेव न प्लवते । अतिसंहता पक्वाऽप्यतिसंहतत्वादेव मज्जति । शैत्यजातश्लेष्मजातदूषणाच्च पक्वाऽपि श्लेष्मसंबन्धादेव मज्जति ॥ १४ ॥

अपरमामपक्वलक्षणम्—

**शकृद्दुर्गन्धि साटोपविष्टम्भार्तिप्रसेकिनः ॥**
**विपरितं निरामं तु कफात्पक्वं च मज्जति ॥ १५ ॥**

**साटोपविष्टम्भार्तीति** । आटोपविष्टम्भावेवार्ती, आटोपविष्टम्भार्ती तत्सहितम् । किंवाऽर्तिः शूलम् । आटोपो रुजापूर्वक उदरक्षोभः । विष्टम्भः सतोदशूलामलाप्रवृत्तिः । ताभ्यां सह वर्तते यत्तत्तथा । प्रसेकिनः कफप्रसेकिनः ॥ १५ ॥

आमे संग्रहणनिषेधमाह—

**नाऽऽमे संग्रहणं दद्यादतीसारे कथंचन ॥**
**अकाले संगृहीतो हि विकारान्कुरुते बहून् ॥ १६ ॥**
**शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ॥**
**दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ॥ १७ ॥**

संग्रहणं स्तम्भनं न देयं पाचनमेव परं कर्तव्यम् । अन्यस्त्वाह—संग्रहणमेव यत्केवलं कुटजत्वगादि तन्न देयं पाचनं संग्रहणं तु मुस्तोदीच्यादि देयमेवेति । आमे लङ्घनपाचनयोरेवोपदेशेनार्थात्संग्रहणनिषेधे सिद्धे यत्पुनरस्याभिधानं तदामसंग्रहणे दोषोपन्यासार्थम् । अत एवोक्तम्—**अकाले संगृहीतो हि विकारान्कुरुते बहूनिति** । वक्ष्यमाणरोगान्दण्डकालसकादीन् । दण्डकालसकोऽजीर्णभेदः । अलसकोऽवस्थाविशेषः ॥

यदाह काश्यपः—"नाधो याति न चाप्यूर्ध्वमाहारो न च पच्यते ।
स कोष्ठस्थोऽलसीभूतस्तेन सोऽलसकः स्मृतः ।
यदि वाऽलसके दोषाश्छर्द्यतीसारवर्जिताः ।
कारकास्तीव्रशूलादेः स्रोतसः संनिरोधकाः ।
तिर्यग्यान्तस्तनुं स्तब्धां दण्डवत्स्तम्भयन्ति चेत् ।
स दण्डालसकस्त्याज्यः शीघ्रं देहविघातकृत्" इति॥१६॥१७॥

अवस्थायामामेऽपि संग्रहणमाह—

**क्षीणधातुबलार्तस्य बहुदोषोऽतिनिःस्रुतः ॥**
**आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं व्रजेत् ॥ १८ ॥**

**क्षीणधातुबलार्तस्येति** । पुरीषस्यातिस्रुत्या धातुबलक्षयपीडितस्य बहुदोषो विपुलदोषः । पाचनादिति केवलपाचनात् । पाचनस्तम्भनं तु हितमेव च ॥ १८ ॥

आमे दोषे सविबन्धमल्पमल्पं प्रवर्तमाने सम्यक्प्रवर्तनार्थमाह—

**स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते ॥**
**अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ १९ ॥**

सुखोष्णैरिति किंचिदुष्णैः । किंचिदुष्णताऽभयापिप्पलीकल्कस्य कोष्णजलयोगाज्ज्ञेया । चरकेऽप्युक्तम्—कृच्छ्रं वा वहतां दद्यादभयां संप्रवर्तिनीमिति ॥ १९ ॥

आमे पाचनविधिमाह—

**हरिद्रादिं वचादिं वा पिबेदामेषु बुद्धिमान् ॥**

हरिद्रादिः क्वाथः पैत्तिके । पित्तश्लैष्मिके चातिसारे वातिके वातकफजे वा वचादिः क्वाथः । एतौ च सौश्रुतौ गणौ । आमेषु, आमातिसारेषु ॥

**खडयूपयवागूषु पिप्पल्यादिं च योजयेत् ॥ २० ॥**

पिप्पल्यादिश्च वक्ष्यमाणः सौश्रुत एव गणः । **खडयूषयवागूष्विति** । अत्र खडः कपित्थबिल्वचाङ्गेरी[illegible]चाजाजिचित्रकैरित्यादिनोक्तः ॥ २० ॥

आमे विलङ्घनं शस्तमादौ पाचनमेव वा । अस्यार्थः । आमातिसारे लङ्घनं कार्यं परं यदि लङ्घनक्षमं शरीरमन्नानभिलाषश्च भवति । अतो विपर्यय आदौ पाचनमिति । तेनाऽऽमे लङ्घनानर्हस्य पाचनं देयम् । अतो धान्यपञ्चकाख्यं पाचनयोगमाह—

**धान्यनागरमुस्तं च वालकं बिल्वमेव च ॥**
**आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥ २१ ॥**

---

१ घ. भजेत् ।

अस्य धान्यपञ्चकत्वेन प्रसिद्धस्य योगस्य चूर्णं धान्याम्लोष्णोदकमद्यानामन्यतमेन पिबेत् । अथवाऽस्य निष्क्राथं साधुसाधितं पिबेत् । यतः **सुश्रुते** कलिङ्गेत्यादौ श्लोकार्धपठितान्विंशतिं पाचनयोगान्सधान्यपञ्चकानभिधायोक्तम्—

"प्रयोज्या विंशतिर्योगाः श्लोकार्धविहितास्त्विमे ।
धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतरेण वा ॥
निष्क्राथान्वा पिबेदेषां सुखोष्णान्साधुसाधितान् ।
निखिलेनोपदिष्टोऽयं विधिरामोपशान्तये" इति ।

उपयोगविधिर्दर्शितः ॥ २१ ॥

**पैत्ते धान्यचतुष्कं तु शुण्ठीत्यागाद्वदन्ति हि ॥ २२ ॥**

पित्तसाधर्म्याद्धर्मकस्य रक्त(र्म्याद्रक्त)जेऽपि शुण्ठीत्यागः । ननु शुण्ठीत्यागो न संमतः । अगणत्वेनात्रावापोद्वापयोरनर्हत्वात् । अथ मन्यसे, अस्त्वावापोद्वापसंगतिरत्र धान्यपञ्चकाद्यनन्तरम्—'तीक्ष्णोष्णं वर्जयेत्तं तु विधिं कुर्याच्च पैत्तिके' इति **सुश्रुत**वचनात् । एतदपि न हृदयंगमम् । मधुरपाकित्वेन शुण्ठ्याः पित्ते यौगिकत्वात् । अत एव **चरके** पित्तरक्तातिसारे नागराद्यं चूर्णं दर्शितं धान्यपञ्चकं च तिस्रः प्रमथ्या विहिता इत्यत्र पैत्तिक एवातिसारे टीकाकारैर्व्याख्यातम् । उच्यते । नात्राऽऽगमानुगमः किंत्वियं **वृद्धवैद्ययुक्तिर्वृन्देन** निबद्धा । दृश्यते च शुण्ठी कटुकत्वात्पित्तातिसारे भक्ष्यमाणा न तु गुणेत्यदोषः । धान्यपञ्चकम् ॥ २२ ॥

निरामातिसारिणामनुबन्धे स्तम्भनमाह—

**पक्वोऽसकृदतीसारो ग्रहणीमार्दवाद्यदा ॥
प्रवर्तते तदा कार्यः क्षिप्रं सांग्राहिको विधिः ॥ २३ ॥**

असकृन्निरन्तरम् । **ग्रहणीमार्दवादिति** । जाठराग्न्यधिष्ठानं ग्रहणी तस्या मृदुत्वात् । मृदुत्वं च तस्याः पाचनविधिनाऽऽमाशये पित्तोद्रेकात् । सांग्राहिको विधिः स्तम्भनो विधिरिति **डल्लणः** । **श्रीब्रह्मदेवस्तु** व्याख्यानयति—

"संग्राहि स्तम्भनाद्भिन्नं यथा तदभिदध्महे ॥
आग्नेयगुणभूयिष्ठं तोयं संपरिशोषयेत् ॥
संगृह्णाति मलं तत्स्याद्ग्राहि शुण्ठ्यादयो यथा ॥
समीरगुणभूयिष्ठं शीतत्वाद्यन्नभस्वतः ॥
विधाय वृद्धिं स्तभ्नाति स्तम्भनं तद्यथा वटः" ॥ २३ ॥

" संप्रति स्तम्भनयोगानाह—

"सलोध्रधातकी बिल्वं मुस्ताम्रास्थिकलिङ्गकम् ॥
पिबेन्माहिषतक्रेण पक्वातीसारनाशनम्" ॥ १ ॥

सुगमम् । क्षेपकः" ॥ १ ॥

पञ्चमूलीबलाविश्वधान्यकोत्पलबिल्वजाः ॥
वातातिसारिणे देयास्तक्रेणान्यतमेन वा ॥ २४ ॥

पञ्चमूल्यत्र स्वल्पा महती वा । धान्यकोत्पलबिल्वजा इति । बिल्वशलाटुः । किं च बिल्वजा इत्यतः परं कल्पना इति शेषः । तेन पञ्चमूल्यादिबिल्वान्तसर्वद्रव्यजाः कल्पना देया इत्यर्थः । कल्पनाया विशेषानभिधानेऽप्यत्र योग्यतया कल्कश्चूर्णो वा कर्तव्यः । तक्रेणान्यतमेन वेति । अन्यतमेनोष्णाम्बुकाञ्जिकादिना ॥ २४ ॥

कंचटजम्बूदाडिमशृङ्गाटकपत्राबिल्वह्रीवेरम् ॥
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात्* ॥ २५ ॥

कंचटं कलोकलं च याशाकम् (?) कंचटादीनां चतुर्णां पत्रम् । जलधरं मुस्ता । नागरं शुण्ठी । एतैर्मिलित्वा क्वाथः । कंचटादिः ॥ २५ ॥

किराततिक्तकं मुस्तं वत्सकं सारसाञ्जनम् ॥
पिबेत्पित्तातिसारघ्नं सक्षौद्रं वेदनापहम् ॥ २६ ॥

सुगमम् ॥ २६ ॥

पलं वत्सकबीजस्य श्रपयित्वा जलं पिबेत् ॥
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ २७ ॥

सुगमम् ॥ २७ ॥

कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम् ॥
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ २८ ॥

अस्य योगस्य क्वाथः । हरिद्रापर्णिनीद्वयम् । हरिद्राद्वयं पर्णिनीद्वयं च । पर्णिनीद्वयं माषपर्णीपृथक्पर्ण्यौ ॥ २८ ॥

कुटजत्वक्फलं मुस्तं क्वाथयित्वा पिबेज्जलम् ॥
अतीसारं जयेदाशु शर्करामधुयोजितम् ॥ २९ ॥

सुगमम् ॥ २९ ॥

बिल्वचूतास्थिनिर्यूहः पीतः सक्षौद्रशर्करः ॥
निहन्याच्छर्द्यतीसारं वैश्वानर इवाऽऽहुतिम् ॥ ३० ॥

सुगमम् ॥ ३० ॥

* ख पुस्तके—अजमोदा मोचरसं सशृङ्गवेरं सधातकीकुसुमम् । गोमथिततक्रयुतं गङ्गामपि वेगिनीं स्तम्भयति । इत्यधिकमत्र ।

प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत्तु यथाबलम् ॥
तृष्णातीसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३१ ॥

अञ्जनं रसाञ्जनम् ॥ ३१ ॥

पटोलयवधान्याककाथः पेयः सुशीतलः ॥
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ३२ ॥

सुगमम् ॥ ३२ ॥

"पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥
विडङ्गातिविषामुस्तदारुपाठाकलिङ्गकैः ॥
मरिचेन समायुक्तं शोथातीसारनाशनम्" ॥ १ ॥

"सुगमम् ॥ क्षेपकः" ॥ १ ॥

कफजातिसारचिकित्सितं ब्रूते—

श्लेष्मातिसारे प्रथमं कार्यं लङ्घनपाचनम् ॥
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ॥ ३३ ॥

**यथोक्तो दीपनो गण इति ।** हरिद्रादिर्वचादिश्च ॥ ३३ ॥

त्र्यूषणातिविषाहिङ्गुवचासौवर्चलाभयाः ॥
पीत्वोष्णेनाम्बुना जह्यादामातीसारमुद्धतम् ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

दलोत्थः स्वरसः पीतो विज्जलस्य[२] समाक्षिकः ॥
जयत्याममतीसारं काथो वा कुटजत्वचः ॥ ३५ ॥

सुगमम् ॥ ३५ ॥

सामान्ययोगानाह—

कुटजत्वक्कृतः काथो घनीभूतः सुशोभनः ॥
लेहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत् ॥ ३६ ॥
लेहे यत्रास्ति नो भागो निर्दिष्टो द्रवकल्कयोः ॥
प्रायेण पादिकः कल्को द्रवात्कार्यो विजानता ॥
इच्छन्त्यत्राष्टमांशेन काथादतिविषारजः ॥ ३७ ॥

**घनीभूत इति ।** काथ एव पुनः पाकात्तथा घनः कार्यो यथा चूर्णे प्रक्षिप्ते लेहः स्यात् । अत एव सुशोभन इत्युक्तम् । चूर्णप्रक्षेपश्च काथात्पादेनाष्टांशेन वा । प्रचारस्तु पञ्चषट्चूर्णमाषकैः । **प्रायेण पादिकः कल्क इति ।** अत्र कल्क इत्युपलक्षणम् । तेन चूर्णमपि ग्राह्यम् ।

१ क. घ. हितं । २ क. घ. हिज्जलस्य ।

अथ डल्लणव्याख्या—कुटजत्वगित्यादि । अत्र कल्पना । बृहत्फलशुक्लकुसुमस्निग्धपत्रस्य पुंनामधेयस्य कुटजस्य कल्कत्वगगृ(वल्कलं गृ)हीत्वा षोडशगुणेऽष्टगुणे चतुर्गुणे वा जले क्काथयित्वाऽर्धावशिष्टं क्काथमादाय वस्त्रगालितं कृत्वा पुनस्तावत्पचेत् । यावत्फाणिताकृतिः । ततस्तन्मध्येऽतिविषाचूर्णं चतुर्थांशेन निक्षिप्यावतार्यमिति । अन्ये तु कुटजत्वक्स्वरसं गृहीत्वा तावत्क्काथयेद्यावत्फाणिताकृतिरिति व्याख्यानयन्ति ॥ ३६ ॥ ॥ ३७ ॥

**तद्वत्कार्पासपर्केव्योः स्वरसः समधुर्मतः ॥ ३८ ॥**

सुगमम् ॥ ३८ ॥

रक्तजातिसारचिकित्सितमाह—

**कषायो मधुना पीतस्त्वचो दाडिमवत्सकात् ॥**
**सद्यो जयेदतीसारं रक्तजं दुर्निवारकम् ॥ ३९ ॥**

सुगमम् ॥ ३९ ॥

**गुडेन खादयेद्बिल्वं रक्तातीसारनाशनम् ॥**
**आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ ४० ॥**

**गुडेनेति** । गुडेन समभागेन बिल्वसमेन भक्षयेत् । **बिल्वमिति** । उत्स्विन्नं पर्युषितं बिल्वशलाटुम् । उत्स्वेदनशेषपानीयेनानुपानमत्र ॥ ४० ॥

**शल्लकीबदरीजम्बुप्रियालाम्राजुर्नत्वचः ॥**
**पीताः क्षीरेण मध्वाढ्याः पृथक्शोणितवारणाः ॥ ४१ ॥**

**पीताः क्षीरेणेति** । क्षीरमाजं ग्राह्यम् ॥ ४१ ॥

**पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत् ॥**
**रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥ ४२ ॥**

वातपित्तोत्तरे ज्ञेयम् । **तया सिद्धमिति** । शतावर्या कल्करूपया स्वरसरूपया वा साधितम् ॥ ४२ ॥

पैत्तिक आमातिसारे सिद्धतमं योगमाह—

**सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः ॥**
**सामे सशूले सहशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे ॥ ४३ ॥**

वत्सकः कुटजस्तस्य फलं लघुत्वात्पाचनत्वाच्च । अतीसारे चिरंतनेऽपि सामतायाः स्वल्पायाः प्रायेणानुवृत्तिरस्ति सर्वथा निरामत्वेऽपि दीप्तेऽग्नौ त्वक् । **सुश्रुतसंवादात्पुनर्योगेऽस्मिन्कुटजफलमपि ग्राह्यम्** ।

**यदाह सुश्रुतः**—"बिल्वशक्रयवाम्भोदवालकातिविषाकृतः ।
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम्" इति ॥

बिल्वं बिल्वफलं कोमलम् । कृतः कषाय इति । कृतग्रहणं शीतकषायादिनिषेधार्थम् । वत्सकादिः ॥ ४३ ॥

**भयशोकसमुद्भूते क्रिया चोभयशर्मदा ॥**

**क्रिया चोभयशर्मदेति** । हेतुविकारसुखजननी । डल्हणेन सुस्पष्टं कृत्वा व्याख्यातम् । **उभयशर्मदेति** । भयशोकाहिता तज्जनितातिसारहिता चेत्यर्थः । एतेन हेतुव्याधिप्रत्यनीका क्रियोक्तेति ॥

संप्रति यादृशो ऽतीसारः पुटपाकेनोपचर्यः । यथा च पुटपाकविधिस्तमाह—

**सर्वजे बहुवर्णत्वात्पुटपाकक्रिया मता ॥ ४४ ॥**

सर्वजे पुटपाकक्रिया हिता सर्वजत्वं च कथं ज्ञेयमित्यत उक्तं बहुवर्णत्वादिति ॥ ४४ ॥

**अवेदनं सुसंपक्वं दीप्ताग्नेः सुचिरोत्थितम् ॥**
**नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ४५ ॥**

अवेदनमशूलमल्पशूलं वा । सुसंपक्वं सर्वथा निरामम् । दीप्ताग्नेरनतिमन्दाग्नेः । अग्निमान्द्ये सत्यतीसारस्योत्पत्तेः । यदुक्तम्—संशम्यापां धातुरग्निं प्रवृद्ध इत्यादि । नानावर्णमित्यनेन सांनिपातिकमतीसारं (*पुटपाकैरुपाचरेदिति) दर्शयति । **पुटपाकैरिति** । पुटेनपाको येषु योगेषु तैः ॥ ४५ ॥

**स्निग्धं घनं कुटजवल्कमजन्तुजग्धमादाय तत्क्षणमतीव च पोथयित्वा ॥**
**जम्बूपलाशपुटतण्डुलतोयसिक्तं बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥४६॥**
**सुस्विन्नमेतदवपीड्य रसं गृहीत्वा क्षौद्रेण युक्तमतिसारवते प्रदद्यात् ॥**
**कृष्णात्रिपुत्रमतपूजित एष योगः सर्वातिसारहरणेष्वयमेव राजा ॥४७॥**
**भेषजत्वात्पलं पेयं पुटपाकरसस्य च ॥ ४८ ॥**

पोथयित्वा छेदयित्वा । जम्बूपत्ररचितपुटे तण्डुलतोयसिक्तं जम्बूपलाशपुटतण्डुलतोयसिक्तम् । योगोऽयं रक्तपित्तोत्तरे । कुटजपुटपाकः ॥ ४६ ॥ ४७ ॥ ४८ ॥

पुटपाकविधिमाह—

**त्वक्पिण्डं दीर्घवृन्तस्य काश्मरीपर्णवेष्टितम् ॥**
**मृदाऽवलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥ ४९ ॥**
**स्विन्नमुद्धृत्य निष्पीड्य रसमादाय यत्नतः ॥**
**शीतीकृतं मधुयुतं पाययेदुदरामये ॥ ५० ॥**
**पुटपाकस्य पाकोऽयं बहिरारक्तवर्णता ॥**
**भेषजत्वात्पलं मानं संमतं स्वरसादिवत् ॥ ५१ ॥**

---

* धनुश्चिह्नान्तर्गतमाधिकम् ।

त्वक्पिण्डं त्वचां पिण्डं कल्करूपम् । दीर्घवृन्तस्य श्योनाकस्यारलुकस्येति यावत् । मृदाऽवलिप्तं पङ्कदिग्धम् । सुकृतं कुशवेष्टनेन संस्कृतम् ।
तथा च **पराशरः**—

"परिवेष्ट्य कुशैर्लिप्त्वा घनपङ्केन तत्पचेत् ॥
अङ्गारेषु न यावत्स्याद्बहिरारक्तवर्णता" इति ॥

अवकूलयेद्दहेत् । उदरामयेऽतिसारे प्रकरणात् । अयं योगो वातकफोत्तरे ।

**सुश्रुते** पुटपाकस्य विशेषपाठो दृश्यते—

"त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेसरसंयुतम् ॥
काश्मरीपद्मपत्रैश्च वेष्ट्य सूत्रेण संदृढम् ॥
मृदाऽवलिप्तं सुकृतम्" इत्यादि ।

शेषं समम् । तेनायमर्थः । अरलुकस्य त्वचं पद्मकेसरं च समभागं गृहीत्वा संपिष्य तत्पिण्डं काश्मरीपद्मपुटके निक्षिप्य सूत्रेणाऽऽवेष्ट्य मृत्तिकयाऽऽलिप्य निर्धूमखदिराङ्गारेषु तावत्पचेत् । यावद्बाह्ये रक्तवर्णता भवति । ततोऽङ्गारेभ्य आकृष्य तत्पिण्डं निष्पीड्य स्वरसं गृहीत्वा शीतं भूतं च कर्षप्रमितमधुसहितमतिसारे क्वाथमात्रया पाययेत् । अनेन विधिना सर्वपुटपाककल्पनेति **डल्लणः** । ( * भेषजत्वात्पलं पेयमिति ) भेषजत्वादिति भेषजेनावरुद्धत्वात् । अयमभिसंधिर्वृन्दस्य । उत्तमस्य पलं मात्रेत्यादिपरिभाषायां स्नेहक्वाथ्यौषधेष्वित्यत्रोपात्तौषधपदेनावरुद्धत्वात्स्वरसस्योत्तमबलानले पुरुषे पलं पेयमिति वृन्दाभिप्रायः । **चक्रेण** तूक्तम्—स्वरसस्य गुरुत्वेन पुटपाके पलं पिबेदिति ॥ ४९ ॥ ५० ॥ ५१ ॥

कुटजलेहमाह—

**शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ॥**
**क्वाथे पादावशेषेऽस्मिँल्लेहे पूते पुनः पचेत् ॥**
**सौवर्चलयवक्षारविडसैन्धवपिप्पलीः ॥ ५२ ॥**
**धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम् ॥**
**लिह्याद्बदरमात्रं तु शीतं क्षौद्रेण संप्लुतम् ॥ ५३ ॥**
**पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥**
**दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥ ५४ ॥**

तोयार्मण इति तोयद्रोणे । **चूर्णं दत्त्वा पलद्वयमिति** । पलद्वयं मिलित्वा मानप्रधानत्वान्निर्देशस्य । व्यवहाराच्चात्यासन्नपाके चूर्णप्रक्षेपः । यवक्षारस्थाने गुडक्षार-

---

* धनुश्चिह्नान्तर्गतमधिकम् ।

---

१ घ. लेहं पूं ।

पाठो न प्रसिद्धः । **लिह्याद्बदरमात्रमिति** । अष्टमाषकम् । माषकचतुष्टयेन व्यवहारः । **क्षौद्रेण संप्लुतमिति** । उपयोगकाले क्षौद्रदानम् । कुटजावलेहः ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥

कुटजाष्टकमाह—

**तुलामथाऽऽर्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत ॥**
**तस्मिन्सुपूते पलसंमितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥ ५५ ॥**
**पाठासमङ्गातिविषाः समुस्ता बिल्वं च पुष्पाणि च धातकीनाम् ॥**
**प्रक्षिप्य भूयो विपचेच्च तावद्दर्वीप्रलेपः स्वरसस्तु यावत् ॥ ५६ ॥**
**पीतस्त्वसौ कालविदा जलेन मण्डेन वाऽजापयसाऽथवाऽपि ॥**
**निहन्ति सर्वं त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा ॥ ५७ ॥**
**दोषं ग्रहण्या विविधं च रक्तं[1] पित्तं तथाऽर्शांसि स शोणितानि ॥**
**असृग्दरं चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥ ५८ ॥**
**तुलाद्रव्ये जलद्रोणो द्रोणे[2] द्रव्यतुला मता ॥ ५९ ॥**

**आर्द्रामिति** ।

"वासाकुटजकूष्माण्डशतमूलीसहाचराः ।
नित्यमार्द्राः प्रयोक्तव्या मानतो द्विगुणा न ते" ॥

इतिपरिभाषाव्यापारात् । पलसंमितानि प्रत्येकं द्रव्यप्रधानत्वान्निर्देशस्य । प्रचारोऽपीत्थमेव । शाल्मलेन शाल्मलीवेष्टकेन । चूर्णं दत्त्वैव पाकः प्रक्षिप्य भूयो विपचेदिति वचनात्प्रचाराच्च । जलेनेति ततशीतेन । मण्डेन पेयामण्डेनान्नमण्डेन वा । कुटजाष्टकः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

**कुटजस्य पलं ग्राह्यमष्टभागे जले शृतम् ॥**
**तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥**
**यावच्च लसिकाभासं शृतं तमुपकल्पयेत् ॥ ६० ॥**
**तस्यार्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ॥**
**अवश्यमरणीयोऽपि न मृत्योर्याति गोचरम् ॥**
**कुटजक्वाथतुल्योऽत्र दाडिमस्य रसो मतः ॥ ६१ ॥**

**दाडिमोदकसंयुतामिति** । दाडिमफलमौत्तरापथिकमिति केचिदाहुः । **वैद्यास्तु,** एतद्देशीयमेव दाडिमफलं ग्राहयन्ति । दाडिमोदकं दाडिमफलत्वक्क्वाथः । अस्य च कुटजक्वाथतुल्यत्वं वृन्देनैव व्याकर्तव्यम् । **चक्रेणाप्युक्तम्—**

क्वाथतुल्यं दाडिमाम्बु भागानुक्तौ समं यत इति ॥ ६० ॥ ६१ ॥

१ घ रक्तापि । २ क घ णेऽब्द्रव्यं ।

षडङ्गघृतमाह—

**वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः ॥**
**पिप्पलीशृङ्गवेरं च लाक्षा कटुकरोहिणी ॥ ६२ ॥**
**षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम् ॥**
**अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ६३ ॥**

**दार्व्याश्च त्वच उत्तमा इति** । सर्वत्र दार्व्याश्च त्वच एव ग्राह्याः । उत्तमगुणत्वात् । तस्या दुर्लभत्वादत्र काष्ठमेव गृह्यते । षड्भिरेतैरितिपदं यथालाभग्रहणनिषेधार्थम् । एषां षण्णां कल्कः । जलं चतुर्गुणम् । षडङ्गघृतम् ॥ ६२ ॥ ६३ ॥

अथ चिरजे रक्तपित्तोत्तरेऽतीसारे क्षीरविधिः—

**यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम् ॥**
**चिरोत्थितेषु तत्पेयमपां भागैस्त्रिभिः शृतम् ॥ ६४ ॥**

अमृतसमत्वं क्षीरस्य जीवनहेतुत्वात् । चिरोत्थितेष्वित्यनेन निरामावस्थायां क्षीरदानं दर्शयति । अपां भागैस्त्रिभिश्चतुर्भिर्वा । अपां भागैरित्युपादानात्केवलं जलेन क्षीरसाधनमत्रोक्तम् ॥ ६४ ॥

प्रवाहिकायाश्चिकित्सां विवक्षुस्तस्या लक्षणमेव तावदाह—

**स्रुते रक्ते पुरीषे च वायुना विड्विवर्जितम् ॥**
**प्रवाहिकेति तत्ख्यातं यत्फेनाभं प्रवर्तते ॥ ६५ ॥**

सुगमम् ॥ ६५ ॥

**बालबिल्वं गुडं तैलं पिप्पली विश्वभेषजम् ॥**
**लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके* ॥ ६६ ॥**
**पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः[१] ॥**
**त्र्यहान्निर्वाहिकां हन्याच्चिरकालसमुत्थिताम्[२] ॥ ६७ ॥**

अयं विधिर्विबन्धे । निर्वाहिकां प्रवाहिकाम् ॥ ६६ ॥ ६७ ॥

**बिल्वपेशीं गुडं रोध्रं तैलं मरिचयोजितम् ॥**
**लीढ्वा प्रवाहिकां हन्ति क्षिप्रं सुखमवाप्नुयात् ॥ ६८ ॥**

बिल्वपेशी बिल्वशलाटुमध्यम् ॥ ६८ ॥

बिल्वपेश्यादिकं लीढ्वा भोजनमित्याह—

**दध्ना ससारेण समाक्षिकेण भुञ्जीत निश्चारकपीडितस्तु ॥**
**सुतप्तकुप्यक्वथितेन वाऽपि क्षीरेण शीतेन मधुप्लुतेन ॥ ६९ ॥**

---

* ख. पुस्तके–धातकीबदरीपत्रकपित्थरसमाक्षिकम् । सरोध्रमेकतो दध्ना पिबेन्निर्वाहिकार्दितः ॥ १ ॥ इत्यधिकमत्र ।

---

१ क. घ. सारिवोद्भवः । २ क. घ. कालानुबन्धिनीम् ॥ ६७ ॥

दध्ना ससारेणोपरितनस्निग्धभागसाराख्यसहितेन । समाक्षिकेण मधुसहितेन । एवंविधेन दध्ना सह भोजनं कुर्वीतेत्यर्थः । निश्चारकपीडित इति । निश्चारकः प्रवाहिका ।

यदाह पराशरः—

"निर्वाहयेत्सफेनं च निष्पुरीषं मुहुर्मुहुः ॥
प्रवाहिकेति सा ख्याता कैश्चिन्निश्चारकस्तु सः" इति ॥

निश्चारकः प्रवाहिकाभेदः पुरीषक्षयापरपर्यायस्तेन पीडित इति डल्लणः । अन्ये तु निश्चारकाभिधानेनातिसारा(रः)प्रवाहिका चोच्यत इति मन्यन्ते । अत्रोक्तयोगानामुभयहितत्वापादनार्थं सुतप्तकुप्यक्वथितेनेति । अत्यन्ततप्तसुवर्णरजतेतरलोहप्रक्षेपेण क्वथितेन । अन्ये त्वघटितं रूप्यादि कुप्यं ब्रुवते । केचित्कुप्यस्थाने कुप्यां पठन्ति व्याचक्षते च । कुप्या पाषणभेदो दक्षिणापथे ख्यातः शङ्खमुण्डाकृती रसरसायनवादे प्रयुज्यत इति । एतदप्रसिद्धम् । एवंविधेन क्षीरेण वा भुञ्जीतेति संबध्यते । मधुप्लुतेनेति । उपरिदत्तमधुना मधुप्लुतं प्लवनयोग्यं यत्र तत्तथेति व्याख्यानात् ॥ ६९ ॥

गुददाहे प्रपाके वा पटोलमधुकाम्बुना ॥
सेकादिकं प्रशंसन्ति च्छागेन पयसाऽथवा ॥ ७० ॥

पटोलमधुकाम्बुनेति । अर्धशृतेन । सेकादिकमित्यत्राऽऽदिशब्दात्प्रलेपादिपरिग्रहः ॥ ७० ॥

स्वेदो वा मूषिकामांसैर्गोवसाभ्रक्षणं तथा ॥ ७१ ॥

स्वेदो वा मूषिकामांसैरिति । काञ्जिकेन मूषिकामांसमुत्स्वेद्यैरण्डादिपत्रे बद्ध्वा स्वेदः ॥ ७१ ॥

गुदनिःसरणे शस्तं चाङ्गेरीघृतमुत्तमम् ॥

चाङ्गेरीघृतं क्षुद्ररोगोक्तम् ॥

शोथादीनविरोधाच्च साधयेत्स्वैश्चिकित्सितैः ॥ ७२ ॥

सुगमम् ॥ ७२ ॥

शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ॥
छर्दिं मूर्छां च हिक्कां च दृष्ट्वाऽतीसारिणं त्यजेत् ॥ ७३ ॥

सुगमम् ॥ ७३ ॥

स्नानाभ्यङ्गावगाहं च गुरुस्निग्धादिभोजनम् ॥
व्यायाममग्निसंतापमतीसारी विवर्जयेत् ॥ ७४ ॥

सुगमम् ॥ ७४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
तृतीयोऽतिसाराधिकारः समाप्तः ॥ ३ ॥

## अथ चतुर्थो ग्रहण्यधिकारः ।

परस्परानुबन्धित्वाद्भेदेन द्रवसरणसाधर्म्याच्चातीसारानन्तरं ग्रहणीरोगचिकित्सारम्भः—

**ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ॥**
**अतीसारोक्तविधिना तस्याऽऽमं च विपाचयेत् ॥ १ ॥**

ग्रहणी जाठरवह्निस्थानं तदाश्रयो रोगो ग्रहणीरोगः ।

स च—"सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ।
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ॥
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः" ।

इत्यनेन परिभाषितो ज्ञेयः । तेन नाग्निमान्द्यादेर्ग्रहणीरोगत्वम् । यत्पुनरस्य चरकेण ग्रहणीरोगत्वमुक्तम्—

'यश्चाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः ।
तं चापि ग्रहणीरोगं समवर्जं प्रचक्ष्महे" ॥

इत्यनेन तद्ग्रहणीगदमात्रे च ज्ञेयम् । **दोषमिति** । ग्रहणीरोगारम्भकं वातादिकम् । **अजीर्णवदुपाचरेदिति** । आमाद्यजीर्णेषु यथा वमनाद्युपचारस्तथेत्यर्थः । **अतीसारोक्तविधिनेति** । लङ्घनलङ्घनपाचनादिना विधानेन ॥ १ ॥

**कपित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ॥**
**यवागूः पाचयत्यामं शकृत्संवर्तयत्यपि ॥ २ ॥**

कपित्थादीनां मिलित्वा पलं कल्कः । कपित्थबिल्वयोः फलम् । तक्रं द्रवत्वकार्यार्थम् । तच्च तावद्देयं यावता यवागूः सिध्यति । अन्ये पुनरत्यम्लगुरुत्वभयात्तक्रजलाभ्यां पाकमाहुः । एषा यवागूर्वातश्लेष्मणि । संवर्तयति कठिनयति ॥ २ ॥

**लघुना पञ्चमूलेन पञ्चकोलेन पाठया ॥**
**अन्नानि कल्पयेद्विद्वान्बिल्ववृक्षाम्लदाडिमैः ॥ ३ ॥**

लघुना पञ्चमूलेन वातपित्ते । पञ्चकोलेन वातकफे । पाठया केवलया ॥ ३ ॥

तक्रस्य ग्रहणीरोगसात्म्यतां दोषत्रयहितत्वं च प्राह—

**ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ॥**
**पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम् ॥ ४ ॥**
**कषायोष्णविकाषित्वाद्रूक्षत्वाच्च कफे हितम् ॥**
**वाते स्वाद्वम्लसान्द्रत्वात्सद्यस्कमविदाहि तत् ॥ ५ ॥**

पथ्यत्वं तक्रस्य अ॥हित्वादाग्निस्थानस्थितस्य पित्तस्य प्रवृत्तिविघातेन । **पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणमिति** । सर्वमेवान्नं प्रायो ह्यस्य विदह्यत इत्यभिधानेन

विदाहजनकं यदस्ति पित्तं तदम्लत्वादुचितप्रकोपमपि न प्रकोपयति नापि शमयतीत्याहुः । विकाषित्वादिति । विकाषी विकषन्संधिबन्धविमोक्षकारिगुणः । यदुक्तम्—विकाषी विकषन्नेव संधिबन्धान्विमोक्षयेदिति । तस्य भावो विकाषित्वं तस्माद्दोषावृतस्रोतःशोधकत्वादित्यर्थः । अत एव शोषिणां बलवतां तक्रदानम् । *वैशद्यादिति । तत्पैच्छिल्यविपरीताद्गुणात् । सद्यस्कमविदाहि तदिति । सद्योमथितं तक्रं पच्यमानावस्थायामपि भूरिविदाहकरं न भवति किंचित्कालस्थितं तु विदाहकरमेव ॥ ४॥ ॥ ५ ॥

**शुंठीं समुस्तां सविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम् ॥**
**मन्दानलत्वे सततामतायामामेऽनुबन्धे ग्रहणीगदे च ॥ ६ ॥**

शुषति शुष्यति वा शुण्ठी । सततामतायामिति । सर्वदाऽऽमकोष्ठतायाम् । आमेऽनुबन्धे प्रवर्तमान इत्याहुः । ग्रहणीगदविशेषणतयाऽऽमानुबन्ध इति क्वचित्पाठो दृश्यते ॥ ६ ॥

**धान्यकातिविषोदीच्ययवानीमुस्तनागरम् ॥**
**बलाद्विपर्णीबिल्वं च दद्याद्दीपनपाचनम्† ॥ ७ ॥**

अस्य योगस्य क्वाथः ॥ ७ ॥

चित्रकगुटिकामाह—

**चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ॥**
**व्योषं हिङ्ग्वजमोदां च चव्यं चैकत्र चूर्णयेत् ॥ ८ ॥**
**गुटिका मातुलुङ्गस्य दाडिमस्य रसेन वा ॥**
**कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥ ९ ॥**

द्वौ क्षारौ यवक्षारस्वर्जिकाक्षारौ । एवं सर्वत्र । लवणानि पञ्च ।

तानि यथा—"सौवर्चलं सैन्धवं च बिडमौद्भिदमेव च ।

सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ।

[*सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ।]

इत्यनेन वृन्द एव व्याकरोति । अत्रौद्भिदं साम्भरिलवणं नुत्कारिलवणं वा । सामुद्रं कटकचकम् । एवं सर्वत्र । केचित्कपिञ्जलाधिकरणन्यायाल्लवणत्रयमाहुः । प्रचारस्तु लवणपञ्चकेनैव । अजमोदां यवानिकाम् । एवमन्तःपरिमार्जने सर्वत्र । गुटिकेयं वाते । चित्रगुटिका ॥ ८ ॥ ९ ॥

---

* अत्र मूलानुरोधेन रूक्षत्वादितीत्यपेक्षितम् । † ख पुस्तके—अभयापिप्पलीमूलवचाकटुकरोहिणी । पाठाश्वदंष्ट्राबीजानि चित्रकं विश्वभेषजम् ॥१॥ पिबेन्निष्क्वाथ्य चूर्णानि कृत्वा चोष्णेन वारिणा । इत्यधिकमत्र । * एतच्चिह्नगतमनपेक्षितामिति प्रतिभाति ।

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः ॥
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ १० ॥

नागरचूर्णेन मिश्रित इति । नागरचूर्णं कटुतामात्रकारकं देयम् । सगुडः समगुडः । अयमपि योगो वाते ॥ १० ॥

जम्बूदाडिमशृङ्गाटपाठाकंचटपल्लवैः ॥
पक्वं पर्युषितं बालबिल्वं सगुडनागरम् ॥
हन्ति सर्वानतीसारान्ग्रहणीमतिदुस्तराम् ॥ ११ ॥

जम्ब्वादीनां पञ्चानां पल्लवास्तरणे पाकार्थमनुरूपं जलं दत्त्वा पुटे बालबिल्वफलमुत्स्वेद्य निशापर्युषितं कार्यम् । सगुडनागरमिति । समो गुडः । नागरचूर्णं कटुतामात्रकारकम् । रक्ते तु नागरं न देयम् । उत्स्वेदनशेषपानीयमत्रानुपानम् ॥ ११ ॥

नागरातिविषामुस्ताक्वाथः स्यादामपाचनः ॥

सुगमम् ॥

चूर्णं हिङ्ग्वष्टकं वाऽपि वातिकेऽष्टपलं घृतम् ॥ १२ ॥

सुगमम् ॥ १२ ॥

नागरादिचूर्णमाह—

नागरातिविषामुस्तं धातकी सरसाञ्जनम् ॥
वत्सकत्वक्फलं बिल्वं पाठां कटुकरोहिणीम् ॥ १३ ॥
पिबेत्समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ॥
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥ १४ ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ॥
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ १५ ॥

नागराख्ये देशे भवं नागरम् । कृष्णात्रेयेण पूजितमित्यस्याभिधानं सिद्धयोगफलत्वोपदर्शनार्थम् । कृष्णात्रेयः पुनर्वसुः ॥ १३ ॥ १४ ॥ १५ ॥

जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् ॥
भावयित्वा ततो देयं तण्डुलोदककर्मणि ॥ १६ ॥

जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् । भावयित्वा ततो देयं तण्डुलोदककर्मणीति टिप्पणी वृन्दस्य ।

चक्रस्त्वाह—शीतकषायमानेन तण्डुलोदककल्पनेति । शीतं कषायमानं च च्छर्दिविकार एव दर्शयिष्यामः । नागराद्यं चूर्णम् ॥ १६ ॥

भूनिम्बाद्यं चूर्णमाह[1]—

---

१ घ. 'मपि दु' ।

**भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान्समान् ॥**
**द्वौ चित्रकाद्वत्सकत्वग्भागान्षोडश चूर्णयेत् ॥ १७ ॥**
**गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ॥**
**कामलाज्वरपाण्डुत्वमेहारुच्यतिसारजित्* ॥ १८ ॥**

**द्वौ चित्रकाद्वत्सकत्वग्भागान्षोडशेति** । प्रथमभागापेक्षया द्विभागषोडशभागपरिग्रहः । **गुडशीताम्बुनेति** । गुडयुतं शीताम्बु तेन । गुडयोगाद्गुडाम्बु स्याद्गुडवर्णरसान्वितमिति **चक्रः** । **विदेहे**ऽप्युक्तम्—चूर्णितान्प्रपिबेच्छीतैर्वारिभिर्गुडमिश्रितैरिति । **वैद्यप्रसारके**ऽपि सर्वसमो गुडो व्याख्यातः । भूनिम्बाद्यं चूर्णम् ॥ १७ ॥ १८ ॥

**ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि ॥**
**कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्धयेत् ॥ १९ ॥**

सुगमम् ॥ १९ ॥

**सर्वजायां ग्रहण्यां तु सामान्यो विधिरिष्यते ॥ २० ॥**

प्रत्येकदोषोक्तचिकित्सामेलकेन त्रिदोषग्रहण्यां चिकित्सा कार्येत्यर्थः ॥ २० ॥

निरामेऽतिदुर्बलाग्नौ ग्रहणीरोगे घृतानि हितानि ।

यदुक्तं **चरके**—'स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ।
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि'' ॥

ततः संप्रति घृतानि दर्शयति—

**मसूरस्य कषायेण बिल्वगर्भं पचेद्घृतम् ॥**
**हन्ति कुक्ष्यामयान्सर्वान्ग्रहणीपाण्डुकामलाः ॥**
**व्रीहिप्राण्यङ्गयोः क्वाथं व्युषितं दोषलं विदुः ॥ २१ ॥**

सुगमम् । मसूरघृतम् ॥ २१ ॥

**मसूरस्य तुलाक्वाथे बिल्वगर्भं पचेद्घृतम् ॥**
**भिन्नविट्कं प्रशंसन्ति मसूरघृतमुत्तमम् ॥ २२ ॥**

**मसूरस्य तुलाक्वाथ इति** । मसूरस्य तुलया कृतक्वाथे । तुला पलशतम् । मसूरश्च कर्पटे पोटलकं बद्ध्वा क्वाथ्यः । एवं माषकुलत्थादिक्वाथेऽपि । घृतमत्र प्रस्थमानम् । मसूरिकाघृतम् ॥ २२ ॥

अष्टपलघृतमाह—

**त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात्पले ॥**
**सर्पिरष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥ २३ ॥**

---

* ख. पुस्तके—यवानीपिप्पलीमूलचातुर्जातकनागरैः । मरीचाग्निजलाजाजीधान्यसौवर्चलैः समैः ॥१॥ वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः । त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतैः ॥ २ ॥ चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान् । कासश्वासाग्निसादार्शःपीनसारोचकाञ्जयेत् ॥ ३ ॥ कपित्थाष्टकम् । इत्यधिकमत्र ।

बिल्वमात्र इति मिलित्वा पलमाने न प्रत्येकं कल्काच्चतुर्गुणः स्नेह इत्यादिपरिभाषया जलेन पाकः । अष्टपलमानस्यैवात्र घृतस्य पाकः । इत्थमेव फलदानक्षमत्वमस्य भवतीति महर्षिवचनादुन्नीयते । मात्राया अनलापेक्षया परिमाणम् । अष्टपलकं घृतम् ॥ २३ ॥

**बिल्वाग्निचव्यार्द्रकशृङ्गवेरक्वाथेन कल्केन च सिद्धमाज्यम् ॥**
**सच्छागदुग्धं ग्रहणीगुदोत्थे शोथाग्निसादारुचिनुद्वरिष्ठम् ॥२४॥**

आर्द्रकशृङ्गवेरमार्द्रकमेव । बिल्वादीनां क्वाथः कल्कश्च । क्वाथोऽत्र त्रिगुणः कार्यः । छागीक्षीरं स्नेहसमम् । बिल्वाद्यं घृतम् ॥ २४ ॥

बालचाङ्गेरीघृतमाह—

**मोचसिन्धूत्पलव्योषलज्जाबिल्वाम्बुधातकि ॥ २५ ॥**
**सिद्धमाज्यमजाक्षीरे चाङ्गेरीरसवच्छिशोः ॥**
**हन्याद्ग्रहण्यतीसारौ पथ्यापथ्याशिनो द्रुतम् ॥ २६ ॥**

मोचः शाल्मलीवेष्टकम् । सिन्धुः सैन्धवम् । उत्पलमुत्पलकोटिका । लज्जा वराहक्रान्ता । अम्बु वालकम् । चाङ्गेरी, अम्लपत्रिका । अजाक्षीरचाङ्गेरीरसौ प्रत्येकं घृताद्द्विगुणौ । यतश्चाङ्गेरीरसवदिति निर्देशः । स चाजाक्षीर इत्यस्य विशेषणम् । तेन चाङ्गेरीरससमेऽजाक्षीर इत्यर्थः । चतुर्गुणं च द्रवस्नेहपाकविधाम्बूत्सर्गसिद्धम् । प्रचरत्ययं पक्षः । अन्यस्त्वाह—क्षीरं स्नेहसमं रसस्त्रिगुण इति । जैज्जटमते—क्षीरं स्नेहसमं रसश्चतुर्गुणः । रसवदिति घृतविशेषणतया योजयित्वा घृतसमो रस इत्याह कश्चित् । शिशोरिति निर्देशो विशेषार्थः । तेन चान्यस्यापि हितमेतद्घृतम् ॥ २५ ॥ २६ ॥

**पाठान्तरे कपित्थोऽपि विशत्यत्र घृते पुनः* ॥**

कपित्थोऽपि विशत्यत्र घृतपाठान्तरे पुनरिति । पाठान्तरायोगे[1] । चाङ्गेरीस्वरसे सर्पिश्छागीक्षीरसमे पचेत् । कपित्थव्योषसिन्धूत्थसमङ्गोत्पलवालकैः । सबिल्वधातकीमोचैः सिद्धं सर्वातिसारनुत् । बालचाङ्गेरीघृतम् ॥

चाङ्गेरीघृतमाह—

**नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ २७ ॥**
**श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका ॥**
**चाङ्गेरीस्वरसे सर्पिः कल्कैरेभिर्विपाचितम् ॥ २८ ॥**

---

* ख.पुस्तके—कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् । यवानी धान्यकाजाजीग्रन्थिव्योषं पलांशकम् ॥ १ ॥ पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः । गुणैः कपित्थाष्टकवद्वर्गोऽयं दाडिमाष्टकम् ॥ २ ॥ दाडिमाष्टकम् । इत्यधिकमत्र ।

---

१ ङ. 'न्तरयों' ।

**चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥**
**अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ॥**
**गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ॥ २९ ॥**

हस्तिपिप्पली चवी जातूकर्णे संभवात् ।

तद्यथा—"दधिधान्यबिल्वपाठायवानिकापञ्चकोलगोक्षुरकैः ।
चाङ्गेरीस्वरसे गुदनिःसृतिमूत्रकृच्छ्रार्तिनुन्नाहीति ।

**द्रव्यावल्यां** च चवीफलस्य हस्तिपिप्पलीपर्यायो दृश्यते । बिल्वस्थाने विषापाठः । विषाऽतिविषा । पाठः पुनरयं जातूकर्णसंवादाभावादसंगतः । चाङ्गेरीस्वरसोऽप्यत्र चतुर्गुणः । चतुर्गुणेन दध्ना चेत्यत्र चकारस्य समुच्चयार्थत्वात् । स्वरसे क्षीरवद्विधिरिति वचनात्स्वरसः स्नेहसम इति केचित् । इदं तु वचनं नाऽऽद्रियन्ते भिषजः । चाङ्गेरीघृतम् ।

सुनिषण्णचाङ्गेरीघृतं क्वचित्पठ्यते ।

तदाह—"अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकः ॥
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥ १ ॥
कषाय एष पेष्यास्तु जीवन्ती कटुरोहिणी ॥
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥ २ ॥
कलिङ्गाः शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ॥
कट्फलं चित्रको मुस्तं प्रियङ्ग्वतिविषा स्थिरा ॥ ३ ॥
पद्मोत्पलानां किञ्जल्कं समङ्गा च निदिग्धिका ॥
बिल्वं मोचरसः पाठा भागाः कर्षसमाः पृथक् ॥ ४ ॥
चतुष्प्रस्थशृतं प्रस्थं कषायमवतारयेत् ॥
एतदर्शःस्वतीसारे रक्तस्रावे त्रिदोषजे ॥ ५ ॥
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥
उत्थाने चातिबहुशः शोफशूले गुदाश्रये ॥ ६ ॥
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि ॥
प्रयोज्यं विधिवत्सर्पिर्बलवर्णाग्निवर्धनम् ॥ ७ ॥
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥

अवाक्पुष्पी हेठाहुली । शुङ्गा, अविकसितं पत्रमुकुलम् । द्विपलोन्मिताः प्रत्येकं तेन क्वाथ्यं द्रव्यं षोडशपलमानं भवति । नन्वत्र 'क्वाथ्याच्चतुर्गुणं वारि' इत्यादिपरिभाषयैव चतुष्प्रस्थमानं जलमुत्सर्गसिद्धं पाकार्थं प्राप्यते तदा शेषश्च पादस्थः स पुनः प्रस्थ एव । तत्किमर्थमुच्यते—चतुष्प्रस्थशृतं प्रस्थं कषायमुपकल्पयेदिति । उच्यते ।

तदुत्सर्गविधौ चतुर्गुणजलदानपादशेषकषायविसूचनार्थम् । एतदेव चरकवचः परिभाषास्थानीयं ज्ञेयं चरकेऽस्याः परिभाषाया अभावात् । पिप्पली पिप्पलीमूलमित्यस्य स्थाने क्वचिदवाक्पुष्पीभवं मूलमितिपठ्यते । वीरा क्षीरकाकोली पृश्निपर्णी वा । अञ्जनं रसाञ्जनम् ।

अत्र—"शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्तितम् ।
द्विगुणं तद्द्रवेष्विष्टं सद्य एवोद्धृतेषु च"

इति परिभाषयैव द्रवद्वैगुण्ये सिद्धे यत्त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिक इत्यस्याभिधानं तत्कुडवादारभ्य द्रवार्द्रद्वैगुण्यसूचनार्थम् । तेन कुडवपूर्वे माने द्रवार्द्रयोर्द्वैगुण्यं न भवति । तथाच तन्त्रान्तरम्—

"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत् ।
शुष्के द्रवार्द्रयोश्चैव तुल्यमानं प्रकीर्तितम्" इति ।

अर्शःस्वतीसारे वा यो रक्तस्रावस्त्रिदोषजस्तत्रैतद्घृतं प्रयोज्यं नान्यत्र त्रिदोषजरक्तस्रावे । तस्यासाध्यत्वम् । परिभाषा हि—यत्त्रिदोषमसाध्यं तदिति । चाङ्गेरीघृतम् ॥ २७ ॥ २८ ॥ २९ ॥

मरिचाद्यं घृतमाह—

मरीचं पिप्पलीमूलं नागरं पिप्पली तथा ॥ ३० ॥
भल्लातकं यवानी च विडङ्गं हस्तिपिप्पली ॥
हिङ्गु सौवर्चलं चैव बिडसैन्धवचव्यकम् ॥ ३१ ॥
सामुद्रं सयवक्षारं चित्रको वचया सह ॥
एतैरर्धपलैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ ३२ ॥
दशमूलीरसे सिद्धं पयसा द्विगुणेन च ॥
मन्दाग्नीनां घृतं श्रेष्ठं ग्रहणीदोषनाशनम् ॥ ३३ ॥
विष्टम्भमामदौर्बल्यप्लीहानमपकर्षति ॥
कासं श्वासं क्षयं चापि दुर्नाम सभगंदरम् ॥ ३४ ॥
कफजान्हन्ति रोगांश्च वातजान्क्रिमिसंभवान् ॥
तान्सर्वान्नाशयत्याशु शुष्कं दावनलो यथा ॥ ३५ ॥

पयसा द्विगुणेन चेति । चकाराद्दशमूलीरसोऽपि द्विगुणः । प्रचारोऽपीत्थमेव । दशमूलीरसश्चतुर्गुण इति जैज्जटमतानुयायिनां पन्थाः । मरिचाद्यं घृतम् ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

विश्वौषधस्य गर्भेण दशमूलजले शृतम् ॥
घृतं निहन्याच्छ्वयथुं ग्रहणीमामतामयम् ॥ ३६ ॥

युग्मम् । शुण्ठीघृतम् ॥ ३६ ॥

घृतं नागरकल्केन सिद्धं वातानुलोमनम् ॥
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ३७ ॥

घृतस्य प्रस्थं द्रवद्रव्यत्वाद्द्वात्रिंशत्पलानि । कल्कस्य चत्वारि पलानि । अन्ये पुनः कल्कमानमष्टपलमाहुरिति डल्लणः । शुण्ठीघृतम् ॥ ३७ ॥

कल्याणगुडमाह—

प्रस्थत्रयेणाऽऽमलकीरसस्य शुद्धस्य दत्त्वाऽर्धतुलां गुडस्य ॥
चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णाहपुषाजमोदैः ॥ ३८ ॥
विडङ्गसिन्धुत्रिफलायवानीपाठाग्निधान्यैश्च पलप्रमाणैः ॥
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् ॥३९॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ॥
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोफाः ॥ ४० ॥
शाम्यन्ति चायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ॥
स्त्रीणां च वन्ध्यामयमाशु हन्यात्कल्याणको नाम गुडः प्रसिद्धः ॥४१॥

तैले त्रिवृन्मनाग्भृष्टा त्रिसुगन्धि पलं पलम् ॥
सिद्धे निधेयमत्रैव गुडे कल्याणपूर्वके* ॥ ४२ ॥

ग्रन्थिकं पिप्पलीमूलम् । व्योषं त्रिकटु । इभकृष्णा गजपिप्पली । हपुषा स्वनामख्याता । सिन्धु सैन्धवम् । अग्निश्चित्रकः । पलप्रमाणैरिति प्रत्येकम् । डल्लणः पलप्रमाणैरिति पाठं नेच्छति । समानतन्त्रविरोधात् । तस्मात्पिचुप्रमाणैरिति पाठमिच्छति । तन्त्रान्तरे कार्षिकत्वेन चूर्णानामुक्तेः । त्रिवृच्चूर्णपलाष्टकं तैलपलाष्टके पचेत् । यथावन्मृदुमध्यक्रूरकोष्ठानुरूपं खरमध्यमृदुपाकेनेत्यर्थः । अक्षफलप्रमाणं कर्षः । चतुष्पञ्चमाषकैस्तु प्रचारः । त्रिसुगन्धियुक्तमिति । त्रिसुगन्धि त्वगेलापत्रकम् । तत्प्रमाणं यावता गन्धस्यौत्कट्यं स्यात् । पिचुप्रमाणैर्वा त्रिसुगन्धिभिर्युक्तमित्येके । त्रिवृच्चूर्णं तैले मनाग्भर्जनीयम् । भर्जनेन च तस्य मन्दवीर्यत्वादतिविरेचकत्वं न भवति ।

* ख. पुस्तके—भल्लातकपलशतं जलद्रोणे विपाचयेत् । चतुर्गुणावशेषं तु कषायमवतारयेत् ॥ १ ॥ त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली । हिङ्गुचव्याजमोदं च पञ्चैव लवणानि च ॥ २ ॥ द्वौ क्षारौ हपुषां चात्र दद्यादर्धपलोन्मितान् । मस्तुकाञ्जिकशुक्तानां प्रस्थं प्रस्थं प्रदापयेत् ॥ ३ ॥ आर्द्रकस्य रसं प्रस्थं तत्सर्वं साधु साधयेत् । एतदग्निघृतं नाम मन्दाग्नीनां च शस्यते ॥ ४ ॥ अर्शांसि वातरोगं च प्लीहोदरदरामयान् । ग्रन्थ्यर्बुदापचीकासकफमेदोनिलानि च ॥५॥ नाशयेद्ग्रहणीदोषं श्वयथुं सभगंदरम् । ये च बस्तिगता रोगा ये च कुक्षिसमाश्रिताः ॥ ६ ॥ सर्वांस्तान्नाशयत्याशु सूर्यस्तम इवोदितः । अग्निमुखघृतम् । इत्यधिकमत्र ।

१ क. 'श्च पिचुप्र' । २ घ. 'यनाशनः स्यात्क' । ३ क. प्रदिष्टः ।

त्रिवृच्चूर्णसहित एव तैले गुडमामलकीरसंगालितं प्रदाय पाकः । सिद्धे च लेहे ग्रन्थिकादिचूर्णप्रक्षेप इति प्रचारः । त्रिसुगंधि पलं पलमिति वृन्दटिप्पणीं निर्युक्तिकां मत्वा चक्रेणोक्तम्—

"तैले मनाग्भर्जयन्ति त्रिवृतां च चिकित्सकाः ।
अत्रोक्तमानसाधर्म्यात्रिसुगन्धि पलं पृथक्" इति ॥

अयमिति कल्याणकः । पुंस्त्वस्य शुक्रस्य । अत्रापि हतस्येति संबध्यते । कल्याणक इति कल्यकरणादिति डल्लुणः । कल्यं नैरुज्यमणतीति कल्याणकः । कल्याणगुडः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

**लिङ्गैरसाध्यो ग्रहणीविकारो यैस्तैरतीसारगदो न सिध्येत् ॥**
**वृद्धस्य नूनं ग्रहणीविकारो हत्वा तनुं नो न निवर्तते च ॥४३॥**

अस्यार्थः । यैर्लिङ्गैरतीसारगदो न सिध्यति तैर्ग्रहणीविकारोऽप्यसाध्यः । असाध्यातिसारलिङ्गानि च शोफं शूलं ज्वरं तृष्णामित्यादिनोक्तानि । **हत्वा तनुं नो न निवर्तत इति** । नो न निवर्तते निवर्तत एव । द्वौ निषेधौ प्रकृतमर्थं गमयत इति वचनात् ॥ ४३ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुर्थो ग्रहणीरोगचिकित्साधिकारः समाप्तः ॥ ४ ॥**

## अथ पञ्चमोऽर्शोधिकारः ।

अथातीसारग्रहण्यर्शसां परस्परानुबन्धित्वादतीसारग्रहण्यनन्तरमर्श उच्यते । अरिवच्छृणातीत्यर्शः । पृषोदरादित्वाद्रूपसिद्धिः । अर्शसि वह्निरक्षाभिधानावसरेऽतीसारग्रहणीरोगयोरपि विशेषादग्निरक्षामाह—

**त्रयो विकाराः प्रायेण ये परस्परहेतवः ॥**
**अर्शांसि चातिसारश्च ग्रहणीदोष एव च ॥ १ ॥**
**तेषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः ॥**
**अग्निमूलं बलं पुंसां बलमूलं हि जीवितम् ॥**
**तस्मादग्निं सदा रक्षेदेषु त्रिषु विशेषतः ॥ २ ॥**

परस्परहेतुत्वमर्शःसूत्पन्नेष्वतीसारग्रहणीरोगयोरुत्पत्तिः । तदुत्पत्त्याऽथवाऽनन्तरमर्शउत्पादः । एषां त्रयाणामप्यग्निबले हीने वृद्धिराधिक्यम् । वृद्धेऽग्नौ परिक्षयो

१ घ. सुगोलिं ।

ह्रासः । एषु त्रिषु विशेषत इति । अनेनान्यस्मिन्नपि रोगे रक्षणीयोऽग्निरिति दर्शयति ॥ १ ॥ २ ॥

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्तितः ॥
भेषजक्षारशस्त्राग्निसाध्यत्वादाद्य उच्यते ॥ ३ ॥

आद्य उच्यत इति । भेषजोपायः कथ्यत इत्यर्थः । विस्तरेण वक्ष्यमाणां चिकित्सां सारोद्धारेण ब्रूते ॥ ३ ॥

यद्वायोरानुलोम्याय यदग्निबलवृद्धये ॥
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः ॥ ४ ॥

अन्नपानौषधमिति । अन्नपानं रसप्रधानम् । औषधं वीर्यप्रधानं मुख्यम् ॥ ४ ॥

वातातिसारवद्भिन्नवर्चांस्यर्शांस्युपाचरेत् ॥ ५ ॥

सुगमम् ॥ ५ ॥

उदावर्तविधानेन गाढविड्कानि चासकृत् ॥

सुगमम् ॥

प्रवृत्तबहुलास्राणि पित्तशोणितनाशनैः ॥ ६ ॥

सुगमम् ॥ ६ ॥

विड्विबन्धे हितं तक्रं यवानीबिडसंयुतम् ॥
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ॥ ७ ॥

सुगमम् ॥ ७ ॥

स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ॥
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ॥
वातश्लेष्मविकाराणां शतं च विनिवर्तते ॥ ८ ॥

वातश्लेष्मविकाराणां शतमिति । अशीतिर्वातजा रोगाः । विंशतिः श्लैष्मिकाः । एवं मिलित्वा शतम् ॥ ८ ॥

सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम् ॥
त्रिवृद्दन्तीयुतां वाऽपि भक्षयेदानुलोमिकाम् ॥ ९ ॥

घृतभृष्टहरीतकीं पिप्पलीमिश्रितां गुडेन संयोज्य ॥ ९ ॥

तिलारुष्करसंयोगं भक्षयेदग्निवर्धनम् ॥
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ॥ १० ॥

सुगमम् ॥ १० ॥

तिला भल्लातकं पथ्या गुडश्चेति समांशकम् ॥
दुर्नामश्वासकासघ्नं प्लीहपाण्डुज्वरापहम् ॥ ११ ॥

सुगमम् । चतुःसमः ॥ ११ ॥

मृल्लिप्तं सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् ॥
अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ १२ ॥

सौरणं कन्दमिति । वन्यसूरणमूलं तदभावे ग्राम्यसूरणमूलम् । एवं सर्वत्रार्शांसि ॥ १२ ॥

असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्यनु ॥
खादतोऽर्शांसि शाम्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ १३ ॥

असितानां तिलानामिति । मध्येऽपि कृष्णवर्णानां तिलानामिति । प्रकुञ्चः पलम् । शीतवार्यन्विति । शीतवार्यनुपानम् ॥ १३ ॥

स्विन्नं वार्ताकफलं घोषायाः क्षारजेन सलिलेन ॥
तद्घृतभृष्टं युक्तं गुडेन वा तृप्तितो योऽत्ति ॥ १४ ॥
पिबति च तक्रं नूनं तस्याऽऽश्वेवातिवृद्धगुदजानि ॥
यान्ति विनाशं पुंसः सहजान्यपि सप्तरात्रेण ॥ १५ ॥

वार्ताकफलं घोषक्षारतोयेनोत्स्विन्नं घृततलितमनुरूपेण गुडेन संयुक्तं भक्ष्यं प्रचारात् ॥ १४ ॥ १५ ॥

पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा ॥
गुदजान्नाशयत्याशु योजिता सगुडाऽभया ॥ १६ ॥

गुदजानित्यत्र मांसाङ्कुरानिति शेषः । तेन पुंलिङ्गता संगता ॥ १६ ॥

चित्रकं हपुषा हिङ्गु दद्याद्वा तक्रसंयुतम् ॥ १७ ॥

सुगमम् ॥ १७ ॥

पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत् ॥

सुगमम् ॥

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ॥
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ १८ ॥

त्वचं चित्रकमूलस्येति । प्रत्यहोपयोगे कर्षमानी(नां) चित्रकमूलत्वचं पिष्ट्वा कुम्भगर्भलेपनम् । लेपनं च तिलोत्सेधमानं दिशन्ति ॥ १८ ॥

दन्त्यरिष्टमाह—

त्रिफलादशमूलाग्निनिकुम्भानां पलं पलम् ॥ १९ ॥
वारि द्रोणे शृतं पादशेषे गुडतुलायुतः ॥
आज्यभाण्डस्थितो मासं दन्त्यरिष्टो निषेवितः ॥ २० ॥

गुदजक्रम्युदावर्तग्रहणीपाण्डुरोगहा ॥
अरिष्टादेस्तु संधानं धातकीलिप्तभाजने ॥ २१ ॥

स्थितो मासमिति । चरके मासार्धमिति तु पठितम् । अरिष्टादेस्तु संधानं धातकीलिप्तभाजन इति वृन्दः । पात्रेऽरिष्टादिसंधानं धातकीलोध्रलेपित इति तु चक्रदत्तः । आदिशब्दाच्छुक्तादिग्रहः । दन्त्यरिष्टः ॥ १९ ॥ २० ॥ २१ ॥

अभयारिष्टमाह—

हरीतकीनां प्रस्थार्धं प्रस्थमामलकस्य च ॥
कपित्थानां दशपलं ततोऽर्धेनेन्द्रवारुणी ॥ २२ ॥
विडङ्गपिप्पलीलोध्रमरिचं सैलवालुकम् ॥
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ २३ ॥
द्रोणशेषरसे तस्मिन्पूते शीते प्रदापयेत् ॥
गुडस्य द्विशतं तिष्ठेन्मासार्धं घृतभाजने ॥ २४ ॥
पक्षादूर्ध्वं भवत्येवं ततो मात्रां यथाबलम् ॥
अस्याभ्यासादरिष्टस्य गुदजा यान्ति संक्षयम् ॥ २५ ॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः ॥
अष्टशोफारुचिहरो बलवर्णाग्निवर्धनः ॥ २६ ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ॥
क्रिमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरापहः ॥ २७ ॥
पानपानमरिष्टादेः क्वाथपानसमं जगुः ॥
भेषजत्वात्पलं केचित्प्रथमं मन्दलक्षणम् ॥ २८ ॥

इन्द्रवारुणी गोरक्षकर्कटी । क्वाथपानसममिति । अधममात्रापरिग्रहेण पलद्वयम् । भेषजत्वात्पलं केचिदिति । भेषजत्वादित्यस्यार्थो भेषजत्वात्पलं पेयमिति तत्रैव व्याख्यातः । अभयारिष्टः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

भल्लातकानि त्रिफला दन्ती चित्रकमेव च ॥
समभागानि सर्वाणि सैन्धवं द्विगुणं भवेत् ॥ २९ ॥
कपालसंधौ तत्पक्वं मृदुना गोमयाग्निना ॥
एतत्कल्याणलवणं श्रेष्ठमर्शोविकारिणाम्* ॥ ३० ॥

सुगमम् । कल्याणलवणम् ॥ २९ ॥ ३० ॥

---

* ख. पुस्तके—पीलून्यार्द्राणि सेवेत पक्षं पक्षार्धमेव च। नवाम्रं शीलयेत्किंचित्तेभ्यः सौख्यमवाप्नुयात् ॥ १ ॥ एतदर्शांसि शमयेच्छ्रेष्ठं पीलुरसायनम् । ग्रहणीक्रिमिदोषाणां गुल्मानाममृतोपमम् ॥ २ ॥ पीलुरसायनम् । इत्यधिकमत्र ।

प्राणदं मोदकमाह—

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च ॥
पिप्पल्याः कुडवार्धं च चव्यायाः पलमेव च ॥ ३१ ॥
तालीसपत्रस्य पलं पलार्धं केसरस्य च ॥
द्विपले पिप्पलीमूलादर्धकर्षं च पत्रकात् ॥ ३२ ॥
सूक्ष्मैलाकर्षमेकं तु कर्षं च त्वङ्मृणालयोः ॥
गुडात्पलानि त्रिंशच्च चूर्णमेकत्र कारयेत् ॥ ३३ ॥
अक्षप्रमाणा गुटिकाः प्राणदा इति विश्रुताः ॥
पूर्वं भक्ष्यास्तु पश्चाच्च भोजनस्य यथाबलम् ॥ ३४ ॥
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेदनु ॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च ॥ ३५ ॥
वातपित्तकफोत्थानि संनिपातोद्भवानि च ॥
पानात्यये मूत्रकृच्छ्रे वातरोगे गलग्रहे ॥ ३६ ॥
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥
कृमिहृद्रोगिणां चैव गुल्मशूलार्तिनां तथा ॥ ३७ ॥
श्वासकासपरीतानामेताः स्युरमृतोपमाः ॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तपायुजे ॥ ३८ ॥
प्राणदोऽयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणाम् ॥
अम्लपित्ताग्निमान्द्यादौ प्रयोज्यो गुदजातुरे ॥ ३९ ॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ॥
पलद्वयं चानिलजे पित्तजे तु पलत्रयम् ॥ ४० ॥

चतुर्थं मरिचस्येति । पलमेकम् । केसरस्य नागकेसरचूर्णस्य । कर्षं च त्वङ्मृणालयोरिति । त्वग्गुडत्वक् । अत्र मृणालमुशीरम् । अनयोर्मिलित्वा कर्षः। पूर्वं भक्ष्यास्तु पश्चाच्च मद्यादिकं पिबेदिति योज्यम् । मण्डूरादिवत्पूर्वं पश्चाच्च भोजनस्य गुटिका भक्ष्येति न कल्पनीयम् । अर्शांसि क्वचिदप्यस्य विधेरदृष्टत्वात् । मद्यं वातकफेऽनुपानं मांसरसो वाते मुद्गयूषः कफे क्षीरं पित्ते वातपित्ते च तोयमुष्णं वातकफे । एवं सर्वत्रानुपाने पाने च बहुद्रवोपादाने व्यवस्था । विड्ग्रहे विड्विबन्धे । पित्तपायुज इति । पित्तजेऽर्शसि । प्राणदोऽयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणामिति पाठः साधुः । चूर्णमानात्समुदितचूर्णमानात् । गुडमानाच्चतुर्गुणामिति पाठं नाऽऽद्रियन्ते प्रभूततरशर्कराप्रसङ्गात् ।

---

१ घ. 'चव्य' । २ घ. 'त्वा गुडमा' । ३ ङ. 'तुरैः ॥ ३९ ॥ ४ घ. च ।

प्राणदो मोदकः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥

काङ्कायनमोदकमाह—

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य च ॥
पिप्पली पिप्पलीमूलं चव्यचित्रकनागराः ॥ ४१ ॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम् ॥
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ॥ ४२ ॥
द्विगुणेन गुडेनैषां वटकानक्षसंमितान् ॥
कृत्वैकं भक्षयेत्प्रातस्तक्रमम्भोऽनु वा पिबेत् ॥ ४३ ॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥
काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ॥
भिषग्जितमिदं प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥ ४४ ॥

वातश्लेष्मण्यर्शसि बोद्धव्यम् । मरिचस्येत्यत्रैकमिति संबध्यते । मरिचस्य पलमेकमित्यर्थः । पलाभिवृद्धाः क्रमश इति । यथाक्रमं पलेन पलेन परिवृद्धाः । कन्दस्तु द्विगुण इति षोडशपलः । द्विगुणेन गुडेनेति । समुदायाद्द्विगुणेन । अक्षसंमितान्कर्षमानान् । षडष्टमाषकैः प्रचारः । काङ्कायनमोदकः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

लवणोत्तमाद्यं चूर्णमाह—

लवणोत्तमवह्निकलिङ्गयवांश्चिरविल्वमहापिचुमन्दयुतान् ॥
पिब सप्तदिनं मथितालुलितान्यदि मर्दितुमिच्छसि पायुरुहान् ॥ ४५ ॥

लवणोत्तमं सैन्धवम् । कलिङ्गयव इन्द्रयवः । चिरबिल्वः करञ्जः । तस्य च मूलमत्र । यत्पुनरस्य सुश्रुते फलग्रहणमुक्तं तच्छोधनविषयम् । महापिचुमन्दः पर्वतनिम्बः । निम्बसदृशबृहत्पत्रो वृक्षो बकायणीति लोके । ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब उच्यत इत्याहुरन्ये । एतस्य त्वग्ग्राह्या । मथितालुलितान्घोलेनाऽऽलोडितान् । लवणोत्तमाद्यं चूर्णम् ॥ ४५ ॥

समशर्करचूर्णमाह—

शुण्ठीकणामरिचनागदलत्वगेलं चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात् ॥
खादेदिदं समसितं गुदजाग्निमान्द्यगुल्मारुचिश्वसनकण्ठहृदामयेषु ॥४६॥

नागो नागकेसरचूर्णम् । दलं पत्रकम् । क्रमविवर्धितमूर्ध्वमन्त्यादिति । अन्तस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकद्वित्रादिभागक्रमेण वर्धयेदित्यर्थः । समसितमिति । सर्वचूर्णसमशर्करम् । श्वसनमिति श्वासः । समशर्करचूर्णम् ॥ ४६ ॥

चतुःसममोदकमाह—

**सनागरारुष्करवृद्धदारकं गुडेन यो मोदकमत्युदारकम् ॥**
**अशेषदुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम् ॥ ४७ ॥**

अरुष्करं भल्लातकम् । अत्र चक्रेण लिखितम्—चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड इति । एतद्वचनमभियुक्तस्य कस्यचित् । मोदके गुडद्वैगुण्यं च केचिन्नाऽऽद्रियन्ते । समेनापि गुडेन किंचिज्जलं दत्त्वाऽग्नौ विपकेन मोदकस्योत्पन्नत्वात् । भिषजां तु द्विगुणेनैव गुडेन सर्वमोदकेषु प्रचारो दृश्यते । अत्र चतुःसम इतिनामश्रुत्या सम एव गुडो युज्यते । चतुःसमो मोदकः ॥ ४७ ॥

**व्योषाग्न्यरुष्करविडङ्गतिलाभयानां**
**चूर्णं गुडेन सहितं तु सदोपयोज्यम् ॥**
**दुर्नामशोफगरकुष्ठशकृद्विबन्धा-**
**नग्नेर्जयत्यबलतां क्रिमिपाण्डुतां च ॥ ४८ ॥**
**चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुडः ॥ ४९ ॥**

सुगमम् । व्योषाद्यं चूर्णम् ॥ ४८ ॥ ४९ ॥

सूरणपिण्डीमाह—

**चूर्णीकृताः षोडश सूरणस्य भागास्ततोऽर्धेन च चित्रकस्य ॥**
**महौषधाद्द्वौ मरिचस्य चैको गुडेन दुर्नामजयाय पिण्डी ॥५०॥**

अत्र गुडो द्विगुणः । तथा च चक्रः—पिण्ड्यां गुडो मोदकवत्पिण्डत्वात्पक्तिकारक इति । सूरणपिण्डी ॥ ५० ॥

**मरिचमहौषधचित्रकसूरणभागा यथोत्तरं द्विगुणाः ॥**
**सर्वसमो गुडभागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥ ५१ ॥**
**ज्वलनं ज्वलयति जाठरमुन्मूलयति शूलगुल्मगदान् ॥**
**निःशेषयति श्वयथुं श्लीपदमर्शांसि नाशयत्याशु ॥ ५२ ॥**

सुगमम् । स्वल्पसूरणमोदकः ॥ ५१ ॥ ५२ ॥

बृहत्सूरणमोदकमाह—

**षोडश सूरणभागा वह्नेरष्टौ महौषधस्यापि ॥**
**अर्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्धेन ॥ ५३ ॥**
**त्रिफलाकणासमूलातालीसारुष्करक्रिमिघ्नानाम् ॥**
**भागा महौषधसमा दहनांशा तालमूली च ॥ ५४ ॥**
**भागः सूरणतुल्यो दातव्यो वृद्धदारकस्यापि ॥**
**भृङ्गैले मरिचांशे सर्वाण्येकत्र कारयेच्चूर्णम् ॥ ५५ ॥**

१ क. घ. ततोऽर्धभागेन ।

द्विगुणेन गुडेन युतः सेव्योऽयं मोदकः प्रकामधनैः ॥
गुरुवृष्यभोज्यरहितेष्वितरेषूपद्रवं कुरुते ॥ ५६ ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन ॥
भीमस्य मारुतेरपि महाशनौ येन तौ जातौ ॥ ५७ ॥
अग्निबलमत्र हेतुर्न केवलं सूरणो महावीर्यः ॥
प्रभवति शस्त्रक्षाराग्निभिर्विनाऽप्यर्शसामेषः ॥ ५८ ॥
श्वयथुश्लीपदजिदयं हरति ग्रहणीं कफानिलजाम् ॥
नाशयति वलीपलितं मेधां कुरुते वृषत्वं च ॥ ५९ ॥
हिक्कां श्वासं कासं सराजयक्ष्मप्रमेहांश्च ॥
प्लीहानं च तथोग्रं हन्त्याशु रसायनं पुंसाम् ॥ ६० ॥

त्रिफलाकणासमूलातालीसारुष्करकृमिघ्नानाम्। भागा महौषधसमा इति। त्रिफलादीनां प्रत्येकं महौषधसमा भागा अष्टार्धरूपा भागा इत्यर्थः। त्रिफलाया अपि प्रत्येकं भागः। कणासमूला। पिप्पल्याः फलं मूलं चेत्यर्थः। समूलेत्यत्र 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्' इत्यादिना पुंवद्भावो नोद्भावनीयः। तस्योत्तरपदे स्त्रीप्रत्यये परतो विधानात्। विशेषणत्वादस्य पूर्वनिपातोऽपि न वक्तव्यः। विवक्षावशादस्यैव विशेष्यत्वात्। भृङ्गैले मरिचांशे प्रत्येकम्। भृङ्गं गुडत्वक्। गुरुवृष्यभोज्यरहितेष्वितरेषूपद्रवं कुरुत इति। इतरेषु प्रकामधनप्रतियोगितया दरिद्रेषु। उपद्रवं च व्यापदम्। बृहत्सूरणमोदकः॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ॥ ९९ ॥ ६० ॥

संप्रत्यग्निदीपनवातानुलोमनानि घृतान्याह—

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ॥
यवानी पिप्पलीमूलमुभे च विडसैन्धवे ॥ ६१ ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ॥
शकृद्वातानुलोमार्थं जाते दध्नि चतुर्गुणे ॥ ६२ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ॥
गुदवङ्क्षणशूलं च घृतमेतद्व्यपोहति ॥ ६३ ॥

कुस्तुम्बुरूणीति। कुस्तुम्बुरु धान्याकम्। परिस्रवमिति। गुदपरिस्रवम्। चव्याद्यं घृतम् ॥ ६१ ॥ ६२ ॥ ६३ ॥

पिप्पल्यादितैलमाह—

पिप्पलीं मधुकं बिल्वं शताह्वां मदनं वचाम् ॥
पुष्कराख्यं शठीं कुष्ठं चित्रकं देवदारु च ॥ ६४ ॥

पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ॥
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥ ६५ ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ॥
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥ ६६ ॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम् ॥
उत्थानं बहुशो यच्च जयेच्चैवानुवासनात्* ॥ ६७ ॥

बिल्वं बिल्वशलाटु । मदनं मदनफलम् । द्विगुणक्षीरसंयुतमिति । द्विगुणेनैव केवलक्षीरेण पाकः । प्रचारोऽपीत्थंभूतः । अन्यस्तु यन्न्यूनं च तदम्भसेति वचनाच्चतुर्गुणद्रवेण च पाकस्योत्सर्गसिद्धत्वाज्जलमपि द्विगुणमाह । वृद्धसुश्रुते तु तैलेऽस्मिंश्चतुर्गुणं तोयं दर्शितम् ।

तद्यथा—"शठीकृष्णापुष्कराह्वमदनामरदारुभिः ।
शताह्वाकुष्ठयष्ट्याह्ववचाबिल्वहुताशनैः ॥
संपिष्टैर्द्विगुणं क्षीरं तैलं तोयच्चतुर्गुणम् ।
पक्त्वा बस्तौ विधातव्यं मूढवातानुलोमनम्" इत्यादि ॥

चतुर्गुणतोयदर्शनात्तत्प्रयोगान्तरमवगन्तव्यम् । आनाहं वङ्क्षणाश्रयमिति । वङ्क्षणानाहो वङ्क्षणरुद्धवातता । पिप्पल्याद्यं तैलम् ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥

बाहुशालगुडमाह—

त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकः शठी ॥
गवाक्षीविश्वमुस्ताह्वविडङ्गानि हरीतकी ॥ ६८ ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात् ॥
षट्पलं वृद्धदारस्य सूरणस्य तु षोडश ॥ ६९ ॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम् ॥
पूतं तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुडः ॥ ७० ॥
लेहं पचेत्तु तं तावद्यावद्दर्वीप्रलेपनम् ॥
अवतार्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥ ७१ ॥
त्रिवृत्तेजोवतीकन्दचित्रकान्द्विपलांशिकान् ॥
एलात्वङ्मरिचं चापि नागाह्वं चापि षट्पलम् ॥ ७२ ॥
द्वात्रिंशच्च पलान्येव चूर्णं दत्त्वा निधापयेत् ॥
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥ ७३ ॥

---

*-द्रवं चतुर्गुणजलं पिप्पल्याद्यं घृतं शुभम् । पिप्पल्याद्यं तैलम् । इत्यधिकमत्र ।

पञ्च गुल्मान्प्रमेहांश्च पाण्डुरोगं हलीमकम् ॥
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥ ७४ ॥
दीपयेद्ग्रहणीं मन्दां यक्ष्माणं चापि कर्षति ॥
पीनसे च प्रतिश्याय आढ्यवाते तथैव च ॥ ७५ ॥
अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः ॥
दुर्नामारिरयं चाऽऽशु दृष्टो वारसहस्रशः ॥ ७६ ॥
जीवन्त्येनं प्रयुञ्जानाः शतवर्षाण्यनामयाः ॥
आयुषो दैर्घ्यजननो वलीपलितनाशनः ॥ ७७ ॥
रसायनवरश्चैव मेधाजनन उत्तमः ॥
गुडः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्तितः ॥ ७८ ॥

तेजोवती चवी । यत्र पुनश्चवी तेजोवती चास्ति तत्र परं तेजोवती ज्योतिष्मती गृह्यते । यथा गुग्गुलुपञ्चतिक्तके घृते । गवाक्षी गोरक्षकर्कटी तस्या मूलमेव सर्वत्र न तु गवाक्षी श्वेतापराजिता क्वापि टीकाकारैरव्याख्यातत्वात् । **क्वाथ्येभ्यस्त्रिगुणो गुड इति** । एकचत्वारिंशत्क्वाथ्यपलेभ्यस्त्रैगुण्येन त्रयोविंशतिपलाधिकं पलशतं गुडस्य भवति । कन्दः सूरणः । एलादिचतुष्टयस्य प्रत्येकं षट्पलत्वम् । गजाह्वं नागकेसरचूर्णम् । अत्रानुपानमनुक्तमपि कोष्णाम्बुना वातकफे पित्तादौ क्षीरादिना ज्ञेयम् । न चात्र भल्लातकप्रवेशात्कोष्णं जलमनर्हमिति शङ्कनीयम् । यतो भल्लातकस्नेहे कोष्णजलस्य निषेधो न भल्लातकयोगमात्रे ।

थाचोक्तम्—"कोष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
ऋते भल्लातकस्नेहात्तत्र तोयं सुशीतलम्" इति ।

बाहुशालो गुडः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ॥ ७६ ॥ ७७ ॥ ७८ ॥

गुडपाकलक्षणमाह—

तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः ॥
क्षिप्तस्तु निश्चलस्तिष्ठेत्पतितस्तु न शीर्यते ॥ ७९ ॥
यदा दर्वीप्रलेपः स्याद्यदा वा तन्तुली भवेत् ॥
एष पाको गुडादीनां सर्वेषां परिकीर्तितः ॥ ८० ॥
सुखमर्दः सुखस्पर्शो गन्धवर्णरसान्वितः ॥
पीडितो भजते मुद्रां गुडः पाकमुपागतः ॥ ८१ ॥

तोयपूर्णपात्रोपरि कोमलकदलीदलं दत्त्वा गुडस्य मुद्रापाको निरूपणीयः । सर्वगुडस्यैवायं पाकः ॥ ७९ ॥ ८० ॥ ८१ ॥

भल्लातकगुडमाह—

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् ॥
पादशेषे रसे तस्मिन्पचेद्गुडतुलां भिषक् ॥ ८२ ॥
भल्लातकसहस्रार्धं छित्त्वा तत्रैव दापयेत् ॥
सिद्धेऽस्मिंस्त्रिफलाव्योषयवानीमुस्तसैन्धवैः ॥ ८३ ॥
कर्षांशैश्चूर्णितैर्दद्यात्त्वगेलापत्रकेसरम् ॥
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ॥ ८४ ॥
कुष्ठार्शःकामलामेहग्रहणीगुल्मपाण्डुताः ॥
हन्यात्प्लीहोदरं कासं कृमिरोगभगंदरान् ॥
भल्लातकगुडो ह्येष श्रेष्ठश्चार्शोविकारिणाम् ॥ ८५ ॥

**भल्लातकसहस्रे द्वे इति** । भल्लातकगुडकानां सहस्रद्वयम् । एवं सर्वत्र पलादिमानश्रुतिविरहे । यथाऽऽमवातोक्तसैन्धवाद्ये तैले भल्लातकास्थीनि विंशतिरिति । यत्र तु पलादिश्रुतिरस्ति तत्र तथैव व्यवहर्तव्यम् । यथा बाहुशाले पलान्यष्टावरुष्करादिति । एवं हरीतक्यादावपि ज्ञेयम् । **त्वगेलापत्रकेसरमिति** । त्वगेलादि प्रत्येकं कर्षांशम् । भल्लातकगुडः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

गुडभल्लातकं द्वितीयमाह—

दशमूल्यमृता भार्ङ्गी श्वदंष्ट्रा चित्रकं शठी ॥ ८६ ॥
भल्लातकसहस्रं तु पलांशं क्वाथयेद्बुधः ॥
दत्त्वा गुडतुलामेकां लेहीभूतं समुद्धरेत् ॥ ८७ ॥
माक्षिकं पिप्पलीं तैलमौरुबूकं च दापयेत् ॥
कुडवं कुडवं चात्र त्वगेलामरिचं तथा ॥ ८८ ॥
अर्शःकासमुदावर्तं पाण्डुत्वं शोफमेव च ॥
नाशयेद्वह्निसादं च गुडो भल्लातकः स्मृतः ॥ ८९ ॥

**पलांशमिति** । दशमूल्यादिभिर्योज्यम् । **क्वाथयेदिति** । अमृतभल्लातके गुडे गुडतुलापाकार्थं जलद्रोणाभिधानादिहापि जलद्रोणक्वाथः किंवा क्वाथ्यद्रव्येभ्योऽष्टगुणे जल इति । माक्षिकं मधु । पिप्पली चूर्णिता । तैलमौरुबूकमेरण्डजं तैलम् । अत्र च तत्प्रममेव दत्त्वा गुडः पचनीयः । पक्के तु प्रक्षेपदानं स्यात् । **कुडवं चात्र त्वगेलामरिचमिति** । त्वगेलादीनां प्रत्येकं कुडवः । कुडवार्धं चेति पाठेऽपि प्रत्येकं कुडवार्धम् । गुडभल्लातकः ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥

भल्लातकलोहमाह—

१ घ. 'र्षांशं चूर्णितं दद्या' ।

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता ॥
हस्तिपिप्पल्यपामार्गदण्डोत्पलकुठेरकाः ॥ ९० ॥
एषां चतुष्पलान्भागाञ्जलद्रोणे विपाचयेत् ॥
भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत् ॥ ९१ ॥
तेन पादावशेषेण लोहपात्रे पचेद्भिषक् ॥
तुलार्धं तीक्ष्णलोहस्य घृतस्य कुडवद्वयम् ॥ ९२ ॥
त्र्यूषणं त्रिफलां वह्निं सैन्धवं बिडमौद्भिदम् ॥
सौवर्चलं विडङ्गं च पलिकांशं प्रकल्पयेत् ॥ ९३ ॥
कुडवं वृद्धदारस्य तालमूल्यास्तथैव च ॥
सूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥ ९४ ॥
सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम् ॥
प्रातर्भोजनकाले वा ततः खादेद्यथाबलम् ॥ ९५ ॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम् ॥
कृमिगुल्माश्मरीमेहाञ्शूलं चाऽऽशु व्यपोहति ॥ ९६ ॥
करोति शुक्रोपचयं वलीपलितनाशनम् ॥
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्* ॥ ९७ ॥

तीक्ष्णलोहस्य[1] तीक्ष्णं लोहविशेषः । स च मारितो ग्राह्यः । गुणोत्कर्षाद्वज्रपद्यादि प्रशस्तमत्र । तामलकी तालमूली स्वनामख्याता । भल्लातकलोहः ॥ ९० ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

संप्रति रक्तार्शसश्चिकित्सामाह—

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् ॥
दुष्टास्रे निगृहीते तु शूलानाहावसृग्गदाः ॥ ९८ ॥

---

* ख. पुस्तके—यामामृतागुडूच्यामलनागरचित्रकाणां भागापृथक्तांशतसंमितस्य । सर्वा पृथक्संपरिकल्प्य युक्त्या द्रोणद्वयेऽपां तु विपाच्य पात्रे ॥ १ ॥ लोहे दृढे मन्दहुताशने तु पादावशिष्टं विधिवद्विधिज्ञः । भूयस्य यन्त्रं तुलया गुडस्य शुद्धस्य वस्त्रेण विशोधितस्य ॥ २ ॥ चूर्णीकृतैर्जीरकयुग्मदन्तीपाठात्रिवृत्त्र्यूषणग्रन्थिकाह्वयैः । धान्याजमोदेभकणायवानीभल्लातकाख्यैश्च पलप्रमाणैः ॥ ३ ॥ प्रस्थत्रयेणाप्यहरीतकीनामेकध्यमालोड्य शनैश्च द्रव्यम् । ज्ञात्वा सुपक्वैरसगन्धवर्णैः कुम्भे निधाय वसुगन्धियुक्तम् ॥ ४ ॥ प्रस्थार्धमाने मधुनि सुशीते भल्लातकास्थिप्रभवाच्च तैलात् । दत्त्वा पलार्धं यवशूकजश्च अष्टौ पलान्येव सितोपलायाः॥५॥पलं लिहेदक्षफलप्रमाणामर्शोविकारी प्रसमीक्ष्य वह्निम् । कुष्ठानि सर्वाणि निहन्ति हिक्कां सश्वासकासारुचिपाण्डुरोगान् ॥ ६ ॥ मन्दानलत्वे ग्रहणीविकारान्गुल्मं सशोथमुदरामयांश्च । शूलानि यक्ष्माणमसृक्प्रवृत्तिं पथ्यावलेहोऽयमिति प्रदिष्टः ॥ ७ ॥ पथ्यावलेहः । इत्यधिकमत्र ।

---

१ घ. ङ. तीक्ष्णलो॰ ।

निगृहीते स्तम्भिते । शूलानाहावत्र रक्तावृतवातजन्यौ । असृग्गदा इति । रक्तप्राया रोगाः । ते च विसर्पादयः ॥ ९८ ॥

**कुटजत्वङ्निर्यूहः सनागरः स्निग्धरक्तसंग्रहणः ॥**
**त्वग्दाडिमस्य तद्वत्सनागरश्चन्दनरसश्च ॥ ९९ ॥**

सुगमम् ॥ ९९ ॥

**चन्दनकिराततिक्तकधन्वयवासाः सनागराः क्वथिताः ॥**
**रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च ॥ १०० ॥**

सुगमम् ॥ १०० ॥

**नवनीततिलाभ्यासात्केसरनवनीतशर्कराभ्यासात् ॥**
**दधिसरमथिताभ्यासाद्गुदजाः शाम्यन्ति रक्तवहाः ॥ १०१ ॥**

**दधिसरमथिताभ्यासादिति** । दधिसरस्य मथितदधिसरस्य तक्रं तस्य शीलनात् ॥ १०१ ॥

**समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ॥**
**छागीक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥ १०२ ॥**

**मोचाह्वं** शाल्मलीवेष्टकम् । तिरीटं पट्टिकालोध्रम् । समङ्गादिभिः क्षीरपरिभाषया छागीक्षीरं पक्त्वा पेयम् । समङ्गादीनां कल्को वा छागक्षीरेण समालोड्य पेयः । **चरकेऽप्युक्तम्**—

"नीलोत्पलं समङ्गां मोचरसं चन्दनं तिलाँल्लोध्रम् ।
पीत्वा छगलीपयसा भोज्यं पयसैव शाल्यन्नम्" इति ॥ १०२ ॥

**कुटजफलवल्कलकेसरनीलोत्पललोध्रधातकीकल्कैः ॥**
**सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥ १०३ ॥**

सुगमम् । कुटजाद्यं घृतम् ॥ १०३ ॥

कुटजलेहमाह—

**कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ॥**
**अष्टभागावशेषं तु कषायमवतारयेत् ॥ १०४ ॥**
**वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम् ॥**
**भल्लातकं विडङ्गानि त्रिकटु त्रिफलां तथा ॥ १०५ ॥**
**रसाञ्जनं चित्रकं च कुटजस्य फलानि च ॥**
**वचामतिविषां बिल्वं प्रत्येकं तु पलं पलम् ॥ १०६ ॥**
**त्रिंशत्पलानि गुडस्य चूर्णीकृत्य निधापयेत् ॥**
**मधुनः कुडवं दद्याद्घृतस्य कुडवं तथा ॥ १०७ ॥**

---

१ क. घ. ०स्पलं गुडस्यात्र चू० ।

एष लेहस्तु शमयेदर्शोरक्तसमुद्भवम् ॥
वातिकं पैत्तिकं चैव श्लैष्मिकं सांनिपातिकम् ॥ १०८ ॥
ये च दुर्नामजा रोगास्तान्सर्वान्नाशयत्यपि ॥
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥ १०९ ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ॥
अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः ॥
रोगानीकवधार्थाय[1] कौटजो लेह उच्यते ॥ ११० ॥

गुडस्य त्रिंशत्पलानि । घृतकुडवं च प्रथममेव दत्त्वा लेहः पक्तव्यः । सिद्धे च तस्मिन्भल्लातकादिचूर्णप्रक्षेपः । मधुनः कुडवोऽष्टौ पलानि । एवं घृतकुडवोऽपि । कुटजावलेहः ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥

क्षारमाह—

तोये कालकमुष्ककस्य विपचेद्भस्माढकं षड्गुणे
पात्रे लोहमये दृढे विपुलधीर्दर्व्या शनैर्घट्टयेत् ॥
दग्ध्वाऽग्नौ बहुशङ्खनाभिशकलान्पूतावशेषे क्षिपे-
द्यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतात् ॥ १११ ॥

कालकमुष्ककः कृष्णपुष्पा घण्टापाटली । सा हि श्रेष्ठगुणा ।
तथा च **विश्वामित्रः**—"श्वेतपुष्पः कृष्णपुष्पो रक्तपुष्पस्तथैव च ॥
पीतैरन्यो वरस्तेषु कालमुष्कः प्रकीर्तितः" इति ॥

अस्याश्च काष्ठं तिलनालैर्दग्ध्वा भस्म ग्राह्यम् । इत्थमेव क्षारान्तरेषु **सुश्रुतेन** दर्शितत्वात् । भस्माढकं भस्मनश्चतुःषष्टिपलानि । षड्गुणे षडाढके व्यवहाराद्द्विगुणे । **पात्रे लोहमय इति** । लोहपात्र एव क्षारपाकः । तत्रैव गुणोत्कर्षोदयात् । तृतीयभागशेषेणाच्छपैच्छिल्यादिलक्षणोदये कल्कमपनीय च्छाणयित्वा क्षाराम्बु ग्राह्यम् । तच्च पुनः शङ्खनाभिचूर्णं दत्त्वा पचेत् । शङ्खचूर्णस्य तुर्येणेत्यादिना वक्ष्यमाणमानानुसारेण दानम् । **यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतादिति** । पक्वशीते क्षारो यदि निस्त्वचमेरण्डनालं लेपेन दग्ध्वा वाक्शताच्छिनत्ति तदा श्रेष्ठः । वाक्शताच्छोटिकाशतात् । क्षारः ॥ १११ ॥

पानाय भावनायाथ परिस्राव्यं चतुर्गुणम् ॥ ११२ ॥

पानं तथा. भेषजभावनं च यत्तदर्थं चतुर्गुणजले पक्त्वाऽर्धावशिष्टे कल्कमुपसार्य क्षारोदकमेकविंशतिवारान्परिस्रावणीयं न प्रतिसारणीयक्षारवदस्य पुनः पाक इति तात्पर्यतो व्याख्येयम् । गदाधरादिटीकाकारैः सुश्रुते पानीयक्षारविधावेवं व्याख्यातत्वात् ।

[1] घ. कविनाशाय ।

अत्र विश्वामित्रः—"पानीयभावनायाथ परिस्राव्यं चतुर्गुणम् ।
जलेऽर्धमवशिष्टं च क्षाराम्भो ग्राह्यमिष्यते" इति ॥

अन्ये तु षड्गुणेनापि तोयेन पाकं विनैव क्षारोदकं स्राव्यं ब्रुवते ।
चक्रस्त्वाह—"पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम् ।
स्रावयेत्षड्गुणे तोये केचिदाहुश्चतुर्गुणे" इति ॥

पानीयक्षारपानमात्रा च पलत्रिकर्षार्धपलरूपा क्रमादुत्तममध्यमाधमबलानलानां पुंसां ज्ञेया ॥ ११२ ॥

**द्वैगुण्यं नाऽऽढकेऽप्यत्र भागमात्रोपलक्षणात् ॥**

द्वैगुण्यं नाऽऽढकेऽप्यत्र भागमात्रोपलक्षणादिति वृन्देन व्यवहारो लिखितः । परमार्थतस्तु क्षारपाकार्थमुपात्ते जले द्वैगुण्यमुचितमेव विशेषाभावात् । आढकेऽप्यत्र न द्वैगुण्यमिति सुश्रुते क्षारपाकाध्याये कैश्चिद्व्याख्यातं तच्च ते हि चक्षुषा न पश्यन्ति मनसाऽपि न पश्यन्तीति वदता टीकाकृता गोमिना दूषितम् ॥

**अच्छपैच्छिल्यरक्तत्वे क्षाराम्भो ग्राह्यमिष्यते ॥ ११३ ॥**

अच्छपैच्छिल्यादिप्रादुर्भावश्च प्रायेण तृतीयभागशिष्टे जले ।
तथा च चक्रः—"प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
संजायते तदा स्राव्यं क्षाराम्भो ग्राह्यमिष्यते"इति ॥ ११३ ॥

**पानीयः प्रतिसारणीय इति च क्षारो द्विधा**
**शस्यते तत्राऽऽद्यो गरगुल्मकादिशमने दुर्नामकादौ परः ॥**

प्रतिसारणीय इति म्रक्षणप्राया(प्रयो)जनकः ॥
उक्तशङ्खकचूर्णस्य दाने मानमाह—

**तुर्येणाष्टमकेन षोडशभवेनांशेन संव्यूहिमो**
**मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छङ्खकः ॥ ११४ ॥**

तुर्येण चतुर्भागेण । संव्यूहिमो मृदुः संव्यूहिमे क्षारोदकाच्चतुर्थांशेन दीयमानः शङ्खको यद्यपीतरापेक्षया प्रभूतस्तथाऽपि मृदुत्वमेव शङ्खापेक्षया क्षारोदकस्यातितीक्ष्णतयाऽभिभूतत्वात् । प्रतिसारणीयपाकलक्षणं चक्रेणोक्तम्—नातिसान्द्रो नातितनुः क्षारपाक उदाहृत इति । पानीयक्षारे च न शङ्खचूर्णयोगः । क्षारः ॥ ११४ ॥

**भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः ॥**
**बन्धनात्सुदृढं सूत्रं छिनत्त्यर्शोभगंदरम् ॥ ११५ ॥**

सुगमम् । क्षारसूत्रम् ॥ ११५ ॥

**प्राग्दक्षिणं ततो वामं पृष्ठजं वाऽग्रजं क्रमात् ॥**
**पञ्चतिक्तेन संस्नेह्य दहेत्क्षारेण वह्निना ॥**
**वातजं श्लेष्मजं चार्शः क्षारेणास्रजपित्तजे ॥ ११६ ॥**

क्रमोपदर्शनं मङ्गलप्रयोजनकमस्मद्विशिष्टपुरुषगम्यं वा । एतच्च क्रमकथनं यस्य चतुर्ष्वपि पार्श्वेष्वर्शांसि सन्ति तं प्रति बोद्धव्यम् । यस्य पुनरेकतरपार्श्वेऽर्शस्तस्य तदेव दहनीयम् । एष क्रमः क्षारे क्षारसूत्रेऽग्नौ च ज्ञेयः । अग्रजस्य पुनरण्डकोषसमीपवर्तिनो न दाहः प्रचरति षाण्ढ्यभयात् । **पञ्चतिक्तेन संस्नेह्येति** । पञ्चतिक्तकघृतेन पानादिना स्नेहयित्वेत्यर्थः । क्षारेण वह्निना च कफजं वातजं च रक्तजं पित्तजं च क्षारेणैव दहेत् । क्षारस्तु सर्वत्रैवोचितः । यदाह **सुश्रुतः**—क्षारस्तु सर्वत्रैवाप्रतिषिद्धो न त्वग्निरिति । **दहेदन्यतरेण वेति** । क्षारेण वह्निना च ॥ ११६ ॥

**गोजीशेफालिकापत्रैरर्शः संलिख्य लेपयेत् ॥ ११७ ॥**
**क्षारेण वाक्शतं तिष्ठेद्यन्त्रद्वारं पिधाय च ॥**
**तं चापनीय वीक्षेत पक्वजम्बुफलोपमम् ॥ ११८ ॥**
**यदि तत्स्यात्तदा भद्रं नो चेल्लिम्पेत्तथा पुनः ॥**
**तत्तुपाम्बुप्लुतं साज्ययष्टीकल्केन लेपयेत् ॥ ११९ ॥**

गोजी शाखोटकः । **यन्त्रद्वारं पिधायेति** । गुदस्थितयन्त्रद्वारं कर्पटादिना ढक्कयित्वा । **पक्वजम्बूफलोपममिति** । कृष्णम् । तत्र सर्वमप्यर्शः क्षारेण सम्यग्दग्धं पक्वजम्बूफलोपममिति सामान्यलक्षणमुक्तम् । तन्त्रान्तरीयास्तु पृथक्पृथग्विशेषणमाहुः—

"अर्शोदग्धं मस्तुनिभं श्यावं कृष्णं ततो भवेत् ।
सामान्यलिङ्गं सर्वेषां विशेषं त्वपरं शृणु ॥
पक्वजाम्बवकाश्मर्यवर्णदग्धेऽनिलार्शसि ।
पित्तजे शृङ्गमायूरकण्ठवर्णं विनिर्दिशेत् ॥
बृहतीपुष्पवर्णत्वं सम्यग्दग्धे कफार्शसि" इति ।

हीनदग्धं तु लोहितम् । यदाह । **वाग्भटः**—

"पक्वजम्बसितं शस्तं सम्यग्दग्धं विपर्यये ।
ताम्रता तोदकण्ड्वादौ दुर्गन्धं तु पुनर्दहेत् ॥
अतिदग्धे स्रवेद्रक्तं मूर्छादाहज्वरादयः ।
गुदे विशेषाद्विण्मूत्रसंरोधो वाऽतिवर्तनम्" इति ॥ ११७॥ ११८॥ ११९॥

**न निम्नं तालकर्णाभं वह्निदग्धे स्थितोस्रकम् ॥**

१ घ. ङ. °लवर्णो° । २ क. घ. °ताम्रकं ।

तालकर्णाभमितिपदं तालफलसमवर्णम् । तालवर्णाभमितिपाठेऽप्ययमेवार्थः । स्थिता-स्रकमितिपाठे स्थितरक्तम् । एतच्चूर्णं यदाऽर्शश्छित्त्वा दह्यते तदा ज्ञेयम् । दाहश्च सिरासंकोचेन रक्तस्तम्भकरः । सम्यग्दग्धलक्षणमिदम् ॥

**निर्वाप्य मधुसर्पिर्भ्यां वह्निसंजातवेदनम् ॥ १२० ॥**
**सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ॥**
**सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ॥ १२१ ॥**

**तुगाक्षीरीप्लक्षचन्दनगैरिकैरिति** । तुगाक्षीरी वंशरोचना । तदभावे तालक्षीरी । प्लक्षः पर्कटी तस्याश्च वल्कः । **सामृतैरिति** । अमृता गुडूची । ननु गुडूच्या उष्ण-वीर्यत्वाद्दाहनिर्वापकत्वमनुपपन्नम् । अत एव **चरके** पड्विरेचनशताश्रितीयेऽध्याये दाहप्रशमकदर्शके **भट्टारकहरिश्चन्द्रेणाप्युक्तम्**—गुडूच्या दाहनिर्वापकत्वं चिन्त्यम-स्माद्विशिष्टा मेधाविनो व्याकरिष्यन्तीति । उच्यते—गुडूच्यभ्यवहारादुष्णवीर्या स्पर्शान्तु शीतैव । तर्हि शीतस्पर्शे काञ्जिकादौ विद्यमाने गुडूच्येव कुतश्चरकेण पठि-तेति न वाच्यम् । यतः प्रभावादियमेवान्येषु शीतस्पर्शेषु विशेषेण दाहप्रशमनी । एष एव **भट्टारकस्याभिप्रायः । परमाचार्याभिप्रायज्ञानं(ने)** चान्यो हेतुर्नास्ति । प्रभावश्च यथाकथंचिदयं हेतुरिति मन्यमाना **भट्टारकमेधाविनो** व्याकरिष्यन्तीत्युक्तवानिति । **चक्रस्तूष्णवीर्याया** अपि गुडूच्या **आचार्य**पाठानुरोधाद्द्रव्यान्तरसंयोगमहिम्ना दाहप्रश-मकत्वमिच्छति । (न) खलु टीकाकारहरिश्चन्द्रवचसा **महर्षिवचनं** बाधामर्हतीति ॥ ॥ १२० ॥ १२१ ॥

**मुहूर्तमुपवेश्योऽसौ तोयसंपूर्णभाजने ॥**

**तोयसंपूर्णभाजन इति** । कोष्णतोयपूर्णपात्रे ॥

**क्षारमुष्णाम्बुना(नो)पास्यो(स्यं) विबन्धे मूत्रवर्चसोः ॥ १२२ ॥**

**क्षारमुष्णाम्बुनेति** । क्षारं यवक्षारम् ॥ १२२ ॥

**दाहे बस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥**

**सुगमम्** ॥

**नवान्नमापतक्रादि सेव्यं पाकाय मात्रया ॥ १२३ ॥**

**सुगमम्** ॥ १२३ ॥

**पिबेद्व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम् ॥**

**वराक्वाथमिति** । वरा त्रिफला ॥

**जीर्णशाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम् ॥ १२४ ॥**

**सुगमम्** ॥ १२४ ॥

---

१ ग. 'लवर्णारामि' ।

रूढसर्वव्रणं वैद्यः क्षारं दत्त्वाऽनुवासयेत् ॥
पिप्पल्याद्येन तैलेन सेवेद्दीपनभेषजम् ॥ १२५ ॥

क्षारं दत्त्वेति । क्षारबस्तिं दत्त्वा । अनुवासयेत्, पिप्पल्याद्येनेति । क्षारपुटकदानात्पूर्वं पश्चाच्चात्रोक्तेन च तैलेनानुवासयेत् ॥ १२५ ॥

महांति[1] गुरुमूलानि च्छित्त्वैवं बलिनो दहेत् ॥

सुगमम् ॥

चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा ॥ १२६ ॥

अन्यतरेण क्षारेण वह्निना वा ॥ १२६ ॥

पक्वजम्बूसमो वर्णः क्षारदग्धे प्रशस्यते ॥
वेगावरोधं स्त्रीपृष्ठयानमुत्कटकासनम् ॥
यथास्वं दोषलं चान्नमर्शसां[2] परिवर्जयेत् ॥ १२७ ॥

पृष्ठयानं हस्त्यादिपृष्ठेन गमनम् ॥ १२७ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चमोऽर्शोधिकारः समाप्तः ॥ ५ ॥

## अथ षष्ठोऽजीर्णाद्यधिकारः ।

अर्शःकार्यत्वात्तदनन्तरमग्निमान्द्यादेस्तच्चिकित्सामाह—

समस्य रक्षणं कार्यं विषमे वातनिग्रहः ॥
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १ ॥

समस्य रक्षणं कार्यमित्यनेन समस्य वह्नेः प्रशस्तत्वादनुपालनमेव धातुसाम्यहेतुरिति दर्शयति ॥ १ ॥

हिङ्ग्वष्टकमाह—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे समधरणधृतानामष्टमो हिङ्गुभागः ॥
प्रथमकवलै[3]र्भुक्तं सर्पिषा चूर्णमेतत्प्रबलयति[4] हुताशं वातरोगा[5]न्निहन्ति ॥ २ ॥

अजमोदा यवानिका । एवं सर्वत्रान्तःपरिमार्जने बहिष्परिमार्जने । पुनरजमोदा चाजमोदैव गृह्यते । अस्यार्थे कस्यचिट्टिप्पणी—

---

१ क. घ. °ति तनुमू° । २ क. घ. °र्शसः प° । ३ ङ. °लभोजी स° । ४ क. घ. °तृप्तनयति जठराग्निं वा° । ५ ङ. °तगुल्मं निह° ।

"अन्तःप्रमार्जने प्रायेणाजमोदा यवानिका ॥
बहिःसंमार्जने योज्या त्वजमोदाऽजमोदिका" इति ॥

**समधरण**.धृतानामिति । समेन धरणेन तुलया धृतानां समभागानामित्यर्थः । ध्रियतेऽनयेति व्युत्पत्त्या धरणशब्देन तुलोच्यते । किंवा पलस्य दशमांशो धरणम् । अष्टानां पूरणोऽष्टमः । त्रिकट्वादीनां सप्तानामेकद्रव्यसमो हिङ्गुभाग इत्यर्थः । हिङ्ग्वष्टकः ॥ २ ॥

**आदौ मण्डं पिबेदुष्णं हिङ्गुसौवर्चलान्वितम् ॥**
**विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ३ ॥**

सुगमम् ॥ ३ ॥

**क्षुद्बोधनो बस्तिविशोधनश्च प्राणप्रदः शोणितवर्धनश्च ॥**
**ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः ॥ ४ ॥**

**अष्टगुणो हि मण्ड** इति । मण्डोऽन्नमण्डः । लाघवाच्चतुर्गुणाम्बुसाधितो वा । अन्ये तु—

"सुतण्डुलानां प्रसृतिद्वयं च तदर्धमुद्गः कटुकं च तक्रम् ॥
कुस्तुम्बरीसैन्धवहिङ्गुतैलमेभिस्तु सर्वैः क्रियते तु मण्डः" ॥

इत्यस्यात्रैव स्थाने क्वचित्पठितस्य गुणं मन्यन्ते । अस्य तथाऽन्नमण्डस्य च मण्डत्वसामान्याद्गुणाष्टकमिति संगतम् ॥ ४ ॥

**सुतण्डुलानां प्रसृतिद्वयं च तदर्धमुद्गं कटुकं सतक्रम् ॥**
**कुस्तुम्बरीसैन्धवहिङ्गुतैलमेभिश्च सर्वैः क्रियते हि मण्डः ॥ ५ ॥**

कटुकं त्रिकटुकम् । कुस्तुम्बरी धान्याकं तन्मनाग्भृष्टं ग्राह्यम् । विधिः पुनरस्य मण्डस्य—यथोक्तमानौ तण्डुलमुद्गौ तक्रजले युक्त्या दत्त्वा विपाच्य मण्डो ग्राह्यः पश्चात्त्रिकट्वादिभिर्यथार्हसंस्कार इति ॥ ५ ॥

**वर्धमानो भवेत्तीक्ष्णो भस्मकाख्यो महानलः ॥**
**तस्मात्तं माहिषैः सर्पिर्दधिक्षीरैर्जयेद्भिषक् ॥ ६ ॥**

सुगमम् ॥ ६ ॥

**यत्किंचिद्गुरु मेध्यं च श्लेष्मकारि च भेषजम् ॥**
**सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ७ ॥**

सुगमम् ॥ ७ ॥

१ क. घ. अन्नमं । २ क. सतक्रं ।

**हरीतकी भक्ष्यमाणा नागरेण गुडेन च ॥**
**सैन्धवोपहिता वाऽपि सातत्येनाग्निदीपनी ॥ ८ ॥**

हरीतक्याः सर्वरोगापहन्तृत्वं दीपनत्वमजहद्वृत्तत्वं च केवलाया अप्याम्नातं किमुत द्रव्यान्तरसहितायाः । हरीतक्यादियुतो गुडोऽप्यग्निदीपनः संयोगशक्तित्वात् ॥

उक्तं च—"गुडः कर्ताऽग्निसादस्य स हिनस्त्यभयादिभिः ॥
कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह" इति ॥

सातत्येन निरन्तरोपयोगेन । अत्र गुडनागरसैन्धवानां भिन्नकार्याणां दोषदेहधातु-बलकालवयोवस्थान्तरविकारापेक्षया व्यवस्थितकल्पास्तेन नागरेण कफे गुडेन वाते सैन्धवेन दोषत्रये वातकफे च ॥ ८ ॥

**भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम् ॥**
**अग्निसंदीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ ९ ॥**

**सिन्धूत्थपथ्यमगधोद्भववह्निचूर्णमुष्णाम्बुना पिबति यः खलु नष्टवह्निः ॥**
**तस्याऽऽमिषेण सघृतेन वरं नवान्नं भस्मी भवत्यशितमात्रमपि क्षणेन ॥ १० ॥**

**सिन्धूत्थपथ्यमगधोद्भववह्निचूर्णमिति** । सिन्धूत्थं सैन्धवम् । पथ्या हरीतकी । छन्दोनुरोधाद्ध्रास्वत्वम् । मगधोद्भवा पिप्पली । अत्रापि पूर्ववद्ध्रस्वत्वम् । **आमिषेण सघृतेन वरमिति** । वरं प्रकृष्टमधिकमिति यावत् । मांसघृताभ्यामधिकमपीत्यर्थः । केचिदिह सैन्धवादीनां मानभेदार्थं नातिप्रसिद्धं **हरिश्चन्द्रमतमुपदर्शयन्ति** ॥

तद्यथा—"हरीतकी हरिहिहरतुल्यषड्गुणा चतुर्गुणां चतुरहिविलासपिप्पली (?) ॥
द्विचित्रकं वरदवरैकसैन्धवं रसायनं कुरु नृप वह्निदीपनम्" इति ॥

समेन भागेन व्यवहारः ॥ ९ ॥ १० ॥

**विश्वाभयागुडूचीनां कषायेण षडूषणम् ॥**
**पिबेच्छ्लेष्मणि मन्देऽग्नौ त्वक्पत्रसुरभीकृतम् ॥ ११ ॥**

षडूषणं पञ्चकोलं समरिचम् । अस्य चूर्णम् । **त्वक्पत्रसुरभीकृतमिति** । सौरभ्यं यावता भवति तावत्त्वक्पत्रचूर्णं प्रदेयम् । एवमन्यत्रानुक्ते माने ॥ ११ ॥

**सिन्धूत्थहिङ्गुत्रिफलायवानीव्योषैर्गुडांशैर्गुटिकां प्रकुर्यात् ॥**
**तां भक्षयेत्तृप्तिमवाप्नुवन्ना भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ १२ ॥**

**गुडांशैरिति** । एकद्रव्यसमोऽत्र गुडभागः । प्रायेण हि श्लेष्माधिकोऽग्निसादः । श्लेष्मणि च गुडो बहुतरो न युक्त इत्याहुरेके । अन्ये त्वाहुः सर्वचूर्णद्विगुणो गुडः । गुडादर्धमंशो येषां समुदितानां ते गुडांशा इति व्याख्यानात् । तेन मोदके द्विगुणो गुड

१ क. घ. वा ।

इत्यपि वचनमनुकूलितं भवति । **तृप्तिमवाप्नुवन्निति** । मन्दाग्निरपि तावत्प्रभूतं भुङ्क्ते यथा तृप्तिमवाप्नोति । अनाप्नुवन्निति पाठे पुनरत्यग्नित्वात्प्रभूतं भुञ्जानोऽपि न तृप्यतीत्यर्थः । उपदेशात्केचिद्द्विजीरकं प्रक्षेपयन्ति तदाऽग्निमुखं भवति ॥ १२ ॥

**गुडेन शुण्ठीमथवोपकुल्यां पथ्यातृतीयामथ दाडिमं च ॥**
**आमेष्वजीर्णेषु गुदामयेषु वर्चोविबन्धेषु च नित्यमद्यात् ॥ १३ ॥**

गुडेन पथ्यातृतीयामितिपदद्वयं शुठ्यादिषु प्रत्येकं योज्यम् । तेन गुडेन पथ्यातृतीयां शुण्ठीमद्यात् । तथा गुडेन पथ्यातृतीयामुपकुल्यामद्यात् । उपकुल्या पिप्पली । गुडेन पथ्यातृतीयं दाडिमफलमिति विभक्ति(लिङ्ग)विपरिणामेनेति त्रयः प्रयोगाः । यथायोगमामाजीर्णादिषु त्रयम् । गुडशुण्ठीभक्षणं गुडपिप्पलीभक्षणं वा तत्प्रयोगान्तरमेव । अन्यस्त्वाह—गुडेनेतिपदं शुठ्यादिभिश्चतुर्भिः समं प्रत्येकं योज्यं तेन चत्वारो योगा यथाक्रममामादिषु चतुर्षु । अस्मिन्व्याख्याने पथ्यां तृतीयामिति पाठः ॥ १३ ॥

**विडङ्गभल्लातकचित्रकामृताः सनागरास्तुल्यगुडेन सर्पिषा ॥**
**लिहन्ति ये मन्दहुताशना नरा भवन्ति ते वाडवतुल्यवह्नयः ॥ १४ ॥**

तुल्यगुडेनेत्यत्र युक्ता इत्यध्याहार्यम् । एकभागसमो गुडः । सर्वचूर्णद्विगुणेन सर्पिषा लेह इति व्याख्यानयन्ति केचित् । अन्ये तुल्यगुडेनेतिपदं सर्पिषेत्यस्य विशेषणं वर्णयित्वा समुदितचूर्णत्वाद्द्विगुणे मिलित्वा गुडसर्पिषी(इति ) व्याचक्षते । युक्तश्चायं पक्षो नागार्जुनयोगसंवादात् ।

तथा हि—“संचूर्णिता गुडूची विडङ्गभल्लातनागरहुताशाः ।
ज्वलयन्ति जाठराग्निं समानगुडसर्पिषा लीढाः ”

इति ॥ १४ ॥

**हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिङ्गुयुक्ता ॥**
**सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेद्धुताशम्[३] ॥ १५ ॥**

**हरीतकी धान्यतुषोदसिद्धेति** । धान्यतुषोदकं संधानविशेषः । तदभावे काञ्जिकम् । सिद्धा, उत्स्विन्ना । सोद्गारधूममिति सधूमोद्गारम् ॥ १५ ॥

**ग्लानिगौरवविष्टम्भभ्रममारुतमूढताः ॥**
**विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्षणम् ॥ १६ ॥**

सुगमम् ॥ १६ ॥

---

१ ङ. पथ्यां तृ° । २ घ. वा । ३ घ. °येत्क्षुधां च ॥१५॥

**प्रायेणाऽऽहारवैषम्यादजीर्णं जायते नृणाम् ॥**
**तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति ॥**

सुगमम् ॥

अग्निमान्द्याजीर्णयोरन्योन्यहेतुत्वादग्निमान्द्येऽजीर्णचिकित्सामुपदिशति—

**वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ १७ ॥**

वचाकल्कलवणयुक्तेनोष्णोदकेन । नोचेद्वचया कृतार्धशृतोष्णोदकेन लवणेन वमनम् ॥ १७ ॥

**अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ॥**
**तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावान्नियतत्यधस्तात् ॥ १८ ॥**

**अन्नं विदग्धमिति** । विदग्धं पक्वापक्वम् । शीताम्बुना कुतः शीघ्रं परिपाकमेतीत्यत उक्तं तद्ध्यस्येति । तदिति शीताम्बु । हिशब्दो हेतौ । तत्तस्येति पाठान्तरम् । **निहन्ति पित्तमिति** । स्वाशये विदग्धं पित्तं शमयति । आक्लेदिभावाद्द्रवत्वात् ॥ १८ ॥

**विष्टब्धे स्वेदनं कार्यं पेयं च लवणोदकम् ॥**

अजीर्णे सर्वथा भेषजनिषेधं मत्वाऽमुं श्लोकं तथा "भवेदजीर्णं प्रति यस्य शङ्का" इत्यादिश्लोकं तथा विदह्यते यत्तु भुक्तमात्रमित्यादि श्लोकं केनापि घस्मरवैद्येन कल्पितमिदं योगत्रयमित्यभिदधानोऽनार्षं वर्णयति **जैज्जटः** । प्रचाराद्भूरिपाठदर्शनाच्च श्लोकत्रयमेतदन्येऽनुमन्यन्त एव । किं त्वेतदनुत्क्लिष्टे कफे कार्यम् ॥

**रसशेषे दिवास्वप्नो लङ्घनं वातवर्जनम्*** ॥ १९ ॥

**रसशेष इति** । जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्णः स्यात्तस्य शेषो रसशेषस्तस्मिन् । तेनाजीर्णादर्थान्तरभूत एवायं रसशेषः । अतश्च रसस्य रुधिरादिहेतोरसम्यक्परिपाक इत्यर्थः । इत्यरुणचन्द्रनन्दनौ । **हेमाद्रिस्तु** व्याख्याति—**रसशेष इति** । रसस्य शेषो रसशेषः । रसशब्देन रसभूताहारराशिर्लक्ष्यते । न हि रसधातोरपक्वस्याजीर्णत्वम् । स ह्यपक्व एव रसशब्देनोच्यते पक्वस्तु रुधिरशब्देन । दुष्टत्वादजीर्णमिति चेत् । न । तस्याऽऽमत्वात् ।

उक्तं च—"ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।
दुष्टमामाशयगतं रसमामं प्रचक्षते" इति ।

**दिवास्वप्न इति** । दिवास्वप्नस्तु मुहूर्तमात्र एव । तथा च **वाग्भटः**—

शयीत किंचिदेवात्रेति । अस्य **व्याख्या**—अत्र रसशेषे किंचिदेव मुहूर्तमेव स्वप्यात् । नाजीर्ण इव प्रभूतम् । **इत्यरुणदत्तहेमाद्री** । लङ्घनमित्यत्र लङ्घनशब्देन लाघवकरो

---

* ख. पुस्तके–आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः । दिवास्वप्नं प्रकुर्वीतसर्वाजीर्णप्रशान्तये ॥ १ ॥ इत्यधिकम् ।

विधिरिष्यते । तेन लङ्घनं जरणार्थं कालप्रतीक्षणमत्र पाने पाचनौषधावचारणं स्वेदश्च प्राप्यते न त्विह लङ्घनमुपवासः । दोषस्याल्पत्वादित्याहुः । यदाह खारणादिः— रसशेषे हितः स्वप्नो घर्माम्बु लघुभोजनमिति । वातवर्जनमिति वातस्यासेवनम् ॥ १९ ॥

व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान्हिक्कामरुत्पीडितान् ।
क्षीणान्क्षीणकफाञ्शिशून्मदहतान्वृद्धान्रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत् ॥ २० ॥

रतशब्देनेह रक्तिरित्युच्यते । रक्तिरनुरक्तिः । भावे क्तः । न तु रतं सुरतं प्रमदाग्रहणेनैव लब्धत्वात् । व्यायामादिक्लान्तानां च धातुपुष्ट्यर्थं दिवास्वप्नः । यदुक्तम्— स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यतीति । अतीसारे च दिवास्वप्नेन(प्नः) प्रकोपितकफेन स्रोतोवरोधं कृत्वा प्रभावाद्वा स्तम्भनकरः । स च सर्वातिसारकफवर्जं वा ज्ञेयः । शूलश्वासतृष्णादिषु च वातशीत्या प्रभावाद्धितः । क्षीणान्धातुक्षीणान् । तेन सुश्रुतोक्तरसवातादिक्षीणेऽपि दिवास्वापः प्राप्यते । क्षीणकफानिति स्वतन्त्रं पदम् । केचिद्व्यायामादिष्वपि योजयन्ति । तेन व्यायामादिक्लान्तान्क्षीणकफानेव दिवा स्वापयेत् । शिशूनां निद्रासात्म्यत्वाद्दिवानिद्रा । मदहतानिति प्रमत्तान् । तेषां मद्यजरणार्थं च दिवास्वापः । वृद्धानिति धातुपुष्ट्यर्थम् । रसाजीर्णिनां रसशेषपाकार्थं दिवानिद्रा । रात्रावपि निद्रयैवाऽऽहारपाकस्य दृष्टत्वात् । किंच निद्राणस्य स्रोतःसंकोचादनिर्गच्छञ्शारीरो जठरानलो बलकरः संपद्यते । तेन शीघ्रमजीर्णस्य पाकः । ननु दिवास्वप्नाच्छ्लेष्मपित्ते प्रकुप्येते इति चरकवचनाद्दिवानिद्रया कफपित्तप्रकोप उक्तः । कफपित्तप्रकोपाच्चाग्न्युपघातः । अग्नेरुपघाताच्चापाकः । तत्कथमजीर्णे निदानभूतकफपित्तजनकस्यैव दिवास्वप्नस्योपदेशः । उच्यते । नायं नियमो यत्कफपित्ते प्रकुपिते अवश्यमग्निवैगुण्यमावहत इति । पित्तकफजन्यतिमिरादावग्निवैगुण्यस्यादृष्टत्वात् । तस्मादिह पित्तकफवृद्धावपि नाग्नेर्वैगुण्यं भविष्यति । भविष्यति त्वालस्यवातादिप्रादुर्भाव इति बाप्पचन्द्रः ।

गदाधरस्त्वाह—स्रोतःसंमीलनोपजातजाठराग्निपाटवादजीर्णपाक एव निदानभूतपित्तकफयोः कोपः प्रतिनियतशक्तित्वाद्द्वेषजानामिति । रात्रौ जागरितानां जागरणजन्यवातक्षोभशमनार्थं दिवास्वप्नः । स च गौरवाज्जागरणकालादर्धं कार्यः । यदाह क्षीरपाणिः—

"यावत्कालं न सुप्तिः स्याद्रात्रौ स्वप्नाद्यथोचितात् ।
ततोऽर्धमात्रं तत्कालं दिवास्वप्नो विधीयते" इति ।

दिवास्वप्नश्चाभुक्तवतामेव । यदाह हारीतः—भुक्त्वा स्वप्नं न सेवेत स्वस्थोऽप्यसुखितो भवेदिति । अत्राप्युक्तं नरान्निरशनानिति ॥ २० ॥

---

१ घ. नरो । २ घ. °दिक्षयेऽपि ।

धान्यनागरसंसिद्धं तोयं दद्याद्विचक्षणः ॥
आमाजीर्णप्रशमनं शूलघ्नं बस्तिशोधनम् ॥ २१ ॥

**धान्यनागरसंसिद्धमिति** । कर्षार्धं वा कणाशुण्ठ्योरितिवचनेन तीक्ष्णद्रव्यस्याल्पमानत्वमुक्तं तेनेहाप्यतीक्ष्णतीक्ष्णयोर्धान्यनागरयोरुत्तममात्रायां पले गृह्यमाणे धान्यं सार्धकर्षद्वयमानं नागरं सार्धकर्षमानं ग्राह्यम् । यत्तु धान्यशुण्ठ्युपयोगे तु शुण्ठ्यक्षं धान्यतत्त्रयमिति केनाप्युक्तं तन्नाऽऽद्रियन्ते । **प्रचारस्तु** शुण्ठ्याः षण्माषका धान्यस्य दश, एवं कर्षेण ॥ २१ ॥

पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत् ॥
मस्तुनोष्णोदकेनापि बुद्ध्वा दोषगतिं भिषक् ॥ २२ ॥
चतुर्विधमजीर्णं च मन्दानलमथारुचिम् ॥
आध्मानं वातगुल्मं च शूलं चाऽऽशु नियच्छति ॥ २३ ॥

अजीर्णमामशेषो न तु तरुणाजीर्णं तत्रौषधनिषेधात् ॥ २२ ॥ २३ ॥

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ॥
पूर्वं सशुण्ठीमभयामशङ्को भुञ्जीत संप्राश्य हितं हिताशी ॥२४॥

पूर्वमित्येतदजीर्णं प्रति यस्य शङ्केत्यनेन सह योज्यं न परेण । पूर्वं प्रातरजीर्णशङ्का यस्य स्यादित्यर्थः । ननु(तु) पूर्वं संप्राश्येति । अयमत्रार्थः संप्राश्येत्यनेनैव पूर्वकालस्य लब्धत्वात् । रसाजीर्णविषयं संशमनमेतदिति **गदाधरः** ॥ २४ ॥

विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कोष्ठगलं च यस्य ॥
द्राक्षासितामाक्षिकसंप्रयुक्तां लीढ्वाऽभयां वै स सुखं लभेत ॥ २५ ॥

**भुक्तमात्रमिति** । मात्रशब्दः कात्स्न्र्ये । यथा कन्यामात्रं रचयतीति । तेन विदाह्यविदाहि च कृत्स्नं भुक्तमिति फलति । आमाशयस्थितान्नविदाहे शमनमिदमित्याहुः ॥ २५ ॥

यथा नैशाजीर्णे भोजनं दुष्यति तथा प्रातराशाजीर्णे सायमाशो न दुष्यतीत्याह—

प्रातराशे त्वजीर्णे तु सायमाशो न दुष्यति ॥
सायमाशे त्वजीर्णे तु प्रातराशो हि दुष्यति ॥ २६ ॥

अत्रापि हेतुश्चरकोक्तो ज्ञेयः ।

तद्यथा—"दिवा विबुध्यतेऽर्केण हृदयं पुण्डरीकवत् ।
तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः[1] ॥
व्यायामाच्च विहाराच्च विक्षिप्तत्वाच्च चेतसः ।
न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः ॥

१ घ. तेजसः ।

अक्लिन्नेष्वन्नमासिक्तमन्यत्तेषु न दुष्यति ।
अविदग्ध इव क्षीरे क्षीरमन्यद्विमिश्रितम्'' इति ।

अयमस्य तात्पर्यार्थः—हृदयपुण्डरीकप्रबोधे स्रोतसां विवृतत्वादव्याहतं वहति रसे निर्याति च वहज्जाठरजातवेदोर्चिषि नान्ने क्लेदविदाहोदयः । तदभावात्सायं भुक्तं न दुष्यति । क्लेदविदाहाद्भवति । न ( होद्भवात्तु ) पुनर्निशाजीर्णे भुक्तं दुष्यत्येवेति । अत्रार्थे चरक एव—

''रात्रौ तद्धृदये म्लाने संवृतेष्वयनेषु च ।
परिक्लेदं यान्ति कोष्ठे संवृते देहधातवः ।
क्लिन्नेष्वन्यदपक्केषु तेष्वासिक्तं प्रदुष्यति ।
विदग्धेषु पयःस्वन्यत्पयस्तेष्विवार्पितम् ।
नैशेष्वाहारजातेषु नविपक्केषु बुद्धिमान् ।
तस्मान्नान्नं समश्नीयात्पालयिष्यन्बलायुषी'' इति ॥ २६ ॥

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत् ॥ २७ ॥
पिप्पली त्रिगुणा देया शृङ्गवेरं चतुर्गुणम् ॥
यवानिका पञ्चगुणा षड्गुणा च हरीतकी ॥ २८ ॥
चित्रकं सप्तगुणितं कुष्ठं चाष्टगुणं भवेत् ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया ॥ २९ ॥
पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
सोदावर्तमजीर्णं च प्लीहानमुदरं तथा ॥ ३० ॥
अङ्गानि यस्य शीर्यन्ते विषं वा येन भक्षितम् ॥
अर्शोघ्नं दीपनं चैव शूलघ्नं गुल्मनाशनम् ॥ ३१ ॥
कासं श्वासं निहन्त्याशु तथैव क्षयनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित्प्रतिहन्यते ॥ ३२ ॥

सुगमम् । अग्निमुखं चूर्णम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

बृहदग्निमुखमाह—

द्वौ क्षारौ चित्रकं पाठा करञ्जं लवणानि च ॥
सूक्ष्मैला पत्रकं भार्ङ्गी कृमिघ्नं हिङ्गु पुष्करम् ॥ ३३ ॥
शठी दार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवास्तथा ॥
धात्री जीरकवृक्षाम्लश्रेयसी चोपकुञ्चिका ॥ ३४ ॥
अम्लवेतसमम्लीका दाडिमं सकटुत्रिकम् ॥
भल्लातकाजमोदं च यवानी सुरदारु च ॥ ३५ ॥

अभयाऽतिविषा श्यामा हपुषाऽऽरग्वधं समम् ॥
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ॥ ३६ ॥
क्षाराणि लोहकिट्टं च तप्तं गोमूत्रसेचितम् ॥
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ॥ ३७ ॥
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥
दिनत्रयं तु शुक्तेन आर्द्रकस्वरसेन च ॥ ३८ ॥
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥
उपयुक्तं विधानेन नाशयत्यचिराद्गदान्[1] ॥ ३९ ॥
अजीर्णकमथो[2] गुल्मान्प्लीहानं गुदजानि च ॥
उदराण्यन्त्रवृद्धिं च अष्ठीलां वातशोणितम् ॥ ४० ॥
प्रणुदत्युल्बणान्रोगान्नष्टमग्निं प्रदीपयेत् ॥
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा तु भोजने ॥ ४१ ॥
दापयेदस्य चूर्णस्य बिडालपदमात्रकम् ॥
गोदोहमात्रात्तत्सर्वं द्रवी भवति सोष्मकम् ॥ ४२ ॥

करञ्जस्य मूलम् । यथै(चै)तस्य सुश्रुतेन कोविदारपूर्वाणां फलमित्यनेन फलग्रहणमुपदिष्टं तच्छोधनविषयं ज्ञेयम् । लवणानि पञ्च । वृक्षाम्लं महार्द्रकम् । श्रेयसी हस्तिपिप्पलीफलम् । एवं सर्वत्राग्निदीपने योगे । वाते तु श्रेयसी रास्ना । उपकुञ्चिका स्वल्पजीरकम् । अम्लवेतसं स्वनामख्यातम् । अम्लिका तिन्तिडीका । एवं सर्वत्र दीपनयोगे । पुरीषसंग्रहणादौ पुनरम्लिका । श्यामा वृद्धदारकः । आरग्वधं सुवर्णालुफलम् । लोहकिट्टं लोहमलम् । तच्च पुराणमण्डूरमिति प्रसिद्धं ग्राह्यं श्रेष्ठगुणत्वात् । जैज्जटस्तु लोहकिट्टं पृथक्पार्थिवद्रव्यं मण्डूरं वदति । तप्तमिति । अत्यर्थं ततम् । गोमूत्रसेचितमिति । सप्तधा गोमूत्रे निर्वापितमित्यर्थः । एवमस्य शुद्धिः । शुक्तेन संधानविशेषेण । तस्याभावे काञ्जिकम् । बृहदग्निमुखं चूर्णम् । अत्र स्थाने क्वचित्पुस्तके भास्करलवणस्य वार्ताकगुटिकायाश्च पाठः । तत्र भास्करलवणमाह—

"पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम् ।
सैन्धवं च बिडं चैव पत्रं तालीसकेसरम् ॥ १ ॥
एषां द्विपलिकान्भागान्पञ्च सौवर्चलस्य च ।
सारिवाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥ २ ॥
त्वगेले चार्धभागे च सामुद्रात्कुडवद्वयम् ॥
दाडिमात्कुडवं चैकं द्वे पले चाम्लवेतसात् ॥

१ ङ. 'शयेदचि' । २ घ. 'थो रोगान्प्ली' ।

एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम् ॥
लवणं भास्करं नाम भास्करेण विनिर्मितम् ॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम् ॥
वातगुल्मं निहन्त्याशु वातशूलानि यानि च ॥
तक्रमस्तुसुराशीध्रसुक्त(सक्तु)काञ्जिकयोजितम् ॥
जाङ्गलानां तु मांसेन विविधेषु रसेषु च ॥
मन्दाग्नेरश्नतः शक्तो भवेदाश्वेव पावकः ॥
अर्शांसि ग्रहणीदोषकुष्ठामयभगंदरान् ॥
हृद्रोगमामदोषांश्च विविधानुदरे स्थितान् ॥
प्लीहानमश्मरीं चैव श्वासकासोदरकृमीन् ॥
विशेषतः शर्करादीन्रोगान्नानाविधांस्तु तत् ॥
पाण्डुरोगांश्च विविधान्नाशयत्यशनिर्यथा ॥

**पञ्च सौवर्चलस्येति** । पञ्चभागाः सौवर्चलस्य । **त्वगेले चार्धभागिके इति** । त्वगेले प्रत्येकमर्धपले । गन्धाढ्यं पत्रतालीसादिद्रव्ययोगादेव गन्धबहुलं न पुनरपरचतुर्जातकप्रक्षेपणात् । भास्करलवणम् ।

वार्ताकगुटिकामाह—

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ॥
वार्ताककुडवश्चार्कादष्टौ द्वे चित्रकात्पले ॥
दग्ध्वा च वार्ताकरसे गुटिका भोजनोत्तराः ॥
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ॥
विषूचिकाप्रतिश्यायहृद्रोगघ्न्यश्च ता हिताः ॥

त्रिपलं लवणत्रयादित्यस्य स्थाने त्रिफला लवणानि चेति पाठान्तरे लवणानि पञ्चैव । त्रिफलालवणेषु चतुष्पलमित्येव संबन्धनीयम् । तच्च मिलित्वा ग्राह्यम् । वार्ताककुडवो वार्ताकफलकुडवः । **दग्ध्वा च वार्ताकरसे गुटिका इति** । क्षारकृतानि सुधाकाण्डादीनि (दग्ध्वा)पुनर्वार्ताकफलरसेनैव गुटिकाः कार्या इत्यर्थः । **भोजनोत्तरा इति** । भोजनमुत्तरं याभ्यस्तास्तथा । वार्ताकगुटिका ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

**पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ॥**
**हिङ्गु त्व्याजमोदे च पञ्चैव लवणानि च ॥ ४३ ॥**

---

१ क. 'शयेदश' ।

द्वौ क्षारौ हपुषा चैव दद्यादर्धपलोन्मितान् ॥
दधिकाञ्जिकशुक्तानि घृतमात्रासमानि च ॥ ४४ ॥
आर्द्रकस्य रसप्रस्थे घृतप्रस्थं विपाचयेत् ॥
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ४५ ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ॥
ग्रन्थ्यर्बुदापचीकासकफमेदोनिलानपि ॥ ४६ ॥
नाशयेद्ग्रहणीदोषं श्वयथुं सभगंदरम् ॥
ये च बस्तिगता रोगा ये च कुक्षिसमाश्रिताः ॥
सर्वांस्तान्नाशयत्याशु सूर्यस्तम इवोदितः ॥ ४७ ॥

सुगमम् । अग्निघृतम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

चित्रकगुडमाह—

वह्नेर्द्विपञ्चमूलस्य क्वाथे पलशतद्वये ॥ ४८ ॥
अमृताया रसस्यैके पूतेऽस्मिन्नभयाढकम् ॥
पचेद्गुडतुलां दत्त्वा यावदापाकलक्षणम् ॥ ४९ ॥
अन्येद्युस्तत्र मधुनः सुशीतकुडवद्वयम् ॥
प्रक्षिपेत्त्रिसुगन्धस्य त्रिकटोश्च पलद्वयम् ॥ ५० ॥
प्रत्येकं स्याद्यवक्षाराद्यु(च्छु) क्तिस्तस्मिन् रसायने ॥
उत्तमं कथितं पुंसामश्विभ्यामग्निवृद्धये ॥ ५१ ॥
जीर्यत्यपि च काष्ठानि कासश्वासक्षयक्रमीन् ॥
गुल्मोदरार्शःशूलानि[2] साम्रवृद्धीनि हन्ति च ॥ ५२ ॥
योगशतैरप्यजितां[?] [illegible]ाज्जयति पीनसान् ॥
पाठान्तरे चात्र प्रविशति धात्रीरसपलशतम् ॥ ५३ ॥

**वह्नेर्द्विपञ्चमूलस्य क्वाथे पलशतद्वय इति।** चित्रकमूलस्य क्वाथे दशमूलस्य च क्वाथे पादशिष्टे प्रत्येकं शतं पलेऽर्धत्रयोदशशरावरूपे न तु चित्रकदशमूलयोर्मिलितयोः क्वाथे पलशतद्वयमान इति। अयमत्रार्थः। यतश्चित्रकहरीतक्या नासारोगोक्तया सहाऽऽमलकीरसं विहायान्यत्सर्वं द्रव्यं मानं च समानम्। तत्र च चित्रकस्य दशमूलस्य च पृथक्पृथक्क्वाथशतपलमुक्तम्। तेनेहापि तथैवमुक्तम्। किंच मिलित्वा क्वाथविधानपक्षे संदेहः स्यात्किमस्य दशमूलैकद्रव्यसमो भाग उत मिलितदशमूलसम इति। असमासेन च विनिर्देशस्तदा निष्प्रयोजनः स्यात्। अत एव चक्रः प्राह—

"नासारोगेऽभिधातव्या या चित्रकहरीतकी।
विना धात्रीरसं साऽस्मिन्प्रोक्तश्चित्रगुडोऽग्निदः" ॥

---

१ ङ. °लानि च ॥ ४६ ॥ २ घ. °र्शःकुष्ठानि ।

**अमृताया रसस्यैक इति ।** गुडूचीरसस्यैके पलशत इत्यर्थः । **अभयाढक इति ।** अभयाचूर्णाढके । अभयाढकमिति पाठः संगतः । पचेदित्यस्य संबन्धात् । अभयाढक इत्यपि पाठो द्रवमेवानन्तरोक्तमभयाढके दत्त्वा पचेदिति यथाकथंचित्समाधेयः । **मधुनः सुशीतकुडवद्वयमिति ।** कुडवद्वयं षोडश पलानि । त्रिसुगन्धस्य द्विपलं प्रत्येकम् । एवं कटुत्रयस्यापि । शुक्तिरर्धपलम् । चित्रकगुडः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥

बृहच्चुक्रमाह—

**प्रस्थं तण्डुलतोयतस्तुषजलात्प्रस्थत्रयं चाम्लतः**
**प्रस्थार्धं दधितोऽपि मूलकपलान्यष्टौ गुडान्मानिके ॥**
**मान्यौ शोधितशृङ्गवेरशकलाद्द्वे सिन्धुजाज्योः**
**पले द्वे कृष्णोषणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढे ॥५४॥**
**स्निग्धे धान्ययवादिराशिनिहितं त्रीन्वासरान्वासये-**
**द्ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे ॥**
**षट्शीतेऽष्ट दिनान्यतः परमिदं विस्राव्य संचूर्णये-**
**च्चातुर्जातपलेन संहितमिदं शुक्तं च चुक्रं च तत् ॥**
**हन्याद्वातकफामदोषजनितान्नानाविधानामया-**
**न्दुर्नामानिलशूलगुल्मजठरान्हत्वाऽनलं दीपयेत् ॥ ५५ ॥**

**तुषजलादिति ।** अस्य विशेषणमम्लत इति । तुषजलं सतुषयवकृतः संधानविशेषः । तदभावे काञ्जिकम् । **गुडान्मानिके इति ।** गुडस्य मानिकाद्वयम् । तच्च षोडश पलानि । **कृष्णोषणयोरिति ।** उषणं मरिचम् । तोयधरात्ययेऽपि त्रीनेव वासरान्धारयेच्चकारात् । बृहच्चुक्रसंधानम् ॥ ५४ ॥ ५५ ॥

स्वल्पचुक्रमाह—

**यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् ॥**
**धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ ५६ ॥**

**मस्त्वादीति ।** आदिभूतं मस्तु । त्रिरात्रस्थितमिति ग्रीष्माभिप्रायेण । वर्षादिषु पुनः पूर्वचुक्रवदवस्थापनकालव्यवस्थाऽम्लत्वं वा यावत् ॥ ५६ ॥

**तत्रान्तरे** परिमाणमुक्तम् ( अनुवदति )—

**गुडक्षौद्रारनालानि समस्तूनि यथोत्तरम् ॥**
**शंसन्ति द्विगुणान्भागान्सम्यक्चुक्रस्य सिद्धये ॥ ५७ ॥**

॥ ५७ ॥

[1] संप्रति विषूचिकाचिकित्सितमाह—

---

१ ङ. संमित ।

**कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम् ॥**
**विषूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥ ५८ ॥**

चुक्राभावे काञ्जिकम् । तदात्वे च पाकस्याशक्यत्वे किंचिच्चुक्रं तैलं च दत्त्वा कुष्ठसैन्धवकल्को वडवडायितव्यो यथावत्तैलपाकविधिसूचित एव ॥ ५८ ॥

**करञ्जनिम्बशिखरीगुडूच्यर्जकवत्सकैः ॥**
**पीतः कषायो वमनाद्धोरां हन्ति विषूचिकाम् ॥ ५९ ॥**

करञ्जफलम् । शिखरी, अपामार्गः । तस्य च बीजम् । अर्जकः श्वेतपर्णासः । **पीतः कषायो वमनादिति** । वमनार्थं कषायः क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वेत्यादिपरिभाषया कार्यः । वमनं च स्तोकवमिकारकाजीर्णशमनार्थम् ॥ ५९ ॥

विषूच्यां प्रमीलकादिशान्त्यर्थमञ्जनमाह—

**व्योषं करञ्जस्य फलं हरिद्रां मूलं समावाप्य च मातुलुङ्ग्याः ॥**
**छायाविशुष्का गुटिकाः कृतास्ता हन्युर्विषूचीं नयनाञ्जनेन ॥ ६० ॥**

**मातुलुङ्ग्या इति** । मातुलुङ्गीं मधुकर्कटीमाहुः । विषूचीशब्देन विषूचीजनिताः प्रमीलिकाशिरोरोगादयो गृह्यन्ते कारणे कार्योपचारात् । अथवा विषूचीमेवाञ्जनेन प्रभावाद्धन्युः ॥ ६० ॥

**त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः ॥**
**उद्वर्तनं खल्लिविषूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ ६१ ॥**

**तैलं विपक्वं च तदर्थकारीति** । त्वक्पत्रादिभिः कल्कीकृतैः काञ्जिकेन द्रवेण तैलमपि पक्वं खल्लीविषूचिकासु शस्यत इत्यर्थः । खल्ली हस्तादौ शिरामोटनम् । विषूच्यां खल्ली प्रायः संभवति । तस्यायं विधिः । केवलानिलजायां पुनरनिलहरमेव तैलम् ॥ ६१ ॥

**पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते ॥**
**जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ ६२ ॥**

**लवङ्गस्याम्बु शस्यत इति** । लवङ्गस्याम्बु, अर्धशृतम् । एवं जातीफलाम्बु च ज्ञेयम् । भद्रघनं भद्रमुस्तकम् ॥ ६२ ॥

**विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ॥ ६३ ॥**

**पार्ष्ण्योर्दाह इति** । पादपार्ष्णियुगे मूर्छाशान्त्यर्थमधोतिप्रवृत्तिनिवारणार्थं च मूर्छेतरासाध्यलक्षणाभावेऽपि सति तप्तशरादिशलाकया दाहः । स च प्रभावात्पार्ष्णिकृत एव हितो भवतीति वचनादुन्नीयते ॥ ६३ ॥

**सरुक्चाऽऽनद्धमुदरमम्लपिष्टैश्च[1] लेपयेत् ॥**
**दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ ६४ ॥**

---

१ क. घ. °ष्टैः प्रले° ।

सुगमम् ॥ ६४ ॥

**तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमर्तिं जठरे निहन्यात् ॥**

**तक्रेण युक्तं यवचूर्णमुष्णमिति ।** तक्रकाञ्जिकाभ्यां सयवक्षारं यवचूर्णं पक्त्वा पोटलिकया स्वेद इति व्यवहारः । लेपोऽयमित्यन्ये ॥

**स्वेदो घटैर्वा बहुबाष्पपूर्णैरुष्णैस्तथाऽन्यैरपि पाणितापैः ॥६५॥**

सुगमम् ॥ ६५ ॥

**तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ॥**
**दोषच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ ६६ ॥**

**दोषच्छन्न इति ।** आमदोषाभिभूतः ॥ ६६ ॥

अथ विषूच्यां वमनादिविधानानन्तरं पेयादिविधिमाह—

**सुवामितं साधु विरेचितं च सुलङ्घितं वा मनुजं विदित्वा ॥**
**पेयादिभिर्दीपनपाचनीयैः सम्यक्क्षुधार्तं समुपक्रमेत ॥ ६७ ॥**

**दीपनपाचनीयैरिति ।** दीपनपाचनधान्यपञ्चकादिसंस्कृतैः ॥ ६७ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां षष्ठोऽग्निमान्द्याजीर्णविषूचिकाधिकारः समाप्तः ॥ ६ ॥**

## अथ सप्तमः क्रम्यधिकारः ।

अजीर्णात्क्रिमिसंभूतेरजीर्णानन्तरं क्रिमिः—

**पारसीययवानी पीता पर्युषितवारिणा प्रातः ॥**
**गुडपूर्वा क्रिमिजालं कोष्ठगतं पातयत्याशु ॥ १ ॥**

पारसीययवानी पारसदेशसमुद्भवा यवानी । **गुडपूर्वेति ।** भक्षणे गुडः पूर्वोऽस्या इति गुडपूर्वा । गुडं भक्षयित्वा मनाग्विलम्बं कृत्वा सा पातव्येत्यर्थः । पेषणमप्यत्र पर्युषितवारिणैव ज्ञेयम् ॥ १ ॥

अपरमपि पानयोगमाह—

**पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत् ॥**
**कम्बुकस्य रसं वाऽपि पत्तूरस्याथवा रसम्* ॥ २ ॥**

पारिभद्रः पर्वतनिम्बः कम्बुकरसे पत्तूररसेऽपि क्षौद्रमशनवर्तनीयम् । पत्तूरः शालिम् (?) ॥ २ ॥

---

* ख. पुस्तके —लिह्यात्क्षौद्रेण विडङ्गं यच्चूर्णं क्रिमिनाशनम् । इत्याधिकम् ।

दीपनीयमन्नमण्डं विडङ्गं व्योषसंयुतम् ॥
पाययेत्कृमिनाशाय अग्निं च कुरुते भृशम् ॥ ३ ॥

**दीपनीयमन्नमण्डमिति** । दीपनीयमग्निमान्द्योक्तम् । दीपनीयपञ्चकोलाद्यर्धशृतकाथसिद्धं चान्नमण्डम् ॥ ३ ॥

कृमिघ्नमवलेहयोगमाह—

लिह्याद्वाऽश्वशकृच्चूर्णं विडङ्गं वा समाक्षिकम् ॥

अश्वशकृच्चूर्णं घोटकपुरीषचूर्णम् । विडङ्गं विडङ्गचूर्णम् । विडङ्गमित्यत्र बैडालमिति केचित्पठन्ति । तत्र बिडालविट्चूर्णमिति व्याख्यानम् ॥

विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ॥
तक्रसिद्धा यवागूः स्यात्कृमिघ्नी ससुवर्चिका ॥ ४ ॥

सुगमम् ॥ ४ ॥

मुस्ताखुपर्णीफलदारुशिग्रुक्वाथः सकृष्णाकृमिशत्रुकल्कः ॥
मार्गद्वयेनापि चिरप्रवृत्तान्कृमीन्निहन्यात्कृमिजांश्च रोगान् ॥ ५ ॥

आखुपर्णी मूषकपर्णी दन्तीभेदो वा । फलशब्देनेह त्रिफला ग्राह्या ॥ ५ ॥

कृमिघ्नपूलिकामाह—

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूलिकाम् ॥
जग्ध्वा सौवीरकं चानु पिबेत्कृमिहरं परम् ॥ ६ ॥

आखुपर्णी दन्ती । अन्ये मूषिकपर्णाख्यं द्रव्यान्तरमाहुः । सौवीरकं काञ्जिकम् । **अन्विति** । पूलिकाभक्षणादनन्तरम् ।

यद्यपि—"क्षाराणि मांसानि घृतानि चैव दधीनि शाकानि च पर्णवन्ति ।
समासतोऽम्लान्मधुरान्हिमांश्च कृमीञ्जिघांसुः परिवर्जयेत"

इत्युक्तादम्लवर्जनादत्र काञ्जिकस्यापि वर्जनं प्राप्नोति तथाऽपि काञ्जिकस्य प्रायोगिकत्वादपवर्गत्वाच्च*तथाहि गुणोपवर्णने काञ्जिकं कृमिघ्नत्वेन निर्दिष्टम् । आखुपर्णीपत्रं पिष्टकसमं पिष्ट्वा पिष्टकेन सहैकीकृत्य पोलिका कर्तव्या । आखुपर्णीपत्रस्य भागत्रयं पिष्टकस्यैको भाग इति वा मानव्यवस्था । पिष्टकं च यवस्येच्छन्ति कृमिहरत्वात् ॥ ६ ॥

पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम् ॥
पिबेत्तद्बीजकल्कं वा तक्रेण कृमिनाशनम् ॥ ७ ॥

सुगमम् । किं बहुजल्पितेन ॥ ७ ॥

---

* अत्र किंचित्त्रुटितम् ।

---

१ क. घ. °कृतण्डुलव्योषाशि° । २ घ. पूपिका° ।

सुरसादिगणं वाऽपि सर्वथैवोपयोजयेत् ॥ ८ ॥

सर्वथैवेति । कल्कस्वरसादिना । सुरसादि तु सर्वेषु सर्वथैवोपयोजयेत् । सर्वेषु पुरीषजादिषु सर्वथैवात्र पानस्नानादिविधिना, इति डल्लणपाठव्याख्या ॥ ८ ॥

त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा ॥
सिद्धमेभिर्गवां मूत्रे सर्पिः कृमिविनाशनम् ॥ ९ ॥

कम्पिल्लकमिति । गुन्द्रा रोचनिका ॥ ९ ॥

त्रिफलायास्त्रयः प्रस्था विडङ्गप्रस्थ एव च ॥
दीपनं दशमूलं च लाभतस्तूपपादयेत् ॥ १० ॥
पादशेषजलद्रोणे शृते सर्पिर्विपाचयेत् ॥
प्रस्थोन्मितं सिन्धुयुतं तत्पेयं कृमिनाशनम् ॥ ११ ॥
विडङ्गघृतमित्येतल्लेह्यं शर्करया सह ॥
सर्वान्कृमीन्प्रणुदति मुक्तं वज्रमिवासुरान् ॥ १२ ॥

सुगमम् । विडङ्गघृतम् ॥ १० ॥ ११ ॥ १२ ॥

रसेन्द्रेण समायुक्तो रसो धत्तूरपत्रजः ॥
ताम्बूलपत्रजो वाऽथ लेपनं यौकनाशनम्* ॥ १३ ॥

रसेन्द्रेणेति पारदेन । यौकनाशनमिति । यौकं यूकावृन्दम् ॥ १३ ॥

+क्षीराणि मांसानि घृतानि चैव दधीनि शाकानि च पर्णवन्ति ॥
समासतोऽम्लान्मधुरान्हिमांश्च कृमीञ्जिघांसुः परिवर्जयेच्च ॥ १४ ॥

*सुगमम् ॥ १४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तमः कृमिचिकित्साधिकारः समाप्तः ॥ ७ ॥

---

## अथाष्टमः पाण्डुरोगाधिकारः ।

पुरीषकृमितः पाण्डुरोगस्य समुद्भवात्कृम्यनन्तरं पाण्डुरोगः—

साध्यं तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् ॥
संपादयेत्क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णयुतैः प्रयोगैः ॥ १ ॥

---

* ख. पुस्तके—सर्पिर्गुडाभ्यां सह पाचयित्वा यः कन्दमश्नाति पृथुं कदल्याः । पतन्ति तस्य कृमयः समस्ता येऽप्यूर्ध्वजाश्चोदरकुक्षिकोणे ॥ १ ॥ इत्यधिकमत्र ।

+ अयं श्लोको घपुस्तके नास्ति । * इदं घपुस्तके नास्ति ।

१ इ. 'णमयैः प्र' ।

**साध्यमिति**। साध्यगतिस्त्वसाध्यलक्षणवैपरीत्येन। **समीक्ष्येति**। अनुबन्ध्यानुबन्धभूतदोषविशेषेण सम्यगुपलभ्य। **स्निग्धं घृतेनेति**। सर्वेषां पाण्डुरोगाणां पित्तप्रधानत्वात्पित्ते च घृतस्यैव विहितत्वाद्घृतेन स्नेह्यः। घृतं च भेषजसंस्कृतमेव देयम्।

यदुक्तम्—"कल्याणकं दाधिकषट्पलं च तिक्तं महातिक्तमथापि सर्पिः॥
स्यात्स्नेहनं पाण्डुषु चोपदिष्टं घृतं तथा पञ्चसु गव्यम्" इति॥

**ऊर्ध्वमधश्च शुद्धमिति**। ऊर्ध्वं वान्त्या, अधश्च विरेकेण शुद्धमिति। ननु पाण्डुरोगे वमनस्य निषिद्धत्वात्कथं वमनाभिधानम्।

यदुक्तम्—"न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीडितम्।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोर्दिताक्षेपकपीडितांश्च" इति॥

नैतत्। अत्राजीर्णाद्यवस्थायां वमनस्य विहितत्वात्।

तथा च सुश्रुतः—"एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः।
अतीव चोल्बणकफास्ते च स्युर्मधुकाम्बुना" इति।

**हारीतेऽप्युक्तम्**—
"कालं तु देशं प्रकृतिं शरीरं समीक्ष्य दद्याद्वमनं विधिज्ञः।
वान्तस्य तीक्ष्णान्यनुलोमनानि कल्पोपदिष्टानि भिषग्विदध्यात्" इति।

**हरीतकीचूर्णयुतैः प्रयोगैरिति**। हरीतकीचूर्णयुक्ता ये प्रयोगा नवायसगुडहरीतकीत्रिफलालोहादयस्तैः। चूर्णमयैरितिपाठपक्षे प्रचुरार्थे तत्प्रकृतिवचने मयडिति मयट्। हरीतकीचूर्णप्रचुरैर्योगैरित्यर्थः। अत्र संसर्जनक्रमोऽनुक्तोऽपि शोधनाङ्गत्वेनोह्यः॥ १॥

**पिबेद्घृतं वा रजनीविपक्वं स्यात्त्रैफलं तैल्वकमेव वाऽपि॥
विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान्घृतेन॥ २॥**

**रजनीविपक्वमिति**। हरिद्राकल्कजलद्रवेण सिद्धम्। क्वाथकल्कयोगेन विषयत्वात्(?) हरिद्राक्वाथकल्कसिद्धमित्यन्यः। त्रैफलं त्रिफलाक्वाथकल्कसिद्धं कुष्ठाद्युक्तं वा तैल्वकं वातव्याध्युक्तं विरेचनद्रव्यकृतं त्रिवृदादिसंस्कृतं वा। करोतेः संस्कारे प्रवृत्तेः। **योगांश्च वैरेचनिकान्घृतेनेति**। विरेचनाध्यायोक्तान्सुश्रुतवैरेचनिकान्योगान्घृतेन पिबेदिति संबन्धनीयं क्रियान्तरानिर्देशात्॥ २॥

**विधिः स्निग्धोऽथ वातोत्थे तिक्तशीतस्तु पैत्तिके॥
श्लैष्मिके कटुरूक्षोष्णः कार्यो मिश्रस्तु मिश्रके॥**

सुगमम्॥

**द्विशर्करं त्रिवृच्चूर्णं पलार्धं पैत्तिके पिबेत्॥ ३॥**

द्विशर्करं सत्रिवृच्चूर्णं पलार्धम्। तेन शर्करामाषः १ रती ४ त्रिवृच्चूर्णमाषाः १०

रती ६ एवं पलार्धं भवति। न तु त्रिवृच्चूर्णपलार्धं द्विशर्करमतः सार्धपलं प्रत्यहोपयोगोऽस्या मात्राया अनर्हत्वात् ॥ ३ ॥

द्विपञ्चमूलीक्कथितं सविश्वं कफात्मके पाण्डुगदे पिबेद्वा ॥
ज्वरेऽतिसारे श्वयथौ ग्रहण्यां श्वासेऽरुचौ कण्ठहृदामये च ॥४॥

सुगमम् ॥ ४ ॥

फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ॥
क्काथः क्षौद्रयुतो हन्यात्पाण्डुरोगं सकामलम् ॥ ५ ॥

फलत्रिकं त्रिफला ॥ ५ ॥

अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ॥
तैर्मोदकः क्षौद्रयुतोऽनुतक्रं पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ६ ॥

अयो मारितलोहचूर्णम्। तदभावे लोहपत्रिका ग्राह्या। सा च सालिंचरसत्रिफलाक्काथौ दत्त्वा पुटकेन संस्करणीया। एवं सर्वत्र। कोलं बदरफलम्। नाष्टमाषकपर्यायः। यदाह सुदान्तसेनः—

"अयःकोलतिलव्योषैः समैर्माक्षिकधातुना।
मधुना वटकान्कृत्वा जग्ध्वा तक्रं पिबेदनु" ॥

माक्षिकधातुर्धातुमाक्षिकम्। अनुतक्रं तक्रानुपानम् ॥ ६ ॥

अयोमलं तु संतप्तं भूयो गोमूत्रसेचितम् ॥ ७ ॥
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥
दीपनं चाग्निजननं शोथपाण्ड्वामयापहम् ॥ ८ ॥

भूयो गोमूत्रसेचितमिति। सप्तवारान्गोमूत्रनिर्वापितम्। अयोमलचूर्णस्य माषकद्वयं त्रिर्वा विभज्यान्यतोदर्शनात्। भोजनस्याऽऽदिमध्यान्तेषु मधुसर्पिर्भ्यां भक्ष्यम्। पश्चादभ्यासक्रमेणातोऽधिकं वर्धयेत्। अनुपानमिह तक्रं दुग्धं वा ॥ ७ ॥ ८ ॥

त्र्यूषणत्रिफलामुस्तविडङ्गचित्रकाः समाः ॥
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ॥
भक्षयेत्पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥ ९ ॥

नवायोरजसो भागा इति। एकद्रव्यभागापेक्षया नवगुणमयश्चूर्णम्। तेन त्र्यूषणादीनां मिलितानां चूर्णेन समं स्यादयश्चूर्णं तच्चूर्णं मधुसर्पिषा भक्षयेदिति। नवायसं चूर्णम् ॥ ९ ॥

संप्रति कामलायाश्चिकित्सितमाह—

रेचनं कामलार्तस्य स्निग्धस्याऽऽदौ प्रयोजयेत् ॥
ततः प्रशमनी कार्या क्रिया वैद्येन जानता ॥ १० ॥

सुगमम् ॥ १० ॥

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः ॥
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ ११ ॥

सुगमम् ॥ ११ ॥

अञ्जनं कामलार्तानां द्रोणपुष्पीरसः शुभः ॥
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत् ॥ १२ ॥

अञ्जनं कामलार्तानामिति। अञ्जनं नयनाञ्जनमभ्यङ्गो वा। निशागैरिकेत्यादि-योगमञ्जनमाहुः। अञ्जनं च मध्वक्तशलाकया कार्यम् ॥ १२ ॥

नस्यं कर्कोटमूलं स्याद्घ्रेयं वा जालिनीफलम् ॥ १३ ॥

जालिनीफलमिति। पीतघोषफलम् ॥ १३ ॥

अयोरजोव्योषविडङ्गचूर्णं लिहेद्धरिद्रां त्रिफलान्वितां वा ॥

अयोरज इत्यादिना विडङ्गान्तेनैको योगः। हरिद्रामित्यादिना द्वितीयः। अन्यस्त्वाह। अयोरज इत्यादित्रिफलान्तेनैक एवायं योगः। वाशब्दश्च पूर्वयोगापेक्षया। युक्तश्चायं पक्षः। तन्त्रान्तरसंवादात्।
तथा चोक्तम्—"दार्वीत्वक्त्रिफलाव्योषविडङ्गान्ययसो रजः ॥
मधुसर्पिर्युतं लिह्यात्कामलापाण्डुरोगवान्"इति ॥

हरिद्रामिति दारुहरिद्राम्। अनेनैव दार्वीत्वग्वचनेन। लेहोऽयं मधुसर्पिर्भ्याम्। एतदनन्तरं सुश्रुते मधुसर्पिर्भ्यामिति पाठात् ॥

सशर्करा कामलिनां त्रिभण्डी हिता गवाक्षी सगुडा च शुण्ठी ॥ १४ ॥

सशर्करा कामलिनां त्रिभण्डीति। त्रिभण्डी त्रिवृत्सशर्करा कामलिनां हिता। विरेचनार्थं योगोऽयम्। हिता गवाक्षी सशर्करैव। कार्त्तिकस्तु सगुडा च शुण्ठीत्यत्र चकारं भिन्नक्रमं योजयित्वा शुण्ठी च सगुडेति व्याख्याय गवाक्षीमपि सगुडामाह। गवाक्षी श्वेतापराजिता गोरक्षकर्कटी वा ॥ १४ ॥

धात्रीलोहरजोव्योषनिशाक्षौद्राज्यशर्कराः ॥
लेहो निवारयत्याशु कामलामुद्धतामपि* ॥ १५ ॥

सुगमम् ॥ १५ ॥

कुम्भाह्वये सिद्धतमं योगमाह—

दग्ध्वाऽक्षकाष्ठैर्मलमायसं तु गोमूत्रनिर्वापितमष्टवारान् ॥
विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति॥१६॥

* ख. पुस्तके—सदार्वीत्रिफलाव्योषविडङ्गमयसो रजः। मधुसर्पिर्युतं लिह्यात्कामलापाण्डुरोगवान्। ॥ १ ॥ लोहचूर्णं निशायुग्मं त्रिफला कटुरोहिणी। प्रालिह्य मधुसर्पिर्भ्यां कामलार्तः सुखी भवेत् ॥२॥ तुल्यां वाऽयोरजःपथ्यां हरिद्रां क्षौद्रसर्पिषा। चूर्णितं कामली लिह्याद्गुडक्षौद्रेण चाभयाम् ॥ ३ ॥ इत्यधिकमत्र।

अक्षो विभीतकः ॥ १६ ॥

पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके ॥
कामलायां तु या दृष्टा साऽपि कार्या भिषग्वरैः ॥ १७ ॥

सुगमम् ॥ १७ ॥

हरिद्राद्यं घृतमाह—

हरिद्रात्रिफलानिम्बबलामधुकसाधितम् ॥
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ १८ ॥

**सक्षीरमिति** । क्षीरमेवेह चतुर्गुणं द्रवान्तराभावात् । अत्र माहिषं सर्पिः संयोगमहिम्ना नियमितं तेन पाण्डुरोगे घृतान्तरे गव्यमेव सर्पिः पक्तव्यम् । हरिद्राद्यं घृतम् ॥ १८ ॥

मूर्वातिक्तानिशायासकृष्णाचन्दनपर्पटैः ॥
त्रायन्तीवत्सभूनिम्बपटोलाम्बुददारुभिः ॥ १९ ॥
अक्षमात्रैर्घृतं प्रस्थं सिद्धं क्षीरचतुर्गुणम् ॥
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तजित् ॥ २० ॥

सुगमम् । मूर्वाद्यं घृतम् ॥ १९ ॥ २० ॥

व्योषाद्यं घृतमाह—

व्योषं विल्वं द्वे रजन्यौ त्रिफला द्विपुनर्नवम् ॥
मुस्तमायोरजः पाठा विडङ्गं देवदारु च ॥ २१ ॥
वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैः शृतं घृतम् ॥
सर्वान्प्रशमयत्येतद्विकारान्मृत्तिकाकृतान् ॥ २२ ॥

द्विरजनी हरिद्रा दारुहरिद्रा । द्विपुनर्नवं शुक्ललोहितनालभेदेन पुनर्नवाद्वयम् । वृश्चिकाली विच्छावती । क्षीरं चतुर्गुणमिह पाकार्थम् । व्योषाद्यं घृतम् ॥ २१॥२२॥

मण्डूरवटकमाह—

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ ॥
दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥ २३ ॥
एषां द्विपलिकान्भागांश्चूर्णं कृत्वा पृथक्पृथक् ॥
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसंनिभम् ॥ २४ ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत्ततः ॥
उदुम्बरसमान्कुर्याद्वटकांस्तान्यथाग्नि च ॥ २५ ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजयेत् ॥
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥ २६ ॥

**कुष्ठान्यजरकं शोफमूरुस्तम्भकफामयान् ॥**
**अर्शांसि कामलामेहं प्लीहानं नाशयन्ति च ॥ २७ ॥**

दार्वीत्वग्दारुहरिद्रायास्त्वक् । अस्याश्च त्वगेव श्रेष्ठा । दार्व्याश्च त्वच उत्तमा इति वचनात् । त्वगभावे काष्ठमेव गृह्यते । माक्षिको धातुर्माक्षिकम् । ग्रन्थिकं पिप्पलीमूलम् । त्र्यूषणादीनां पृथग्द्विपलिकभागेनाष्टाविंशतिः पलानि । **मण्डूरं द्विगुणं चूर्णादिति** । समुदितचूर्णाद्द्विगुणं च मण्डूरचूर्णं षट्पञ्चाशत्पलानि । **शुद्धमिति** । ध्मापनसप्तधागोमूत्रनिर्वापणाभ्यां विशुद्धम् । **अञ्जनसंनिभमिति** । अञ्जनवत्कृष्णवर्णं मसृणं च । अञ्जनं कज्जलम् । एवंविधमेव श्रेष्ठगुणं भवति । **मूत्रे चाष्टगुण इति** । त्र्यूषणादिचूर्णमण्डूरचूर्णापेक्षयाऽष्टगुणे मूत्रे । अष्टगुणं च मूत्रं पलोल्लेखविहितत्वात् । अद्विगुणं सप्तद्वासप्तत्यधिकषट्शतपलं मानम् । अतश्चतुरशीतिः शरावा भवन्ति । चक्रेणाप्युक्तम्—

"निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते ।
ग्राहयन्त्यष्टगुणितं गोमूत्रं सर्वचूर्णतः" इति ॥

**अन्ये तु** मूत्रमष्टगुणं मण्डूरचूर्णादेवाऽऽहुः । **प्रचारस्तु** सर्वचूर्णाष्टगुणे(ण)मूत्रेण । द्वितीयपृथक्शब्दपाठान्मण्डूरचूर्णमेव पृथङ्मूत्रेण पक्तव्यम् । आसन्नपाके च तस्मिंश्चूर्णानां पाको नास्तीतिवचनात्तथा चूर्णबहुत्वाच्च चूर्णप्रक्षेपः । एवं सर्वत्र बहुचूर्णप्रयोगे । अत्रार्थे **कस्यचिच्छ्लोकः**—

"प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य तेन हि ।
आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते" इति ॥

पाकलक्षणं च—रसो गन्धः शुभः पाके वर्तिः स्याद्गाढमर्दनादिति । **उदुम्बरसमानिति** । कर्षसमानान् । पञ्चषण्माषकैः प्रायेण प्रचारः । अजरकमित्यजीर्णम् । मण्डूरवटकः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

पुनर्नवामण्डूरमाह—

**पुनर्नवा त्रिवृच्छुण्ठी पिप्पली मरिचानि च ॥**
**विडङ्गं देवकाष्ठं च चित्रकं पुष्कराह्वयम् ॥ २८ ॥**
**हरिद्रे द्वे च त्रिफला दन्ती च चविका तथा ॥**
**कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम् ॥ २९ ॥**
**एतानि समभागानि मण्डूरं द्विगुणं ततः ॥**
**मूत्रे चाष्टगुणे पक्त्वा धारयेत्स्निग्धभाजने ॥**
**पाण्डुशोथोदरानाहशूलार्शःक्रिमिगुल्मनुत् ॥ ३० ॥**

मण्डूरं लोहकिट्टानुकारि द्रव्यम् । **मूत्रे चाष्टगुण इति** । मण्डूरचूर्णापेक्षया व्यवहारात् । पुनर्नवामण्डूरः ॥ २८ ॥ २९ ॥ ३० ॥

मण्डूरवज्रवटकमाह—

पञ्चकोलं समरिचं देवदारु फलत्रिकम् ॥ ३१ ॥
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसंमिताः ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ॥ ३२ ॥
पक्त्वाऽष्टगुणिते मूत्रे घनीभूते तदुद्धरेत् ॥
ततोऽक्षमात्रान्वटकान्पिबेत्तक्रेण नक्तभुक् ॥ ३३ ॥
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भं हलीमकम् ॥ ३४ ॥
क्रिमिप्लीहानमुदरं गलरोगं च नाशयेत् ॥
मण्डूरवज्रनामाऽयं रोगानीकप्रणाशनः ॥ ३५ ॥

**विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसंमिता इति ।** पञ्चकोलादिभागा विडङ्गमुस्तसहिताः प्रत्येकं त्रिपलिका इत्यर्थः । अत्र मूत्रमष्टगुणं मण्डूरापेक्षया ग्राह्यं प्रचारात् । मण्डूरवज्रवटकः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

यवगोधूमशाल्यन्नं रसैर्जाङ्गलजैः शुभैः ॥
मुद्गाढकीमसूराद्यैस्तयोर्भोजनमिष्यते ॥ ३६ ॥

तयोरिति पाण्डुकामलयोः ॥ ३६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टमः पाण्डुरोगाधिकारः समाप्तः ॥ ८ ॥

---

## अथ नवमो रक्तपित्ताधिकारः ।

पाण्डुरोगवद्रक्तपित्तपित्तरक्तकारणत्वाव्यभिचारात्पाण्डुरोगानन्तरं रक्तपित्तम् । आदौ बलवतो रक्तपित्तसंग्रहणनिषेधमाह—

नोद्रिक्तमादौ संग्राह्यमश्नतो बलिनस्तु यत् ॥
हृत्पाण्डुग्रहणीरोगप्लीहगुल्मज्वरादिकृत् ॥ १ ॥

**नोद्रिक्तमादौ संग्राह्यमिति ।** उद्रिक्तमत्यर्थप्रवृत्त्युन्मुखमामं नाऽऽदौ स्तम्भनीयम् । अश्नत इत्यनेन संतर्पणोत्थत्वं दर्शयति ॥ १ ॥

ऊर्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ॥
अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥ २ ॥

१ ङ. °ण तक्रभु° । २ घ. °वृत्तादौ° ।

अतिप्रवृद्धदोषस्येति सुश्रुते पाठः । तत्रैवमापातनिका । संशोधनार्हस्य लङ्घनमपि हितमिति दर्शयितुमाह—अतिप्रवृद्धदोषस्येति । कर्तव्यमपतर्पणमिति । अपतर्पणमिह लङ्घनम् । यदाह चरकः—

"मार्गौ दोषानुबन्धं वा निदानं प्रसमीक्ष्य च ।
लङ्घनं रक्तपित्तादौ तर्पणं च प्रयोजयेत्" इति ॥

अस्यायमर्थः । यदूर्ध्वो मार्गः पित्तं कफश्च सामो दोषः स्निग्धोष्णं च निदानं तदा लङ्घनमन्यथा ( तर्पणम् । ) तर्पणमितिपदेन हि तर्प्यतेऽनेनेति व्युत्पत्त्या यवागूरपि गृह्यते ॥ २ ॥

पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः ॥

पथ्यं सतीनयूषेणेत्यादिना तर्पणविधिरूर्ध्वगे । चरकेऽप्युक्तम्—ऊर्ध्वगे तर्पणं पूर्वं पेया पूर्वमधोगम इति । सतीनो वर्तुलो महान्कलायः । चरके तु द्राक्षादिशृतशीतजलेनापि यत्तर्पणं च दर्शितं तल्लङ्घनेन क्षीणे कफे वह्नौ च दीप्ते ज्ञेयम् ॥

ऊर्ध्वगे रेचनं पूर्वमधोगे वमनं हितम् ॥ ३ ॥

ऊर्ध्वगं मार्गमहिम्ना कफसंसृष्टम् । अधोगं च वातानुगम् । यदुक्तम्—ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगमिति । तेनोर्ध्वगे कफसंसर्गवाते वमनमेवोचितम् । अधोगे तु वाताशयप्रत्यासन्नदोषहरं विरेचनमेव युक्तमुच्यते रक्तपित्ते प्रतीपमार्गस्यैवेष्टत्वात् । तथाचोक्तम्—प्रतिमार्गं च हरणं रक्तपित्ते विधीयत इति । नोद्रिक्तमादावित्यादिना संग्रहस्यानौचित्यं दर्शितं तर्हि तत्र किं कुर्यादित्याह—ऊर्ध्वग इत्यादि । संशोधनार्हस्य बलवतो नस्यम् । ऊर्ध्वगे बहुदोषे रेचनं पूर्वं हितम् । एवंविधस्याधोगे वमनं हितमिति ॥ ३ ॥

त्रिवृतात्रिफलाश्यामापिप्पलीशर्करामधु ॥
मोदकः संनिपातोत्थरक्तपित्तज्वरापहः[२] ॥ ४ ॥

त्रिवृदरुणमूला श्यामा श्याममूला त्रिवृत्तु श्यामा वृद्धदारुकः श्यामलता वा । चरके श्यामात्रिवृत्कल्पयोगस्य दर्शितत्वात् । अत्र मिलितचूर्णद्विगुणा शर्करा मध्वेकद्रव्यसममित्याचक्षते । युक्तं तु मधुशर्करयोर्मिलित्वैव चूर्णाद्द्वैगुण्यमुभयोरपि मोदककर्तृत्वात् ॥ ४ ॥

मुस्तेन्द्रयवयष्ट्याह्वमदनाढ्यं पयोमधु ॥
शिशिरं वमनं योज्यं रक्तपित्तहरं परम् ॥ ५ ॥

सुगमम् ॥ ५ ॥

---

१ घ. 'वृद्धादो' । २ क. घ. 'तोर्ध्वेर' ।

शालिपर्ण्यादिना सिद्धा पेया पूर्वमधोगते ॥
रक्तातीसारहन्ता च योज्यो विधिरशेषतः ॥ ६ ॥

शालिपर्ण्यादिना सिद्धेति । शालिपर्ण्यादि स्वल्पपञ्चमूलम् । अतीसारोक्तो महान्स्वल्पो वा शालिपर्ण्यादिः । स्वल्पपञ्चमूलेन तु प्रायः प्रचारः ॥ ६ ॥

क्षीणमांसबलं बालं वृद्धं शोषसमन्वितम् ।
अवम्यमविरेच्यं च स्तम्भनैः समुपाचरेत् ॥ ७ ॥

सुगमम् ॥ ७ ॥

स्तम्भनयोगानाह—

वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ॥
पिबेत्तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ८ ॥

वृषपत्राणि पत्रे बद्ध्वा दग्ध्वा च निष्पीडनीयानि । एवं रसः सुग्रहो भवति । समधुशर्करमिति । व्यवहारात्प्रक्षेपो मधुमाषः शर्करामाषः । अयं च योगः सामान्योक्तादूर्ध्वगे विशेषेण प्रयोज्यः ॥ ८ ॥

आटरूषकनिर्यूहे प्रियंगुं मृत्तिकाञ्जने ॥
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ९ ॥

आटरूषको वासकः । मृत्तिका सौराष्ट्री मृत् । तदभावे कृष्णपञ्चकपर्पटी । अञ्जनं रसाञ्जनम् । विनीय प्रक्षिप्य । अत्र शास्त्रयुक्तया प्रियंग्वादिकल्कक्षौद्रयोर्मिलित्वा कर्षः प्रक्षेपेऽर्हति । तदुक्तम्—मात्रा क्षौद्रघृतादीनां स्नेहकाथेषु चूर्णवत् । व्यवहारात्प्रक्षेप्यं मिलित्वा प्रियंग्वादिमाषाश्चत्वारः । मधुमाषाश्चत्वारः ॥ ९ ॥

इदानीं वेगवति रक्तपित्ते सिद्धतमं योगमाह—

वासाकषायोत्पलमृत्प्रियंगुलोध्राञ्जनाम्भोरुहकेसराणि ॥
पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥१०॥

वासायाः कषायः । उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः । उत्पलं नीलोत्पलम् । मृत्केदारमृत्तिकेति डल्लणः । मृन्मृत्तिका सा च सौराष्ट्री ग्राह्या । भूली नूरीति कथ्यते लोकैः । अम्भोरुहकेसरं पद्मकेसरम् । कल्पनामाह—वासाकषायमुत्पलमृदादिचूर्णप्रक्षेपसिताक्षौद्रयुतं पीत्वा नरो रक्तपित्तस्योदीर्णं वेगमाशु जह्याच्छीघ्रं परित्यजेदिति॥१०॥

वासायां विद्यमानायामाशायां जीवितस्य च ॥
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ ११ ॥

सुगमम् ॥ ११ ॥

तालीसचूर्णयुक्तः पेयः क्षौद्रेण वासकस्वरसः ॥
कफपित्तकासतमकश्वासस्वरभेदरक्तपित्तहरः ॥ १२ ॥

सुगमम् ॥ १२ ॥

आटरूषकमृद्वीकापथ्याकाथः सशर्करः ॥
क्षौद्राढ्यः कसनश्वासरक्तपित्तनिवर्हणः ॥ १३ ॥

सुगमम् ॥ १३ ॥

समाक्षिकः फल्गुफलोद्भवो वा पीतो रसः शोणितमाशु हन्ति ॥ १४ ॥

फल्गुफलोद्भव इति । फल्गुः काकोदुम्बरिका । अयं च प्रयोगोऽधोगे प्रचरति ॥ १४ ॥

चन्दनेन्द्रयवाः पाठा कटुका सदुरालभा ॥
गुडुची वासकं लोध्रं पिप्पलीक्षौद्रसंयुतम् ॥
कफान्वितं जयेद्रक्तं कुष्ठकासज्वरापहम् ॥ १५ ॥

सुगमम् ॥ १५ ॥

क्षीरप्रयोगानभिधित्सुः क्षीरस्य विषयं ब्रूते—

कषायैर्विविधैर्योगैर्दीप्तेऽग्नौ विजिते कफे ॥
रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः ॥ १६ ॥

कषायाः कल्कचूर्णादयः । कषायशब्देनेह पञ्चविधकषायकल्पनाया अभीष्टत्वात् ॥ १६ ॥

छागं पयः स्यात्परमं प्रयोगे गवां[1] शृतं पञ्चगुणे जले वा ॥
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणे शृतं वा ॥ १७ ॥

परमं प्रयोग इति । अभ्यास उत्कृष्टगुणम् । विदारिगन्धादिगणे शृतं वेति । विदारिगन्धादिः स्वल्पपञ्चमूलम् । इहापि शर्करामधुप्रक्षेपः ॥ १७ ॥

द्राक्षया पर्णिनीभिर्वा बलया मधुकेन वा ॥
श्वदंष्ट्रया शतावर्या रक्तजित्साधितं पयः ॥ १८ ॥

पर्णिनीभिर्वेति । पर्णिन्यश्चतस्र एव । ताश्च शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी । एवं सर्वत्र बहुवचनान्तनिर्देशे । द्विवचनप्रयोगे त्वाद्ये द्वे ग्राह्ये । द्राक्षादिभिर्द्रव्यगुणपर्यालोचनया यथार्हं पित्ताद्युल्बणे क्षीरसंस्काराः ॥ १८ ॥

पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनाः ॥
मधुना घ्नन्ति संलीढा रक्तपित्तं पृथक्पृथक् ॥ १९ ॥

---

[1] घ. गव्यं ।

खर्जूरस्य फलम् । गोस्तना द्राक्षा । मधुना घ्नन्ति संलीढा इति । मधुनो दैवाद-प्राप्तावनर्हत्वे वा सर्वत्र शार्करं जलम् । वङ्गसेनस्तु कदल्यादिकुसुमसंभवं वा मधु ग्राह्यम् ॥ १९ ॥

**खदिरस्य प्रियंगूणां कोविदारस्य शाल्मलेः ॥**
**पुष्पचूर्णं तु मधुना लिहन्नारोग्यमश्नुते ॥ २० ॥**

पुष्पचूर्णलेहो व्यस्तः सर्वत्र विभक्त्यन्तस्य निर्देशात् ॥ २० ॥

**लिहेत्तथा वास्तुकबीजचूर्णं क्षौद्रान्वितं तण्डुलजाह्वयं वा ॥**

वास्तुकबीजचूर्णं ट(प)कवास्तुकबीजचूर्णं क्षौद्रान्वितं लिहेत् । **तण्डुलाह्वयं वेति ।** तण्डुलीयं क्षौद्रान्वितं वा लिहेदित्यर्थः। केचिदेवं पठन्ति—**सतण्डुलीयं मधुनाऽवलेह्ये-त्सितायुतं वास्तुकमूलमेव वा ।** अयं पाठो यद्यपि टीकाकृद्भिर्न स्वीकृतस्तथाऽपि वास्तुकबीजचूर्णस्य सक्षौद्रस्यावलेहे सद्यःफलत्वादङ्गीकृतः । लिहेत्तथेत्यादि नार्षत्वाद-स्माभिर्नाभ्युपगम्यते ॥

**लिह्याच्च लाजाञ्जनचूर्णमेकमेवं सिताक्षौद्रयुतां तुगाख्याम् ॥ २१ ॥**

लाजा भृष्टधान्यानि । अञ्जनं सौवीराञ्जनं स्रोतोञ्जनं वा । एकं प्रधानम् । एवं क्षौद्रेणेत्यर्थः । लाजाञ्जनचूर्णमित्यत्र कालाञ्जनचूर्णमिति केचित्पठन्ति । तत्र कालाञ्जनं सौवीराञ्जनम् । सिताक्षौद्रयुतामित्यादि । तुगाख्यां वंशरोचनानुकारि पार्थिवं द्रव्यम् । अन्ये वंशरोचनामाहुः । तां च शर्कराक्षौद्रयुतां लिह्यात् ॥ २१ ॥

**वासकस्वरसे पथ्या सप्तधा परिभाविता ॥**
**कृष्णा वा मधुना लीढा रक्तपित्तं द्रुतं जयेत् ॥ २२ ॥**
**द्रवेण यावता चूर्णमेकीभूयाऽऽर्द्रतां व्रजेत् ॥**
**तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥ २३ ॥**

सुगमम् ॥ २२ ॥ २३ ॥

**अभया मधुना युक्ता पाचनी दीपनी मता ॥**
**श्लेष्माणं रक्तपित्तं च हन्ति शूलातिसारनुत् ॥ २४ ॥**

सुगमम् ॥ २४ ॥

**लोहगन्धिनि निश्वास उद्गारे धूमगन्धिनि ॥**
**पृथ्वीकां शाणमात्रां च खादेद्द्विगुणशर्कराम् ॥ २५ ॥**

**पृथ्वीकां शाणमात्रामिति ।** पृथ्वीका कृष्णजीरकं न तु सूक्ष्मैला टीकाकृद्भिर्व्या-ख्यातत्वात् । शाणो माषचतुष्टयम् ॥ २५ ॥

एलादिगुटिकामाह—

एलापत्रत्वचोऽर्धाक्षाः पिप्पल्यर्धपलं तथा ॥
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ २६ ॥
संचूर्ण्य मधुसंयुक्ता गुटिकाः संप्रकल्पयेत् ॥
अक्षमात्रां ततश्चैकां भक्षयेत्तां दिने दिने ॥ २७ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्छां मदं भ्रमम् ॥
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ २८ ॥
शोषं प्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ॥
गुटिका तर्पणी वृष्या रक्तपित्तं च नाशयेत् ॥ २९ ॥

अर्धाक्षा इति प्रत्येकं कर्षार्धमानाः । एलाद्राक्षादिमोदकः ॥२६॥२७॥२८॥२९॥

नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ॥
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपेन ॥ ३० ॥

सुगमम् ॥ ३० ॥

घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया[१] पयो वा ॥
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हिमं वा ॥ ३१ ॥

नासास्रुतशोणितदुष्टदोषनिस्रावार्थं वाग्भटादेलादिगुटिका—

"त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सितम् ।
द्राक्षां मधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥
मधुना गुटिका घ्नन्ति ता वृष्याः पित्तशोणितम् ॥
कासश्वासारुचिच्छर्दिमूर्छाहिध्मामदभ्रमान् ॥
क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान् ॥
रक्तनिष्ठीवनं पार्श्वरुक्पिपासाज्वरानपि" ॥

त्रिजातं त्वक्पत्रैलम् । अर्धकर्षांशं प्रत्येकं द्रव्यं शाणद्वयप्रमाणम् । पिप्पल्यर्धपलम् । सिता शर्करा । द्राक्षा गोस्तनी । मधूकं मधूकपुष्पम् । खर्जूरम् । एतानि चत्वारि द्रव्याणि पलप्रमाणानि प्रत्येकम् । ततः समस्तं श्लक्ष्णचूर्णितम् । मधुना माक्षिकेण गुटिकाः कृतास्ता वृष्या भवन्ति पित्तशोणितं रक्तपित्तं घ्नन्ति कासादींश्च । आढ्यमारुतं वातशोणितम् । इत्येलादिबाष्पचन्द्रनन्दनविरचितं द्वित्रिदिनमुपेक्षते । जलं सशर्करं तस्य । पयः सशर्करम् । द्राक्षारसः केवलः । क्षीरघृतं क्षीरादुत्थितं घृतम् । केचिन्नासिकयेत्यत्र नस्तकयोरिति पठन्ति ।

---

१ अ. हितं ।

अथ डल्लणव्याख्या–घ्राणगेऽपरमपि नस्ययोगमाह—द्राक्षारसमिति । द्राक्षारसं सशर्करं नासिकया पिबेत् । क्षीरघृतं क्षीरमथनोद्भूतं तद्वा सशर्करं नासिकया पिबेत् । इक्षुरसं हिमं वा तथैव पिबेत् । इत्थं त्रयो योगाः कल्पनीयाः । तथा च तन्त्रान्तरम्–

"द्राक्षारसस्य नस्यं नस्यं वा क्षीरसर्पिषः सपदि ।
इक्षो रसस्य नस्यं सशर्करं रक्तमु(नु)द्भवति" इति ॥ ३१ ॥

नस्यं दाडिमपुष्पोत्थो रसो दूर्वाभवोऽथवा ॥
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित्* ॥
मेढ्रगेऽतिप्रवृत्ते तु बस्तिरुत्तरसंज्ञितः ॥ ३२ ॥

सुगमम् ॥ ३२ ॥

सच्छागदुग्धश्च सशर्करश्च रसो हितो दाडिमपुष्पजश्च ॥ ३३ ॥

दाडिमपुष्पस्वरस एव च्छागदुग्धशर्करे प्रक्षिप्य नस्यम् ॥ ३३ ॥

शृतं क्षीरं पिबेद्वाऽपि पञ्चमूल्या तृणाह्वया ॥

पञ्चमूल्या तृणाह्वयेति । तृणपञ्चमूल्या । तृणपञ्चमूली सुश्रुतस्य कुशकाशशरेक्षुदर्भा इति । अत्र दर्भ उलूअ(?) । चरकस्य तु–शरेक्षुदर्भकाशानां शालीनां मूलमेव चेति । द्वितयमपीह प्रशस्तम् ॥

दूर्वाद्यं घृतमाह—

दूर्वासोत्पलकिञ्जल्कमञ्जिष्ठा सैलवालुका ॥ ३४ ॥
सितासितमुशीरं च मुस्तचन्दनपद्मकैः ॥
विपचेत्कार्षिकैरेतैः सर्पिराजं सुखाग्निना ॥ ३५ ॥
तण्डुलाम्बु त्वजाक्षीरं दत्त्वा चैव चतुर्गुणम् ॥
तत्पानं वमतो रक्तं नावनं नासिकागते ॥ ३६ ॥
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते च पूरयेत्तेन चक्षुषी ॥ ३७ ॥
मेढ्रपायुप्रवृत्ते च बस्तिकर्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते च तदभ्यङ्गे प्रयोजयेत् ॥ ३८ ॥

सितं श्वेतचन्दनमिति क्वचिद्वृन्दटिप्पण्यां दृश्यते । बहुवारवृक्षत्वक्प्रसाञ्जनं चेति

* ख. पुस्तके—वृषस्य स्वरसं कृत्वा द्रव्यैरेभिः प्रयोजयेत् ॥ प्रियंगुमृत्तिकालोध्रमञ्जनं चेति चूर्णयेत् ॥ १ ॥ एतच्चूर्णं पाययेत्तानैः क्षौद्रसमन्वितैः ॥ नासिकामुखपायुभ्यो योनिमेढ्राच्च निर्गतम् ॥ ॥ २ ॥रक्तपित्तं स्रवद्धन्ति सिद्ध एष प्रयोगराट् ॥ यच्च शस्त्रक्षतेनैव रक्तं गच्छति वेगितम् ॥ ३ ॥ तदप्यनेन चूर्णेन तिष्ठत्येवावचूर्णितम् ॥ इत्यधिकमत्र ।

चक्रः । श्वेतचन्दनेन प्रचारः । तण्डुलोदकमजाक्षीरं च प्रत्येकं चतुर्गुणं दत्त्वा चैवेति चकारात् । दूर्वाद्यं घृतम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

वासाद्यं घृतमाह—

**वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः॥**
**प्रदाय कल्कं विपचेद्घृतं तु सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥ ३९ ॥**
**शणस्य कोविदारस्य वृषस्य ककुभस्य च ॥**
**कल्काढ्यत्वात्प्रशंसन्ति पुष्पकल्कं चतुष्पलम् ॥ ४० ॥**

वासां सशाखां सपलाशमूलामित्यनेन वासायाः सर्वाङ्गोपयोगार्हत्वं दर्शयति । अस्याश्चाऽऽर्द्राया अप्यद्विगुणाया एव क्वाथविधिः ।

यदुक्तम्—"वासाकुटजकूष्माण्डशतमूलासहामृताः ॥
नित्यमार्द्राः प्रयोक्तव्या मानतो द्विगुणा न ताः" इति ॥

वासापुष्पकल्कश्च कल्कबाहुल्याच्चतुष्पलः । प्रस्थमाने घृते । मानविशेषानिर्देशेऽपि घृतस्येह प्रस्थ एव पक्तव्यः स्नेहपाकस्य प्रायेण प्रस्थश्रुतेः । आढकादिश्रुतिस्तु क्वचिदेव ।

यत्पुनः—"स्नेहपाकविधौ यत्र प्रमाणं नोदितं क्वचित् ॥
स्नेहस्य कुडवं तत्र पचेत्कल्कपलेन तु" ॥

इति परिभाषया स्नेहकुडवपाकाभिधानं तन्नस्यविषयं ज्ञेयम् । सक्षौद्रमिति । क्षौद्रं पादिकं ज्ञेयं तच्च सिद्धे शीते घृते प्रक्षेप्यम् । वासाद्यं घृतम् ॥ ३९ ॥ ४० ॥

**शतावरीदाडिमतिन्तिडीककाकोलिमेदे मधुकं विदारीम् ॥**
**पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत्क्षीरचतुर्गुणं च ॥**
**कासज्वरानाहविबन्धशूलं तद्रक्तपित्तं च घृतं निहन्ति ॥ ४१ ॥**

सुगमम् । शतावरीघृतम् ॥ ४१ ॥

शतावरीघृतमाह—

**शतावर्यास्तु मूलानां रसप्रस्थद्वयं मतम् ॥ ४२ ॥**
**तत्समं च भवेत्क्षीरं घृतप्रस्थं विपाचयेत् ॥**
**जीवकर्षभकौ मेदा महामेदा तथैव च ॥ ४३ ॥**
**काकोली क्षीरकाकोली मृद्वीका मधुकं तथा ॥**
**मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् ॥ ४४ ॥**
**शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक् ॥**
**रक्तपित्तविकारेषु वातरक्तगदेषु च ॥ ४५ ॥**

---

१ घ. अपि द्वि° । २ घ. °गुणेन । ३ ङ. तु ।

क्षीणशुक्रे च दातव्यं वाजीकरणमुत्तमम् ॥
अंसदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम् ॥ ४६ ॥
योनिशूलं च दाहं च मूत्रकृच्छ्रं च पैत्तिकम् ।
एतान्रोगान्निहन्त्याशु च्छिन्नाभ्रमिव मारुतः ॥ ४७ ॥
शतावरीसर्पिरिदं बलवर्णाग्निवर्धनम् ।
शतावरीघृते चास्मिञ्शर्करामधु पादिकम् ॥
मध्वेव पादिकं देयं[1] वासासर्पिषि संमतम् ॥ ४८ ॥

शर्करामधुसंयुक्तमिति । सिद्धे घृते शीते मधुशर्करयोर्मिलित्वा पादिकयोः प्रक्षेपः । चक्रेणाप्युक्तम्—"स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे ।
इतिवाक्यबलात्स्नेहे प्रक्षेप्यं पादिकं भवेत्" इति ।
शतावरीघृतम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

खण्डकूष्माण्डमाह—

कुष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ॥ ४९ ॥
पचेत्तदा[3] घृतप्रस्थे शनैस्ताम्रमये दृढे ॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत् ॥ ५० ॥
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥
त्वगेलापत्रमरिचधान्यकानां पलार्धकम् ॥ ५१ ॥
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेत्तदा[4] ॥
लेहीभूते सुशीते च दद्यात्क्षौद्रं घृतार्धकम् ॥५२ ॥
तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी ॥
कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः ॥ ५३ ॥
वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ॥
उरःसंधानकरणं बृंहणं स्वरबोधनम्[5] ॥ ५४ ॥
अश्विभ्यां निर्मितं श्रेष्ठं कूष्माण्डकरसायनम्* ॥
खण्डकामलकीन्यायाद्रसप्रस्थद्वयोक्तितः ॥ ५५ ॥
खण्डकूष्माण्डके पात्रं[6] स्विन्नकूष्माण्डकद्रवात् ।
अन्यत्र खण्डकूष्माण्डात्संमतः सकलो रसः ॥
युक्तसर्पिषि कूष्माण्डे पाको गन्धेन मृद्रया ॥ ५६ ॥

*ख पुस्तके—वृद्धं पुरातनं वाऽपि कूष्माण्डं कठिनं दृढम् । त्वक्किसराभ्यां विनिर्मुक्तं मेदोबीजैर्विवर्जितम् ॥ १ ॥ इत्यधिकमत्र ।

१ क. घ. °यं घृते वासादिके पुनः । २ ङ. °पाकः स्मृ° । ३ क. घ. °स्तते घृ° । ४ क. घ. °येत्पुनः । तत्पक्कं स्थापयेद्भाण्डे दृ° । ५ घ. °स्वर्धन° । ६ ङ. कंसः ।

**निष्कुलीकृतमिति ।** निस्त्वगस्थिकृतं कूष्माण्डं शलाकया कृतच्छिद्रं किंचिज्जलं दत्त्वोत्स्वेद्य क्षौमे निवेश्य पीडयेत् । आतपे मनाक्संशोष्य पिष्ट्वा च पलशतं गृहीत्वा विपक्तव्यमिति कर्ममार्गः । **पिप्पलीशृङ्गवेराभ्यां द्वे पले इति ।** कणाशुण्ठ्योः प्रत्येकं पलद्वयम् । जीरकस्य च द्वे पले । **तन्त्रान्तरसंमतं** चैतत् । तद्यथा— द्विपलांशैः कणाशुण्ठीजीरकैरवचूर्णितैरिति । **वैद्यप्रसारके**ऽप्येतादृशमेव विवृतम् । व्यवहारोऽपीत्थमेव । **चक्रस्तु** पारणसंबन्धादर्धपलत्वमाह । त्वगादीनां पलार्धं प्रत्येकम् । घृतार्धकमिति प्रस्थार्धमानम् । पाकलक्षणं तस्य—'युक्तसर्पिषि कूष्माण्डे पाको गन्धेन मुद्रया' इति । **चक्रेणाप्युक्तम्**—अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतमिति । **खण्डकामलकीन्यायाद्रसप्रस्थद्वयोक्तित इति ।** खण्डामलक्यामामलकरसप्रस्थः कूष्माण्डकरसप्रस्थश्च कूष्माण्डतुलार्धे दर्शितः । तेनेह शतपले द्वैगुण्येन कूष्माण्डरसस्य पात्रं देयम् । अन्यत्र खण्डकूष्माण्डात्संमतः सकलो रसः । **तन्त्रान्तरे** कूष्माण्डपलशताद्यावान्रसः पीडनेन संभवति तावता पाक उक्तः । तेनेहापि तथैवाऽऽकूतम् । प्रचारश्चेत्थमेव । अत्र **तन्त्रान्तरम्**—

"वृद्धं पुरातनं चापि कूष्माण्डं कठिनं दृढम् ।
त्वक्साराभ्यां विनिर्मुक्तमन्तर्बीजैर्विवर्जितम् ।
स्विन्नं सुपिष्टं दृषदि वस्त्रेण च प्रपीडितम् ।
विशुष्कमातपे किंचिद्ग्राह्यं तत्तुलया धृतम् ।
उदुम्बरे कटाहे च पचेत्प्रस्थेन सर्पिषः ।
कृत्वा क्षौद्रनिभं तस्मिन्क्षिपेत्खण्डशतं भिषक् ।
कूष्माण्डपीडनात्तोयं यत्तेन विपचेत्पुनः ॥
सुशीतपाके निष्पन्ने सर्पिषाऽर्धं क्षिपेन्मधु ॥
कणापलद्वयं चापि जीरकं च सनागरम् ।
त्रिसुगन्धि सधान्याकं मरिचं शुक्तिमानिकम्" इत्यादि ।

खण्डकूष्माण्डकः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥५६॥

वासाखण्डकूष्माण्डमाह—

**पञ्चाशच्च पलं स्विन्नकूष्माण्डात्प्रस्थमाज्यतः ॥ ५७ ॥**
**पक्वं पलशतं खण्डं वासाक्वाथाढके पचेत् ॥**
**शुभाधात्रीघनाभार्ङ्गीत्रिसुगन्धैश्च कार्षिकैः ॥ ५८ ॥**
**ऐलेयविश्वधान्याकमरिचैश्च पलांशकैः ॥**
**पिप्पलीकुडवं चैव मधुमानीं प्रदापयेत् ॥ ५९ ॥**

कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम् ॥
हृद्रोगमम्लपित्तं च पीनसं च व्यपोहति ॥ ६० ॥

**पञ्चाशच्च पलं स्विन्नकूष्माण्डादिति** । पूर्ववत्स्विन्नसंस्कृतकूष्माण्डात्पञ्चाशत्पलं न चात्र खण्डकूष्माण्डकवत्कूष्माण्डकस्य रसो ग्राह्यः । पाकार्थं वासाक्काथस्योपात्तत्वात् । शुभा वंशरोचना । ऐलेयमेलवालुकम् । **मधुमानीमिति** । मधुनोऽष्टौ पलानि । मानिकाऽष्टौ पलान्येव, इत्यवधारणात् । अष्टावेव पलानि न तु कुडवद्वयकल्पनायोग्यतया द्वैगुण्यम् । वासाखण्डकूष्माण्डः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

वासाखण्डमाह—

तुलामादाय वासायाः पचेदष्टगुणे जले ॥
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ ६१ ॥
चूर्णानामभयानां तु खण्डाच्छुद्धाच्छतं तथा ॥
द्वे पले पिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ॥ ६२ ॥
कुडवं पलमानं च चातुर्जातं सुचूर्णितम् ॥
क्षिप्त्वा विलोडितं खादेद्रक्तपित्ती[1] यथाबलम् ॥ ६३ ॥
कासश्वासगृहीतश्च यक्ष्मणा च निपीडितः[2] ॥ ६४ ॥

**पाचयेदाढकं भिषक्** । **चूर्णानामभयानामिति** । अभयाचूर्णाढकमेव पचेत् । तथैव निर्देशात् । तेनेह चूर्णानां पाको नास्तीति परिभाषा न प्रवर्तते । **पलमानं च चातुर्जातमिति** । चातुर्जातं त्वगेलापत्रनागकेसरम् ।

तदुक्तम्—"चातुर्जातं समाख्यातं त्वगेलापत्रकेसरैः ।
तदेव पुनराख्यातं त्रिसुगन्धमकेसरम्" इति ।

तच्च प्रत्येकं पलिकम् । वासाखण्डः ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

खण्डखाद्यै[3]लोहमाह—

शतावरी छिन्नरुहा वृषो मुण्डितिका बला ॥ ६५ ॥
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥
भार्ङ्गी पुष्करमूलं च पृथक्पञ्च पलानि च ॥ ६६ ॥
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥
दिव्यौषधिहतस्यापि माक्षिकेण हतस्य च ॥ ६७ ॥
पलद्वादशकं देयं रुक्मलोहस्य चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोडशकं बुधैः ॥ ६८ ॥

---

१ घ. क्षतक्षयी । २ क. घ. विशेषतः । ३ घ. °द्यमा° ।

पचेत्ताम्रमये पात्रे गुडपाको मतो यथा ॥
प्रस्थार्धं मधुनो देयं शुभाश्मजतुकं त्वचम् ॥ ६९ ॥
शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं मतम् ॥
त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेसरम् ॥ ७० ॥
चूर्णं दत्त्वा सुमथितं स्निग्धभाण्डे निवासयेत् ॥
यथाकालं प्रयुञ्जीत विडालपदकं ततः ॥ ७१ ॥
गव्यक्षीरानुपानं च सेव्यं मांसरसं पयः ॥
गुरुवृष्यान्नपानानि स्निग्धमांसादि बृंहणम् ॥ ७२ ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ॥
वातरक्तं प्रमेहं च शीतपित्तं वमिं क्लमम् ॥ ७३ ॥
श्वयथुं पाण्डुरोगं च कुष्ठं प्लीहोदरं तथा ॥
आनाहं[1] मूत्रसंस्रावमम्लपित्तं निहन्ति च ॥ ७४ ॥
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्धनम् ॥
आरोग्यपुत्रदं श्रेष्ठं कायाग्निबलवर्धनम् ॥ ७५ ॥
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्तितम् ॥
छागं पारावतं मांसं तित्तिरिः क्रकरः शशः ॥ ७६ ॥
कुलिङ्गाः[2] कृष्णसाराश्च तेषां मांसानि योजयेत् ॥
नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ॥ ७७ ॥
शुष्कमूलकजीवाख्यं पटोलं बृहतीफलम् ॥
फलं वार्ताकपक्वाम्रं[3] खर्जूरं स्वादुदाडिमम् ॥ ७८ ॥
ककारपूर्वकं यच्च मांसं चानूपसंभवम् ॥
वर्जनीयं विशेषेण खण्डखाद्यं प्रकुर्वता[4]* ॥ ७९ ॥

* ख.पुस्तके—पत्रत्वगेलानतचन्दनानां श्यामासशुण्ठीमधुकोत्पलानाम् ॥ सधात्रिवांशीद्विगुणोत्तराणां चूर्णं सिताक्षौद्रसमन्वितानाम् ॥१॥ खादेज्ज्वरे लोहितपित्तसर्वे कासक्षये शोणितमूत्रकृच्छ्रे ॥ रक्तेपितीनिष्ठीवति(?) शीतलेऽजे दाहे सद्यःस्मृतिविभ्रमे च ॥ २ ॥ एतद्धितं मूर्ध्नि गते च वाते श्वासे सहिक्कासहृदामये च ॥ मनोभितापे च ततोऽङ्गतापे योन्यामये सप्रदरेऽतिवेगे ॥ ३ ॥ रक्तेऽतिमात्रं पतिते मुखे च गुदेऽथ नासामुखमेढ्रयोनौ ॥ प्रोक्तं रक्तपित्तविनिग्रहार्थं चूर्णं विशिष्टेन महागदघ्नम् ॥ ४ ॥ पत्रकाद्यं चूर्णम् ॥ चन्दनं नलदं रोध्रमु[illegible]ीरं पद्मकेसरम् ॥ नागपुष्पं तथा बिल्वं भद्रमुस्तं सशर्करम् ॥ ॥ ५ ॥ ह्रीवेरं चैव पाठां च कुटजस्य फलं त्वचम् । शृङ्गवेरं चातिविषं धातकीसरसाञ्जनम् । ६ ॥ आम्रास्थि जन्तुसारश्च तथा मोचरसो भवेत् ॥ तण्डुलोदकसंयुक्तं क्षौद्रेण सह संयुतम् ॥ ७ ॥ हितं लोहितपित्तानामर्शःसु लोहितेषु च ॥ मूर्छातमोपसृष्टानां ज्वरार्तानां च दापयेत् ॥ ८ ॥ चलतां चाऽऽमगर्भाणां स्तम्भनं परमुच्यते ॥ अश्विभ्यां विहितं पूर्वं रक्तपित्तविनाशनम् ॥ ९ ॥ चन्दनादिचूर्णम् । इत्यधिकमत्र ।

१ क. घ. °हं रक्तसं° । २ क. घ. कुरङ्गाः । ३ घ. °कान्नं ख° । ४ घ. °र्वताम् ॥ ७९ ॥

वृषो वासा । मुण्डितिका मुण्डिनी । गायत्री खदिरः । **त्रिफलायास्त्वच इति ।** निरस्थित्रिफला । दिव्यौषधिर्मनःशिला कशीमूलं च । **माक्षिकेणेति ।** सुवर्णमाक्षिकेण । मनःशिलासुवर्णमाक्षिकाभ्यां प्रत्येकं मिलित्वा वा प्रलिप्य दग्ध्वा च लोहं मारणीयम् । लोहान्तरवदत्रापि पुटनादिक्रियेष्यत इति चक्रः । **रुक्मलोहस्येति ।** तीक्ष्णलोहस्य । वज्रपाण्ड्यादिलोहमपीह प्रशस्यम् । **खण्डतुल्यमिति ।** रक्तपित्ते मृदुद्रव्यस्य हितत्वात् । परेण घृतेन समं संबन्धाद्घृतवत्खण्डं षोडशपलं ज्ञेयम् । **अन्यस्त्वाह—** अनन्तरगतविधिपरित्यागे प्रमाणाभावाल्लोहे तुल्यं खण्डं द्वादशपलमिति । एवं प्रचारः प्रायेण । शुभा वंशरोचना । अश्मजतु शिलाजतु । त्वचं गुडत्वक् । **पलं मतमिति ।** शुभादीनां प्रत्येकं पलम् । त्रिफलादीनां प्रत्येकं द्विकर्षः । बिडालपदकं कर्षः । प्रचारस्तु पुनरितरलोहवदिहापि भक्षणे मानक्रमः । गव्यक्षीरानुपानं च चतुःषष्टिगुणं लोहान्तरे तथा दर्शनात् । **उक्तं हि**—अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधा इति । **ककारपूर्वकमिति ।** विहितक्रकरकुलिङ्गकादीन्विहाय यदन्यत्ककारपूर्वकं कपोतकालचटकादि तत्परित्याज्यम् । जीवाख्यं जीवशाकं स्वल्पमारिषाकारः । खण्डखाद्यलोहः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

**यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ॥**
**रक्तपित्ते हितं तच्च क्षतक्षीणहितं च यत् ॥ ८० ॥**

सुगमम् ॥ ८० ॥

**शालिषष्टिकगोधूमचणमुद्गमसूरिकाः॥**
**श्यामाकाश्च प्रियंगवश्च भोजनं रक्तपित्तिनः ॥ ८१ ॥**

सुगमम् ॥ ८१ ॥

**पटोलनिम्बवेत्राग्रतण्डुलीयादयो हिताः ॥**

सुगमम् ।

**पारावतकपोताद्याः शशैणहरिणास्तथा ॥ ८२ ॥**

सुगमम् ॥ ८२ ॥

**वृषस्य स्वरसं कृत्वा द्रव्यैरेभिः प्रयोजयेत् ॥**
**प्रियंगुमृत्तिकालोध्रमञ्जनं चेति चूर्णयेत् ॥ ८३ ॥**
**एतच्चूर्णं पाययेत्तद्रसैः क्षौद्रसमन्वितैः ॥**
**नासिकामुखपायुभ्यो यानि मेढ्राच्च वेगितम् ॥ ८४ ॥**
**रक्तपित्तं स्रवद्धन्ति सिद्ध एष प्रयोगराट् ॥**
**यच्च शस्त्रक्षतेनैव रक्तं तिष्ठति वेगितम् ॥**
**तदप्यनेन चूर्णेन तिष्ठत्येवावचूर्णितम् ॥ ८५ ॥**

सुगमम् ॥ ८३ ॥ ८४ ॥ ८५ ॥

सामान्योदितयोगेषु द्रव्यशक्तिं समीक्ष्य हि ॥
प्रयोज्यो रक्तपित्तादौ योगो वातादिजे गदे ॥ ८६ ॥

वातादिजे गद इति । सामान्योक्तोऽपि योगो रक्तपित्तादौ गदे वाताद्युद्रेके सति विशेष एव योज्यत इत्यर्थः ॥ ८६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां नवमो रक्तपित्ताधिकारः समाप्तः ॥ ९ ॥

## अथ दशमो राजयक्ष्माधिकारः ।

यक्ष्मरूपेषु पित्ताद्रक्तस्य चाऽऽगम इत्यभिधानाद्रक्तपित्तानन्तरं यक्ष्मा ।

शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ॥
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यतः ॥ १ ॥

"न शालिघृतगोधूमदधिदुग्धसमं भवेत् ।
किंचिदाजन्मसात्म्यत्वाद्द्रव्यं संतर्पणे हितम्" इति ॥ १ ॥

षडङ्गयूषमाह—

सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥
सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ॥ २ ॥
तेन षड्विनिवर्तन्ते विकाराः पीनसादयः ॥
द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् ॥
पादस्थं संस्कृतं चाऽऽज्ये षडङ्गो यूष उच्यते ॥ ३ ॥

यवकुलत्थावन्यद्रव्यापेक्षया प्रचुरौ देयौ । पिप्पली शुण्ठी च तावती देया यावतीभ्यां कटुत्वमात्रं स्यात् । एवमम्लत्वार्थं दाडिमामलकयोर्दानम् । एतच्च सर्वं सर्वद्विगुणमांसेन सहैकीकृत्याष्टगुणे जले क्वथनीयम् । तत्र पादस्थं घृतेन संस्कृतं ग्राह्यमिति वृन्दसंमतम् । चक्रमते तु षडङ्गपानीयन्यायेन द्रव्यं जलं च गृहीत्वाऽर्धशृतं कार्यम् । तेन सह सूदशास्त्रोक्तपरिभाषया परिमितसुपिष्टमांसं पक्त्वा यूषः साध्यः । यदाह चरकः—

"द्रव्याम्बुमानं पेयावत्सूदशास्त्रवशादिह ।
पलानि द्वादश प्रस्थे घनेऽथ तनुके च षट् ।
मांसस्य वटकं कुर्यात्पलमच्छतरे रसे" इति ।

---

१ क. घ. दाडिमामलकोपेतं ।

एवं सर्वत्र रसविधौ विधाद्वयी बोद्धव्या । वृन्दमते तनुप्रचारः । पीनसादय इति । प्रतिश्यायादयः । चरके हि—

"प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये ।
पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु" इत्यादि ।

ग्रन्थान्तरेऽप्ययं पठितः—तेनैत एव षड्विकारा इहाभिमताः। षडङ्गयूपः ॥२॥३॥

धान्याकपिप्पलीविश्वदशमूलीजलं पिबेत् ॥
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ ४ ॥

योगो वातकफोत्तरे । त्रयोदशाङ्गः ॥ ४ ॥

अश्वगन्धामृताभीरुदशमूलीबलावृषाः ॥
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः ॥ ५ ॥

अश्वगन्धेत्यादिक्काथः । असमासनिर्देशादिह पुष्करातिविषे प्रक्षेपः । अभीरुः शतावरी । सप्तदशाङ्गः ॥ ५ ॥

दशमूलीबलारास्नापुष्करैः सुरदारुभिः ॥
नागरैः क्वथितं पेयं क्षयकासादिशान्तये ॥ ६ ॥

सुगमम् ॥ ६ ॥

ककुभत्वङ्नागबलावानरिबीजानि चूर्णितं पयसि ॥
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ ७ ॥

ककुभोऽर्जुनः । नागबला गोरक्षतण्डुला । अस्याश्च मूलमिह । वानरी शूकशिम्बा। चूर्णमिदं सर्वं शर्करां च दुग्धे प्रक्षिप्य क्षीररसवदुत्कारिका साध्या । घृतमिदं भर्जनार्थम् । मधु शीते देयम् ॥ ७ ॥

मधुताप्यविडङ्गाश्मजतुलोहघृतामयाः ॥
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना ॥ ८ ॥

ताप्यं सुवर्णमाक्षिकम् । अश्मजतु शिलाजतु । लोहमगुरु । लेहोऽयं मधुना । सप्तामृतलेहः ॥ ८ ॥

कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान् ॥
मधुसर्पिर्युतो वाऽश्वगन्धाकृष्णासितोद्भवः ॥ ९ ॥

सुगमम् ॥ ९ ॥

शर्करामधुसंयुक्तं नवनीतं लिहन्क्षयी ॥
क्षीराशी लभते पुष्टिमतुल्ये वाऽऽज्यमाक्षिके ॥ १० ॥

अतुल्ये वाऽऽज्यमाक्षिके इत्यत्रापि लिहन्क्षीराशी लभते पुष्टिमिति संबध्यते॥१०॥

सितोपलातुगाक्षीरीपिप्पलीबहुलात्वचः ॥ ११ ॥
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥
चूर्णितं प्राशयेद्वाऽपि श्वासकासकफातुरम् ॥ १२ ॥
पार्श्वशूलिनमल्पाग्निं सुप्तजिह्वमरोचिनम् ॥
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे ॥ १३ ॥

सितोपला सितशर्करा । तुगाक्षीरी वंशरोचना । तदभावे तद्गुणा तवक्षीरी । एवं सर्वत्र । बहुला, एला । त्वक्, गुडत्वक् । अन्त्यादूर्ध्वं द्विगुणितमिति । अन्त्यायास्त्वच एको भागः । एलाया द्वौ । पिप्पल्याश्चत्वारः। तुगाक्षीर्या अष्टौ । सितोपलायाः षोडश । ऊर्ध्वमित्यनेन चेहातीतमुच्यते विवक्षावशात् । अत ऊर्ध्वमित्यादावूर्ध्वमित्यनेन नानामतमुच्यते । प्राशयेद्वेत्यनेन मधुघृतभक्षणं दर्शयति । हस्तपादांसदाहेष्वित्यादिफलश्रुतिं चरके भाविवासाघृतशतावरीघृताभ्यां सह योजयति । इति जज्जटः । सितोपलादेरेवेयं फलश्रुतिरितीशानः । सितोपलादिलेहः ॥ ११ ॥ १२ ॥ १३ ॥

दशमूलीशृतात्क्षीरात्सर्पिर्यदुदियान्नवम् ॥
तत्कणामधुसंयुक्तं घृतं स्वरविशोधनम् ॥ १४ ॥
शिरोंसपार्श्वशूलघ्नं श्वासकासज्वरापहम् ॥
सिद्धं जगति विख्यातं शोषिणां परमौषधम् ॥ १५ ॥

सुगमम् ॥ १४ ॥ १५ ॥

शतपुष्पां नतं कुष्ठं मधुकं देवदारु च ॥
पिष्ट्वा लेपः ससर्पिष्कः पृष्ठपार्श्वांसरुक्षु च ॥ १६ ॥

सुगमम् ॥ १६ ॥

चूर्णं काकुभमिष्टं वासकरसपरिभावितं बहून्वारान् ॥
घृतमधुसितोपलाभिर्लेह्यं क्षयकासरक्तपित्तहरम् ॥ १७ ॥

बहून्वारानिति । अन्यतो दर्शनात्सप्तवारान्भावयेत् ॥ १७ ॥

एलामन्थमाह—

एलाजमोदामलकाभयाक्षगायत्रिनिम्बासनशालसारान् ॥
विडङ्गभल्लातकचित्रकांश्च कटुत्रिकाम्भोदसुराह्वजांश्च ॥ १८ ॥
पक्त्वा जले तेन पचेत्तु सर्पिस्तस्मिन्सुसिद्धे त्ववतारिते च ॥
त्रिंशत्पलान्यत्र सितोपलाया दद्यात्तुगाक्षीरिपलानि षट् च ॥ १९ ॥
प्रस्थे घृतस्य द्विगुणं च दद्यात्क्षौद्रं ततो मन्थहतं विदध्यात् ॥
पलं पलं प्रातरतो लिहेच्च पश्चात्पिबेत्क्षीरमतन्द्रितश्च ॥ २० ॥

---

१ घ. °लीसृता° ।

**एतद्धि मेध्यं परमं पवित्रं चक्षुष्यमायुष्यतमं तथैव ॥**
**यक्ष्माणमाशु व्यपहन्ति नूनं पाण्ड्वामयं चापि भगंदरं च ॥२१॥**
**श्वासं च हन्ति स्वरभेदकासहृत्प्लीहगुल्मग्रहणीगदांश्च ॥**
**न चात्र किंचित्परिवर्जनीयं रसायनं चैतदुपास्यमानम् ॥ २२ ॥**

एलादिकान्सुराष्ट्रजातान्कषायकल्पेन विपाच्य तेन क्राथेन सर्पिर्विपचेदिति संबन्धः। पक्त्वा जले तेन पचेत्तु सर्पिरित्यभिधानात्। क्राथेनैव कवलेन चतुर्गुणेन साध्यम्। तस्मिन्घृते सिद्धे पूते शर्करायास्त्रिंशत्पलानि दद्यात्। तुगाक्षीर्याश्च षट् पलानि। **द्विगुणं च दद्यात्क्षौद्रमिति**। घृतप्रस्थापेक्षया द्विगुणं द्विप्रस्थप्रमितं क्षौद्रं मधु दद्यात्। अजमोदा यवानी। अक्षं विभीतकम्। गायत्री खदिरः। अरिष्टो निम्बः। असनः पीतशालो बीजक इति यावत्। शालः शङ्कुः। सारशब्दः खदिरादिभिः संबध्यते। उग्रा वचा। अम्भोदो मुस्तम्। सुराष्ट्रजा सौराष्ट्री मृत्तिका तुवरमृत्तिका। तुगाक्षीरी वंशरोचना। अन्ये वंशरोचनानुकारि पार्थिवं द्रव्यमाहुः। **मन्थहतमिति**। मन्थो मन्थानदण्डस्तेन विलोडितम्। अतोऽस्माद्रसायनात्। अतन्द्रितोऽनलसः। मेध्यं मेधाजनकम्। अत्र रसायने। एलामन्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

सर्पिर्गुडमाह—

**बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा ॥**
**पञ्चानां क्षीरिवृक्षाणां शृङ्गा मुष्ट्यंशका अपि ॥ २३ ॥**
**एषां कषाये द्विक्षीरे विदार्याजरसांशके ॥**
**जीवनीयैः पचेत्कल्कैरक्षमात्रैर्घृताढकम् ॥ २४ ॥**
**सितापलानि पूते च शीते द्वात्रिंशतं क्षिपेत् ॥**
**गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ २५ ॥**
**समाक्षिकं कौडविकं तत्सर्वं खजमूर्छितम् ॥**
**स्त्यानं सर्पिर्गुडान्कृत्वा भूर्जपत्रेण वेष्टयेत् ॥ २६ ॥**
**ताञ्जग्ध्वा पालिकान्क्षीरं मद्यं चानु पिबेत्कफे ॥**
**शोषे कासे क्षतक्षीणे श्रमस्त्रीभारकर्षिते ॥ २७ ॥**
**रक्तनिष्ठीवने तापे पीनसे चोरसः क्षते ॥**
**हिताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥**
**द्रोणे वारिगुडे चास्मिन्नथ षोडशिकं जलम् ॥ २८ ॥**

विदारी विदारीकन्दः। **पञ्चानां क्षीरिवृक्षाणामिति**। क्षीरिवृक्षाः पञ्च वटोदुम्बरपर्कटीपिप्पलगर्दभाण्डाः। शृङ्गा अविकसितपत्रमुकुलाः। मुष्ट्यंशकाः प्रत्येकम्। मुष्टिः पलम्। एवं बलादीनां त्रयोदश पलानि। एष्वष्टगुणजलेन जलशरावास्त्रयोदश।

पादशेषः शरावत्रयं पादः १ । कषायद्वैगुण्येन क्षीरशरावाः षट् पादद्वयम् । पलकषायसमांशत्वेन विदारीरसशरावत्रयं पादः १ छागमांसरसशरावाः ३ पादः १ एवं घृतम् । समद्रवेण पाक इतीशानः ।

"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशकं जलम् ।
पादशिष्टः कषायः स्यादेष क्वाथविधिः स्मृतः"

इति कृष्णात्रेयपरिभाषया षोडशगुणेन जलेन जलशरावाः २६ शेषशरावाः ६ पादौ २ क्षीरशरावाः १३ विदारीरसशरावाः ६ पादौ २ मांसरसशरावाः ६ पादौ २ एवं घृतात् ( ? ) द्विगुणं ( ? ) द्रवमिति मुनिदासः । जातूकर्णसंवादात्त्रयोदशपल एव क्वाथ्ये जलद्रोणं दत्त्वा षोडश शरावाः पादशेषाः । ततो द्विगुणं क्षीरम् । विदारीमांसरसौ मिलित्वा क्वाथसमौ । एवं चतुर्गुणद्रवेण पाक इति चक्रजिनदासौ । अत्र जातूकर्णः—

"वृश्चीरपञ्चमूलं बलां विदारीं वटादिशृङ्गांश्च ।
निष्क्वाथ्य च्छागदुग्धे छागविदारीरसे च समे ॥
जीवनीयगणकल्कैः पक्त्वा घृताढकम्" इत्यादि ।

इह क्वाथ्यद्रव्यमनियतमानमिति विशेषः । क्वाथस्तु स्नेहसम एव ज्ञेयः । केचिद्घृतापेक्षया क्षीरद्वैगुण्यादिकमाहुः । तन्त्रान्तरे तु क्षीरद्वयं गव्याजभेदात्पञ्चगुणं द्रवं च दर्शितम् । तद्यथा—पुनर्नवां बलां विश्वां पञ्चमूलीमित्यारभ्य—

"पलांशकाञ्जलद्रोणे पक्त्वा पादावशेषितम् ।
पात्रांशे छागगोक्षीरविदार्याजरसैः पृथक्" इत्यादि ॥

प्रचारस्तु प्रथमव्याख्यायाः क्वापि । खजमूर्छितमिति । खजो मन्थानदण्डः पञ्चाङ्गुलो वा हस्तः । भूर्जपत्रवेष्टनं चेह शक्त्युत्कर्षार्थम् । सर्पिर्गुडः ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

च्यवनप्राशमाह—

बिल्वाग्निमन्थश्योनाककाश्मर्यः पाटली बला ॥ २९ ॥
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरुः ॥ ३० ॥
अभया चामृता ऋद्धिर्जीवकर्षभकौ शठी ॥
मुस्ता[1] पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दनम् ॥ ३१ ॥
विदारी वृषमूलानि काकोली काकनासिका ॥
एषां पलोन्मितान्भागाञ्शतान्यामलकस्य च ॥ ३२ ॥

---

१ घ. मुस्तं ।

पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत् ॥
ज्ञात्वा गतरसं द्रव्यं रसं गृह्णीत गालितम् ॥ ३३ ॥
तच्चाऽऽमलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्धतुलां भिषक् ॥ ३४ ॥
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत् ॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् ॥ ३५ ॥
चतुष्पलं तुगाक्षीर्याः पिप्पल्या द्विपलं तथा ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेसरात् ॥ ३६ ॥
इत्ययं च्यवनप्राशः परमुक्तो रसायने ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते ॥ ३७ ॥
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्धनः ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ॥ ३८ ॥
पिपासां मूत्रशुक्रस्थान्दोषांश्चैवापकर्षति ॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम् ॥
च्यवनोऽस्य प्रयोगाच्च सुवृद्धोऽभूत्पुनर्युवा ॥ ३९ ॥
मेधां स्मृतिं कान्तिमनामयत्वमायुष्प्रकर्षं बलमिन्द्रियाणाम् ॥
स्त्रीषु प्रहर्षं परमाग्निदीप्तिं वर्णप्रसादं पवनानुलोम्यम् ॥ ४० ॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात् ॥
जराकृतं रूपमपास्य पूर्वं बिभर्ति रूपं नवयौवनानाम् ॥ ४१ ॥
केचिदिच्छन्ति मत्स्यण्ड्याः स्थाने तु सितशर्कराम् ॥
मृदुकल्कसमः पाको भृष्टधात्र्याः प्रशस्यते ॥ ४२ ॥

तामलकी भूम्यामलकी । जीवन्ती स्वनामख्याता वणिग्द्रव्यम् । उत्पलं नीलोत्पलं न तु कुष्ठं टीकाकारैरव्याख्यातत्वात् । काकनासा काउ आटोटिका यंगलताफलम् । जैज्जटस्तु काकनासा वासाफलवदिति । शतान्यामलकस्य च । पञ्चेति । आमलकफलगुडकानां पञ्च शतानि । एतानि च कर्पटे पोटली बद्ध्वा क्वाथ्यानि । तेन तानि सुग्रहाणि स्युः । ज्ञात्वा गतरसमिति । गतरसत्वं द्रव्याणां चतुर्भागावशेषेण क्वाथेन । किंचित्सुश्रुते वाग्भटे च पादावशेषरस इत्युक्तम् । निष्कुलमिति । शिरास्थिरहितम् । तच्च क्षौमादिघर्षेण कार्यम् । पलद्वादशक इति । मिलित्वा । समानमानयोस्तैलघृतयोरिह विरोधो न शङ्कनीयः । केवलयोस्तयोरुपयोगे विरोधदर्शनात् । मत्स्यण्डिका शर्करा । रविगुप्तेऽपि शर्करा चोक्ता । चक्रपाणिरप्याह—

"सिता मत्स्यण्ड्यलाभेऽत्र धात्र्याश्च मृदु भर्जनम् ॥
चतुर्भागे जले प्रायो द्रव्यं गतरसं भवेत्" इति ॥

मत्स्यण्ड्यभावे खण्डेनापि प्रचारो दृश्यते । पलमेकं मिलित्वा चातुर्जातकपलमेकम् । च्यवनो नाम मुनिस्तस्य प्राशश्च्यवनप्राशः प्राश्यत इति प्राशः कर्मणि* युट् । योपरुन्ध्यान्न भोजनमिति । या मात्रा प्रथमान्नकालोपयुक्ता जरणेन द्वितीयान्नकाले भोजनोपरोधं न कुरुत इत्यर्थः । यदुक्तम्—रुणद्धि नैकमाहारं सा मात्रा या जरं प्रतीति । कुटीप्रवेशादिति । वातातपपरिहारेणेत्यर्थः । च्यवनप्राशः ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥

अगस्तिहरीतकीमाह—

दशमूलीस्वयंगुप्ताशङ्खपुष्पीशठीबलाः ॥ ४३ ॥
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्ङ्गीं पुष्करमूलं च द्विपलांशं यवाढकम् ॥ ४४ ॥
हरीतकीशतं [1]चैव जले पञ्चाढके पचेत् ॥
यवैः स्विन्नैः कषायं तं पूतं [2]तत्राभयाशतम् ॥ ४५ ॥
पचेद्गुडतुलां दत्त्वा कुडवं च पृथग्घृतात् ॥
तैलात्सपिप्पलीचूर्णात्सिद्धे शीते च माक्षिकात् ॥ ४६ ॥
कुडवं पलमानं च चातुर्जातं सुचूर्णितम् ॥
लिह्याद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥ ४७ ॥
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम् ॥
पञ्च कासान्क्षयं श्वासं हिक्कां च विषमज्वरम् ॥ ४८ ॥
गुल्ममेहग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥
अगस्त्यभिहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ ४९ ॥
यथोदिष्टगुणं कुर्वत्पित्तं च कुरुते यदि ॥
तदा सायं गुडो योज्य एष एवाल्पमात्रया ॥ ५० ॥
पादशेषे कषाये च स्विन्नास्तास्ता हरीतकीः ॥
भर्जिता घृततैलेन पचेदालोहितोदयात्† ॥ ५१ ॥

स्वयंगुप्ता शूकशिम्बा । शङ्खपुष्पी स्वनामप्रसिद्धा । हरीतकीगुलकान्तमेकं पक्तव्यं न तु न्यूनाधिकं संयोगसंस्कारशक्तेरचिन्त्यत्वात् । तावतैव यथोक्तगुणलाभो भवति । यवैः स्विन्नैरिति । उपलक्षणार्थे तृतीया । यवस्विन्नता च चतुर्भागशेष एव

* अकर्तरि च कारके संज्ञायामिति घञिति वक्तव्यमिति मम भाति । † ग. पुस्तके-विहिता तिलतैलेन घृतेन विपचेदनु । पचेदालोहिते संख्या फलानां शतशोऽपला । इति पाठान्तरम् । •

१ घ. चैकं । २ घ. तच्चाभं ।

अङ्के भवति । तेन चतुर्भागावशिष्टमेव क्वाथं कुर्वन्ति । तन्त्रान्तरेऽप्युक्तम्—वार्योढकैः पञ्चभिः पादशेषं क्वाथमिति । हरीतकीगुडकशतं च सयवं कर्पटे पोटलीं बद्ध्वा क्वथनीयम् । उत्स्विन्नहरीतकीशतमितस्ततो विद्धावयवदाढ्यार्थं घृततैलकुडवयोर्मनाक्परिभर्जनीयम् । ततः क्वाथे गुडतुलां गालयित्वा छाणयित्वा च तत्र हरीतकीः प्रक्षिप्य पाकः कार्यः । तन्त्रान्तरीयसर्वार्थसिद्धहरीतक्यां हरीतकीभर्जनमुक्तम् । तद्दर्शनादिहापि हरीतक्याः परिभर्जनं कुर्वन्ति । अवतारणसमये च पिप्पलीचूर्णप्रक्षेपः । शीतीभूते चापरेद्युर्मधुदानम् । उष्णत्वे प्रक्षिप्तक्षौद्रस्य लेहस्य शीतभूतस्याभ्युपयोगे दोषः । नतु मधुनैव सह यत्र पाकः । तस्मात्सिद्धशीते मधु देयमिति वृद्धवैद्यानां कर्ममार्गमाहुः । घृततैलमधूनां कुडवोऽष्टौ पलानि । कुडवेऽपि द्रवद्वैगुण्यात् । तन्त्रान्तरे चात्र योगे मधुनश्च पलाष्टकमित्येवोक्तम् । लिह्यादिति । एवं प्रकृतिलेहं लिह्यात् । द्वे चाभये खादेदतो रसायनात् । अत्र गुडभक्षणमानं नोक्तं तद्योगान्तरदर्शनात्कल्पनीयम् । तथाहि भार्ङ्गीगुडे—भक्षयेदभयामेकां लेहस्यार्धपलं लिहेदित्युक्तम् । तेनेह द्विहरीतकीभक्षणात्सिद्धं तावद्गुडात्पलं भक्ष्यमिति योगव्याख्यायां माधवकरा(वा)चार्यः। अन्ये पुनरिह गुल्मोक्तदन्तीहरीतकीन्यायाद्गुडस्य द्विपलभक्षणं ब्रुवते । कश्चिदाह—द्वे अभये लिह्यात्खादेच्च द्वे एवाभये इति। तेनाभयासंबद्धं लेह्यगुडभागं लिह्यात्ततस्तदभयाद्वयं च खादेदित्यर्थः फलति । एतत्सर्वमेव न व्यवहरति ।किंतु बलानलाद्यपेक्षया गुडस्य षड्भिरष्टाभिर्वा माषकैर्हरीतकीगुडकेन चैकेन प्रथमं व्यवहर्तव्यं पश्चाद्यथोचिता वृद्धिरनयोरिति । अगस्त्यभिहितमित्यनेन महाजनसंप्रदायागतत्वादस्यां सिद्धफलत्वमभिधीयते । धन्यमिति । धनार्जनहेतोर्नैरुज्यस्य साधकतमत्वात् । एवं सर्वत्र । व्रीहिप्राण्यङ्गयोः क्वाथं व्युषितं दोषलं विदुरित्यभिधानात्क्वाथमेतद्व्युषितं न कुर्वन्ति । चक्रस्त्वाह—केवलव्रीहिजन्त्वङ्गक्वाथो व्युषित दोषल इति । अगस्तिहरीतकी ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

**जीवन्तीं कुटजं द्राक्षां फलानि कुटजस्य च ॥**
**शठीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम् ॥ ५२ ॥**
**नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ॥**
**पिप्पलीं च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥ ५३ ॥**
**एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम् ॥**
**रूपमेकादशविधं सर्पिरुग्रं व्यपोहति ॥ ५४ ॥**

सुगमम् । जीवन्त्याद्यं घृतम् ॥ ५२ ॥ ५३ ॥ ५४ ॥

१ क. घ. मधुकं । २ ङ. सर्पिरग्र्यं

पिप्पलीगुडसंसिद्धं छागक्षीरयुतं घृतम् ॥
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ ९५ ॥

सुगमम् । पिप्पलीघृतम् ॥ ९५ ॥

(* षडङ्गघृतमाह)—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम् ॥
[+कल्कोऽत्र पादिकः कार्यः क्षीरं चापि चतुर्गुणम् ] ॥ ९६ ॥

किमर्थमेतत्षट्पलं पुनरिहोक्तम् । उक्तमेवैतद्गुल्मचिकित्सिते । यद्यस्ति प्रयोजनमिहानेन तदस्यातिदेशो विषमज्वर इव कार्यो दातव्यं षट्पलं सर्पिः स्रोतसां शोधनमिति । ब्रूमः प्रयोगविशेषज्ञापनार्थमुक्तम् । गौल्मिके हि षट्पले घृते सममेव क्षीरमुक्तम् । इह त्वनिर्दिष्टपरिमाणत्वात्तत्स्नेहपाकपरिभाषया कथं नाम चतुर्गुणं प्रयुज्येतेत्येवमर्थं पुनर्वचनमिति । (*षडङ्गघृतम् । ) ॥ ९६ ॥

पराशरघृतमाह—

यष्टीबलागुडूच्यल्पपञ्चमूलीतुलां पचेत् ॥ ९७ ॥
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद्घृतम् ॥
धात्रीविदारीक्षुरसत्रिपात्रे पयसोऽर्मणे ॥ ९८ ॥
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ॥
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम् ॥ ९९ ॥

यष्ट्यादीनां मिलित्वा तुला ग्राह्या। शूर्प इति । द्रोणद्वयं शूर्प इति । तुलाद्रव्ये जलद्रोणमेकमुचितं किं तु निर्दिष्टत्वादिह तोयं द्रोणद्वयमेव देयम् । मांसतुलायां जलद्रोणद्वयम् । पात्र इ(मि)ति मिलित्वा । जीवनीयानि दश । एवं सर्वत्र विशेषानुक्तौ । पाराशरघृतम् ॥ ९७ ॥ ९८ ९९ ॥

छागलाद्यं घृतमाह—

छागमांसतुलां गृह्य साधयेन्नल्वणेऽम्भसि ॥
पादशेषेण तेनैव सर्पिः प्रस्थं विपाचयेत् ॥ ६० ॥
ऋद्धिर्वृद्धिश्च मेदे द्वे जीवकर्षभकौ तथा ॥
काकोली क्षीरकाकोली कल्कैः पृथक्पलोन्मितैः ॥ ६१ ॥
सम्यक्सिद्धं[2] च विज्ञाय शीते तस्मिन्प्रदापयेत् ॥
शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत् ॥ ६२ ॥

* इदं घपुस्तके न । + इदमर्धं घपुस्तके न । * एतद्धपुस्तके न ।

१ क. नीत्वा। २ घ. °क्सिद्धे त्ववतार्य शी° ।

पलं पलं पिबेत्प्रातर्यक्ष्माणं हन्ति दुस्तरम् ॥
क्षतक्षयं पञ्च कासान्पार्श्वशूलमरोचकम् ॥ ६३ ॥
स्वरक्षयमुरोरोगं श्वासं हन्यात्सुदारुणम् ॥
बल्यं मांसकरं वृष्यमग्निसंदीपनं परम् ॥ ६४ ॥

सुगमम् । छागलाद्यं घृतम् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

तोयद्रोणद्वितये मांसं छागस्य पलशतं पक्त्वा ॥
जलमष्टांशं सुकृतं तस्मिन्विपचेद्घृतप्रस्थम् ॥ ६५ ॥
कल्केन जीवनीयानां कुडवेन[1] तु मांससर्पिरिदम् ॥
पित्तानिलं निहन्यात्तज्जानपि रसकयोजितं पीतम् ॥ ६६ ॥
कासश्वासावुग्रौ यक्ष्माणं पार्श्वहृद्रुजं घोराम् ॥
अध्वव्यवायशोषं शमयति नातःपरं[2] किंचित् ॥ ६७ ॥

कल्केन जीवनीयानां कुडवेनेति । छागलाद्ये घृते पाठा ग्राह्या । मिलित्वा कुडवेन कल्केन । तज्जानपीति । पित्तानिलजान्रोगान् । रसकयोजितमिति । मांसरसकावचारितम् । छागलाद्यं घृतम् ॥ ६५ ॥ ६६ ॥ ६७ ॥

बलागर्भघृतमाह—

द्विपञ्चमूलस्य पचेत्कषाये प्रस्थद्वये मांसरसस्य चैके ॥
कल्कं बलायाः सुनियोज्य गर्भे सिद्धं पयःप्रस्थयुतं घृतं च ॥
सर्वाभिघातोत्थितयक्ष्मशूलक्षतक्षयं कासहरं प्रदिष्टम् ॥ ६८ ॥

बलागर्भे घृते दशमूलमिलितपलानि ५० जलशरावाः ३२ शेषशरावाः ५। मांसरसस्य चैक इति । मांसमिह छागस्य क्षयाहितत्वात्। प्रस्थ एके । बलागर्भघृतम् ॥६८॥

बलाद्यं घृतमाह—

बलां श्वदंष्ट्रां बृहतीं कलशीं धावनीं स्थिराम् ॥
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥ ६९ ॥
कृत्वा कषायं पेष्यार्थं दद्यात्तामलकीं शठीम् ॥
द्राक्षां पुष्करमूलं च मेदामामलकानि च ॥ ७० ॥
घृतं पयसि[3] तत्सिद्धं सर्पिर्ज्वरहरं परम् ॥
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥ ७१ ॥

कलशी पृश्निपर्णी । धावनी कण्टकारी । स्थिरा शालिपर्णी । इह क्वाथस्य क्षीरस्य च प्रत्येकं घृताद्द्वैगुण्यं चक्रेणोक्तम् ।

तद्यथा—"चरकोदितवासाद्यघृतानन्तर्यमुक्तितः ।
वदन्तीह घृतात्काथं पयश्च द्विगुणं पृथक्" इति ॥

१ ग. न मां । २ ग. नैवापरं । ३ ग. पयश्च ।

अस्यार्थः—घृतं चरके ज्वरचिकित्सिते वासाघृतानन्तरं पठ्यते । तत्र क्काथः पयश्च द्विगुणं प्रत्येकम् । तत्साहचर्यादिहापि तथैवेति । घृतसमं क्षीरं क्काथस्त्रिगुण इत्यन्ये । बलाद्यं घृतम् ॥ ६९ ॥ ७० ॥ ७१ ॥

चन्दनाद्यं तैलमाह—

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम् ॥ ७२ ॥
मञ्जिष्ठा सरलं दारु शठ्येलापूतिकेसरम् ॥
पत्रं चैलं मुरा मांसी कङ्कोलं वनिताऽम्बुदम् ॥ ७३ ॥
हरिद्रे सारिवे तिक्तालवङ्गागुरुकुङ्कुमम् ॥
त्वग्रेणुनालिका चैभिस्तैलं मस्तुचतुर्गुणम् ॥ ७४ ॥
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्धनम् ॥
अपस्मारज्वरोन्मादपापालक्ष्मीविनाशनम् ॥
आयुष्पुष्टिकरं चैव वशीकरणमुत्तमम् ॥ ७५ ॥

अम्बु वालकम् । वाप्यं कुष्ठम् । पूतिः खटासिका । चैलं सिह्लकम् । मुरा स्वनामख्यातं वणिग्द्रव्यम् । वनिता प्रियंगुः । तिक्ता लता कस्तूरिका । रेणु रेणुकम् । नलिका स्वनामख्याता । लाक्षारससममिति । लाक्षारसो लाक्षाक्काथः । चन्दनाद्यं तैलम् ॥ ७२ ॥ ॥ ७३ ॥ ७४ ॥ ७५ ॥

ज्वरसंतापदौर्बल्ये लाक्षातैलं प्रयोजयेत् ॥
बालरोगाधिकारोक्तं पारंपर्योपदेशतः ॥ ७६ ॥

सुगमम् ॥ ७६ ॥

क्षतक्षयस्योपेक्षितस्य यक्ष्महेतुत्वादिहैवाधिकारे क्षतक्षयचिकित्साभिधानम् । क्षतादुरःक्षतात्तथा क्षयाच्छुक्रौजसोः क्षयाज्जातो व्याधिर्वातप्रधानः कारणे कार्योपचारात्क्षतक्षय उच्यते ।

बलाऽश्वगन्धा[1] श्रीपर्णी बहुपत्री पुनर्नवा ॥
पयसा नित्यमभ्यस्ताः शमयन्ति क्षतक्षयम् ॥ ७७ ॥

श्रीपर्णी गम्भारी । अस्याः फलमिह । बहुपुत्री शतावरी । बलादयो व्यस्ताः समस्ता वा कल्कीकृताः क्षीरेण पेयाः ॥ ७७ ॥

इक्ष्वालिकाविश्वगन्धापद्मकेसरचन्दनैः[2] ॥
घृतं पयोमधुयुतं संधानार्थं पिबेत्क्षयी[3] ॥ ७८ ॥

इक्ष्वालिका वनखण्डिका ॥ ७८ ॥

१ क. 'श्वदंष्ट्रा श्री' । २ क. 'काबिसग्रन्थिप' । घ. 'काविषग्रन्थिप' । ३ क. घ. पिबेत्क्षती ।

घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुपादकल्कम् ॥
हृद्रोगशूलक्षतरक्तपित्तशोषानिलासृक्शमयत्युदीर्णम् ॥ ७९ ॥

नागबलेति । नागानामिव बलं यस्याः सा नागबला । बलाद्यं घृतम् ॥ ७९ ॥

हितमत्र विशेषेण खण्डकूष्माण्डसंज्ञितम् ॥ ८० ॥

सुगमम् ॥ ८० ॥

शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवितम् ॥
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥ ८१ ॥

सुगमम् ॥ ८१ ॥

नित्यं स्वदेहपूजी भक्तो भैषज्यदेवतागुरुषु ॥
छागं मांसपयोऽश्नञ्जीवति यक्ष्मी चिरं धृतिमान् ॥ ८२ ॥

सुगमम् ॥ ८२ ॥

स्वरभेदादीनां चिकित्सितमतिदेशेनाऽऽह—

उपद्रवांश्च स्वरवैकृतादीञ्जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ॥

यस्य यदात्मीयं स्वरभेदादिशास्त्रं तत्प्रसमीक्ष्येत्यर्थः ॥

इदानीं परिहार्यमाह—

शोकं स्त्रियः क्रोधमसूयनं च त्यजे-

क्रोधः पराभिद्रोहलक्षणः । असूया परगुणेषु दोषारोपणम् ॥

इदानीं दैवव्यपाश्रयां चिकित्सामाह—

दुदारान्विषयान्भजेच्च ॥
गुरून्द्विजातींस्त्रिदशांश्च पूजये-
त्कथाश्च पुण्याः शृणुयाद्द्विजेभ्यः ॥ ८३ ॥

उदारा विषया धर्माविरुद्धा मनोनुकूलाश्च शब्दादयः । गुरून्पितृमातृप्रभृतीन्द्विजातीन्विप्रान् । त्रिदशान्देवान् । पुण्याः कथा वेदोक्ता रुद्रस्तुतिप्रभृतयः ॥ ८३ ॥

कासातिसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥
त्रिभिर्वा पीडितं लिङ्गैः श्वासकासासृगामयैः* ॥ ८४ ॥
भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ॥
स्वरभेदश्च जायेत षड्रूपे राजयक्ष्माणि ॥ ८५ ॥

त्रिभिर्वा पीडितमतःपरं विद्यादिति शेषः । षड्भिर्वा रूपैस्त्रिभिर्वा रूपैर्यक्ष्मिणं

---

* ख. पुस्तके—जह्यात्तं छर्दितं जन्तुं बलमांसपरिक्षयम् । इत्यधिकम् ।

१ घ. °तकासानि° । २ क. मलायत्तं । ३ क. शुक्रायत्तं । ४ घ. °यतां च । ५ ङ. °नीं दैव° ।

पीडितं विद्यादित्यर्थः । श्वासकासासृगामयास्त्रीणि रूपाणि कासो ज्वरो रक्तपित्तमिति तन्त्रान्तरीयाः ॥ ८४ ॥ ८५ ॥

परं दिनसहस्रं तु यदि जीवति मानवः ॥
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः ॥ ८६ ॥

सुगमम् ॥ ८६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां दशमो राजयक्ष्मचिकित्साधिकारः समाप्तः ॥ १० ॥

## अथैकादशः कासाधिकारः ।

यक्ष्मरूपेषु कासपाठात्कासोपेक्षया च यक्ष्मसंभवाद्यक्ष्मानन्तरं कासः ।

पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः ॥
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ १ ॥

पञ्चमूलीकृतः क्वाथ इति । पञ्चमूली महती । उष्णवीर्यतया विशेषेण वातप्रत्यनीकत्वात् । रसान्नमश्नत इति । मांसरसोपसिक्तमन्नं रसान्नम् ॥ १ ॥

भार्ङ्गीद्राक्षाशठीशृङ्गीपिप्पलीविश्वभेषजैः ॥
गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ २ ॥

गुडतैलयुतो लेह इत्यत्र तैलं कटु ग्राह्यम् । एवं वक्ष्यमाणयोगेऽपि ॥ २ ॥

चूर्णिता विश्वदुःस्पर्शाशृङ्गीद्राक्षाशठीसिताः ॥
लीढ्वा तैलेन वातोत्थं कासं जयति दुस्तरम् ॥ ३ ॥

सुगमम् । वाते ॥ ३ ॥

बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम् ॥
पित्तकासहरं पेयं शर्करामधुयोजितम् ॥ ४ ॥

सुगमम् ॥ ४ ॥

शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ॥
कषायेण शृतं क्षीरं पिबेत्समधुशर्करम् ॥ ५ ॥

शरादिपञ्चमूलस्येति । तृणपञ्चमूलस्य । कषायेण शृतं क्षीरमिति । षडङ्गपरिभाषया कृतार्धशृताम्बुना चतुर्गुणेन क्षीरं साध्यम् । किंचाग्निबलाद्यनुरूपतो गृहीतपलत्रिकर्षार्धपलद्रव्यक्वाथपरिभाषया यावान्क्वाथो भवति तावतैव यथोचितं क्षीरं

साधनीयम् । क्काथापन्नक्षीराच्चतुर्गुणः कार्योऽत्यर्थगौरवभयात् । अथवा क्षीरपाकपरिभाषया द्रव्यदुग्धतोयानां मानं व्यवस्थाप्य द्रव्यतोयाभ्यां च क्काथं कृत्वा तेन क्षीरं साधनीयम् । एवं सर्वत्र क्काथेन क्षीरसाधने ॥ ५ ॥

द्राक्षामधुकखर्जूरपिप्पलीमरिचान्वितम् ॥
पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥ ६ ॥

सुगमम् ॥ ६ ॥

खर्जूरपिप्पलीद्राक्षासिताला जाः समांशकाः ॥
मधुसर्पिर्युतो लेहः पित्तकासहरः परः ॥ ७ ॥

सुगमम् ॥ ७ ॥

नवाङ्गयूपमाह—

मुद्गामलाभ्यां यवदाडिमाभ्यां कर्कन्धुना मूलकशुण्ठकेन ॥
शुण्ठीकणाभ्यां च कुलत्थकेन यूषो नवाङ्गः कफकासहन्ता ॥८॥

यवामलकदाडिमकर्कन्धुमूलकशुण्ठकैः षडङ्गपरिभाषयाऽर्धशृतं कृत्वा मुद्गकुलत्थौ युक्त्या प्रचुरौ दत्त्वा यूषः साध्यः । पश्चात्कटुत्वापादकं कणाचूर्णदानम् । किंवा सकलमेव द्रव्यं यथोचितमात्रया गृहीत्वा क्काथविधानेन पञ्चमुष्टिवद्यूषः कार्यः । नवाङ्गयूषः ॥ ८ ॥

पौष्करं कट्फलं भार्ङ्गीपिप्पलीविश्वसाधितम् ॥
पिबेत्क्काथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥ ९ ॥

सुगमम् ॥ ९ ॥

स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ॥
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ १० ॥

सुगमम् ॥ १० ॥

पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे ॥
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥ ११ ॥

सुगमम् ॥ ११ ॥

कट्फलादिमाह—

कट्फलं कत्तृणं भार्ङ्गी मुस्तं धान्यवचाभयाः ॥
शुण्ठी पर्पटकं शृङ्गी सुराह्वं च जले शृतम् ॥ १२ ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ॥
कण्ठरोगेषु मुख्येषु श्वासहिक्काज्वरेषु च ॥ १३ ॥

१ क, घ. 'मलक' । २ घ. 'गे मुखे शूले श्वा' ।

कत्तृणं गन्धतृणम्। अयं योगस्तालीसाद्यश्च सायमुपयोज्यः। कट्फलादि ॥ १२ ॥ ॥ १३ ॥

तालीसाद्यमाह—

तालीसपत्रं मरिचं नागरं पिप्पली शुभा ॥
यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ॥ १४ ॥
पिप्पल्यष्टगुणा[1] चात्र प्रदेया सितशर्करा ॥
श्वासकासारुचिच्छर्दिप्लीहहृद्दत्पार्श्वशूलनुत् ॥ १५ ॥
पाण्डुज्वरातिसारघ्नं[2] मूढवातानुलोमनम् ॥
कल्पयेद्गुटिकां चैव चूर्णं पक्त्वा सितोपलाम् ॥ १६ ॥
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ॥
वातश्लेष्मकृते कासे तालीसाद्यं प्रयोजयेत् ॥
पित्तयुक्ते भवेच्छ्रेष्ठं वंशरोचनयाऽन्वितम् ॥ १७ ॥

शुभेति पिप्पलीविशेषणं न तु शुभा वंशरोचना समानतन्त्रे हारीतादावदृष्टत्वात्। तथाहि हारीतः-

'तालीसं मरिचं शुण्ठी पिप्पल्योऽक्षांशकोत्तराः।
त्वगेलेऽर्धांशके दद्याच्छर्कराष्टपलं भवेत्'' इत्यादि।

जातूकर्णेनाप्युक्तम्—

"तालीसमरिचनागरकृष्णाः कर्षोत्तरास्त्वगेले च।
अर्धांशे द्विकुडवसितं गुटिका विपाच्य शतम्'' इति।

**यथोत्तरं भागवृद्ध्येति**। तालीसपत्रस्यैको भागः। मरिचस्य द्वौ भागौ। नागरस्य त्रयो भागाः। पिप्पल्याश्चत्वारः। **त्वगेले चार्धभागिके इति**। त्वगेलयोः प्रथमभागापेक्षया प्रत्येकमर्धभागत्वम्। **पिप्पल्यष्टगुणेति**। पिप्पलीभागादष्टगुणशर्करा ग्राह्येत्यर्थः। **पक्त्वा सितोपलामिति**। सितशर्करां पक्त्वा। तत्रायं गुटिकापाकविधिः। शर्करासमेन जलेन किंचिदधिकेन वा शर्करां विलाप्य पूत्वा क्वाथयेत यावदीषत्तन्तुली भवेत्। तत्र द्रव्यचूर्णमावाप्य गुटिकां कुर्यादित्यर्थः। **मूढवातानुलोमनमिति**। तत्र मूढवातं केचित्तु वर्णयन्ति—यः कृच्छ्रप्रमेहयोर्द्वयोरप्यन्तरालं भजते कदाचिन्मूत्रं विबध्यते कदाचिदतिवर्तते स मूढवात इति। **पित्तयुक्ते भवेच्छ्रेष्ठं वंशरोचनयाऽन्वितमिति**। पित्तानुबन्धे शुभाशब्देन वंशरोचना ग्राह्येत्यर्थः। एषा च टिप्पणी **वृन्दस्य तन्त्रान्तरदर्शनात्**। तदुक्तम्— वांशीपिप्पलीशुण्ठीनां तथोषणतालीसयोरित्यादि। तालीसाद्यो मोदकः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

१ घ. चिहरं तच्चूर्णं दीपनं परम्। हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम्। छर्द्यतीसारशूलघ्नं।
२ घ. °चैतच्चूर्णं।

वासकस्वरसः पेयो मधुयुक्तो हिताशिना ॥
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ १८ ॥

सुगमम् ॥ १८ ॥

कासे च क्षतजे बल्यैर्बृंहणैर्जीवनैरपि ॥
शमनं पित्तकासोक्तैरन्यैश्च मधुरौषधैः ॥ १९ ॥

सुगमम् ॥ १९ ॥

मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी ॥ २० ॥
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ॥
लेहयेन्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ २१ ॥

**द्विगुणा च तुगाक्षीरीति** । एकभागापेक्षया द्विगुणा वंशरोचना । **सिता सर्वैश्चतुर्गुणेति** । सर्वचूर्णतश्चतुर्गुणा शर्करेत्यर्थः ॥ २० ॥ २१ ॥

पिप्पली पद्मकं लाक्षा संपक्वं बृहतीफलम् ॥
घृतक्षौद्रयुतो लेहः क्षतकासनिबर्हणः ॥ २२ ॥

सुगमम् ॥ २२ ॥

मुखे धृताऽभया शुण्ठी कणया वा विभीतकम् ॥
विभीतकमथैकं वा कासश्वासौ व्यपोहति ॥ २३ ॥

सुगमम् ॥ २३ ॥

पथ्याशुण्ठीघनगुडैर्गुटिकां धारयेन्मुखे ॥
सर्वेषु श्वासकासेषु केवलं वा विभीतकम् ॥ २४ ॥

घनो मुस्तकः । गुडः सर्वतो द्विगुणः । वैद्यप्रचारके द्विगुण एव गुडो दर्शितः । हरीतकीनागरमुस्तचूर्णं गुडेन तुल्यं गुटिका विधेया । इत्यत्रापि तन्त्रान्तरे तुल्यशब्दं सहार्थे वर्णयन्ति । **गुटिकां धारयेन्मुख इति** । गुटिकेयं यथा द्रवति तथा तथाऽभ्याहरणीया । न पुनरिमां सहसैवाभ्यवहरेत् । कण्ठशोधकत्वादस्य । **केवलं वा विभीतकमिति** । विभीतकमस्थिसहितमेव धार्यम् ॥ २४ ॥

मनःशिलाले मरिचमांसीमुस्तेङ्गुदैः पिबेत् ॥
धूमं तस्यानु च पयः सुखोष्णं सगुडं पिबेत् ॥ २५ ॥
एष कासान्पृथग्द्वंद्वसर्वदोषसमुत्थितान् ॥
शतैरपि प्रयोगाणामसाध्यान्साधयेद्द्रुतम् ॥ २६ ॥

अलं हरितालम् । इङ्गुदी पुत्रजीवकः । तस्य च फलं ग्राह्यम् । इह क्षीरमनुपानं धूमस्य तीक्ष्णत्वादोजःक्षयभयेन ॥ २५ ॥ २६ ॥

१ घ. क्षयका° । २ घ. °प्रसार° ।

मनःशिलालिप्तदलं बदर्यातपशोषितम् ॥
सक्षीरं धूमपानं च महाकासनिवारणम्* ॥ २७ ॥

बदर्यातपशोषितमिति । मनःशिलालिप्तदलमातपे शोषितमिति योजना । संहितया च निर्देशः पूर्वत्रासिद्धविधेरनित्यत्वात्(?) ॥ २७ ॥

कर्षः कर्षांशपलं पलद्वयं स्यात्ततोऽर्धकर्षश्च ॥
मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम् ॥ २८ ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविनिर्मुक्ताः ॥
अपि पूयं छर्दयतां तेषामिदमौषधं *परमम् ॥ २९ ॥

कर्ष इत्यादिना निर्देशो यथाक्रमेण । कर्षरूपोंऽशः कर्षांशः । कर्षार्धमिति क्वचित्पाठः । वैद्यप्रसारके पिप्पल्याः कर्षार्धं दर्शितम् । इदमौषधं पथ्यमिति । प्रकरणाद्धूममिदमौषधमित्याहुः । चक्रेण तु स्वसंग्रहे भक्ष्यचूर्णप्रस्तावे लिखितोऽयं योगः । वैद्यप्रसारकेऽपि भक्षणमस्योक्तम् । इति मरीचादिवटिका ॥ २८ ॥ २९ ॥

अर्कच्छल्लीशिले तुल्ये ततोऽर्धेन कटुत्रिकम् ॥
चूर्णितं वह्निनिक्षिप्तं पिबेद्धूमं च योगवित् ॥ ३० ॥
भक्षयेदथ ताम्बूलं पिबेद्दुग्धमथाम्बु वा ॥
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः ॥
कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ॥ ३१ ॥

शिला मनःशिला । ततोऽर्धेन कटुत्रिकमिति । तयोरुभयोरर्धेन मिलितं त्रिकटु । ॥ ३० ॥ ३१ ॥

लवङ्गजातीफलपिप्पलीनां भागान्प्रकल्प्याक्षसमानमीषाम् ॥
पलार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥ ३२ ॥
सितासमं चूर्णमिदं प्रसह्य रोगांस्त्विमानाशु बलान्निहन्ति ॥
कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥ ३३ ॥

सुगमम् । समशर्करं चूर्णम् ॥ ३२ ॥ ३३ ॥

दशमूलघृतमाह—

दशमूलीकषायेण भार्ङ्गीकल्कं पचेद्घृतम् ॥
दक्षतित्तिरिनिर्यूहे तत्परं वातकासजित् ॥ ३४ ॥

दक्षतित्तिरिनिर्यूह इति । दक्षः कुक्कुटः । दक्षतित्तिरिभ्यां मिलित्वा क्वाथः । दशमूलक्वाथेन दक्षतित्तिरिनिर्यूहेण च मिलित्वा चातुर्गुण्यम् । दशमूलघृतम् ॥ ३४ ॥

---

* ख. पुस्तके—विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् । स्विन्नमग्नौ हरेत्कासं ध्रुवमास्यविधारितम् ॥ १ ॥ इत्याधिकमत्र । * अत्र टीकानुरोधेन पथ्यमिति स्यात् ।

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ॥
पुष्कराह्वशठीबिल्वसुरसव्योषहिङ्गुभिः ॥ ३५ ॥
पयोनुपानं तत्पेयं कासे वातकफात्मके ॥
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ३६ ॥

दशमूलाढकमि(इ)ति । दशमूलस्य शेषक्वाथाढके किंवा क्वाथः क्वाथ्यसमो मत इति वचनाद्दशमूलमेवाऽऽढकम् । सुरस इतिवन्नाम । दशमूलाद्यं घृतम् ॥३५॥३६॥

समूलपत्रशाखायाः कण्टकार्या रसाढके ॥ ३७ ॥
घृतप्रस्थे बलाव्योषविडङ्गशठिचित्रकैः ॥
सौवर्चलयवक्षारबिल्वामलकपौष्करैः ॥ ३८ ॥
वृश्चीव(र)बृहतीपथ्यायवानीदाडिमर्द्धिभिः ॥
द्राक्षापुनर्नवाचव्यदुरालम्भाम्लवेतसैः ॥ ३९ ॥
तामलकीभार्ङ्गीरास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तत्सर्वकासेषु हिक्काश्वासेषु शस्यते ॥
कण्टकारीघृतं[1] सर्वकफव्याधि[2]विनाशनम् ॥ ४० ॥

सुगमम् । बृहत्कण्टकारीघृतम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पले रसे ॥
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ ४१ ॥

कण्टकारीगुडूच्योः प्रत्येकं पलानि ३० मिलित्वा पलानि ६० जलशरावाः(?) शेषशरावाः १६। कण्टकारीघृतम् ॥ ४१ ॥

रास्नाद्यं घृतमाह—

द्रोणेऽपां साधयेद्रास्नादशमूलीशतावरीः ॥ ४२ ॥
पलिकान्मानिकांशांस्त्री[3]न्कुलत्थं बदरं यवम् ॥
तुलार्धं छागमांसस्य पादशेषेण तेन च ॥ ४३ ॥
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः ॥ ४४ ॥
सर्वेषु[4] वातरोगेषु यथावस्थं प्रयोजयेत् ॥
पञ्च कासाञ्छिरःकम्पं योनिवङ्क्षणवेदनाम् ॥ ४५ ॥

१ क. घ. °तं सिद्धं क° । २ क. घ. °धिनिषूदनम् । ३ घ. °स्त्रीञलस्थान्बदरान्यवान् । तु° । ४ घ. समीक्ष्य ।

सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलाञ्जयेत् ॥
तथा श्वासं क्षयं चैव पार्श्वशूलमरोचकम् ॥ ४६ ॥

पलिकानिति । रास्नादित्रयेण लगति दशमूलं प्रत्येकं पालिकम् । मानिकांशानिति । अष्ट पलानि । रास्नाद्यं घृतम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

जावनायदशकमाह—

जीवकर्षभकौ मेदे काकोल्यौ मधुकं सहे ॥
जीवन्ती जीवनीयोऽयं मधुरो जीवनो गणः ॥ ४७ ॥

सहे माषपर्णीमुद्गपर्ण्यौ । जीवन्ती पटोलसदृशैः पत्रैः कन्दवती पश्चिमे देशे प्रसिद्धैव । लाटदेशे स्थूलवल्लिविलक्षणैव ॥ ४७ ॥

घृतं रास्नाबलाव्योषश्वदंष्ट्राकल्कपाचितम् ॥
कण्टकारीरसे पानात्पञ्चकासनिषूदनम् ॥ ४८ ॥

सुगमम् । कण्टकारीघृतम् ॥ ४८ ॥

दशमूलषट्पलकमाह—

दशमूलीचतुष्प्रस्थे रसे प्रस्थोन्मितं हविः ॥
सक्षारैः पञ्चकोलैस्तु कल्कितं साधु साधितम् ॥
कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिबर्हणम् ॥ ४९ ॥

यवक्षारादिषट्कल्कः पृथक्पलिकः । दशमूलषट्पलकमितिनामसंकीर्तनात् । दशमूलषट्पलकं घृतम् ॥ ४९ ॥

व्योषान्तिकामाह—

तालीसवह्निदीप्यकचविकाम्लवेतसव्योषैः ॥
तुल्यैस्त्रिसुगन्धियुतैर्गुडेन गुटिका प्रकर्तव्या ॥ ५० ॥
कासश्वासारोचकपीनसहृत्कण्ठवाग्विरोधेषु ॥
ग्रहणीगुदोद्भवेषु च गुटिका व्योषान्तिका नाम ॥ ५१ ॥

वह्निश्चित्रकः । दीप्यकं यवानिका । त्रिसुगन्धियुतैरिति । सर्वचूर्णाच्चतुर्थभागेन मिलितं त्रिसुगन्धं व्याचक्षते । व्योषान्तिका नामेति । अत्रान्तशब्द उपान्तमाह । व्योषस्यान्तस्थितत्रिसुगन्धात्पूर्वमवस्थितत्वात् । व्योषान्तिका गुटिका ॥ ५० ॥ ५१ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकादशः कासाधिकारः समाप्तः ॥ ११ ॥

## अथ द्वादशो हिक्काश्वासाधिकारः ।

---

वेगवदूर्ध्वगतवातयोगित्वसाधर्म्यात्कासानन्तरं हिक्काश्वासौ ।

कोलमज्जाञ्जनं लाजातिक्ताकाञ्चनगैरिकम् ॥
कृष्णा धात्री सिता शुण्ठी कासीसं दधिनाम च ॥ १ ॥
पाटल्याः सफलं पुष्पं कृष्णा खर्जूरमुस्तकम् ॥
षडेते पादिका लेह्या हिक्काघ्ना मधुसंयुताः ॥ २ ॥

कोलमज्जा बदरास्थिमध्यम् । अञ्जनं सौवीराञ्जनमाहुः । तिक्ता कटुरोहिणी । काञ्चनगैरिकमुत्तमलोहितगैरिकम् । कासीसं स्वनामख्यातम् । दधिनाम कपित्थफलम् । दधिना सहेति पाठान्तरम् । कासीसं दधि च ना पुरुषः सह लिह्यात् । योगषट्कम् ॥ १ ॥ २ ॥

मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता ॥
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम्* ॥ ३ ॥

सुगमम् । नावनत्रयम् ॥ ३ ॥

स्तन्येन मक्षिकाविष्ठा नस्यं वाऽलक्तकाम्बुना ॥
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥ ४ ॥

सुगमम् ॥ ४ ॥

मधुसौवर्चलोपेतं मातुलुङ्गरसं पिबेत् ॥
हिक्कार्तो मधुना लिह्याच्छुण्ठीधात्रीकणान्वितम् ॥ ५ ॥

सुगमम् ॥५ ॥

कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम् ॥ ६ ॥

सुगमम् ॥ ६ ॥

प्राणावरोधतर्जनविस्मापनशीतवारिपरिषेकैः ॥
चित्रैः कथाप्रयोगैः शमयेद्धिक्कां मनोभिघातैश्च ॥ ७ ॥

**मनोभिघातैरिति ।** मनोरुजाकरैः शोकादिभिः । तर्जनादिविधिश्च विक्षोभयन्नपि वायुं प्रभावात्प्रकृतिं नयतीति ज्ञेयम् ॥ ७ ॥

हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते ॥
ऊर्ध्वाधः शोधनं शक्ते दुर्बले शमनं मतम् ॥ ८ ॥

---

* ख. पुस्तके—शर्करा शृङ्गवेरं च गैरिकं मूत्रमाविकम् ॥ गुडार्द्रकं च दातव्यं हिक्काघ्नं नावनत्रयम् ॥ १ ॥ इत्यधिकमत्र ।

सुगमम् ॥ ८ ॥

हिक्काश्वासी पिबेद्भार्ङ्गीं सविश्वामुष्णवारिणा ॥
नागरं वा सिताभार्ङ्गीसौवर्चलसमन्वितम् ॥ ९ ॥

सुगमम् ॥ ९ ॥

अभयानागरकल्कं पुष्करयवशूकमरिचकल्कं वा ॥
तोयेनोष्णेन पिबेद्धिक्की श्वासी च तच्छान्त्यै ॥ १० ॥

सुगमम् ॥ १० ॥

तृषितो दशमूलस्य क्वाथं वा देवदारुणः ॥
मदिरां वा पिबेद्युक्त्या हिक्काश्वासप्रपीडितः[1] ॥ ११ ॥

तृषितो दशमूलस्य क्वाथमिति । षडङ्गकल्पनयाऽर्धशृतशीतीकृतं क्वाथम् ॥११॥

शृङ्गीकटुत्रिकफलत्रिककण्टकारीभार्ङ्गीसपुष्करजटा लवणानि पञ्च ॥
चूर्णं पिबेदशिशिरेण जलेन हिक्काश्वासोर्ध्ववातकसनारुचिपीनसेषु॥१२

सपुष्करजटेति । जटा मूलम् । पुष्करमूलाभावे सर्वत्र कुष्ठम् । अशिशिरेण जलेनेति । उष्णाम्बुना ॥ १२ ॥

शठीचोरकजीवन्तीत्वङ्मुस्तं पुष्कराह्वयम् ॥
सुरसस्तामलक्येलापिप्पल्यगुरुनागरम् ॥ १३ ॥
वालकं च समं चूर्णं कृत्वाऽष्टगुणशर्करम् ॥
सर्वदा तमके श्वासे हिक्कायां च प्रयोजयेत् ॥ १४ ॥

चोरकं चोरपुष्पी । सुरसः पर्णासः । अष्टगुणशर्करमिति । एकभागादष्टगुणा शर्करा ॥ १३ ॥ १४ ॥

कासमर्दकपत्राणां यूषः सौभाञ्जनस्य च ॥
शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः ॥ १५ ॥

यूषत्रये यूषकरणार्थं वातश्लेष्महरः कुलत्थो देयः । शिम्बीधान्यं विना यूषव्यपदेशाभावात् । तत्रौषधस्यैको भागः । त्रयः शिम्बीधान्यस्य । पाकसिद्ध्यनुरूपं च जलं देयम् । यूषः क्वाथ एवोच्यत इत्यन्यः । यथा सुश्रुते तुषोदकेऽजशृङ्गीक्वाथ एव यूषशब्देनोच्यते ॥ १५ ॥

यत्किंचित्कफवातघ्नमुष्णं वातानुलोमनम् ॥
भेषजं पानमन्नं[2] वा हिक्काश्वासेषु तद्धितम् ॥ १६ ॥
अमृतानागरफञ्जीव्याघ्रीपर्णासिसाधितः क्वाथः ॥
पीतः सकणाचूर्णः कासश्वासौ जयत्याशु ॥ १७ ॥

---

१ क. ध. प्रखेदितः । २ क. ध. मन्थं वा ।

फञ्जी ब्राह्मणयष्टिः । व्याघ्री कण्टकारी ॥ १६ ॥ १७ ॥

सनागराभयातुल्या कासश्वासौ व्यपोहति ॥
दशमूलीकषायश्च पुष्करेणावचूर्णितः ॥ १८ ॥
कासश्वासप्रशमनः पार्श्वहृच्छूलनाशनः ॥
कुलत्थनागरव्याघ्रीवासाभिः क्वथितं जलम् ॥
पीतं पुष्करसंयुक्तं[1] श्वासकासनिवारणम् ॥ १९ ॥

सनागराभयातुल्येति । कल्कोऽयमुष्णाम्बुना पेयः ॥ १८ ॥ १९ ॥

गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत् ॥
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत् ॥ २० ॥

गुडं कटुकतैलेनेति । लेहो वातोल्बणे मनाक्पुराणे ॥ २० ॥

द्राक्षाहरीतकीकृष्णाकर्कटाख्यादुरालभाः ॥
विलिहन्मधुसर्पिर्भ्यां श्वासान्हन्ति सुदारुणान् ॥ २१ ॥

सुगमम् ॥ २१ ॥

हिंस्राद्यं घृतमाह—

हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥ २२ ॥
द्विक्षीरं सर्पिषः प्रस्थं चतुर्गुणजलान्वितम् ॥
कोलमात्रैः[2] पचेत्तद्धि श्वासकासौ व्यपोहति ॥ २३ ॥
अर्शांस्यरोचकं[3] गुल्मं शकृद्भेदं क्षयं तथा ॥
कोलस्थानेऽत्र कर्षः स्यादन्यतोदृष्टहेतुना ॥ २४ ॥

हिंस्रा कलावडा । कोलमात्रैरष्टमाषकमानैः । कोलस्थानेऽत्र कर्षः स्यादन्यतोदृष्टहेतुनेति । कार्तिकमतमिदं वृन्देन लिखितम् । कार्तिकः किल कोलशब्दोपादानेऽप्यत्र कल्काल्पत्वाद्वृद्धकाश्यपसंवादेन कर्षं व्याचष्टे । तथाच वृद्धकाश्यपः—

"विडङ्गव्योषपूतीकवराहिंस्राग्निभिः पचेत् ।
कार्षिकैः सर्पिषः प्रस्थं द्विक्षीरं चतुरम्बु च ॥
तत्पानाच्छ्वासकासघ्नं शोथदुर्नामगुल्मनुत्" इति ।

हिंस्राद्यं घृतम् ॥ २२ ॥ २३ ॥ २४ ॥

भार्ङ्गीगुडमाह—

शतं गृहीत्वा[4] भार्ङ्ग्यास्तु दशमूल्यास्तथा परम् ॥
शतं हरीतकीनां च पचेत्तोये चतुर्गुणे ॥ २५ ॥

---

१ क. घ. °क्तं हिक्काश्वास° । २ ग. कर्षमात्रैः । ३ क. घ. °ने च क° । ४ क. घ. संगृह्य ।

पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते ॥
आलोड्य च तुलां पूतां गुडस्य त्वभयां ततः ॥ २६ ॥
पुनः पचेच्च मृद्वग्नौ यावल्लेहत्वमागतम् ॥
शीते च मधुनश्चात्र षट्पलानि प्रदापयेत् ॥ २७ ॥
त्रिकटु त्रिसुगन्धं च पालिकं च पृथक्पृथक् ॥
कर्षद्वयं यवक्षारं संचूर्ण्य प्रक्षिपेत्ततः ॥ २८ ॥
भक्षयेदभयामेकां लेहस्यार्धपलं लिहेत् ॥
श्वासं सुदारुणं[1] हन्ति कासं पञ्चविधं तथा ॥ २९ ॥
स्वरवर्णप्रदो लेहो जठराग्निप्रदीपनः ॥
हरीतकीशतैकस्य वारिप्रस्थमिहाधिकम् ॥ ३० ॥

**पचेत्तोये चतुर्गुण इति ।** चतुर्गुणं तोयं द्वैगुण्यादष्टगुणं ग्राह्यम् । सम्यग्वीर्यसंक्रान्तिश्च द्रव्याणामित्थमेव भवति । तेन क्काथार्थं तोयशरावशतत्रयं भवति देयं हरीतक्या अथ तेनैव वारिणा पाकः । हरीतकीशतैकस्य वारिप्रस्थमिहाधिकमिति वदतस्तु वृन्दस्याद्विगुणमेव चतुर्गुणमभीष्टमित्युन्नीयते ।

**चक्रेणाप्युक्तम्**—"पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते ।
हरीतकीशतस्यात्र प्रस्थत्वादाढकं जलम्" इति ॥

प्रचारस्तु प्रायो वृन्दमते । भार्ङ्गीगुडः ॥ २९ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ३० ॥

कुलत्थगुडमाह—

कुलत्थो दशमूलं च तथैव द्विजयष्टिका ॥
शतं शतं च संगृह्य जलद्रोणे विपाचयेत् ॥ ३१ ॥
पादावशेषे तस्मिंस्तु गुडस्यार्धतुलां क्षिपेत् ॥
शीतीभूते च पक्के च मधुनोऽष्टौ पलानि च ॥ ३२ ॥
षट्पलानि तुगाक्षीर्याः पिप्पल्याश्च पलद्वयम् ॥
त्रिसुगन्धिसुगन्धं तं खादेदग्निबलं प्रति ॥ ३३ ॥
कासं श्वासं ज्वरं हिक्कां नाशयेत्तमकं तथा ॥
योगसंदर्शनादत्र वृद्धवैद्योपदेशतः ॥ ३४ ॥
जलं चतुर्गुणं देयमल्पत्वाद्द्रोणवारिणः ॥
मानसांनिध्यसंवादाद्द्विपलं त्रिसुगन्धिनः ॥ ३५ ॥

**योगसंदर्शनादिति ।** कुलत्थगुडान्तरसंवादात् ।

---

[1] घ. स्रोष ।

तद्यथा—'कुलत्थानां पलशतं दशमूलशतं तथा ।
शतं ब्राह्मणयष्ठ्याश्च चतुर्गुणजले शृतम् ॥
पादशेषेषु पूते च गुडस्यार्धतुलां पचेत् ।
पाकं ज्ञात्वाऽवतार्यैव सुशीते श्लक्ष्णचूर्णितम् ॥
षट्पलं तु तुगाक्षीर्याः पिप्पल्या द्विगुणं तथा ।
मधुनः कुडवं दद्यात्त्रिसुगन्धिपलद्वयम्'' इत्यादि ।

**चक्रेण** तूक्तम्-प्रतिशतं द्रोणनियमाज्ज्ञेयं द्रोणत्रयं त्विहेति । व्यवहारस्तु प्रायश्चतुर्गुणजलेनैव द्विगुणेन । मानसांनिध्यात्तन्त्रान्तरसंवादाच्चेत्यर्थः । **द्विपलं त्रिसुगन्धिन** इति । मिलित्वा । कुलत्थगुडः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां द्वादशो हिक्काश्वासाधिकारः समाप्तः ॥ १२ ॥**

---

## अथ त्रयोदशः स्वरभेदाधिकारः ।

प्राणोदानदुष्टिसाधर्म्याद्धिक्काश्वासानन्तरं स्वरभेदमाह । स्वरस्य प्रकृतिभूतस्य भेदोऽन्यथाभावः स्वरभेदः । वातिके स्वरभेदे पथ्ययोगमाह—

**आद्ये कोष्णजलं पेयं जग्ध्वा घृतगुडौदनम् ॥**

**आद्य इति** । वाते । केचिदमुं योगं पैत्तिके मन्यन्ते । तन्न । समानतन्त्रे वातिकस्वरभेदेऽस्य प्रयुक्तत्वात् ॥

पैत्तिकस्वरभेदचिकित्सितमाह—

**क्षीरानुपानं पित्तोत्थे पिबेत्सर्पिरतन्द्रितः ॥ १ ॥**

**पिबेत्सर्पिरिति** । एतत्सामान्योक्तमपि सुश्रुते श्वासोक्तं वासाघृतं पित्तकासोक्तं वा विदारिगन्धोत्पलसारिवेत्यादिनोक्तं ज्ञेयमिति वर्णयन्ति । अतन्द्रितोऽनलसः ॥ १ ॥

कफजस्वरभेदचिकित्सामाह—

**पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम् ॥**
**पिबेन्मूत्रेण मतिमान्कफजे स्वरसंक्षये ॥**

पिप्पलीत्यादियोगचूर्णं गोमूत्रेण पेयम् । **स्वरसंक्षय इति** । स्वरभेदे ॥

मेदोजस्वरभेदे कफचिकित्सामतिदिशन्नाह—

**स्वरोपघाते मेदोत्थे कफवद्विधिरिष्यते ॥ २ ॥**

**कफवद्विधिरिति** । कफवत्कफजस्वरभेदवत् । तेनेहापि पिप्पल्यादिचूर्णं गोमूत्रेण पेयम् ॥ २ ॥

क्षयजसांनिपातिकयोरसाध्ययोरपि चिकित्सा कर्तव्येत्याह—

**क्षयजे सर्वजे वाऽपि प्रत्याख्यायाऽऽचरेत्क्रियाम् ॥ ३ ॥**

**क्षयजे सर्वजे वाऽपीति** । अत्रापिशब्दान्मेदोजसहजयोरपि ग्रहः । तन्त्रान्तरे ह्येतावप्यसाध्यावुक्तौ । तद्यथा—

"क्षीणस्य वृद्धस्य कृशस्य वाऽपि चिरोत्थितो यश्च सहोपजातः ।
मेदस्विनः सर्वसमुद्भवश्च स्वरोपघातो न स सिद्धिमेति" इति ।

प्रत्याख्याय निराकृत्यासाध्यत्वेनाऽऽचरेत्कुर्यात् । क्रिया चेह क्षयजे क्षयकासोक्ता । सर्वजे च प्रत्येकदोषोक्ता मिलिता कार्या । केचिदुभयोरपि सामान्यं चिकित्सितं कुर्वन्तीत्याहुः ॥ ३ ॥

**चव्याम्लवेतसकटुत्रिकतिन्तिडीकतालीसजीरकतुगादहनैः समांशैः ॥**
**चूर्णं गुडप्रमृदितं त्रिसुगन्धियुक्तं वैस्वर्यपीनसकफारुचिषु प्रशस्तम् ॥४॥**

तिन्तिडीकं महार्द्रकम् । तुगा वंशरोचना । दहनश्चित्रकः । गुडोऽत्र सर्वचूर्णसमः । त्रिसुगन्धि प्रत्येकमेकभागाच्चतुर्थांशेनेति **वृद्धः** । मिलितचूर्णचतुर्थांशेन मिलित्वा त्रिसुगन्धि ॥ ४ ॥

**बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ॥**
**स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ ५ ॥**

बदरीपत्रपिष्टं ससैन्धवबहुघृते तलित्वा तेनैव घृतेनाऽऽलोड्य लेहः। घृतेनैव पूपिकया व्यवहारः ॥ ५ ॥

अत्युच्चभाषणोत्थस्वरभेदस्य वातात्मकत्वे सत्यपि निमित्तभेदमाश्रित्य विशिष्टचिकित्सामाह—

**शर्करामधुमिश्राणि शृतानि मधुरैः सह ॥**
**पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ ६ ॥**

मधुरैः काकोल्यादिभिः शृतानि पयांसि शर्करामधुमिश्राणीति पिण्डार्थः। पयांसीत्यत्र बहुवचनं गोमहिष्यजानां क्षीरपरिग्रहाय । पयःसाधनं क्षीरपरिपाकपरिभाषया ॥ ६ ॥

**व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः ॥**
**सर्पिः स्वरोपघातं हन्यात्कासं च पञ्चविधम् ॥ ७ ॥**
**शुष्कद्रव्यमुपादाय स्वरसानामसंभवे ॥**
**उदकेऽष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ ८ ॥**

आढकं द्रव्यचूर्णानामासुतं सलिलाढके ॥
अहोरात्रस्थितं कुर्यात्स्वरसं स्वरसेऽसति ॥

इति हेमाद्रौ । कण्टकारीघृतम् । यः श्वासकासविधिरादित एव वोक्तस्तं चाप्यशेषमवतारयितुं यततेति सुश्रुतवचनं केचिदत्रापि पठन्ति । तस्यार्थः। अन्यदपि स्वरभेदचिकि-

त्सितमतिदेशेनाऽऽह—यः श्वासकासेत्यादि । श्वासकासप्रतिषेधे सामान्येनाऽऽदौ यः श्वासकासविधिरुद्दिष्टस्तं विधिं सर्वमपि यथादोषं कर्तुं यतेतेति पिण्डार्थः ॥ ७ ॥ ॥ ८ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठ-
दत्तकृतायां व्याख्याकुसुमावल्याख्यायां त्रयोदशः
स्वरभेदाधिकारः समाप्तः ॥ १३ ॥

## अथ चतुर्दशोऽरोचकाधिकारः ।

---

ऊर्ध्वविकृतिसाधर्म्यात्स्वरभेदानन्तरमरोचकः। इदानीं वातजारोचकचिकित्सामाह—

**वान्तो वचाद्भिरनिले विधिवत्पिबेच्च स्नेहोष्णतोयमदिरान्यतमेन चूर्णम् ॥**
**कृष्णाविडङ्गयवभस्महरेणुभार्ङ्गीरास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥ १ ॥**

वान्तो वचाद्भिर्वचाक्वाथेन कृतवमनः पेयादिक्रमेण जातबलश्चूर्णं पिबेत् । न तु सहसेति ज्ञेयम् । अनिल इति । अनिलजेऽरोचके कारणे कार्योपचारात् । अनिलजेऽपि वमनमिह कफस्थानगतत्वेन । स्नेहादिबहुद्रवविकल्पः सात्म्यापेक्षः । स्नेहं तैलमिह वातहरत्वात् । यवभस्म यवक्षारः । एलमेलवालुकम् । पदेष्वपि पदैकदेशप्रवृत्तेरिति कार्तिकः । एलेत्यन्यः । लवणोत्तमं सैन्धवम् । इदं चूर्णं वमनैः शुद्धाशयस्य देयम् ॥ १ ॥

पित्तजारोचकचिकित्सामाह—

**पित्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं लेहः ससैन्धवसितामधुसर्पिरिष्टः ॥**

पित्त इति । पित्तजारोचक उपचारात् । मधुरैः काकोल्यादिभिः । अत्र मदनफलमपि प्रक्षिपन्ति ॥

कफजारोचकचिकित्सामाह—

**निम्बाम्बुवामितवतः कफजेऽनुपानं राजद्रुमाम्बु मधुना सह दीप्यकाढ्यम् ॥**

निम्बाम्बु निम्बक्वाथः । निम्बाम्बुना वामितवतः पुंसः । राजद्रुमाम्बु किरमालकक्वाथः समधुरजमोदाढ्यश्चानुपानं स्यात् । कृतभोजनस्येति शेषः । समानतन्त्रदर्शनात् । निम्बाम्बुच्छर्दितवत इत्यत्राऽऽगमशासनस्यानित्यत्वेन तुगागमाभावात्केवलश्छकारः । तेन न

१ ङ. ाते वचासुवमनं कृतवान्पिबे° । २ ङ. °म्बुच्छर्दितवेतक° ।

च्छन्दोभङ्गः । कार्तिकस्त्वाह राजद्रुम आरग्वधादिगणोऽधिगन्तव्यः । कफाधिकारे तस्यैवोचितत्वात् । मधुनेति । सहार्थे तृतीया । अन्ये तु–दीप्यकाढ्यमिति । दीप्यकं यवानिका तेनाऽऽढ्यं तद्बहुलमित्याहुः ॥

कफजारोचकेऽतिदेशेन चिकित्सितमाह—

**चूर्णं यदुक्तमथवाऽनिलजे तदेव**

अनिलजे यच्चूर्णमुक्तं कृष्णादि तदेवेह राजद्रुमाम्बुना पिबेत् । अत्रोक्तस्नेहादिद्रवेणानुपाने प्रत्यनीकता न स्यादिति व्याख्यानयन्ति । अयं च विधिर्वातानुबन्धे सति । केवलकफे वातविधेरनर्हत्वात् ॥

सांनिपातिकारोचकचिकित्सामाह—

**सर्वैश्च सर्वकृतमेवमुपक्रमेत ॥ २ ॥**

**सर्वैश्च सर्वकृतमिति** । प्रत्येकदोषोक्तं भेषजं मेलयित्वा सर्वजमरोचकमुपचरेदित्यर्थः । डल्लणस्तु व्याख्याति । **सर्वैरिति** । वातादिजारोचकहरैः पूर्वोक्तैरेव सर्वजं सांनिपातिकमरोचकमेवमिति पूर्ववद्वमनादि कारयित्वेति यावत् । उपक्रमेत प्रत्याख्यायेति शेषः । असाध्यत्वात्तस्य ॥ २ ॥

**वस्तिं समीरणे पित्ते विरेकं वमनं कफे ॥**
**कुर्याद्धृद्यानुकूलानि हर्षणं च मनोघ्नजे ॥ ३ ॥**

बस्तिविरेकाविमौ वमनानन्तरं कार्यौ । वमनं सर्वास्वरुचिषु कफस्थानगतत्वेन हितम् । **हर्षणं च मनोघ्नज इति** । मनोघ्नजे मनोरुजाहेतुशोकादिजे । हर्षणं चोपलक्षणम् । तेन कामादिजे भयादिकमपि कार्यम् ॥ ३ ॥

इदानीं पञ्चमारोचकचिकित्सामाह—

**इच्छाविनाशभयजेषु तु बाधकेषु**
**भावान्भवाय वितरेत्खलु शक्यरूपान् ॥**

**बाधकेष्विति** । प्रस्तुतत्वादरोचकेषु । **भावानिति** । हेतुविपरीतान्पदार्थान्भवायार्थवशाद्रुचेरुद्भवाय वितरेद्दद्यात् । कीदृशान्भावान् । शक्यरूपान्प्राप्यान् ॥

अप्राप्येष्वभीष्टविषयेषु कर्तव्यमाह—

**अर्थेषु चातिपतितेषु पुनर्भवाय पौराणिकैः श्रुतिपथैरनुमानयेत्तम् ॥ ४ ॥**

अतिपतितेष्वेकान्तविनष्टेषु पुनर्भवाय पुनरुद्भवाय पौराणिकैः पुराणप्रतीतैः श्रुतिपथैर्वाक्यैः श्रुतिः श्रवणं सैव पन्था मार्गो येषां तानि तैरिति व्याख्यानात् । अनुमानयेत्प्रतिबोधयेत् । पौराणिकश्रुतिशतैरनुमानयेतेति केचित्पठन्ति नलरामयुधिष्ठिरोपाख्यानैरन्यैश्च तथाविधैरनुमानयेदिति व्याख्यानयन्ति ॥ ४ ॥

**सात्म्यान्स्वदेशचरितान्विविधांश्च भक्ष्या-**
**न्पानानि मूलफलखाडवरागलेहान् ॥**
**सेवेद्रसांश्च विविधान्विविधैः प्रयोगै-**
**र्भुञ्जीत चापि लघुरूक्षमनःसुखानि ॥ ५ ॥**

सात्म्यान्सुखकरान् । **स्वदेशचरितानिति** । निजदेशानुरूपान् । **भक्ष्यान्पानानी-त्यादि** । पानानि पानकानि । अत्रापि विविधानीति योज्यम् । तानि यथाभिलाषमम्लफ-लादिसंस्कृतानि कर्पूरचातुर्जातादिसुरभीणि कार्याणि । मूलमार्द्रकादि । फलमाम्रादि । खाडवो मधुराम्लसुरभिद्रव्यसंयोगः ।

**रागः**—"सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः ॥
जम्बूफलरसैर्युक्तो रागो राजिकयाऽन्वितः" ।

इत्यनेनोक्तः । लेहा अम्लादिफलरसोद्भवाः । रसान्मांसरसान् । विविधान्मधुरादि-प्रकारान् । भुञ्जित चापि लघुरूक्षमनःसुखानीत्यनेन लघुरूक्षभोजनोपदेशः कफस्थान-गतत्वादरोचकानाम् । अत एव वातपित्तजयोरप्यरोचकयोर्वमनमुपदिष्टम् । मनःसुखं मनोनुकूलम् । केचित्सात्म्यातिसात्म्यदेशरोगर्तुप्रकृत्यादीनवेक्ष्य भक्ष्यादीनद्यादिति मन्यन्ते ॥ ५ ॥

**अम्लिका गुडतोयं च त्वगेलामरिचान्वितम् ॥**
**अभक्तच्छन्दरोगेषु शस्तं कवलधारणम् ॥ ६ ॥**

अम्लिका तिंतिडिः । अम्लिकागुडतोये त्वगेलामरिचचूर्णप्रक्षेपः ॥ ६ ॥

**कुष्ठसौवर्चलाजाजीशर्करामरिचं विडम् ॥ ७ ॥**
**धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥**
**लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ॥ ८ ॥**
**आर्द्रदाडिमनिर्यासश्चाजाजीशर्करायुतम् ॥**
**सतैलमाक्षिकाश्चैते चत्वारः कवलग्रहाः ॥**
**चतुरोऽरोचकान्हन्युर्वाताद्येकजसर्वजान् ॥ ९ ॥**

**आर्द्रदाडिमनिर्यास इति** । आर्द्रदाडिमफलस्वरसः ॥ ७ ॥ ८ ॥ ९ ॥

**त्रीण्यूषणानि त्रिफला रजनीद्वयं च चूर्णीकृतानि यवशूकविमिश्रितानि ॥**
**क्षौद्रान्वितानि वितरेन्मुखधावनार्थमन्यानि तिक्तकटुकानि च भेषजानि ॥१०**

त्रीण्यूषणानि त्रिकटुकम् । यवशूको यवक्षारः । वितरेद्दद्यात् । **मुखधावनार्थ-मिति** । घर्षणेन मुखशोधनमित्यर्थः । **डल्हणो** मुखबोधनार्थमिति पाठं पठित्वा मुखबोधे सत्यरोचकहानिरिति भावः । अवलेहप्रयोग इति व्याख्यानयति । **अन्यानि तिक्तकटु-कानीति** । त्वगेलारहितानीति वदन्ति ।

यदुक्तम्—"त्वगेला रहितं सर्वं कटुतिक्तमरोचकी ।
लिह्यात्क्षौद्रेण संयुक्तमल्पमल्पं पुनः पुनः" इति ॥ १० ॥

कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाडिमम् ॥
सौवर्चलगुडक्षौद्रं सर्वारोचकनाशनम् ॥ ११ ॥

अस्य योगस्य गुटिका चतुर्माषकमाना मुखे धार्या ॥ ११ ॥

यवानीखाडवमाह—

यवानी तिन्तिडीकं च नागरं चाम्लवेतसम् ॥ १२ ॥
दाडिमं बदरं चाम्लं कार्षिकाण्युपकल्पयेत् ॥
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ॥ १३ ॥
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ॥ १४ ॥
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ॥
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत्* ॥ १५ ॥

बदरं चाम्लमिति । अम्लं बदरम् । वराङ्गं गुडत्वक् । पिप्पलीनां शतं चैकमिति । पिप्पलीगुडकशतम् । एवं मरिचस्यापि गुडकशतद्वयम् । एतच्चूर्णं मुखे धृतं शनैः शनैर्गिलनीयम् । यवानीखाडवः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुर्दशोऽरोचकाधिकारः समाप्तः ॥ १४ ॥

## अथ पञ्चदशश्छर्द्यधिकारः ।

अरोचकस्य पञ्चविधत्वात्तथा छर्द्यामप्यरोचकसद्भावादरोचकानन्तरं छर्दिः ।

आमाशयोत्क्लेशभवा हि सर्वाश्छर्द्यो मता लङ्घनमेव तस्मात् ॥
प्राक्कारयेन्मारुतजां विमुच्य संशोधनं वा कफपित्तहारि ॥ १ ॥

*व्र.पुस्तके—सूक्ष्मैला केसरं त्वक्च पत्रतालीसकं तुगा । पृथ्वीका दाडिमं धान्यं जीरकं चार्धकार्षिकम् ॥ १ ॥ पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । मरिचं दीप्यकं चैव वृक्षाम्लं चाम्लवेतसम् ॥ २ ॥ अजमोदाऽजगन्धा च दधित्थं चेति कार्षिकम् । प्रदेयमिह शुद्धायाः शर्करायाश्चतुष्पलम् ॥ ३ ॥ चूर्णमग्निप्रसादं स्यात्परमं रुचिवर्धनम् । प्लीहकासमथार्शांसि श्वासशूलं ज्वरं वमिम् ॥४॥ निहन्ति दीपयत्यग्निं बलवर्णप्रदं परम् । वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम् ॥५ ॥ सूक्ष्मैलाद्यं चूर्णम् । इत्यधिकमत्र ।

आमाशयोत्क्लेशभवा हीति। हिशब्दो हेतौ। यस्मादामाशयोत्क्लेशजा छर्दिरामाशयमुत्क्लिश्य दोषैर्जन्यत इति तात्पर्यार्थः। आमाशयसमुत्थे च रोगे स्थानापेक्षयाऽऽमकफहरं लङ्घनादिकं हितं तस्माल्लङ्घनमवाऽऽदौ कुर्यादित्यर्थः। मारुतजां विमुच्येत्यनेन लङ्घनशोधनयोरपवादः। वातजाया आमाशयसमुत्थत्वेन लङ्घनसाध्ये विद्यमानेऽपि कफे वातस्य लङ्घनशोधनाभ्यां प्रकोपः क्षिप्रं महात्ययकारकः स्यादिति मत्वा तयोर्निषेधः। लङ्घनमल्पे दोषे बलीयसि च शोधनमिति व्यवस्था। संशोधनं वा कफपित्तहारीति। कफहारि शोधनं वमनम्। पित्तहारि शोधनं विरेचनम्। वमनं च व्याधिविपरीतकारि भेषजमतीसारे विरेचनवत्। सुश्रुतेऽप्युक्तम्। छर्दिषु बहुदोषासु वमनं हितमुच्यत इति ॥ १ ॥

वातजवमीचिकित्सितमाह—

हन्यात्क्षीरोदकं पीतं छर्दिं पवनसंभवाम् ॥

क्षीरोदकमित्यत्र क्षीरघृतमिति पाठं पठति डल्लणः क्षीरघृतं क्षीरमथनादुद्धृतं क्षीरयुक्तं वा घृतमिति व्याख्याति ॥

ससैन्धवं पिबेत्सर्पिर्वातच्छर्दिनिवारणम् ॥ २ ॥

ससैन्धवं पिबेत्सर्पिरिति। सर्पिः पक्वमेव ॥ २ ॥

मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥

मुद्गामलकयूषो वा ससर्पिष्क इति। सर्पिरिह यूषसंतलनार्थम् ॥

यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ॥ ३ ॥

पञ्चमूलीकृतामिति। पञ्चमूली महतीति चन्द्रिकाकारः। स्वल्पेति चक्रपाणिः ॥ ३ ॥

पित्तात्मिकायामनुलोमनार्थं द्राक्षाविदारीक्षुरसैस्त्रिवृत्स्यात् ॥

द्राक्षाविदारीक्षुरसैस्त्रिवृत्स्यादिति। द्राक्षादिरसैः प्रत्येकं त्रिवृद्योज्या ॥

कफाशयस्थं त्वतिमात्रवृद्धं पित्तं हरेत्स्वादुभिरूर्ध्वमेव ॥ ४ ॥

कफाशयस्थमिति। आमाशयोरसी इह कफस्थानम्। तत्रस्थम्। स्वादुभिरिति। द्राक्षादिभिः। ऊर्ध्वमेवेति। वमनेनैव ॥ ४ ॥

शुद्धस्य काले मधुशर्कराभ्यां लाजैश्च मन्थं यदि वाऽपि पेयाम् ॥
प्रदापयेन्मुद्गरसेन वाऽपि शाल्योदनं जाङ्गलजै रसैर्वा* ॥ ५ ॥

यदिवाऽपि पेयामिति। मन्दाग्निं प्रति पेया ज्ञेया ॥ ५ ॥

*ख. पुस्तके—पथ्याक्षधात्रीमगधोषणानां चूर्णं सलाजाञ्जनकोलमध्यम्। छर्दिं निहन्त्याशु समाक्षिकं तु सत्यूषणं वाऽपि कपित्थमध्यम् ॥ १ ॥ इत्यधिकमत्र।

चन्दनेनाक्षमात्रेण संयोज्याऽऽमलकीरसम् ॥
पिबेन्माक्षिकसंयुक्तं छर्दिस्तेन निवर्तते ॥ ६ ॥

संयोज्याऽऽमलकीरसमिति । चन्दनकर्षाच्चतुर्गुणमामलकीरसम् ॥ ६ ॥

कषायो भृष्टमुद्गस्य सलाजमधुशर्करः ॥
छर्द्यतीसारतृड्दाहज्वरघ्नः संप्रकाशितः ॥ ७ ॥

कषायो भृष्ट मुद्गस्येति । मुद्गं भृष्ट्वा कषायविधिना कषायः कार्यः । अत्र लाजमधुशर्कराणां प्रक्षेपः । शीतकषायोऽयमित्यन्ये ॥ ७ ॥

हरीतकीनां चूर्णं च लिह्यान्माक्षिकसंयुतम् ॥
अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्तते ॥ ८ ॥
क्राथः पर्पटजः पीतः सक्षौद्रश्छर्दिनाशनः ॥
गुडूचीत्रिफलारिष्टपटोलीक्वथितं जलम् ॥
सक्षौद्रं शर्करायुक्तं छर्दिपित्ताम्लनाशनम् ॥ ९ ॥

पित्ताम्लसंभवामित्यम्लपित्तजाम् ॥ ८ ॥ ९ ॥

कफात्मिकायां वमनं प्रशस्तं सपिप्पलीसर्षपनिम्बतोयैः* ॥
पिण्डीतकैः सैन्धवसंप्रयुक्तै[२]र्बलाविरोधे कफशोधनार्थम् ॥ १० ॥

सपिप्पलीसैन्धवनिम्बतोयैरिति । निम्बच्छल्लस्यार्धशृतक्काथे पिप्पल्यादीनां प्रक्षेपः । पिण्डीतको मदनफलम् ॥ १० ॥

विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं पिबेत्[३] ॥
विडङ्गप्लवशुण्ठीनां[४] हरेद्वा श्लेष्मजां वमिम् ॥ ११ ॥
सजाम्बवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम् ॥
दुरालभां वा मधुसंप्रयुक्तां लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥ १२ ॥

जाम्बवं जम्बूफलास्थि । बदरं बदरास्थिमज्जा वक्ष्यमाणयोगे कोलमज्जापाठात् । सजाम्बवं वा बदरस्य चूर्णमित्येको योगः । मुस्तायुतां कर्कटकस्य शृङ्गीमिति द्वितीयः । दुरालभां चेति तृतीयः । अत्र योगत्रयेऽपि मधु संबध्यते ॥ ११ ॥ १२ ॥

तर्पणं मधुसंयुक्तं तिसॄणामथ[५] भेषजम् ॥ १३ ॥

तर्पणं मधुसंयुक्तमिति । तपर्णं तोयपरिप्लुताः सक्तवः । तिसॄणामिति । तिसॄणां पृथग्वातादिजानां छर्दीनाम् । एतेन च त्रिदोषजच्छर्दिहरत्वमस्योक्तं भवति । यतो

* टीकायां तु सर्षपस्थाने सैन्धवेति वर्तते ।

१ क. घ. °क्षौद्रयुक्तं निहन्त्याशु च्छर्दिं पित्ताम्लसंभवाम् । २ क. घ. °क्तैश्छर्द्यां कफामाशयशो° । ३ क. घ. जयेत् । ४ घ. °ण्ठीनामथवा श्ले° । ५ ङ. °सृणां विश्वभे° ।

वातादिजासु पृथक्तिसृषु यद्भेषजं तदेव मिलितवातादित्रयजायामपि प्रकृतिसमसमवेतायां हितम् । तथा चोक्तम्—

"येषां पृथक्त्वेन मया क्रियोक्ता तां संनिपातेषु च तस्य बुद्ध्या ।
रोगर्तुदोषाग्निबलाद्यपेक्ष्य कुर्याद्भिषक्शास्त्रविदप्रमत्तः" इति ॥

एवं तिसृष्वपीत्यत्रापि व्याख्येयम् ॥ १३ ॥

**कृतं गुडूच्या विधिवत्कषायं हिमसंज्ञितम् ॥**
**तिसृष्वपि पिबेत्पथ्यं माक्षिकेण समायुतम् ॥ १४ ॥**

**कषायं हिमसंज्ञितमिति** । शीतकषायम् । शीतकषायविधानं च भेषजं पलं क्षुण्णमुष्णाम्बुचतुष्पलाप्लुतं निशि संस्थितं ग्राह्यमिति । **तन्त्रान्तरे हि**—

"द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात् ।
कषायो योऽभिनिर्याति स शीतः समुदाहृतः ॥ १ ॥
षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः ।
आप्लुतं भेषजपलं रसाख्यस्य पलद्वयम्" इति ॥

प्रचारस्तु प्रायेण भिषजां भेषजार्धपल एव जलपलद्वयेनेति । ननु गुडूची **शाकवर्गे सुश्रुते** कफपित्तमात्रशमनी पठिता तत्कथमस्याः शीतकषायो वातादित्रयजासु शस्तत्वेनोपदिश्यते । उच्यते । मधुरसंयोगमहिम्ना दोषत्रयेऽपि हितत्वमस्याः । किंच शाकवर्गे पत्रमस्याः कफपित्तहरमुक्तं लता तु वातं शमयति । तदुक्तम्—अमृता सांग्राहिकदीपनीयवातहरश्लेष्मशोणितविबन्धप्रशमनानामिति ॥ १४ ॥

**श्रीफलस्य गुडुच्या वा कषायो मधुसंयुतः ॥**
**पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥ १५ ॥**

**श्रीफलस्येति** । श्रीफलो बिल्वस्तस्य मूलमिह । बिल्वमूलं मरुच्छ्लेष्मच्छर्दिघ्नं न च पित्तकृदिति गुणपाठात् । **गुडूच्या वा कषाय इति** । गुडूच्याः क्वाथ एव शीतः कार्यो न तु शीतकषायस्तस्योक्तत्वात् । तथा च **नागार्जुनवार्तामालायां पठ्यते**—

"छिन्नरुहायाः क्वाथं सुशीतलं यो नरः पिबेन्मधुना ।
छर्दिं स वातपित्तश्लेष्मसमुत्थां निवारयति" इति । ॥ १५ ॥

**जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-**
**ह्रीवेरवारि मधुना पिबतोऽल्पमल्पम् ॥**
**छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता**
**लीढा निहन्ति मधुना च दुरालभा वा ॥ १६ ॥**

---

१ घ. 'पि भवेत्प' । २ क. घ. मूर्छायां ।

गवेधुको घुलुञ्चः । धान्यं धान्याकम् । सेव्यमुशीरम् । वारि शीतकषायः । त्रिसुगन्धियुक्तेति । त्रिसुगन्धिचूर्णं तावद्देयं यावता सौरभ्यमात्रं भवति ॥ १६ ॥

जात्या रसः कपित्थस्य पिप्पलीमरिचान्वितः ॥
क्षौद्रेण युक्तो लेह्योऽयं निहन्ति च्छर्दिमुल्बणाम् ॥ १७ ॥

कपित्थस्येति । कपित्थफलरसः । जाती धात्रीति । जातीशब्देनेह धात्री गृह्यतेऽनुलोमकत्वाच्छीतवीर्यत्वाच्च ।

चरकेऽपि—"लेलीतकप्रयोगो रसेन जात्याः समाक्षिकः परमः ।
सप्तदश कुष्ठजातीर्माक्षिकधातोश्च मूत्रेण" ॥

इत्यत्र योगे जाती धात्रीति जैज्जटेन व्याख्यातम् । द्रव्यावल्यामभिधानेऽप्यामलकपर्याये जातीशब्दः पठ्यते । इह लेलीतकः पाषाणभेद उत्तरापथिकः ॥ १७ ॥

सौवर्चलमजाजी च शर्करा मरिचानि च ॥
युक्तोऽयं मधुना लेहः श्रेष्ठश्छर्दिनिवर्हणः ॥ १८ ॥
कोलमज्जाकणाधात्रीलाजाविश्वफलत्रिकम् ॥
श्यामाञ्जनाब्दकोलास्थि मक्षिकाविट्सितायुतम् ॥ १९ ॥
कणोषणकपित्थाम्बुत्वगेलापत्रकं समम् ॥
सक्षौद्राः पादिका लेहाः षडेते छर्दिनाशनाः ॥ २० ॥

श्यामाञ्जनेति । श्यामा प्रियंगुः । वक्ष्यमाणयोगे प्रियंगुदर्शनात् । अञ्जनं रसाञ्जनम् । माक्षिकाविण्मक्षिकाविष्ठा । सितायुतमिति मक्षिकाविडित्यस्य विशेषणम् । विट्शब्दो वैद्यके नपुंसकोऽपि दृश्यते । कपित्थाम्बिवति । कपित्थस्य फलम् । अम्बु वालकम् ॥ १८ ॥ १९ ॥ २० ॥

कोलानलकमज्जानो मक्षिकाविट्सिता मधु ॥
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ॥ २१ ॥
लाजाकपित्थमधुमागधिकोषणानां
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् ॥
पथ्यामृतामरिचमाक्षिकपिप्पलीनां
लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ २२ ॥

सकृष्णातण्डुल इति । कृष्णातण्डुलः पिप्पलीबीजम् ॥ २१ ॥ २२ ॥

एलालवङ्गगजकेसरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ॥
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाताम् ॥ २३ ॥

---

१ क. घ. जातरि° । २ क. लाक्षाक° ।

एलादिचूर्णम् ॥ २३ ॥

जम्ब्वाम्रपल्लवशृतं क्षौद्रं दत्त्वा सुशीतलं तोयम् ॥
लाजैरवचूर्ण्य पिबेच्छर्द्यतिसारे परं सिद्धम् ॥ २४ ॥
पवनघ्नीचिरोत्थासु प्रयोज्या छर्दिषु क्रिया ॥ २५ ॥

जम्ब्वाम्रपल्लवशृतमिति । क्वाथोऽयं शीतः शीतकषायो वा ॥ २४ ॥ २५ ॥

छर्दिप्रसङ्गात्पवनो ह्यवश्यं धातुक्षयाद्वृद्धिमुपैति तस्मात् ॥
चिरप्रवृत्तास्वनिलापहानि कार्याण्युपस्तम्भनबृंहणानि ॥ २६ ॥
सर्पिर्गुडः क्षीरविमिश्रितानि कल्याणकत्र्यूषणजीवनानि ॥
वृष्यास्तथा मांसरसाः सलेहाश्छर्दिं प्रसक्तां प्रशमं नयन्ति ॥ २७ ॥

सर्पिर्गुडो राजयक्ष्मोत्थः । कल्याणकं घृतं ज्वरे । त्र्यूषणाद्यं घृतं कासे । जीवनीयाद्यं वातरक्ते । सलेहा इति । लेहः प्रलेहो व्यञ्जनविशेषः ॥ २६ ॥ २७॥

बीभत्सजां हृद्यतमैर्दौहृर्दीं काङ्क्षितैः फलैः ॥
लङ्घनैर्वमनैश्चाऽऽमां सात्म्यैर्वा सात्म्यकोपजाम् ॥
कृमिहृद्रोगवच्चापि साधयेत्क्रामजां वमिम् ॥ २८ ॥

हृद्यतमैर्हृदयहितैर्मनोनुकूलैश्च । सर्वत्रात्र साधयेदिति योज्यम् । दौहृर्दीमिति । स्त्रीणां दौहृदाप्राप्तिजाम् । काङ्क्षितैः फलैरित्युपलक्षणं तेन फलादन्यस्यापि वस्तुनः परिग्रहः । लङ्घनैर्वमनैश्चाऽऽमामिति । आमामामजाम् । अल्पदोषबलस्य लङ्घनैर्बहुदोषबलस्य वमनैः साधयेत् । असात्म्यकोपजामिति । अक्रमसेवितासात्म्यविक्रियाभवाम् । कृमिहृद्रोगवदिति । कृमिहृद्रोगोक्तभेषजेन विरेकादिना ॥ २८ ॥

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत् ॥
कल्के क्वाथे च हविषः प्रस्थं छर्दिनिवारणम् ॥
तृष्णारुचिप्रशमनं दाहज्वरहरं परम् ॥ २९ ॥

पद्मकाद्यं घृतम् ॥ २९ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चदशश्छर्द्यधिकारः समाप्तः ॥ १५ ॥

---

१ क °विधिर्भृता°। २ घ. चिरोत्थां।

## अथ षोडशस्तृष्णाधिकारः ।

अम्बृत्क्लेशरूपां छर्दिं निर्दिश्याम्बुशोषलक्षणा तृष्णोच्यते—

**तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥**
**रसाश्च बृंहणाः शीता गुडूच्या रस एव च ॥ १ ॥**

**रसाश्च बृंहणा इति।** रसा मांसरसाः ॥ १ ॥

**पञ्चाङ्गिकाः पञ्च गणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा ॥**
**पिबेत्सुखोष्णं मनुजोऽल्पशश्च तृष्णोपरोधं न कदाऽपि कुर्यात् ॥**
**पित्तोत्थितां पित्तहरैर्विपक्वं निहन्ति तोयं पय एव वाऽपि ॥ २ ॥**

**पञ्चाङ्गिकाः पञ्चगणा इति ।** स्वल्पमहत्तृणवल्लीकण्टकासंज्ञकानि पञ्च पञ्चमूलानि । **तेष्वम्बु सिद्धमिति।** अम्बु क्वाथोऽर्धशृतं वा । एते पञ्च योगाः प्रत्येकं क्वाथविधानात् । **प्रथमे गण इति ।** विदारिगन्धाद्ये सौश्रुतत्वादस्य योगस्य । **अल्पश इति** स्तोकं स्तोकम् । **गदाधरः** पुनरल्पश इति तृष्णाविशेषणं व्याख्यायाल्पायां संशमनं महत्यां तु वमनमित्याह । **पित्तहरैरिति ।** काकोल्यादिभिः ॥ २ ॥

**काश्मर्यशर्करायुक्तं चन्दनोशीरपद्मकम् ॥**
**द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ ३ ॥**

अस्य शीतकषायः कार्यः ॥ ३ ॥

**ससारिवादौ तृणपञ्चमूलैस्तथोत्पलादौ मधुरे गणे वा ॥**
**कुर्यात्कषायांस्तु तथैव युक्तान्मधूकपुष्पादिषु चापरेषु ॥ ४ ॥**

सप्तमीयं षष्ठ्यर्थे तेन सारिवादिगणचतुष्टयस्य कषायान्कुर्यादित्यर्थः । मधुरो गणः काकोल्यादिः । गणचतुष्टयेनानेन चत्वारः कषायाः । **तथैव युक्तानिति ।** शीतकषायविधिकृतान् । **सुश्रुते** शीतकषायविधिप्रस्तावेऽस्य ग्रन्थस्य पठितत्वात् । तथैव युक्तानित्यस्य स्थाने **सुश्रुते** तथैव शुक्तानिति पाठः । **मधूकपुष्पादिषु चापरेष्विति ।** मधूकपुष्पादीनि मधूकसौभाञ्जनकोविदारप्रियङ्गुपुष्पाणि **सुश्रुते** रक्तपित्तस्योक्तानि । आदिशब्दः प्रकारे तेन मधुकपुष्पद्राक्षाकाश्मर्यखर्जूराणीति **कार्तिकः ।** एभिरपि शीतकषायविधिः ॥ ४ ॥

**बिल्वाढकीधातकिपञ्चकोलदर्भेषु सिद्धं कफजां निहन्ति ॥**
**हितं भवेच्छर्दितमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ ५ ॥**

सिद्धमित्यतः परं जलमिति शेषः । धातकिपञ्चकोलस्थाने कन्यकपञ्चमूलेति पाठा-

---

१ क. वा । २ ङ. पीतं । ३ क. °च्छर्दनमे° ।

न्तरम् । **निम्बप्रसवोदकेनेति** । निम्बप्रसवो निम्बपल्लवः प्रसूयत इति प्रसव इति व्युत्पत्त्या । तन्त्रान्तरे निम्बपल्लवोदकेनैव वमनमुक्तं तद्यथा—

"कफजायां तृषि शस्तं वमनं पिचुमन्दपल्लवजलेन ॥
कोष्णेन यच्च वम्यामामजायामिष्यते तच्च" इति ।

निम्बप्रभवमुदकं निम्बप्रसवोदकमित्यन्ये ॥ ५ ॥

**सजीरकाण्यार्द्रकशृङ्गबेरसौवर्चलान्यर्धजलप्लुतानि ॥**
**मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम् ॥ ६ ॥**

**आर्द्रकशृङ्गबेरसौवर्चलानीति** । आर्द्रकशृङ्गबेरसौवर्चलवन्ति । अत्र मत्वर्थीयात्। आर्द्रकशृङ्गबेरमार्द्रकमेव । डल्लणस्त्वेवंविधामापातनिकां विधाय व्याख्याति । यथा पीयमानं मद्यं तृष्णाकरं न भवति तथा प्राह सजीरकाणीत्यादि । सजीरकाणि जीरकसहितानि । आर्द्रकं प्रसिद्धम् । शृङ्गबेरं शुण्ठी । आर्द्रकादौ सहशब्दो बोद्धव्यः । नाऽऽर्द्रकशृङ्गबेरसौवर्चलान्यपि मद्यानीत्यस्य विशेषणम्। अर्धजलप्लुतान्यर्धपानीयमिश्रितानि । हृद्यानि मनःप्रियाणि । गन्धवन्ति प्रशस्यगन्धानि । एवंविधानि मद्यानि पीतानि सन्ति सद्यस्तृष्णां शमयन्तीति पिण्डार्थः ॥ ६ ॥

क्षतोद्भवायास्तृष्णायाश्चिकित्सामाह—

**क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ॥**

**रुग्विनिवारणेनेति** । व्रणवेदनानिर्वापणेन । कारणभूतव्रणवेदनोच्छेदात्तत्कार्यरूपा क्षतजतृषा शाम्यतीत्यर्थः । रसानां मांसरसानाम् । **असृज इति** । रक्तस्य । तत्त्वेणादीनां सद्यस्कं ग्राह्यम् । रक्तपानं च क्षतादत्यर्थशोणितप्रवृत्तौ ज्ञेयम् ॥

क्षयजायास्तृष्णायाश्चिकित्सितमाह—

**क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वाऽथ मधूदकं वा ॥ ७ ॥**

**क्षीरजलमिति** । क्षीरमिश्रं जलम्। क्षीरघृतमिति **सुश्रुते** पाठः। तत्र क्षीरघृतं क्षीरमथनोद्भूतं घृतं क्षीरमिश्रितं घृतं वेति **डल्लणः** । मांसोदकं मांसरसं तनुः [न तु]सौरावसंज्ञकः । मधुमिश्रमुदकं मधूदकम् । ननु क्षयजायां बृंहणविधेरुपदेशाद्विरूक्षणं मधूदकं विरुद्धमे(म् । मै)त्रम् । क्षयजा हि दोषत्रयेणापि जन्यते । यदुक्तम्— **रसक्षयाद्या** क्षयसंभवा सा तां संनिपातादिति केचिदाहुरिति । तत्र यदि कफो वृद्धः पित्तं वा तदा मधूदकं मांसोदकं वा। मधुकोदकं चेति **सुश्रुत**पाठे मधुकोदकं यष्टीमधुकोदकम्। केचिदत्र माषोदकमिति पठित्वा माषयूषमिति । व्याख्यानयन्तीति **डल्लणः** ॥ ७ ॥

भक्तजतृष्णाचिकित्सितमाह—

**गुर्वन्नजामुल्लिखनैर्जयेत्तु क्षयादृते सर्वकृतां च तृष्णाम्* ॥ ८ ॥**

* ख. पुस्तके— 'लाजाब्जबीजाञ्जनमुत्पलानि न्यग्रोधरोहः सविषः सकुष्ठः । क्षौद्रेण युक्तो वटकीकृतश्च तृष्णाभिभूतेन मुखेन धार्यः ' इत्यधिकमत्र ।

उल्लिखनैरिति । वमनैः । क्षयादृते सर्वकृतां च तृष्णामिति । क्षयजां तृष्णां विहाय सर्वकृतां तृष्णां वातपित्तकफकृतां गुर्वन्नजां च वमनैर्जयेत् । कार्तिकस्त्वाह सर्वकृतामामजाम् । अस्या आमकोपितसर्वदोषजन्यत्वादिति ॥ ८ ॥

सामान्ययोगानाह—

लाजोदकं मधुयुतं घृतं गुडविमिश्रितम्[2] ॥
काश्मर्यशर्करायुक्तं पिबेत्तृष्णार्दितो नरः ॥ ९ ॥

लाजाचूर्णभावितमुदकं शीतकषायोऽयं वा ॥ ९ ॥

आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् ॥
छर्दिं सर्वां प्रणुदति तृष्णां चैवापकर्षति ॥ १० ॥

आम्रजम्बूकषायं वेति । अत्राऽऽम्रजम्ब्वोः फलास्थि ब्रुवते । पल्लवोऽप्यनयो-रुचितः । जम्ब्वाम्रपल्लवशृतं क्षौद्रं दत्त्वा सुशीतलमिति च्छर्द्या पाठात् ॥ १० ॥

गोस्तनेक्षुरसक्षीरयष्टीमधुमधूत्पलैः ॥
नियतं नस्ततः (नासया) पीतैस्तृष्णा शाम्यति दारुणा ॥ ११ ॥

गोस्तनादिभिः प्रत्येकं नस्यम् ॥ ११ ॥

क्षीरेक्षुरसमार्द्वीकक्षौद्रसीधुगुडोदकैः ॥
वृक्षाम्लैाम्लैश्च[3] गण्डूषास्तालुशोषप्रणाशनाः ॥ १२ ॥

क्षीरादिभिरपि प्रत्येकं गण्डूषो गण्डूषा इति बहुवचनेन निर्देशात् ॥ १२ ॥

मुखपैच्छिल्यादौ गण्डूषमाह—

वैशद्यं जनयत्यास्ये[4] प्ररोहयति यद्व्रणान् ॥
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ १३ ॥
वारि शीतं मधुयुतमाकण्ठाच्च पिपासितम् ॥
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ १४ ॥

अयं योगः पित्तजतृष्णायां युक्तः । सुश्रुतेऽपि पित्तज्वरे विधिर्दर्शित एषः ॥ १३ ॥ १४ ॥

अतिरूक्षदुर्बलानां शमयेत्तृष्णामिहाऽऽशु पयः ॥
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ १५ ॥

मधुरो रसो हृद्य इति । मधुरगणसाधितत्वेन रसो मधुरो ज्ञेयः ॥ १५ ॥

स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत् ॥ १६ ॥

स्निग्धान्नभोजनजनितायां तृषायाम् । अस्यां गुडाम्बु स्निग्धगुडयोगाद्यद्यपि न यौगिकं

---

१ क. शीतं । २ क. °विमर्दित° । ३ क. °म्लाम्रैश्च । ४ क. °स्ये संदधाति मुखे व्रणात् । दा° ।

यदुक्तम्—यदाहारगुणैः पानं विपरीतं तदिष्यत इति । तथाऽपि मधुररसत्वेन प्रभावाद्वा हितं तज्ज्ञेयम् ॥ १६ ॥

वटशृङ्गसितालोध्रं दाडिमं मधुकं मधु ॥
पिबेत्तण्डुलतोयेन च्छर्दितृष्णानिवारणम् ॥ १७ ॥

सुगमम् ॥ १७ ॥

तालुशोषे पिबेत्सर्पिर्घृतमण्डमथापि वा ॥

तालुशोषे पिबेत्सर्पिरिति । तृष्णामूर्च्छापरीताश्च सर्वे [illegible] मद्यानि हृद्यानि च गन्धवन्ति [illegible] ण्यस्तालुशोषिणः । न पिबेयुर्घृतमिति वचनेन निषिद्धस्यापि तालुशोषे घृतपानस्य विधिरयं वातोल्बणावस्थायां मन्तव्यः । तालुशोषश्च तृष्णाप्रकार एव तेनेह संशक्यगतमस्याभिधानम् ॥

मूर्छाछर्दितृषादाहस्त्रीमद्यश्रमकर्शिताः ॥
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥ १८ ॥

सुगमम् ॥ १८ ॥

मुखवैरस्यादौ गण्डूषमाह—

धान्याम्लं मुखवैरस्यमलदौर्गन्ध्यनाशनम् ॥

धान्याम्लं काञ्जिकं तस्य गण्डूषः ॥

मुखशोषे गण्डूषमाह—

तदेवालवणं शीतं मुखशोषहरं परम् ॥ १९ ॥

तद्धान्याम्लम् । अर्थात्पूर्वं सलवणोष्णम् ॥ १९ ॥

कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ॥
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ २० ॥

चुक्रीकाऽम्ललोणिका । चुक्रिका कुवावि । मुखालेप इति । मुखकुहरलेपः । चरकप्रामाण्याद्धृदयशिरसोरपि लेपो द्रष्टव्यः ।

यथा—"जम्ब्वाम्रातकबदरीनलवेतसपञ्चवल्कपञ्चाम्लैः ॥
हृन्मुखशिरःप्रलेपाः सघृता मूर्छाभ्रमतृष्णाघ्नाः" इति ॥ २० ॥

वटप्ररोहं मधुकुष्ठमुत्पलं सलाजचूर्णं गुटिकां प्रकल्पयेत् ॥
सुसंहिता सा वदनेन धारिता तृष्णां प्रवृद्धामपि हन्ति सत्वरम् ॥ २१ ॥

सुगमम् ॥ २१ ॥

ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ॥
भोजयेत्तेन शाम्येते छर्दितृष्णे चिरोत्थिते ॥ २२ ॥

ओदनं रक्तशालीनां शीतमिति । सद्यस्कपानीयं भक्तम् ॥ २२ ॥

---

१ घ. 'वटशृङ्ग'।

दुःसहतृष्णायामदाने जलस्य दोषमाह—

**तृष्यन्पूर्वामयक्षीणो न लभेत जलं यदि ॥**
**मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं नरः ॥ २३ ॥**

**पूर्वामयक्षीण इति ।** प्रथमोत्पन्नरोगकृशः ॥ २३ ॥

**सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पुनः ॥**
**तस्यां जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुम् ॥ २४ ॥**

**अन्योऽपि व्याधिरिति ।** तृष्णाशमनार्थं दीयमानान्नपानादिना कृतोऽपि व्याधिरित्यर्थः । **शक्यश्चिकित्सितुमिति ।** तृष्णां महात्ययकारिणीमवेक्ष्य स व्याधिः सुजयो भवतीत्यर्थः ॥ २४ ॥

अदाने जलस्य तृष्णातुरः कथं म्रियत इत्यत आह—

**तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति ॥**
**तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वार्यते ॥ २५ ॥**

सुगमम् ॥ २५ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तविरचितायां व्याख्याकुसुमावल्याख्यायां षोडशस्तृष्णाधिकारः समाप्तः ॥ १६ ॥**

## अथ सप्तदशो मूर्छाधिकारः ।

तृषितस्य मोहोत्पत्तेस्तृष्णानन्तरं मूर्छा । उक्तं हि तृषितो मोहमायातीति ।

**सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च ॥**
**शीतानि पानानि च गन्धवन्ति सर्वासु मूर्छास्वनिवारितानि ॥ १ ॥**

**मणयः सहारा इति ।** हारार्पिता मुक्ताः स्फाटिकप्रभृतयो मणयः । **शीताः प्रदेहा इति ।** चन्दनोत्पलप्रभृतिभिः कृताः प्रदेहाः । व्यजनानिला व्यजनवायवः । **शीतानि पानानि च गन्धवन्तीति ।** यानि शीतानि गन्धवन्ति च पानानि तानि सर्वासु मूर्छास्वनिवारितानि प्रशस्तानि । पानानि पानकानि । सर्वासु मूर्छास्वनिवारितानीत्यनेन वातकफजयोरपि मूर्छयोर्हेतुप्रत्यनीकचिकित्साकरणे वारणार्हा अप्येते शीतविधयो व्याधिप्रत्यनीकतया पित्तानुबन्धाच्च न वार्यन्त इत्येतद्दर्शयति ॥ १ ॥

किमेतान्येव सर्वमूर्छासु हितान्युतान्यान्यपीत्यत आह—

**सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च ॥**
**तथा यवा लोहितशालयश्च मूर्छासु शस्ताः ससतीनमुद्गाः ॥२॥**

१ क. °त्म्यानुपा° ।

वर्गे मधुर इति । काकोल्यादौ । पयांसि सर्वाण्यपि दुग्धानि सर्वेषां क्षीराणां मूर्छाहरत्वात् । जाङ्गलजा रसा इति । एणादिभवाः । सदाडिमा इति । दाडिमाम्लाः । ये मूर्छासु भोजने हितास्तानाह—तथा यवा इत्यादि । शस्ता हिता भोजन इति शेषः । सतीनो वर्तुलकलायः ॥ २ ॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥

वातादिजासु मूर्छासु यथाक्रमं वातादिज्वरहरकषायाणि प्रयोजयेदित्यर्थः ॥

रक्तजायां तु मूर्छायां हितः शीतक्रियाविधिः ॥ ३ ॥

रक्तजायामिति । रक्तदर्शनजायाम् ॥ ३ ॥

मद्यजायां वमेन्मद्यं निद्रां सेवेद्यथासुखम् ॥

सुगमम् ।

विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ४ ॥

सुगमम् ॥ ४ ॥

कोलमज्जोषणोशीरकेसरं शीतवारिणा ॥

पित्तमूर्छां जयेल्लीढा कृष्णा वा मधुसंयुता* ॥ ५ ॥

सुगमम् ॥ ५ ॥

महौषधामृता क्षुद्रा पौष्करं ग्रन्थिकोद्भवम् ॥

पिबेत्कणायुतं क्वाथं मूर्छायां च मदेषु च ॥ ६ ॥

सुगमम् ॥ ६ ॥

पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ॥

सुगमम् ॥

त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा ॥

रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ७ ॥

रसायनानामिति । शिलाजतुरसायनयोगानाम् । कौम्भस्य सर्पिष इति । कौम्भं सर्पिर्दशाब्दिकं तच्च प्रभावान्मूर्छाहरम् । यदुक्तम्—

"सर्पिः पुराणं तिमिरप्रतिश्याश्वासकासनुत् ॥

मूर्छाछर्दिविषोन्मादमदापस्मारनाशनम् " इति ॥ ७ ॥

अञ्जनान्यवपीडाश्च धूमः प्रधमनानि च ॥

सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥ ८ ॥

---

* ख. पुस्तके—सुशीतं त्रिफलाक्वाथं सिताक्षौद्रसमन्वितम् । वोढारमपि निहन्त्याशु मूर्छां पीतो यथाबलम् । इत्यधिकमत्र ।

१ क. बुद्ध्वा दोषं । २ क. ॰णा । पीतं म॰ ।

लुञ्चनं केशलोम्नां च दन्तैर्दंशनमेव च ॥
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने* ॥ ९ ॥

ननु सर्वासु मूर्छासु पित्तप्राधान्याच्छीतोपचारश्चेदिष्यते तत्कथं तीक्ष्णा अञ्जनादयः शस्ताः । उच्यते । संज्ञावहस्रोतोनिरोधशान्तिकरत्वेन व्याधिप्रत्यनीकत्वादिति **कार्तिकः** । अञ्जनादयस्तीक्ष्णाः कार्याः । **नखान्तर इति** । नखमांसयोर्मध्ये । **आत्मगुप्तावघर्ष इति** । आत्मगुप्ता शूकशिम्बा । अस्याश्च शिम्बित्वग्जातं चूर्णं ग्राह्यम् । **तस्येति** । मूर्छातुरस्य ॥ ८ ॥ ९ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तविरचितायां व्याख्याकुसुमावल्याख्यायां सप्तदशो मूर्छाधिकारः समाप्तः ॥ १७ ॥**

## अथाष्टादशो मदात्ययाधिकारः ।

पि(चि)त्तस्य मोहो(?) मद्येनापि मूर्छायाः संभवान्मूर्छानन्तरं मदात्ययः । मदशब्देन मदहेतुतया मद्यमुच्यते तेन कृतोऽत्ययो विकारो मदात्ययः किंवा मद्यकृतो मदो यस्तद्धेतुकोऽत्ययो मदात्ययः ॥

मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लिकदाडिमैः ॥
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १ ॥

द्रवेणाऽऽलोडिताः सक्तवो मन्थः । खर्जूरादीनां चेह द्रवं ग्राह्यम् । अम्लिकशब्देनाम्लिकोच्यतेऽम्लिका तिन्तिडीका वा । छन्दोनुरोधाद्ध्रस्वत्वम् ॥ १ ॥

सतीनमुद्गसंमिश्रान्दाडिमामलकान्वितान् ॥
द्राक्षामलकखर्जूरपरूषकरसेन वा ॥
कल्पयेत्तर्पणान्यूषान्रसांश्च विविधात्मकान् ॥ २ ॥

सुगमम् ॥ २ ॥

पथ्याक्वाथेन वा सिद्धं घृतं धात्रीरसेन वा ॥
सर्पिः कल्याणकं वाऽपि मदमूर्छापहं पिबेत् ॥ ३ ॥

सुगमम् ॥ ३ ॥

छर्दिमूर्छातिसारं च मदं पूगफलोद्भवम् ॥
सद्यस्तच्छमयेत्पीतमातृप्तेर्वारि शीतलम् ॥ ४ ॥

---

* ख. पुस्तके—सन्यासलब्धसंज्ञश्च लशुनस्य रसं पिबेत् । खादेत्सव्योषलवणं बीजपूरककेसरम् । इत्यधिकमत्र ।

सुगमम् ॥ ४ ॥

**वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वाऽपि ॥**
**शाम्यति पूगफलमदश्चूर्णरुजाशर्कराकवलात् ॥ ५ ॥**

वन्यः शङ्कुकः करीषं शुष्कं गोमयम् । किंवा वनभवं करीषम् । वन्यकरीषघ्राणादयः पृथक्पृथक्प्रयोज्याः । चूर्णरुजाशर्कराकवलादित्येतदार्यासंपूर्णत्वानुरोधाल्लिखितम् ॥ ५ ॥

मद्योत्थरोगेषु मद्यमेव परमं भेषजं यदुक्तं चरके—

"तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ॥
मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः ।
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम् ॥
जनयत्याशु तच्छान्त्यै मद्यमेव प्रयोजयेत्"

इति तेन मद्यप्रयोगमेवाऽऽह—

**मद्यं सौवर्चलव्योषयुक्तं किंचिज्जलान्वितम् ॥**
**जीर्णमद्ये[1] प्रदातव्यं वातपानात्ययापहम् ॥ ६ ॥**

**सौवर्चलव्योषयुक्तमिति** । सौवर्चलं लवणत्वमात्रकारकं व्योषं कटुत्वमात्रकारकमिति ॥ ६ ॥

**मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः ॥**
**पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः ॥ ७ ॥**

मुद्गयूषस्य च विधिस्तन्त्रान्तराल्लिख्यते—

"मुद्गानां द्विपलं तोये शृतमर्धाढकोन्मिते ।
पादस्थं मर्दितं पूतं दाडिमस्य पलेन तु ॥
युक्तं सैन्धवविश्वाह्वधान्यकैः पादकार्षिकैः ।
कणाजीरकयोश्चूर्णाच्छाणैकेनावचूर्णितम् ॥
संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः ।
मांसलं सक्थिजं मांसं निरस्थि तैत्तिरं तथा ॥
चतुष्पलोन्मितं सूक्ष्मं कल्पितं क्षालितं जले ।
पिप्पलीपिप्पलीमूलशुण्ठीजीरकधान्यकैः ॥
द्विशाणैः संयुते तोये क्वाथ्यमर्धाढकोन्मिते ।
पादान्विते पलं तत्र दाडिमात्क्षुदिताद्धरेत् ॥

1 क 'र्णमद्याय दा' ।

तं रसं मर्दितं पूतं हिङ्गुसैन्धवजीरकैः ।
युक्तं प्रधूपितं पथ्यं शुद्धानां शुद्धिकाङ्क्षिणाम् ॥
भग्नविश्लिष्टसंधीनां क्षीणधात्विन्द्रियौजसाम्" इति ।

सुगमम् ॥ ७ ॥

पानरोगे कफोद्भूते लङ्घनं च यथाबलम् ॥
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥ ८ ॥

दीपनीयौषधोपेतमिति । दीपनीयौषधं पञ्चकोलादि तच्चूर्णोपेतम् । समाहित इत्यनेन मात्रया मद्यं पिबेदिति दर्शयति ॥ ८ ॥

सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम् ॥ ९ ॥

सुगमम् ॥ ९ ॥

आभिः क्रियाभिः सिद्धाभिः शान्तिं याति मदात्ययः ॥१०॥

सुगमम् ॥ १० ॥

न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत् ॥
लङ्घनाद्यैः कफे क्षीणे जाते दौर्बल्यलाघवे ॥ ११ ॥

क्षीरमस्य प्रयोजयेदिति । क्षीरमनौषधमेव ॥ ११ ॥

ओजस्तुल्यगुणं क्षीरं विपरीतं च मद्यतः ॥

सुगमम् ।

क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥ १२ ॥

सुगमम् ॥ १२ ॥

पयःपुनर्नवाक्वाथयष्टीकल्कप्रसाधितम् ॥
घृतं पुष्टिकरं पानान्मद्यपानहतौजसाम् ॥ १३ ॥

पयः स्नेहसमम् । पुनर्नवाक्वाथस्त्रिगुणश्चतुर्गुणो वा ॥ १३ ॥

सौवर्चलमजाज्यश्च वृक्षाम्लं साम्लवेतसम् ॥
त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥ १४ ॥
एतल्लवणमष्टाङ्गमग्निसंदीपनं परम् ॥
मदात्यये कफप्राये दद्यात्स्रोतोविशोधनम् ॥ १५ ॥

सौवर्चलादीनां प्रत्येकं समो भागः । त्वगेलामरिचादीनां प्रत्येकमेकभागापेक्षयाऽर्धांशत्वम् । शर्कराभागोऽपि सौवर्चलाद्येकतमद्रव्यभागसमः ॥ १४ ॥ १५ ॥

चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम् ॥
चूर्णं मद्येन पातव्यं पानात्ययरुजापहम् ॥ १६ ॥

---

१ ङ. याभिः । २ क. वा । ३ ङ. °रामधुयो° । ४ क. °म् । हितं लव° । ५ ङ. जीरकं ।

पूरकं बीजपूरफलम् । दीप्यकं यवानिका ॥ १६ ॥

यथा पीयमानं मद्यं विकारं मदं च न करोति तद्दर्शयति—

**जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम् ॥**
**पिबेत्सुरां नैव लभेत रोगान्मनोमतिघ्नं च मदं न याति ॥ १७ ॥**

जलप्लुतो जलार्द्रगात्रः । चन्दनभूषिताङ्गश्चन्दनानुलिप्तगात्रः । स्रग्वी पुष्पमालायुक्तः । सभक्तां भक्तेन सह । **पिशितोपदंशामिति** । पिशितं मांसमुपदंशो भक्षणं यस्यां सुरायां सा तथा ताम् । रोगानिति प्रकरणान्मद्यपानजान् । **मनोमतिघ्नं च मदं न यातीति** । द्वितीयादिमदान्मनोमतिविघातकरान्नाऽऽप्नोति । प्रथमं तु मदं मनोमत्यनुपघातकरं लभत एवेति भावः ॥ १७ ॥

पानविभ्रमचिकित्सामाह—

**द्राक्षाकपित्थफलदाडिमपानकं यत्तत्पानविभ्रमहरं मधुशर्कराढ्यम् ॥१८॥**

अत्र फलशब्देन विशिष्टानि मातुलुङ्गादिफलानि गृह्यन्ते । द्राक्षादि मधुशर्कराढ्यं पानकं पानविभ्रमे शस्तम् । द्राक्षादिभिः पानकं सूदशास्त्रानुसारेण कार्यम् ॥ १८ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टादशो मदात्ययाधिकारः समाप्तः ॥ १८ ॥**

---

## अथैकोनविंशो दाहाधिकारः ।

मदात्यये दाहस्य संभवात्तदनन्तरं दाहः—

**शतधौतघृताभ्यक्तं लिह्यात्तं यवसक्तुभिः ॥**
**कोलामलकसंयुक्तैर्धान्याम्लैरपि बुद्धिमान् ॥ १ ॥**

शतधौतं सर्पिर्यत्पुनः पुनः संताप्य शीताम्भसा निर्वाप्यते तच्छतधौतमुच्यत इतीशानदेवः । शतं वाराञ्शीततोयेन धौतं फेनिलं घृतं शतधौतघृतमुच्यत इति **डल्लणः** ॥ १ ॥

**छादयेत्तस्य सर्वाङ्गमारनालार्द्रवाससा ॥**

सुगमम् ॥

**लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ २ ॥**

**लामज्जेनेति** । उशीरेण ॥ २ ॥

**चन्दनाम्बुकणस्यन्दितालवृन्तोपवीजिते ॥**
**स्वप्याद्दाहार्दि[1]तो जन्तुः कदलीदलसंस्तरे ॥ ३ ॥**

---

१ क. घ. 'तोऽम्भोजक' ।

तालवृन्तं व्यजनम् ॥ ३ ॥

परिषेकावगाहौ च सेवेत व्यजनानि च* ॥
ससितं शिशिरं तोयं तृष्णादाहोपशान्तये ॥ ४ ॥
क्षीरैः †क्षीरकषायैश्च सुशीतैश्चन्दनान्वितैः ॥
अन्तर्दाहं प्रशमयेदेतैश्चान्यैश्च शीतलैः ॥ ५ ॥

**क्षीरैः क्षीरकषायैरिति** । क्षीरिकषाया वटादिक्राथाः । क्षीरादिकं चैतत्पानपरिषेकादौ योज्यम् ॥ ४ ॥ ५ ॥

कुशादिशालिपर्णीभिर्जीवकाद्येन साधितम् ॥
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ ६ ॥

**कुशादिशालिपर्णीभिरिति** । कुशादि तृणपञ्चमूलं शालीपर्णीभिरिति शालिपर्ण्यादिविदारिगन्धादिगणमाहुः । एताभ्यां क्राथः । **जीवकाद्येनेति** । जीवकाद्यष्टवर्गेण । अनेन च कल्कः । जीवकाद्यष्टवर्गश्चर्षभकमेदामहामेदाकाकोलीक्षीरकाकोलीऋद्धिवृद्धय एवं सर्वत्र सुश्रुतयोगे जीवनीयाष्टकम् । चरकयोगे पुनरेत एवर्द्धिवृद्धिरहिता माषपर्णीमुद्गपर्णीजीवन्तीमधुकसहिता जीवनीयदशकं ज्ञेयम् । तैलमुष्णवीर्यमपि शीतद्रव्यसंस्कारेण दाहशमनं मन्तव्यम् । ननु तैलस्याग्नेयोष्णत्वात्कथं दाहशान्त्यर्थमुपदेशः । उच्यते । कुशादिद्रव्यत्वेन गुणान्तराधानात् । यथा सौम्यमेव घृतं तथा कथं नोपदिश्यत इति चेत्तैलवद्रोमकूपैस्तदप्रवेशात् । अत एव तन्त्रान्तरे ज्वरशान्तये चन्दनादिभिः साधितं तैलमेवोपादिष्टमिति । कुशाद्यं तैलं घृतं च ॥ ६ ॥

पित्तज्वरहरं यच्च दाहे तत्सर्वमिष्यते ॥
फलिनीरोध्रसेव्याम्बुहेमपत्रकुटन्नटम् ॥
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ७ ॥

फलिनी प्रियंगुः । सेव्यमुशीरम् । (हेमपत्रम्) नागकेसरचूर्णम् । कालीयकं मलेन्द्री कालीयकरसः पेषणार्थम् ॥ ७ ॥

श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत् ॥
त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः ॥ ८ ॥

श्लोकार्धस्यापरार्धं केचिदन्यथा पठन्ति रोमकूपायनोद्गच्छदूष्मणो ह्यवरोधनादिति ॥ ८ ॥

* ख. पुस्तके—दाहवेगे त्वभिक्रान्ते तस्मादुद्धृत्य मानवम् । परिषिच्याम्बुभिः शीतैः प्रलिम्पेच्चन्दनादिभिः ॥ १ ॥ ग्लानं वा दीनवदनं समालिङ्गेद्वराङ्गना । एलमक्षौमसंवीता चन्दनार्द्रा प्रियोहरा ॥ २ ॥ बिभ्रत्योऽब्जस्रजश्चित्रा मणिहारविभूषिताः । भजेयुस्तं स्तनैः शीतैश्छायामम्बुरुहैर्मुखैः ॥३॥ इत्यधिकमत्र । † अत्र टीकानुरोधेन क्षीरिकषायैरिति युक्तम् ।

१ घ. क. 'गाहेषु व्यजनानां च सेवने । शस्यते शि' । २ क. ज्ञस्यते ।

ह्रीवेरपद्मकोशीरचन्दनक्षोदवारिणा ॥
संपूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ९ ॥

क्षोदश्चूर्णम् ॥ ९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकोनविंशतितमो दाहाधिकारः समाप्तः ॥ १२ ॥

## अथ विंश उन्मादाधिकारः ।

मदात्यय उन्मादमिव चापरमित्यनेनोन्मादसंकीर्तनं कृतं तत्र दाहोऽप्युक्तस्तेन स्वल्पवक्तव्यं दाहं प्रतिपाद्य संप्रत्युन्मादारम्भः ॥

वातिके स्नेहपानं प्राग्विरेकः पित्तसंभवे ॥
कफजे वमनं कार्यं परो वस्त्यादिकः क्रमः ॥ १ ॥

वातिक इति । निरावरणवातकृते स्नेहपानम् । आवरणसद्भावे तु तत्र स्नेहपानमनर्हमेव । यदुक्तम्—

"मेदःकफाभ्यामनिलो निरुद्धः शूलाङ्गमर्दश्वयथून्करोति ॥
स्नेहं नियुञ्जन्विबुधस्तु तस्मै संवर्धयत्येव हि तान्विकारान्" इति ।

परो वस्त्यादिकः क्रम इति । पश्चात्स्नेहबस्तिनिरूहशिरोविरेचनार्थकः क्रमः कार्यः । यथा चोक्तम्—

"निरूहान्स्नेहबस्तिं च शिरसश्च विरेचनम् ॥
ततः कुर्याद्यथादोषं तेषां भूयस्त्वमादिशेत्" इति ॥ १ ॥

यच्चोपदेक्ष्यते किंचिदपस्मारचिकित्सिते ॥
उन्मादे तच्च कर्तव्यं सामान्याद्दोषदूष्ययोः ॥ २ ॥

सामान्याद्दोषदूष्ययोरिति । उन्मादेऽपस्मारे च समानो दोषस्तथा भूतसंप्राप्तिसंप्राप्तो वातादिः समानं च हृदयरूपं दूष्यमित्यर्थः । हेतुदूष्ययोरिति पाठे तु समानो हेतुर्मनोभिघातादिरवगन्तव्यः ॥ २ ॥

ब्राह्मीकूष्माण्डीफलषड्ग्रन्थाशङ्खपुष्पिकास्वरसाः ॥
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥ ३ ॥

ब्राह्मी ख्याता । कूष्माण्डीफलं पुराणं ग्राह्यम् । एतद्द्वयं प्रचरति ॥ ३ ॥

१ छ. °न्दनाम्बुद° । २ क. °पदिश्यते ।

दशमूलाम्बु सघृतं युक्तं मांसरसेन वा ॥
ससिद्धार्थकचूर्णं वा केवलं वाऽनवं घृतम् ॥ ४ ॥

अनवं घृतमिति । पुराणं तच्च दशाब्दिकम् ।
यदुक्तम्—"उग्रगन्धि पुराणं स्याद्दशवर्षस्थितं घृतम् ॥
लाक्षारसनिभं शीतं प्रपुराणमतः परम्" इति ।
अन्ये पुनरेकवर्षातीतं पुराणं ब्रुवते । तथा च—
"अल्पाभिष्यन्दि मधुरं बल्यं संवत्सरोषितम् ॥
अल्पक्लेदं च दोषाणां पुराणं तत्प्रकीर्तिम्" इति ॥ ४ ॥

उन्मादशान्तये पेयो रसो वा तालशाखजः ॥

रसो वा तालशाखज इति । रसोऽयं समधुर्व्यवहरति ॥

प्रयोज्यं सार्षपं तैलं नस्याभ्यञ्जनयोः सदा ॥ ५ ॥
सिद्धार्थको वचा हिङ्गु करञ्जो देवदारु च ॥
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक्कटुत्रिकम् ॥ ६ ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ॥
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥ ७ ॥
नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा ॥
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥ ८ ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ॥
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ९ ॥

करञ्जद्वयस्य फलम् । वक्ष्यमाणयोगेऽपि करञ्जस्य बीजमुक्तम् । श्वेताऽपराजिता वचा वा । कटभी तद्रवडिः (गिरिकर्णी) तस्य त्वक् । शिरीषस्य फलम् । कृत्याऽभिचारा देवता । **सर्पि रेतेन सिद्धं वा सगोमूत्रमिति** । सिद्धार्थकादीनां कल्कः । गोमूत्रेण द्रवं कार्यम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

त्र्यूषणं हिङ्गु लवणं वचा कटुकरोहिणी ॥
शिरीषं नक्तमालस्य बीजं श्वेताश्च सर्षपाः ॥ १० ॥
गोमूत्रपिष्टैरेतैस्तु वर्तिर्नेत्राञ्जने हिता ॥
चतुर्थकमपस्मारमुन्मादं च नियच्छति* ॥ ११ ॥

*ख.पुस्तके—तालीसत्रिफलैलवालुफलिनीसोग्राप्रथक्पर्णिनीदन्तीदाडिमदारुचन्दननिशादार्वीविशालोत्पलैः । जातीपुष्पहरेणुपद्मकयुतैर्जन्तुघ्नमञ्जिष्ठिकारुषिशटीत्रुटिसारिवाद्वययुतैर्नागेन्द्रपुष्पान्वितैः ॥१॥ अष्टाविंशतिभिश्चतुर्गुणजले कल्याणमेभिः शृतं हन्त्येतत्त्रिचतुर्थकज्वरमुरःकम्पं सवन्ध्यामयम् । सापस्मारगरोदराः सपवनोन्मादाः सजीर्णज्वरा जायन्ते न पुनः कृतेन हविषा कल्याणकेनामुना ॥ २ ॥ तीसटात्कल्याणकं घृतम् ॥

त्र्यूषणाद्या वर्तिः ॥ १० ॥ ११ ॥

**आश्वासयेत्सुहृद्वाक्यैर्धर्मकार्यार्थसंयुतैः ॥**
**ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥ १२ ॥**

ब्रूयादिष्टविनाशं वेत्यादि विधानं चित्तोद्भ्रान्तिकरमुद्भ्रान्तस्य चित्तस्य प्रकृतौ व्यवस्थापनार्थम् । दृश्यते घट्टनचलितस्य संधेः पुनर्घट्टनेनैव सम्यगवस्थापनं तथेहापि ज्ञेयम् ॥ १२ ॥

**बद्धं सर्षपतैलाक्तमुत्तानं चाऽऽतपे न्यसेत् ॥**
**कपिकच्छ्वाऽथ वा तप्तैर्लोहतैलजलैः स्पृशेत् ॥ १३ ॥**

बद्धं सर्षपतैलाक्तमित्यादिविधिः स्रोतःशोधनार्थमुद्वेगजननार्थं च । **कपिकच्छ्वेति ।** शूकशिम्बा ॥ १३ ॥

**कशाभिस्ताडयित्वा च सुबद्धं विजने गृहे ॥**
**रुध्याच्चेतो हि विभ्रान्तं तथा व्रजति तत्सुखम् ॥ १४ ॥**

**कशाभिरिति ।** कशा शाट इति लोके ॥ १४ ॥

**सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ॥**
**त्रासयेच्छस्त्रहस्तैश्च शत्रुभिः सूकरैस्तथा ॥ १५ ॥**

**दान्तैः सिंहैरिति ।** आयत्तीकृतैर्व्याघ्रैः ॥ १५ ॥

**अथ वा राजपुरुषा बहिर्नीत्वा सुसंयतम् ॥**
**त्रासयेयुर्वधैरेनं तर्जयन्तो नृपाज्ञया ॥ १६ ॥**

**बहिरिति ।** ग्रामाद्बहिः ॥ १६ ॥

**देहदुःखभयेभ्योऽपि परं प्राणभयं मतम् ॥**
**तेन तस्य शमं याति सर्वतो विप्लुतं मनः ॥ १७ ॥**

**देहदुःखभयेभ्योऽपीति ।** देहदुःखानि कपिकच्छूलेपनादीनि तत्कृतेभ्यो भयेभ्य इति ॥ १७ ॥

**इष्टद्रव्यविनाशाच्च मनो यस्योपहन्यते ॥**
**तस्य तत्सदृशप्राप्तैः सान्त्वाश्वासैः शमं नयेत् ॥ १८ ॥**

**तत्सदृशप्राप्तैरिति ।** तत्सदृशप्रापकैः । भावे क्तः । सान्त्वं सामप्रयोगः । आश्वासः संतोषजनकं वचनम् ॥ १८ ॥

**कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ॥**
**परस्परप्रतिद्वंद्वैरेभिरेव शमं नयेत् ॥ १९ ॥**

१ ध. °क्यैर्वाक्यैर्धर्मार्थसंहितैः । २ क. °श्च तस्करैः शत्रुभिस्त°।

बुद्ध्वा दोषं वयः सात्म्यं देशकालबलाबलम् ॥
चिकित्सितमिदं कुर्यादुन्मादे दोषभूतजे ॥ २० ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान् ॥
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म च ॥ २१ ॥

क्रूरकर्म ताडनात् । तीक्ष्णाञ्जनादिवर्जनं च वैद्यातुरोपघातपरिहारार्थम् । उक्तं हि—वैद्यातुरौ विनिघ्नन्ति ध्रुवं क्रुद्धा महौजस इति ॥ १९ ॥ २० ॥ २१ ॥

तीक्ष्णाञ्जनादीनां निषेधे यत्कर्तव्यं तदाह—

सर्पिष्पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ॥
पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः ॥
जयेदागन्तुमुन्मादं यथावद्विधिभिर्भिषक् ॥ २२ ॥

सर्पिरिह भूतहरकल्याणकवैतसादि । बलिरन्नादेरुपढौकनम् । उपहारः सपशुर्बलिः । किंवा पूजाबल्योरुपहार उपढौकनम् ॥ २२ ॥

कल्याणकं प्रयुञ्जीत महद्वा वैतसं घृतम् ॥
तैलं नारायणं नाम महानारायणं तथा ॥ २३ ॥

सुगमम् ॥ २३ ॥

महापैशाचिकं घृतमाह—

जटिला पूतना केशी चोरटी मर्कटी वचा ॥
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥ २४ ॥
कायस्था सूकरी छत्रा सातिच्छत्रा पलकषा ॥ २५ ॥
महापुरुषदन्ता च वयस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली स्थिरा चैतैः शृतं घृतम् ॥
सिद्धं चतुर्थकोन्मादग्रहापस्मारनाशनम् ॥ २६ ॥
महापैशाचिकं नाम घृतमेतद्यथाऽमृतम् ॥
मेधाबुद्धिस्मृतिकरं बालानां चाङ्गवर्धनम् ॥२७ ॥

जटिला मांसी शतावरी वा । पूतना हरीतकी । केशी भूतकेशी । चोरटी कूंवाडु ब्रह्मिका वा । मर्कटी शूकशिम्बा । जया जयन्ती । वीरा क्षीरकाकोली पृश्निपर्णी वा । चोरकश्चण्डा । कायस्था सिन्दुवारः सूक्ष्मैला वा । सूकरी वाराहीकन्दस्तदभावे चर्मकारालुकम् । छत्राऽजाजी मधूलिका वा । अतिच्छत्रा शतपुष्पा । छत्रातिच्छत्रे द्रोणपुष्पीद्वयम् । पलङ्कषा गुग्गुलुः । महापुरुषदन्ताऽपराजिता क्रान्ता शतावरी वा । वयस्था गुडूची ब्राह्मी वा । नाकुलीद्वयं रास्नाद्वयं सर्पगन्धाद्वयमन्ये । सर्पगन्धा सर्पच्छत्रिका ।

१ क. भूतदोषजे । २ क. 'थाविधि शुचिर्भि' । ३ क. वाऽपि । ४ ङ. चारटी । ५ ङ. रोचना ।

कटम्भरा कटभी भद्दा(द्रा)ली वा । वृश्चिकाली वृश्चिपत्री । स्थिरा शालिपर्णी । अयं चार्थो जैज्जटादिभिर्व्याख्यातः प्रायो **बकुलकारेण** श्लोकैर्निबद्धः ।

तद्यथा—"जटिला शतपुष्पी स्यान्मांसीभेदोऽपि चेष्यते ।
पूतना अभया केशी मांसी भूकेश एव च ॥
चोरटी ब्रह्मिका ज्ञेया मर्कटी शूकशिम्बिका ।
वीरा तु पृश्निपर्णी स्याच्चण्डा स्यादिह चोरकः ॥
कायस्था सिन्दुवारस्तु सूक्ष्मैला वाऽथ सूकरी ।
वाराही कन्दकाभावाच्चर्मकारालुकग्रहः ॥
छत्राऽजाजी त्वतिच्छत्रा शतपुष्पा परे त्विमे ।
द्रोणपुष्पीद्वयं प्राहुः पलङ्कषा तु गुग्गुलुः ॥
महापुरुषदन्ता च विष्णुक्रान्ताऽथवा वरी ।
वयस्था त्वमृता ज्ञेया नाकुलीद्वयमत्र तु ॥
सर्पगन्धाद्वयं प्राहू रास्नाद्वयमथापि वा ।
कटम्भरा तु कटभी प्रसारिण्यथ वाऽमृता ॥
व्यक्तमन्यच्च सकलं महापैशाचिके घृते" इति ।

द्रव्यैरेतैः कल्कः । द्रवं जलम् । महापैशाचिकं नामेत्यत्र महच्छब्दः पूजावचनः स्वल्पपैशाचिकस्याभावात् । महापैशाचिकं घृतम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

वैतसघृतमाह—

**पञ्चमूल्यावकाश्मर्यौ रास्नैरण्डत्रिवृद्बलाः ॥**
**मूर्वा शतावरी चेति क्वाथैर्द्विपलिकैरिमैः ॥ २८ ॥**
**कल्याणकस्य चाङ्गेन वैतसं नाम तद्घृतम् ॥**
**सर्वचेतोविकाराणां शमनं कीर्तितं परम् ॥ २९ ॥**

**पञ्चमूल्यावकाश्मर्याविति** । दशमूली गम्भारीरहिता ग्राह्या । इहेमैरिति प्रयोगश्चिन्त्यो नेदमदसोरकोरित्यनेन भिस ऐसस्तावन्निषेधात् । **कातन्त्रव्याकरणे** तु तस्माद्भिस(सो)भिरित्यत्र सूत्रे तस्माद्ग्रहणात्साधुत्वमस्योपवर्णितम् । तस्माद्ग्रहणं हि कृताकारस्येदमोऽनुवृत्त्यर्थं कृतं तस्य चानुवृत्तिरनन्तरत्वादेव सिध्यति तत्क्रियते " अद्व्यञ्जनेऽनक् " इत्यद्विधेरनित्यत्वज्ञापनार्थम् । तेनान्तविधेरभावादिमैरित्यपि भवति । प्रयोगोऽपि तत्र दर्शितो यथेमैर्गुणैः सप्त ऋषयः स्वर्गं गता इति । वैतसं घृतम् ॥२८॥२९॥

**कार्यः कषायो द्विगुणाष्टतोयैः पानीयकल्याणककल्कपादः ॥ ३० ॥**

---

१ घ. 'ण्डवृद्द्'।

**कार्यः कषायो द्विगुणाष्टतोयैरिति** । द्विगुणाष्टतोयं षोडशगुणमम्भः । षोडशगुणं चाम्भः **कृष्णात्रेय**परिभाषायां मन्तव्यम् ।

यथा—"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम् ॥
पादशिष्टः कषायः स्यादेष क्वाथविधिः स्मृतः" इति ।

**चक्रेणाप्युक्तम्**—"घृतप्रस्थोऽत्र पक्तव्यः क्वाथो द्रोणाम्भसा घृतात् ॥
चतुर्गुणस्तु संपाद्यः कल्कः कल्याणके घृते"

इति केचित् । तोयद्रोणेनैव क्वाथकरणं प्रचरति । **पानीयकल्याणककल्कपाद इति** । घृतमिदं यस्य तन्त्रस्य तत्रोक्तकल्याणकापरिज्ञानाच्**चरको**क्तपानीयकल्याणकस्य कल्कं गृह्णन्ति तथा च सति तदुक्तकर्षमाने परित्यागात्पादिककल्ककल्पना पुनरेषा **वृन्दस्य** व्यवहारानुरोधादवगन्तव्या ॥ ३० ॥

**हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ॥
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्* ॥ ३१ ॥**

सुगमम् । हिङ्ग्वाद्यं घृतम् ॥ ३१ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां विंश उन्मादाधिकारः समाप्तः ॥ २० ॥**

## अथैकविंशोऽपस्माराधिकारः ।

---

मनोदुष्टिचिकित्सायाश्च साम्यादुन्मादानन्तरमपस्मारः ।

**वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः ॥
कफजं वमनैर्धीमानपस्मारमुपाचरेत् ॥ १ ॥**

**वातिकं वस्तिभिः प्राय इति** । प्रायःशब्दोऽयं विशेषार्थस्तेन क्रियान्तरमपि सूचितं भवति । एवमुत्तरत्रापि प्रायःशब्दो व्याख्येयः । वमनप्रायैरितीह पाठे तु वमनप्रधानैः कर्मभिरिति ज्ञेयम् ॥ १ ॥

**ततस्तीक्ष्णं प्रयुञ्जीत भिषक्सम्यक्प्रबोधनम् ॥**

**सम्यक्प्रबोधनमिति(?)**। दोषोपशमनेन सम्यक्स्वव्यापारजनकम् । सम्यक्प्रबोधनमिति वा पाठः ॥

* ख. पुस्तके—" कदली सिन्दुवारश्च निर्गुण्डी गिरिकर्णिका । यवक्षारं च पद्मा च वाराही मांसरोहिणी ॥१॥ चन्द्रभादित्यकान्ता च नाकुल्यो वृद्धदारुकः । पिष्टैस्तद्वस्तमूत्रेण योजयेदापदीश्वरम् । नस्यधूमप्रदेहेषु सर्वभूतग्रहापहम् ।२॥ उन्मादमोहज्वरकृत्यवाताञ्ज्वराग्निचौरोरगवृश्चिकादीन् । उपद्रवान्हन्ति विषाणि चैव सकृत्रिमस्थावरजङ्गमानि ॥ ३ ॥" इत्यधिकमत्र ।

**सर्वतः शुद्धदेहस्य स्यादुन्मादहरा क्रिया ॥ २ ॥**

सुगमम् ॥ २ ॥

**मनोह्वाताक्ष्यर्यजं चैव शकृत्पारावतस्य च ॥**
**अञ्जनं हन्त्यपस्मारमुन्मादं च विशेषतः ॥ ३ ॥**

मनोह्वा मनःशिला । ताक्ष्यर्जं रसाञ्जनम् ॥ ३ ॥

**यष्टीहिङ्गुवचावक्रशिरीषलशुनामयैः ॥**
**साजमूत्रैरपस्मारे सोन्मादे नावनाञ्जने ॥ ४ ॥**

वक्रं तगरपादिका । आमयः कुष्ठम् ॥ ४ ॥

**कपित्थाञ्शारदान्मुद्गान्मुस्तोशीरयवांस्तथा ॥**
**सव्योषान्वस्तमूत्रेण पिष्ट्वा वर्तीः प्रकल्पयेत् ॥ ५ ॥**
**अपस्मारे तथोन्मादे सर्पदष्टे[1] गरार्दिते ॥**
**विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ६ ॥**

कपित्थानित्यस्य स्थाने कायस्थामिति पाठान्तरम् । कायस्था सूक्ष्मैला । **शारदान्मुद्गानिति** । हरिता मुद्गाः प्रायः संभवन्ति शरदि । **वर्तीरिति** । नेत्राञ्जनवर्तीः । **विषपीत इति** । विषपीते (पीतविषे) । **जलमृत इति** । जलपानेन मृतप्राये । सर्वथा मृते तु भेषजं व्यर्थम् । जलमृतलक्षणं चाग्निवेशेनोक्तम् ।

यथा—"विष्टब्धपायुमूर्धाक्षमाध्मातोदरमेहनम् ।
विद्याज्जलमृतं जन्तुं शीतपादकराननम्"इति ॥

जलमृतचिकित्सा सुश्रुतेनोक्ता—

यथा—"वृक्षप्रपातविषमपतितं मृतमम्भसि ॥
उद्बद्धं च मृतं सद्यश्चिकित्सेन्नष्टसंज्ञवत्" ।

वृक्षप्रपातो नदीतटादि । विषमो निम्नोन्नतप्रदेशः । वृक्षादिपतितं प्राणिनं मृतमम्भसि च मृतमुद्बद्धमुल्लम्बितं सद्यो झटिति नष्टसंज्ञवच्चिकित्सेत् । तत्र मृतशब्दो मृत्युसमीपे वर्तमानो गृह्यते न पुनर्मृत एव तस्य निष्फलचिकित्सितत्वात् । केचिदाचार्या अमुं पाठं न मन्यन्ते येऽनुमन्यन्ते तन्मतानुसारेण लिखितोऽयमिति न दोषः । नष्टसंज्ञवदिति ।

"नष्टसंज्ञं विवृत्ताक्षं भग्नग्रीवं विरेचनैः ।
चूर्णैः प्रधमनैस्तीक्ष्णैर्विषार्तं समुपाचरेत्" इति ॥ ५ ॥ ६ ॥

**पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ॥**
**तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥ ७ ॥**

पुष्यनक्षत्रे गृहीतम ॥ ७ ॥

---

[1] ङ. सर्पदंष्टे ।

हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता ॥
दशमूलीजलं तस्य कल्याणाज्यं च योजयेत् ॥ ८ ॥

सुगमम् ॥ ८ ॥

यः खादेत्क्षीरभक्ताशी माक्षिकेण वचारजः ॥
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥ ९ ॥

सुगमम् ॥ ९ ॥

महावैतसघृतमाह—

शणस्त्रिवृत्तथैरण्डो दशमूलं शतावरी ॥
रास्ना मागधिका शिग्रुः क्वाथ्यं द्विपलिकं भवेत् ॥ १० ॥
विदारी मधुकं मेदे काकोल्यौ द्वे सिता तथा ॥
खर्जूराभीरुमृद्वीकामुञ्जातं गोक्षुरस्तथा ॥ ११ ॥
वैतसस्य घृतस्याङ्गैः पक्तव्यं सर्पिरुत्तमम् ॥
महावैतससंज्ञं तु सर्वापस्मारनाशनम् ॥ १२ ॥
[1]गरोन्मादप्रतिश्यायतृतीयकचतुर्थकान् ॥
पापालक्ष्मीं जयत्येतत्सर्वग्रहनिवारणम् ॥ १३ ॥
श्वासकासहरं चैव शुक्रार्तवविशोधनम् ॥
द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम् ॥
पादशेषं च कर्तव्यमेष क्वाथविधिः स्मृतः ॥ १४ ॥

शणस्य मूलं बीजं वा । बीजेन प्रचारः । क्वाथ्यं द्विपलिकं भवेदित्यन्तेन क्वाथ्यम् । क्वाथश्च द्रव्यमापोथितं क्वाथ्यमित्यादिपरिभाषया षोडशगुणाम्भसा कार्यः । विदारीप्रभृतिभिः कल्कः । खर्जूरं प्रसिद्धम् । मुञ्जातमौत्तरापथिकः कन्दः । तदभावे तालमस्तकम् । द्रव्यावल्यभिधानेऽपि मुञ्जातं तालमस्तकं पठितम् । तालसस्येनापि व्यवहारः । वैतसस्य घृतस्याङ्गैरिति । वैतसघृतकल्कैः । तेनोक्तपानीयकल्याणकद्रव्यैरपि कल्कः कार्य इति व्याख्येयं व्यवहारानुरोधात् । युज्यते वैतसोक्तक्वाथ्यद्रव्यग्रहणं यदि ह्यतिदिष्टादेशोऽभीष्टः स्यात्तदा स्पष्टार्थं कल्याणकघृतस्याङ्गैरित्येवं ब्रूयादिति । कल्कश्च मिलित्वा पादिकः ।

तथा च चक्रः—

"घृतमानं क्वाथविधिरिह वैतसवन्मतः ॥
कल्कश्च वैतसप्रोक्तैर्द्रव्यैः सार्धं तु पादिकः" इति ।

महावैतसं घृतम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

---

[1] क. महोन्मा° ।

ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च ॥
पुराणं सर्पिरुन्मादग्रहापस्मारनाशनम् ॥ १५ ॥

सुगमम् । ब्राह्मीघृतम् ॥ १५ ॥

कूष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् ॥
यष्ट्याह्वकल्कं तत्पानमपस्मारहरं परम् ॥ १६ ॥

सुगमम् । कूष्माण्डकं(क)घृतम् ॥ १६ ॥

गोशकृद्रसदध्यम्लक्षीरमूत्रैः समं घृतम् ॥
सिद्धं चतुर्थकोन्मादग्रहापस्मारनाशनम् ॥ १७ ॥

सुगमम् ।

स्वल्पपञ्चगव्यं घृतम् ॥ १७ ॥

बृहत्पञ्चगव्यं क्वचित्पठ्यते तदाह—

द्विपञ्चमूलं त्रिफलां रजन्यौ कटुकां वचाम् ॥
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥ १८ ॥
शम्याकं फल्गुमूलं च पौष्करं सदुरालभम् ॥
द्विपलानि जलद्रोणे पक्त्वा पादरसे स्थिते ॥ १९ ॥
भार्ङ्गीपाठात्रिकटुकं त्रिवृतां निचुलानि च ॥
श्रेयसीमाढकीं रास्नां मूर्वां भूनिम्बचित्रकौ ॥ २० ॥
सारिवे द्वे रोहिषं च भूतिकं मदयन्तिकाम् ॥
क्षिपेत्पिष्ट्वाऽक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥ २१ ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ॥
पञ्चगव्यमिदं ख्यातं महत्तदमृतोपमम् ॥ २२ ॥
अपस्मारे तथोन्मादे श्वयथावुदरेषु च ॥
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ॥
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थिकविनाशनम् ॥ २३ ॥

रजन्यौ हरिद्राद्वयम् । नीलिनी नीलवुन्हा । शम्याक आरग्वधफलम् । निचुलं हिज्जलफलम् । श्रेयसी हस्तिपिप्पली । रोहिषं भूतिकं गन्धतृणाह्वयम् । बृहत्पञ्चगव्यं घृतम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकविंशोऽपस्माराधिकारः समाप्तः ॥ २१ ॥

---

१ क तन्मादम । २ क. समैर्घृत ।

## अथ द्वाविंशो वाताधिकारः।

वातविकारविशेषस्याऽऽक्षेपकादेरपस्मारवद्वेगकर्तृत्वात्तदनन्तरं वातव्याधिः। वातेन कृतो व्याधिर्वात एव वा विकृतो व्याधिर्वातव्याधिः। अत्र हितं विधिं संक्षिप्याऽऽह—

**अभ्यङ्गः स्वेदनं बस्तिर्नस्यं स्नेहविरेचनम्॥**
**स्निग्धाम्ललवणं स्वादु वृष्यं वातामयापहम्*[1]॥ १॥**

स्वेदनं स्निग्धम्। यदाह चरकः—

"वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते॥
रूक्षः स्निग्धस्तथाऽस्निग्धो रूक्षश्चाप्युपपादितः" इति।

बस्तिः स्नेहबस्तिः। नस्यं स्नैहिकम्। स्नेहविरेचनं तिल्वकघृतादि। बिल्वकघृतादि॥ १॥

**पटोलफलकैर्यूषो वृष्यो वातहरो लघुः॥**
**वात्यालककृतो यूषः परं वातविनाशनः॥ २॥**

पटोलफलकैर्यूष इति। यूषोऽत्र यूषसाधर्म्याद्धनः क्वाथो यूषरूप उच्यते। एवं वात्यालककृतो यूष इत्यत्रापि व्याख्येयम्। अन्ये तु मुद्गादिप्रक्षेपाद्यूषत्वमिच्छन्ति। पटोलफलकृतयूषश्च तिक्तत्वाद्रौक्ष्याच्च कफावृते पित्तावृते वाते प्रयोज्यः॥ २॥

**पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम्॥**

पञ्चमूलीबलासिद्धं क्षीरमिति। पञ्चमूली स्वल्पा महती वोभयोरपि वातहरत्वात्॥

**शीतोष्णस्निग्धरूक्षाद्यैर्वातजो यो न शाम्यति॥**
**विकारस्तत्र विज्ञेयो दुष्टमेवास्ति शोणितम्॥ ३॥**

वातरोगे पित्तान्विते शीता क्रिया कफान्विते रूक्षोष्णा केवलानिलजे स्निग्धोष्णा हिता। क्रियाभिराभिरपि चेदस्य न प्रशमस्ततोऽधिगम्यतेऽस्त्यत्र महती शोणितदुष्टिरतिवृद्धशोणिताश्रयस्य हि रोगस्याऽऽश्रयप्रभावान्न स्वचिकित्सयोपशमस्तेनेह दुष्टं यदस्ति शोणितं तन्निर्हर्तव्यमित्याकूतम्॥ ३॥

* ख.पुस्तके—"पुनर्नवैरण्डयवातसीभिः कार्पासजैरस्थिभिरारनालैः। स्विन्नैरमीभिस्त्वपि षड्भिरेव स्वेदः समीरार्तिहरो नराणाम्। कोलं कुलत्थासहदारुरास्नामाषातसीतैलफलानि कुष्ठम्। वचाशशाह्वायवचूर्णमम्लमुष्णोऽतिवातामयिनां प्रदेहः" इत्यधिकमत्र।

[1] क. °मयापहम्।

वाजिगन्धा बलास्तिस्रो दशमूली महौषधम् ॥
द्वे गृध्रनख्यौ रास्ना च गणोऽयं वातनाशनः* ॥ ४ ॥

वाजिगन्धाऽश्वकन्दः । बलाऽतिबला नागबला । अत्र बला पीतपुष्पाऽतिबला श्वेतपुष्पा नागबला गोरक्षतण्डुला । द्वे गृध्रनख्यावहिंस्राद्वयं श्वेतलोहितपुष्पभेदेन कालीयकद्वयं गणत्वादनेन यथायोगं सर्वा क्वाथादिकल्पना कार्या ॥ ४ ॥

आनूपमत्स्यैश्च सवेसवारैरुष्णैः प्रदेहः पवनापहः स्यात् ॥

वेसवारः कुट्टितमांसम् ॥

स्नेहैश्चतुर्भिर्दशमूलसिद्धैर्गन्धौषधैश्चानिलहा प्रदेहः ॥ ५ ॥

चत्वारः स्नेहाः सर्पिस्तैलवसामज्जान इति । तत्र सर्पिरिति सृ गतौ संस्कारानुसर्पणात्सर्पिरित्यर्थः ।

तथाच—" नान्यः स्नेहस्तथा कश्चित्संस्कारमनुवर्तते ॥
यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम् " ॥

अत एव चास्य प्राधान्यादग्रेऽभिधानम् । तिलेषु भवं तैलं सार्षपादीनामपि सादृश्यात्तैलवचनम् । मेदसि वसनाद्वसा । तथाचाऽऽह सुश्रुतः—शुद्धो मांसस्य यः स्नेहः सा वसा परिकीर्तिता । अस्थ्नो मध्ये जायत इति मज्जा । दशमूलमहौषधयोः कल्केन सिद्धैश्चतुःस्नेहैरगालितैः प्रदेहः । किंच दशमूलस्य क्वाथकल्काभ्यां सिद्धैश्चतुःस्नेहैरालोडितगन्धद्रव्यचूर्णेन प्रदेहः । गन्धौषधं सुगन्धिद्रव्यम् । दशमूलानि क्वाथ्यानि गन्धौषधान्यगुरुकुष्ठादीनि कल्क इतीशानदेवः ॥ ५ ॥

निरस्थि पिशितं पिष्टं स्विन्नं घृतगुडान्वितम् ॥
कृष्णामरिचसंयुक्तं वेसवार इति स्मृतः ॥ ६ ॥

सुगमम् ॥ ६ ॥

साल्वणस्वेदमाह—

काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ॥
सानूपमांसः[1] सुस्विन्नः सर्वस्नेहसमन्वितः ॥ ७ ॥
सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः ॥
तेनोपनाहं कुर्वीत[2] सर्वदा वातरोगिणाम् ॥ ८ ॥
काकोल्यादिर्गणो ग्राह्यो[3] योज्योऽष्टवर्गसंयुतः ॥
वातघ्नो भद्रदार्वादिर्वर्गोऽम्लो दाडिमादिकः ॥ ९ ॥

* ख. पुस्तके—शतपुष्पादेवदारुनागरैरण्डसैन्धवैः । अम्लपिष्टैः समैः कोष्णैर्लेपो वातार्तिनाशनः ॥ १ ॥ इत्यधिकमत्र ।

१ ङ. °नूपोदकमांसस्तु स° । २ ङ. कुर्वन्ति । ३ क. °ह्यो नाष्टवर्गकसंज्ञितः ।

**सर्वस्नेहाश्चतुःस्नेहा लवणं सैन्धवादिकम् ॥**
**अम्लादिभिश्च संस्कार्यं काकोल्यादित्रयं त्रिभिः ॥ १० ॥**

काकोल्यादिः प्रसिद्धः । **सवातघ्न इति** । सहवातघ्नैर्भद्रदार्वादिभिर्विदारिगन्धादिभिर्वर्तत इति सवातघ्नः । **सर्वाम्लद्रव्यसंयुत इति** । अम्लद्रव्याणि सक्तुकाञ्जिकसुरासौवीरकदध्यम्लादीनि । केचिदाचार्या एवं वदन्ति । अम्लद्रव्याणि दाडिमादीनि । **सानूपमांस इति** । आनूपमासं कूलचरप्लवकोशस्थपादिमत्स्यभेदेन पञ्चविधम् । सानूपौदकमांस इति पाठान्तरे सहानूपौदकमांसेन वर्तत इति सानूपौदकमांसः । अत्रानूपशब्दोऽयं कूलचरेष्वेव वर्तत औदकशब्देन तु कोशस्थाः पादिनो मत्स्याश्च गृह्यन्ते । ये पुनरौदकग्रहणं न पठन्ति ते तु पञ्चस्वपि वर्तयन्ति । सर्वस्नेहा घृततैलवसामज्जानस्तैः समन्वितः । सुखोष्णः । स्पष्टानि व्यक्तानि सैन्धवादीनि लवणानि यत्र स स्पष्टलवणः । काकोल्यादयश्च गणत्वाद्यथालाभं ग्राह्याः । सहाऽऽसमन्ताल्लवणेन वर्तत इति साल्वणः । **तेनोपनाहमिति** । उपनाहः कोष्णो बहुलो लेपः । अत्र च क्षौमकार्पासादिपट्टैर्बन्धः **सुश्रुते** दर्शितः । पुटकैः स्वेदः पुनरनुकल्पः प्रचरति । द्रव्यस्वभावं स्वेदो वेत्यपरमप्य शमय्या(?) वेक्ष्य कल्पनीय इत्येके वदन्ति ॥

अथ **वृन्दटिप्पणम्**—काकोल्यादिरित्यादि । **अम्लादिभिश्च संस्कार्यं काकोल्यादित्रयं त्रिभिरिति** । अम्लादिभिस्त्रिभिरम्लस्नेहलवणवर्गैः संस्कारः संस्कारकत्वात् । एतत्रयं तावन्मानं देयं यावताऽम्लत्वस्निग्धत्वलवणत्वमात्रं स्यात् । काकोल्यादित्रयं काकोल्यादिर्वातघ्नगणस्तथाऽनूपमांसमेतत्रयं संस्कार्यं संस्कार्यत्वाच्चास्य प्राधान्यं तेन त्रयमेतत्प्रत्येकं समभागम् ।

**चक्रस्त्वाह**—काकोल्यादिवातघ्नगणयोर्मिलितयोर्यावान्भारस्तावदानूपमांसमिति । यदुक्तं तेन—"मांसेनात्रौषधं तुल्यं यावताऽम्लेन चाम्लता ।
तावन्तश्च चतुःस्नेहाः स्निग्धत्वं च यथा भवेत् ॥
यावता चाम्लेनाम्लता पट्वी स्यात्स्वेदनार्थं च काञ्जिकाद्यम्लमिष्यते ।
चतुःस्नेहोऽत्र तावान्स्यात्स्निग्धत्वं यावता स्यादिति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

आमाशयगतवायोश्चिकित्सितमाह—

**आमाशयगते वाते छर्दिताय यथाक्रमम् ॥**
**देयः षट्चरणो योगः सप्तरात्रं सुखाम्बुना ॥ ११ ॥**

**छर्दिताय यथाक्रममिति** । स्नेहस्वेदपेयादिक्रमानतिक्रमेण कृतवमनायेत्यर्थः । वमनं च वाते कफस्थानगतत्वेनास्य कफवत्प्रतिकार्यत्वात् । **यदुक्तम्**—अन्यस्थानगतं दोषं स्थानिवत्समुपाचरेत्" इति । षट्चरणो योगोऽनन्तरमेव वक्तव्यः ॥ ११ ॥

इदानीं षट्चरणयोगमाह—

**चित्रकेन्द्रयवाः पाठाकटुकातिविषाभयाः ॥**
**महाव्याधिप्रशमनो योगः षट्चरणो मतः ॥ १२ ॥**

कटुकातिविषाक्षिपा इति केचित्पठन्ति । क्षिपा हरिद्रा । महाव्याधिप्रशमन इति । मेदःकफावृतवातव्याधिर्महाव्याधिः । वातव्याधिप्रशमन इति केचित्पठन्ति तत्राऽऽमाशयगत एव व्याधिर्ग्रहीतव्यो न पुनराक्षेपकादी रूक्षविषयत्वेन वातविकारित्वादस्य । अयं योगश्चूर्णरूपः ॥ १२ ॥

**कर्षोऽष्टादशनिष्पावैर्धरणं त्र्यधिकैस्तु तैः ॥**
**तेन षड्धरणो योगः सप्तरात्रं प्रयुज्यते ॥ १३ ॥**

निष्पावः शिम्बीबीजम् । धरणं पुनस्तैरष्टादशनिष्पावैस्त्र्यधिकैरेकविंशतिसंख्यावच्छिन्नैः । अमुना मानेन षड्भिर्धरणैः सप्त कर्षाः स्युः । एत एव समभागं विभज्य सप्ताहमुपयोज्यास्तेन कर्षश्चूर्णस्य कल्कस्येत्यादिपरिभाषार्थ एव फलति । अन्ये तु मध्य(मा) एकोनविंशतिर्निष्पावा धरणं तान्यर्धतृतीयानि कर्ष इति वृद्धसुश्रुतवाक्यदर्शनात्पलस्य दशमभागं धरणं ब्रुवते । रत्नपरीक्षाशास्त्रेऽप्युक्तम्—पलस्य दशमांशो हि धरणं समुदाहृतमिति । पलदशमांशेन रक्तीद्वयाधिकषण्माषका भवन्ति षड्भिर्धरणैश्च मिलित्वा पञ्चरक्तिकमाषकं कृत्वा रक्तीद्वययुक्तषण्माषकाधिकं कर्षद्वयं स्यात् । एतदे(वमे)व दशरक्तिकमाषकेण व्यवह्रियमाणेनैकरक्तिकायुक्तमाषकत्रयाधिकः कर्षः । एतावच्च मानं प्रत्यहं सप्ताहं यावद्देयम् । उत्सर्गतः कर्षश्चूर्णस्य दीयते । अत्र तु माषत्रयाधिककर्षग्रहणार्थं विशेषवचनमुचितमेवेति । चक्रेणाप्युक्तम् । पलदशमांशो धरणो योगोऽयं सौश्रुतः । ततस्तस्य[3] मानेन पञ्चगुञ्जकमाषकेण प्रत्यहं देय इति । यत्र द्वादश निष्पावा धरणं तान्यर्धतृतीयानि कर्ष इति च वचनं क्वचिद्ब्रूयात्तत्र निष्पावा महान्तो मन्तव्याः । मध्यमा एकोनविंशतिरित्यादिवाक्येन मध्यमा एवोपात्तास्तेनानयोर्वाक्ययोस्तुल्यार्थतैवावगन्तव्या । षट्चरण इति पाठान्तरे षट्चरणाः षडवयवाः । अत्र पक्षे सामान्यविधया मानकल्पना ॥ १३ ॥

पक्वाशयगतवायोश्चिकित्सामाह—

**पक्वाशयगते वाते कार्यं स्नेहविरेचनम् ॥**
**बस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ १४ ॥**

स्नेहविरेचनं स्नेहेन तिल्वकसर्पिरादिना विरेचनम् । बस्तयः शोधनीया इति । शोधनबस्तयः ।

तद्यथा—“शोधनद्रव्यनिष्क्काथास्तत्कल्कस्नेहसंयुताः ।
युक्ताः खजप्रमथिता बस्तयः शोधना मताः ” इति ।

१ ङ. षट्चर° । २ घ. ङ. °काद्वययु° । ३ घ. ङ. °स्तस्या मा° । ४ ङ. प्रासाश्च ।

**प्राशाश्च लवणोत्तरा इति** । प्राश्यन्त इति प्राशा आहाराः । लवणोत्तरा वातघ्नस्नेहलवणकल्याणलवणादिप्रधानाः । गयी त्वत्राऽऽह—पक्वाशयः पुनरिह द्विविधः पित्तवाताशयभेदेन । तयोर्मध्ये पित्ताशयगते वायौ स्नेहविरेचनं तच्च तिल्वकघृताद्येरण्डतैलादिना । वाताशयगतस्य तु वायोर्मलपित्तकफैरावृतस्य यथादोषं कषायकल्कलेहा बस्तयः । निरावरणे वायौ त्रिवृतादिद्रव्यमूत्रविदारीकल्कसिद्धः स्नेहयुक्तोऽव्यक्तोष्णक्षारश्च बस्तिः । श्लेष्मावरणे वायौ व्यक्तक्षारोष्णो बस्तिः । पित्तावृते पुनरत्र क्षीरबस्तिः शीतः । शेषं समम् ॥ १४ ॥

बस्तिगतस्य तु वायोश्चिकित्सितमाह—

**कार्यो बस्तिगते चापि विधिर्बस्तिविशोधनः ॥**

**विधिर्बस्तिविशोधन इति** । अश्मरीचिकित्सितोक्तो मूत्रकृच्छ्रेऽप्युक्तश्च ॥

श्रोत्रादिषु तु कुपितवायोश्चिकित्सितमाह—

**श्रोत्रादिषु प्रकुपिते कार्यश्चानिलहा क्रमः ॥ १५ ॥**

आदिशब्दात्त्वग्घ्राणजिह्वानेत्राणीन्द्रियाणि गृह्यन्ते । **कार्यश्चानिलहा क्रम इति** । चकारेणेह स्नेहनापेक्षश्च क्रमः । कार्य इत्यपि ख्याप्यते तेन नेत्रे तैजसे तर्पणं सर्पिषा कर्णे च वातप्रधाने तैलेनेत्यादिविधानमूह्यम् । केचिदनन्तरमुक्तग्रन्थं स्नेहाभ्यङ्गोपनाहाश्चेति प्रथमाबहुवचनान्तं पठित्वा श्रोत्रादिकुपितवात एव संबध्नन्ति तन्मते त्वङ्मांसादिगतवाते रक्तविमोक्षणमेकमेव कर्मेति मन्तव्यम् । अन्यदीयमते तु रक्तमोक्षणं योग्यतया रक्तगत एव वाते ज्ञेयम् । **चरकेऽप्युक्तम्** । शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणमिति । रक्तमुक्तिश्चाऽऽवरकरक्तापगमार्थम् ॥१५॥

धातूपधातुगतस्य वायोश्चिकित्सामाह—

**स्नेहाभ्यङ्गोपनाहांश्च मर्दनालेपनानि च ॥**
**त्वङ्मांसासृक्शिराप्राप्ते कुर्याच्चासृग्विमोक्षणम् ॥ १६ ॥**

उपनाहांश्चेत्यत्र चकारेण त्वग्गतवायोर्हृद्यमप्यन्नपानमनुक्तं समुच्चीयते । **त्वङ्मांसासृक्शिराप्राप्त इति** । अत्र त्वक्शब्देन तात्स्थ्याद्रसो ग्राह्यः । शिरा पुनरसृक् । उपधातुप्राप्ते गत इत्यर्थः । रक्तगते वायौ रक्तस्रावो रक्ताधिष्ठानवातनिवृत्त्यर्थः । यदा द्रव्यप्रभावविशेषेण खर्जूरमातुलुङ्गसौवर्चलादिस्नेहाभ्यङ्गादिभिर्न प्रशममेति तदा नियमेन रक्तावरणं परिज्ञाय रक्तमोक्षणं कर्तव्यं न पुनरन्यथा । मेदोगते पुनरिहानिले चिकित्सा नोपदिष्टा तस्य स्नेहाविषयत्वेन वातव्याधिकर्मणामविषयत्वात् । **सुश्रुते** महावातव्याधौ पुनरावरणप्रसङ्गेन मेदोगतो वायुरुक्तः ॥ १६ ॥

स्नायुगतस्य संधिगतस्य च वायोश्चिकित्सामाह—

स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ॥
स्नायुसंध्यस्थिसंप्राप्ते कुर्याद्वाते विचक्षणः ॥ १७ ॥

स्नेहोऽत्र बाह्य आभ्यन्तरश्च । अग्निकर्म तप्तशरशलाकादिभिरत्युग्ररुजि वायौ कार्यम् । विचक्षण इत्यत्रातन्द्रितः (इति) पाठः । अत्रातन्द्रितोऽनलसः । एतेन चिरकालं निरन्तरं क्रिया इति दर्शयति ॥ १७ ॥

निगूढेऽस्थिगते वाते पाणिमन्थेन दारिते ॥
नाडीं दत्त्वाऽस्थनि भिषक्चूषयेत्पवनं बली ॥ १८ ॥

निगूढ इति । संमूढे । पाणिमन्थेनेति । भ्रमरेण । नाडीमिति । नलिकाम् । डल्लणस्तु निरुद्धेऽस्थनि वा वायाविति पाठ ईदृशीमाशङ्कां कृत्वा व्याख्याति । अस्थनि गते मज्जस्थे च कर्म निर्दिशन्नाह निरुद्धेऽस्थनि वा वायावित्यादि । त्वङ्मांसं शस्त्रेण विपाट्यास्थि पाणिमन्थेनाऽऽराशस्त्रेण विद्ध्वा तत्र रन्ध्रे द्विमुखीं नाडीं प्रणिधाय मुखमारुता चूषणेन पवनाकर्षणं करणीयमिति । बली बलयुक्तः ॥ १८ ॥

शुक्रगतस्य वायोश्चिकित्सामाह—

शुक्रप्राप्तेऽनिले कार्यं शुक्रदोषचिकित्सितम् ॥ १९ ॥

शुक्रदोषचिकित्सितमिति । सुश्रुते रजःशुक्रशुद्धिशरीरोक्तं किंवा मूत्रदोषोक्तबलादिसाधितघृतादिकं मेदो मज्जगत इव चिकित्सितं तन्त्रान्तरेऽनुमन्तव्यम् ।

तदुक्तम्—"विरेको मांसमेदस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत्" इति ॥

सुश्रुते वातव्याधौ सुप्तिवातचिकित्सोक्ता—

"सुप्तिवाते त्वसृङ्मोक्षं कुर्याच्च बहुशो भिषक् ।
दिह्याच्च लवणागार(?)धूमैस्तैलसमन्वितैः" ॥

अस्यार्थः । रक्तावरणकृतायां(या) सुप्तित(स्त)या लक्षितो वातः सुप्तिवातः । सुप्तिः स्पर्शाज्ञानम् । न पुना रसावरणकृत(ता)या सुप्तित(स्त)या लक्षितो वातस्तस्य स्नेहोपनाहादिविषयत्वात् । अन्यधातुगते वायौ रक्तापकर्षणस्यायुक्तत्वात् । बहुशो बहून्वारानल्पाल्पस्रावणेनान्यथा वातप्रकोपः स्यात् । दिह्याल्लेपयेत् । अन्ये तु सुप्तिवातस्त्वग्गतवातो वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमचुमायनमित्यादिकः । तेषां मते त्वङ्मांसासृक्शिराप्राप्त इत्यादिना प्रागुक्तमपि शोणितमोक्षणमिह पुनस्तदेवोक्तम् । लवणागारधूमैरित्यादिप्रदेहोऽधिक उक्तः ॥ १९ ॥

अवयवविशेषगते वायौ क्रियाविशेषमाह—

---

१ घ. सुप्तिसुम ।

वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा ॥
वमनं हन्ति नस्यं च कुशलेन प्रयोजितम् ॥ २० ॥

वक्षस्त्रिस्कन्धगतमिति । वक्षः स्तनान्तरालम् । त्रिक इहांसद्वयान्तराधिसंधिरूर्ध्वत्रिकमित्यर्थः । स हि श्लेष्मस्थानं तद्गत एव वाते वमनं नस्यं च यौगिकम् । नस्यमिह शिरोविरेचनमिति चक्रः । कुशलेन भिषजा क्रियाविदाऽवस्थाविदेत्यर्थः । कुशलेन प्रयोजितमित्यमर्शं विना नस्यविधानात्प्रतिमर्शं विना नस्यं चतुर्विधमप्यत्रेति तु कार्तिकः ॥ २० ॥

माषबलाशुकशिम्बाकत्तृणरास्नाश्वगन्धोरुबूकाणाम् ॥
क्काथो नस्यनिपीतो रामठलवणान्वितः कोष्णः ॥ २१ ॥

कत्तृणं गन्धतृणम् । उरुबूक एरण्डः । क्काथमात्रा चात्र मुखपेयक्काथतुल्या । यस्तु तावन्तं क्काथं नासया पातुं न शक्नोति तेनासौ स्तोकस्त्याज्यः । पेयश्चायं क्काथो भुक्त्वा प्रहरत्रयोपरि यत्र पार्श्वे रुजा तत्पार्श्वस्थनासापुटेन रामठलवणे प्रक्षेपः । रामठं हिङ्गु रक्तीत्रयं सैन्धवचूर्णमेकमाषकमानं प्रक्षेपः प्रचरति ॥ २१ ॥

अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम् ॥
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम् ॥ २२ ॥
मापिकं हिङ्गुसिन्धूत्थे जरणाद्यास्तु शाणिकाः ॥
माषात्मगुप्तकैरण्डं शृतं वाट्यालकं पिवेत् ॥
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम् ॥ २३ ॥

सुगमम् ॥ २२ ॥ २३ ॥

स्वल्परसोनपिण्डमाह—

पलमर्धपलं वाऽपि रसोनस्य सुकुट्टितम् ॥ २४ ॥
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रिकैः ॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोडितम् ॥ २५ ॥
यथाग्निभक्षितं प्राता रुबूकक्काथपानतः ॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम् ॥ २६ ॥
वातरोगं निहन्त्याशु अर्दितं चापतन्त्रकम् ॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे ॥ २७ ॥
ऊरुस्तम्भे च गृध्रस्यां क्रिमिदोषे विशेषतः ॥
कटिकुक्ष्यामयं हन्याज्जाठरं च विशेषतः ॥ २८ ॥

---

१ घ. °रण्डवाट्यालकशृतं पि° । २ घ. °रुबुक्काथानुपा° । ३ क. °टिपृष्ठाम° ।

पलमर्धपलं वेति । सार्धपलमेकं वाशब्दः पूर्वयोगापेक्षया चार्थे । त्वग्विरहितपिष्ट-रसोनस्य सार्धपलमेकं यथोक्तचूर्णयुक्तमेकीकृत्य स्थाप्यं ततो यथानलमष्टादशमाषकानुपयुञ्जीत । अन्यस्त्वाह पलं चार्धपलं वा यथोक्तचूर्णसहितं प्रत्यहं भक्ष्यं न च मात्राधिक्यादग्निवधशङ्का वातरोगिणः प्रायेण दीप्ताग्नित्वात् । यस्तु वातरोगवानवसन्नाग्निर्न स साध्यो बृंहणविधेरसहत्वात् । बृंहणविधिसाध्यत्वाच्च वातव्याधेः । अल्परसोनपिण्डः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

माषपिष्टकृतिं जग्ध्वा नवनीतेन सोऽर्दिती ॥
क्षीरमांसरसैर्भुक्त्वा दशमूलीजलं[2] पिबेत् ॥ २९ ॥

माषपिष्टकृतिमिति । माषपिष्टविकृतिं जग्ध्वा क्षीरमांसरसैर्भुक्त्वा वाऽर्दिती दशमूलीक्वाथं पिबेदिति योज्यम् ॥ २९ ॥

स्नेहाभ्यङ्गपरो[3] बस्तिनस्यैर्धूमपरायणः[4] ॥
अर्दितं स जयेत्सर्पिः पिबेदुत्तरभक्तकम् ॥ ३० ॥

पिबेदुत्तरभक्तकमिति । भोजनोत्तरकालम् ॥ ३० ॥

दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम् ॥
सायं भुक्त्वा पिबेन्नस्यं विश्वाच्यामवबाहुके ॥ ३१ ॥

सुगमम् ॥ ३१ ॥

मूलं बलायास्त्वथ पारिभद्रात्तथाऽऽत्मगुप्तास्वरसं पिबेद्वा ॥
नस्यं तु यो माषरसेन कुर्यान्मासादसौ वज्रसमानबाहुः ॥३२॥

मूलं बलाया इत्येको योगः । पारिभद्राच्च मूलमपरं (यं) तु द्वितीयः । अनयोश्च स्वरसः क्वाथो वा प्रकरणात् । आत्मगुप्तास्वरसं पिबेद्वेति तृतीयः । पानमेषां तु नासया । नस्यं तु यो माषरसेनेत्यत्र तैलसैन्धवे अपि प्रक्षिपन्ति ॥ ३२ ॥

पञ्चमूलीकृतः क्वाथो दशमूलकृतोऽथ वा ॥
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ ३३ ॥

अत्र पञ्चमूली महती ॥ ३३ ॥

बाहुशोषे पिबेद्भुक्त्वा सर्पिः कल्याणकं महत् ॥

सर्पिः कल्याणकं महदिति । महाकल्याणकम् । तच्चोन्मादचिकित्सिते चरकोक्तम् ॥

हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् ॥
ऊर्ध्वो[5] वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत्[6] ॥ ३४ ॥

---

१ क. भुक्त्वा । २ क. °लीरसं पि° । ३ क. °ङ्गशिरो° । ४ घ. °रो नित्यं ब° । ५ घ. °स्य-प° । ६ क. कुब्जो ।

अस्य ग्रन्थस्य पाठो रुग्विनिश्चये कुब्ज(स्य) साक्षादपठितत्वात् । अन्तरायामबहिरायामाभ्यां तु तत्र कुब्जः संगृहीत एव ॥ ३४ ॥

**वातघ्नैर्दशमूल्या च नवं कुब्जमुपाचरेत् ॥**
**स्नेहैर्मांसरसैर्वाऽपि प्रवृद्धं तं विवर्जयेत् ॥ ३५ ॥**

**वातघ्नैर्दशमूल्येति ।** गणत्वादाभ्यां क्वाथोपनाहादिकं कार्यम् । नवत्वं कुब्जस्य यावद्रुजापूर्विका वृद्धिः । **प्रवृद्धं तं विवर्जयेदिति ।** प्रवृद्धत्वं वक्षःकट्यूरुभङ्गेन ज्ञेयम् । यदुक्तम्—तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनादिति ॥ ३५ ॥

**पिप्पल्यादिरजस्तूनीप्रतितून्योः सुखाम्बुना ॥**
**पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ॥ ३६ ॥**

**पिप्पल्यादिरज इति ।** पिप्पल्यादिगणचूर्णम् । एतच्च कफावृते वाते यौगिकम् । **स्नेहलवणमिति । सुश्रुते** वातव्याध्युक्तम् ।

तद्यथा—"*स्नुहीलवणवार्ताकस्नेहा....घटे दहेत् ।
गोमयैः स्नेहलवणं तत्परं वातनाशनम्" इति ॥

इहापि सुखाम्बुनेति योज्यम् । एतदामान्विते वाते भद्रम् । **सघृतं क्षारहिङ्गु वेति ।** घृतेनैव क्षारहिङ्गुनोः पानम् । क्षारो यवक्षारः ॥ ३६ ॥

**आध्माने लङ्घनं पाणितापश्च फलवर्तयः[1] ॥**[2]
**दीपनं पाचनं चैव बस्तिश्चैव विशोधनः ॥ ३७ ॥**

**दीपनं पाचनं चेति ।** लङ्घनानन्तरं दोषशेषोपशमनार्थं दीपनं पाचनं भेषजम् । पाचनं किंचिन्न दीपनं यथा पटोलपत्रादि । दीपनं किंचिन्न पाचनं यथा त्रिफला तेनोभयोपादानं साधु ॥ ३७ ॥

**दारुहैमवतीकुष्ठैः[3] सैन्धवक्षारहिङ्गुभिः ॥**
**अम्लपिष्टैः[4] सुखोष्णैश्च आध्मान उदरं दिहेत् ॥ ३८ ॥**

**दिहेल्लिम्पेत् ॥** ३८ ॥

**प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा ॥ ३९ ॥**

**प्रत्याध्माने तु वमनमिति ।** प्रत्याध्मानस्याऽऽमाशयसमुत्थत्वेन तत्र वमनं हितम् ॥ ३९ ॥

---

* एवं स्नुहीकाण्डवार्ताकुशिग्रुलवणानि संक्षुद्य घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेदेतत्स्नेहलवणमुपदिशन्ति वातरोगेष्विति सौश्रुतः पाठः ।

---

१ क. च । २ घ. °ने फाणितं पेयं लङ्घनं फ° । ३ क. °कुष्ठशताह्वाहिङ्गुसैन्धवैः । अ° । ४ क. °पिष्टैश्च सततमाध्मानमुदरं हरेत् । ५ क. च ।

[1]प्रत्यष्ठीलाष्ठीलिकयोर्गुल्माभ्यन्तरविद्रधेः ॥
क्रिया हिङ्ग्वादिकं चात्र शस्यतेऽत्र विशेषतः ॥ ४० ॥

गुल्माभ्यन्तरविद्रधेरिति । गुल्मो वातजः । अन्तर्विद्रधिरपि वातज एव । तयोश्च वातमूत्रपुरीषानुलोम्येन चिकित्सा समुचितैव । हिङ्ग्वादिकमिति । गुल्माधिकारोक्तमिह संग्रहे ॥ ४० ॥

विश्वाच्यां खञ्जपङ्ग्वोश्च दाहे हर्षे च पादयोः ॥
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके ॥
शिरां यथोक्तां निर्विध्य[2] चिकित्सा वातरोगवत् ॥ ४१ ॥

शिरां यथोक्तामिति । शिराव्यधविधौ यः सुश्रुते शिरादेशो व्यध(ध्य)त्वेनोक्तस्तदनतिक्रमेणेत्यर्थः । ननु खञ्जपङ्ग्वोस्तत्राव्यध(ध्य)त्वेन शिरातिदेशो नोक्तः । मैवम् । क्रोष्टुशीर्षवातवेदनास्रजङ्घासंश्रितामितामित्यत्र वातवेदनाग्रहणेन जङ्घागतरक्तरुद्धसकलवातवेदनापरिग्रहात्खञ्जपङ्ग्वोरपि रक्तरुद्धवातवेदनाया जङ्घासंधिगताया एव शिराया व्यध इति व्याख्यानयन्ति ॥ ४१ ॥

जिह्वा[3]स्तम्भे क्रिया श्रेष्ठा सामान्योक्ता तथाऽर्दिते ॥

सामान्योक्ता तथाऽर्दित इति । सामान्योक्ता तथाऽर्दितोक्ता च क्रिया हितेत्यर्थः ॥

शिरोग्रहे तु कर्तव्या शिरोगतमरुत्क्रिया ॥ ४२ ॥

सुगमम् ॥ ४२ ॥

कल्याणकलेहमाह—

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम् ॥ ४३ ॥
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ ४४ ॥
तच्चूर्णं सर्पिषाऽऽलोड्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ॥ ४५ ॥
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनैः ॥
जाड्यगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ ४६ ॥

अजमोदा यवानी । यष्टी ब्रह्मयष्टी ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

गुग्गुलुं क्रोष्टुशीर्षे तु गुडूचीत्रिफलाम्भसा ॥
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम् ॥ ४७ ॥

---

१ घ. 'लिकाया गुल्मा' । २ ङ. निर्विध्य । ३ ङ. 'ह्वामूले कि' । ४ क. 'नः ॥ जडम' ।

गुग्गुलुं क्रोष्टुशीर्ष इति । गुग्गुलोरुत्तमविधायां (या(?) विरेकार्थं कर्षः । एरण्डतैलस्य कर्षद्वयम् । क्षीरेणेति । आहारद्रव्यत्वान्मनाक्प्रभूतेन । पिबेद्वा वृद्धदारकमिति । प्रस्तुतत्वात्क्षीरेणैव । उष्णाम्बुना वेत्यन्ये ॥ ४७ ॥

श्यामासमालम्बुषाद्यं कार्यं वा वातरक्तनुत् ॥

श्यामासमालम्बुषाद्यमिति । श्यामा वृद्धदारकं तत्सममलम्बुषादिचूर्णं तच्चाऽऽमवातोक्तं ज्ञेयं तत्र वातरक्तहरत्वं श्रुतं न तु श्लीपदोक्तं तत्र वातरक्तहरत्वश्रुत्यभावात् ॥

हृते रक्तेऽनिलहरो विधिः कृत्स्नः प्रशस्यते ॥ ४८ ॥
दशमूलीबलारास्नागुडूचीविश्वभेषजम् ॥
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥ ४९ ॥

दशमूलादीनां क्वाथः । एरण्डतैलं प्रक्षेपः ॥ ४८ ॥ ४९ ॥

विशोध्यैरण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत् ॥
तत्पायसं कटीशूले गृध्रस्यां परमौषधम् ॥ ५० ॥

विशोध्य त्वचं स्फोटयित्वा । एरण्डबीजकर्षं किंचित्तण्डुलान्दत्त्वा क्षीरेण पायसं साधयेत् । विरेचकोऽयं योगः ॥ ५० ॥

पञ्चमूलीकषायं तु रुबुतैल[1]त्रिवृद्युतम् ॥
गृध्रसीगुल्मशूलं च पीतं सद्यो नियच्छति ॥ ५१ ॥

॥ ५१ ॥

तैलं घृतं वाऽर्द्रकमातुलुङ्गयो रसं सचुक्रं सगुडं पिबेद्वा ॥
कट्यूरुपृष्ठत्रिकशूलगुल्मगृध्रस्युदावर्तहरः प्रदिष्टः ॥ ५२ ॥

आर्द्रकस्वरसमातुलुङ्गीरसचुक्रगुडानां तुल्यो भागः । तं तैलं घृतं वा दत्त्वा पिबेत् । पिबेद्वेति वाशब्दः पूर्वयोगापेक्षया । किंवा तैलं घृतमार्द्रकमातुलङ्गयोर्मिलितयो रसं पृथक्पृथङ्मिलितचुक्रगुडप्रक्षेपात्पिबेत् । तेन योगत्रयमेतत् । मातुलुङ्गी मधुकर्कटी । ॥ ५२ ॥

रास्नायास्तु पलं चैकं कर्षान्पञ्च च गुग्गुलोः ॥
सर्पिषा वटिकां कृत्वा खादेद्वा गृध्रसीहराम् ॥ ५३ ॥
शुण्ठीगन्धर्वबीजाभ्यां पिष्टाभ्यां पायसं कृतम् ॥
भक्षितं कटिशूलं च गृध्रसीं हन्त्यसंशयम् ॥ ५४ ॥

गन्धर्व एरण्डः ॥ ५३ ॥ ५४ ॥

---

१ घ. °तैलं त्रि° । २ क. °त्वा गृध्रसीं हन्त्यसंशयम् । शु° ।

नाऽऽदौ बस्तिविधिं कुर्याद्यावदूर्ध्वं न शुध्यति ॥
स्नेहो निरर्थकस्तत्र भस्मनीव हुतं यथा ॥ ५५ ॥

यावदूर्ध्वं न शुध्यतीति । ननू[?]र्ध्वं पक्वाशयात्पक्वाशयोर्ध्वदेशश्चाऽऽमाश स्तस्य च शुद्धिर्वमनविरेचनाभ्यां पित्ताशयो ह्यामाशयैकदेश एव ॥ ५५ ॥

गृध्रस्यार्तस्य जङ्घायां स्नेहस्वेदे कृते भृशम् ॥
पद्भ्यां संमर्दितायां च सूक्ष्ममार्गेण गृध्रसीम् ॥ ५६ ॥
अवतार्याङ्गुलौ सम्यक्कनिष्ठायां शनैः शनैः ॥
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥ ५७ ॥
तं शस्त्रेण विदार्याऽऽशु प्रवालाङ्कुरसंनिभम् ॥
समुद्धृत्याग्निना दग्ध्वा लिम्पेद्यष्ट्याह्वचन्दनैः ॥ ५८ ॥

॥ ५६ ॥ ५७ ॥ ५८ ॥

विध्येच्छिरामिन्द्रबस्तेरधस्ताच्चतुरङ्गुले ॥
यदि नोपशमं गच्छेद्दहेत्पादकनिष्ठिकाम् ॥ ५९ ॥

विध्येच्छिरामिन्द्रबस्तेरधस्तादिति । इन्द्रबस्तिरिह गुल्फजङ्घामध्यभा ॥ ५९ ॥

तैलमेरण्डजं वाऽपि गोमूत्रेण पिबेन्नरः ॥
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ ६० ॥

मासमेकं प्रयोग इति । योगोऽयं विरेचकत्वेनाल्पमात्रया प्रत्यहं मासं याव न्मस्य भूरिमात्रया करणे तु विरेचनव्यापत्तिः स्यात् ॥ ६० ॥

रक्तावसेचनं कुर्यादभीक्ष्णं वातकण्टके ॥
पिबेदेरण्डतैलं वा दहेत्सूचीभिरेव च ॥ ६१ ॥
वायुः कट्याश्रितः क्रुद्धः सामो वा जनयेद्रुजम् ॥
कटिग्रहः स एवोक्तः पङ्गुः सक्थिद्वयाश्रितः ॥ ६२ ॥

सुगमम् ॥ ६१ ॥ ६२ ॥

दशमूलकषायेण पिबेद्वा नागराम्भसा ॥
कटिशूलेषु सर्वेषु तैलमेरण्डसंभवम् ॥ ६३ ॥

सुगमम् ॥ ६३ ॥

आदित्यपाकगुग्गुलुमाह—

पृथक्पलांशा त्रिफला पिप्पली च विचूर्णितम्[२] ॥
दशमूलाम्बुना भौर्ग्यं[३] त्वगेलार्धपलान्वितम्[४] ॥ ६४ ॥

---

१ घ. शुद्धः । २ क. °र्णिता । द° । ३ क. भाव्या । ४ क. °न्विता । द° ।

दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः ॥
एष मांसरसाभ्यासाद्वातरोगानशेषतः ॥ ६५ ॥
हन्ति संध्यस्थिमज्जस्थान्वृक्षमिन्द्राशनिर्यथा ॥
लेहवद्द्विगुणेनायमालोड्याऽऽलोड्य वाऽऽतपे ॥
दशमूलाम्बुना शोष्यः सप्तवारांस्तु गुग्गुलुः ॥ ६६ ॥

त्वगेलार्धपलान्वितमिति । मिलित्वा । त्रिफलादिद्रव्यं गुग्गुलान्तं सर्वमेकीकृत्य भाव्यं लेहवत् । द्विगुणेन दशमूलाम्बुना भाव्यम् । चक्रस्तु पठति—

"भाव्यद्रव्यसमं क्काथ्यं क्काथोऽष्टांशशृतेन हि ।
आर्द्रं यावदिदं भाव्यं सप्ताहं भावनाविधिः" इति ॥६४॥६५॥६६॥

त्रयोदशाङ्गगुग्गुलुमाह—

आभाऽश्वगन्धा हपुषा गुडूची शतावरी गोक्षुरकं समङ्गा ॥६७॥
श्यामा शठी घोषवती यवानी सनागरा चेति समैश्च चूर्णैः ॥
तुल्यं भवेत्कौशिकमत्र मध्ये देयं तथा सर्पिरतोऽर्धभागम् ॥६८॥
अर्धाक्षमात्रं च ततः प्रयोगात्कृत्वाऽनुपानं सुरयाऽथ यूषैः ॥
मद्येन वा कोष्णजलेन वाऽपि क्षीरेण वा मांसरसेन वाऽपि ॥६९॥
कटिग्रहे गृध्रसिबाहुपृष्ठे हनुग्रहे जानुनि पादयुग्मे ॥
संधिस्थिते चास्थिगते च वाते मज्जागते स्नायुगते च कोष्ठे॥७०॥
रोगाञ्जयेद्वातकफानुविद्धान्वातेरितान्हृद्ग्रहयोनिदोषान् ॥
भग्नास्थिविद्धेषु च खञ्जवाते त्रयोदशाङ्गं प्रवदन्ति सिद्धाः*॥७१॥

* ख. पुस्तके—रास्नैरण्डकणाभयासहचराक्षुद्रामृतासारणीमुस्तापुष्करदारुगुग्गुलुवचा ब्राह्मी हरिद्रा शठी । आभा ग्रन्थिकपञ्चमूलहपुषा यासः शताह्वा विषा वर्षाभूः सयवानिका शतपदी (आरग्वधः)कण्ठ्यश्वगन्धाः समाः ॥ १ ॥ एष रास्नादिकगणः सर्ववातनिषूदनः । कुब्जे च वामने चैव पक्षघाते हनुग्रहे ॥ २ ॥ शुष्यमानेषु गात्रेषु संधीनां बन्धनेषु च । ऊरुस्तम्भेऽग्निसादे च नासाभङ्गे गलग्रहे ॥३॥ शोफे पाण्ड्वनिले चोर्ध्वे सामवाते सशोणिते । खञ्जे च कुब्जके चैव मूकत्वे गद्गदेऽपि च ॥ ४ ॥ उदावर्ते च शूले च संनिपातज्वरेषु च । नराणां रुधिरस्रावे योनिदोषे भगन्दरे ॥ ५ ॥ अर्शांसि ग्रहणीदोषे तथा कोष्ठकजेषु च । एष क्काथो मया प्रोक्तः प्राणिनां हितकाम्यया ॥ ६ ॥ रास्नाद्यः क्काथः । विटपे जाङ्गले देशे क्षीरक्षीप इति स्मृतः । विशेषान्मधुराभ्यासे करीरो विटपाकृतिः ॥ ७. ॥ पीतस्तच्छल्लनिष्क्काथः सर्ववातविकारनुत् । सर्वयोगैरसाध्या ये वातास्तान्नाशयन्ति च ॥८॥ रास्नायुक्पञ्चमूलीमिशिवरुणबलामेघपथ्यायवानीशुण्ठीपाठाजमोदासहचरहपुषाभङ्गुरावाजिगन्धाः । आभावृश्चीवसोग्राविषममृतशठीसारणीवृद्धदारुरास्नाशम्याकषायैः शतरुवरी(?)पौष्करैरण्डचव्यैः ॥९ ॥ एतत्सर्वं समांशं विधिवत्क्काथितं मुष्टिमात्रं जलेन चूर्णं चाऽऽभादिमस्मिन्प्रपिबति मनुजो गुग्गलुं वा तथैव । आमं पक्षाभिघातं हनुगतपवनं चार्दितं जानुशूलं गृध्रस्यूरुत्रिकार्ति कफपवनरुजो हन्ति संध्यस्थिसंस्थाः ॥ १० ॥ आभादिचूर्णम् । रास्ना वातारिमूलं च वासकश्च दुरा-

१ 'वारं स गु' । २ ख. सरास्ना । ३ घ. चूर्णम् । ४ घ. अक्षार्धभागं च ।

आभा ' आभ ' इत्याख्यातं वणिग्द्रव्यम् । श्यामा वृद्धदारकम् । घोषवती शतपुष्पेति वृन्दस्य व्याख्या । तुल्यमिति । समुदितचूर्णतुल्यम् । कौशिको गुग्गुलुः । सर्पिरतोऽर्धभागमिति । कौशिकादर्धभागम् । भिषजस्तु गुग्गुलुपिष्टनार्थं यावते(दि)च्छन्ति तावदपरिमितमेव गृह्णन्ति । सुरायूषादिभिरनुपानविकल्पो दोषसंसर्गसात्म्याद्यपेक्ष्यः । त्रयोदशाङ्गो गुग्गुलुः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

दशमूलघृतमाह—

दशमूलस्य निर्यूहे जीवनीयैः पलोन्मितैः ॥
क्षीरेण च घृतं पक्वं तर्पणं पवनार्तिजित् ॥ ७२ ॥

दशमूलक्वाथस्त्रिगुणः । क्षीरं स्नेहसमम् । तथा च चक्रः—क्वाथोऽत्र त्रिगुणः सर्पिष्प्रस्थः साध्यः पयःसमः । जैज्जटमते तु—क्वाथश्चतुर्गुणः क्षीरं स्नेहसमम् । अस्मिन्नर्थे परिभाषा—

"एकद्वित्रिद्रवैर्द्रव्यैः कुर्यात्स्नेहश्चतुर्गुणम् ॥
क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणम् ॥

अस्यायमर्थः । यत्रैको द्रवस्तत्रैकेनैव चातुर्गुण्यं यत्र तु द्वौ त्रयो वा तत्र द्वाभ्यां त्रिभिरपि मिलित्वा चातुर्गुण्यं क्षीरं च तत्र स्नेहसमं चतुर्भिरपि मिलित्वैव चातुर्गुण्यमिति । एवं सर्वत्र व्याख्येयम् । जीवनीयं दशकम् । तथा च—

"जीवकर्षभकौ मेदे काकोल्यौ मधुकं सहे ।
जीवन्ती जीवनीयोऽयं मधुरो जीवनो गणः" ॥

अनेन कल्कः । दशमूलीघृतम् ॥ ७२ ॥

अश्वगन्धाघृतमाह—

अश्वगन्धाकषायेण कल्कैः क्षीरं चतुर्गुणम् ॥
घृतं पक्वं तु वातघ्नं वृष्यं मांसविवर्धनम् ॥ ७३ ॥

ऽभा । शठीदारुवचामुस्तानागरातिविषाभया ॥ ११ ॥ श्वदंष्ट्रा व्याधिघातश्च मिशिधान्या पुनर्वा । अश्वगन्धामृताकृष्णावृद्धदारुशतावरी ॥ १२ ॥ बला सहचरा चैव चविका बृहतीद्वयम् । समभागान्वितैरेतैरास्नात्रिगुणभागिका ॥ १३ ॥ कषायं पाचयेत्सिद्धमष्टभागावशेषितम् । शुण्ठीचूर्णसमायुक्तमाभायेनाथ संयुतम् ॥ १४ ॥ अथवाऽलम्बुषाद्येन यदि वाऽप्यजमोदया । यथायोगं यथासात्म्यं प्रक्षेपं कारयेद्बुधः ॥ १५ ॥ वातरोगेषु सर्वेषु संधिमज्जागतेषु च । आनाहेषु च सर्वेषु सर्वगात्रप्रकम्पने ॥ १६ ॥ कुब्जेषु वामने चैव पक्षाघाते तथाऽर्दिते । जानुजङ्घासु पीडासु गृध्रस्यां च हनुग्रहे ॥ १७ ॥ प्रशस्तो वातरक्तेषु ऊरुस्तम्भे तथाऽर्शसि । अन्त्रवृद्धौ श्लीपदे च योनिशुक्रामये तथा ॥ १८ ॥ पुंसां मेढ्रगते रोगे स्त्रीणां वन्ध्यामये तथा । योषितां गर्भदं मुख्यं नान्यत्स्यात्परमं क्वचित् ॥ १९ ॥ महारास्नादिकं नाम प्रजापतिविनिर्मितम् । महारास्नादिक्वाथः । इत्यधिकमत्र ।

१ घ. पलान्वितैः

चतुर्गुणक्षीरसाहचर्यादश्वगन्धाक्वाथोऽपि चतुर्गुणः । कल्कैरिति । अश्वगन्धाया एव । अश्वगन्धाघृतम् ॥ ७३ ॥

आजं चर्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिम् ॥
पञ्चमूलीद्वयं सम्यग्जलद्रोणे विपाचयेत् ॥ ७४ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥
जीवनीयैः सयष्ट्याह्वैः क्षीरं चैव शतावरीम् ॥ ७५ ॥
छागलाद्यमिदं नाम्ना सर्ववातविकारनुत् ॥
अर्दिते कर्णशूले च बाधिर्ये मूकमिम्मिणे ॥ ७६ ॥
जडगद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः ॥
अपतानेऽपतन्त्रे च सर्पिरेतत्प्रशस्यते ॥ ७७ ॥
द्वात्रिंशच्च पलान्यत्र देयानि दशमूलतः ॥
घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते ॥
तज्ज्ञातव्यमिहाऽऽर्येण भागतो द्विगुणं भवेत् ॥ ७८ ॥

चर्मादिपरित्यक्तं तरुणच्छागगुडकात्मकं मयूराज्यघृते मयूरगुडकवद्गृहीत्वा दशमूलं च द्वात्रिंशत्पलमानं जलद्रोणे विपक्तव्यमिति वृद्धवैद्यानां व्यवहारः । चक्र स्त्वाह—

"द्रोणे द्रव्यतुला श्रुत्वा स्याच्छागदशमूलयोः ।
पृथक्तुलार्धं यष्ट्याह्वद्वयं देयं द्विधोक्तितः" इति ॥

चर्मशृङ्गादिपरित्यागश्च तन्मते ग्रहणयोग्यतोपदर्शनार्थम् । जीवनीयैः कल्कः । जीवनीयदशकम् । यष्ट्याह्वं यष्टिमधु । जीवनीयदशकस्य ग(कग)णपठितस्याप्यस्येह पुनरुक्तिर्भागद्वयपरिग्रहार्था । स्थलजजलजभेदाद्यष्टीमधुद्वयग्रहणार्थमित्यन्ये । भागद्वयग्रहणेन प्रचारः । क्षीरं चैव शतावरीमिति । क्षीरप्रत्यासत्त्या शतावर्या रसो ग्राह्यः । क्षीरशतावरीरसौ प्रत्येकं स्नेहसमौ । रसश्रुत्यभावाच्छतावरी कल्करूपेत्यन्ये । आद्यः पक्षो व्यवहारी । छागलाद्यं घृतम् ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

एलामुरासरलशैलजदारुकौन्ती-
चण्डाशठीनलदचम्पकहेमपुष्पम् ॥
स्थौणेयगन्धरसपूतिदलं मृणाल-
श्रीवासकुन्दुरुनखाम्बुवराङ्गकुष्ठम् ॥ ७९ ॥
कालीयकं जलदकर्कटचन्दनश्री-
जात्याः फलं सविकसं सहकुङ्कुमं च ॥
स्पृक्कातुरुष्कलघु लाभतया विनीय
बलाक्वथनदुग्धयुतं च दध्ना ॥ ८० ॥

सार्धं पचेत्तु हितमेतदुदाहरन्ति
वातामयेषु बलवर्णवपुष्यकारि ॥ ८१ ॥

कौन्ती रेणुकम् । चण्डा चौरपुष्पी । नलदं मांसी । हेमपुष्पं नागकेसरम् । स्थौणेयकं ग्रन्थिपर्णम् । गन्धरसो बोलः । पूतिः खटासिकाः । दलं पत्रकम् । अत्र मृणालमुशीरम् । श्रीवासो नवनीतखोटः । वराङ्गं गुडत्वक् । चन्दनं श्वेतचन्दनम् । श्रीः कायकोटिः । जात्याः फलं जातीफलम् । सविकसमिति । विकसा मञ्जिष्ठा । तुरुष्कं सिह्लकम् । लघ्वगुरु । लाभतयेति । यथालाभं द्रव्यं मानं च ग्राह्यम् । लभ्यत इति लाभः कर्मणि घञ् । तेनेह भावप्रत्ययः साधुः । विनीय कल्कीकृत्य । तैलं प्रस्थपरिमितम् । बलाक्वथनं बलाक्वाथः । क्वाथश्चतुर्गुणः । दुग्धं दधि च स्नेहसमं किं वा क्वाथो द्विगुणः । दुग्धदधिनी तैलसमे । आद्यः पक्षः प्रचारी । एलाद्यं तैलम् ॥ ७९ ॥ ८० ॥ ८१ ॥

बलातैलमाह—

बलानिष्क्वाथकल्काभ्यां तैलं पक्वं पयः समम् ॥
सर्ववातविकारघ्नमेवं[2] शैलेयपाचितम् ॥ ८२ ॥

बलानिष्क्वाथस्त्रिगुणश्चतुर्गुणो वा पयश्च तैलसमम् । बलाशैलेयतैले ॥ ८२ ॥

बलामूलकषायस्य दशमूलीकृतस्य च ॥
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥ ८३ ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ॥
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥ ८४ ॥
तथाऽगुरुं सर्जरसं सरलं देवदारु च ॥
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम्[3] ॥ ८५ ॥
मांसीं शैलेयकं पत्रं तगरं सारिवाद्वयम् ॥
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥ ८६ ॥
तत्साधुसिद्धं सौवर्णे राजते मृन्मये तथा ॥
प्रक्षिप्य कलशे सम्यक्स्वनुगुप्तं निधापयेत् ॥ ८७ ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत् ॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ॥ ८८ ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
वातक्षीणे मर्महते मथितेऽभिहते तथा ॥ ८९ ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते[4] ॥
एतदाक्षेपकादींश्च वातव्याधीनपोहति ॥ ९० ॥

---

१ घ. पयोन्मितम् । २ क. °मेतच्छैले° । ३ क. °रिवां वचाम् । ४ क. °पयोजयेत् । ए° ।

हिक्कां श्वासमधीमन्थं गुल्मं कासं सुदुस्तरम् ॥
षण्मासानुपयुञ्जीत अन्त्रवृद्धिमपोहति ॥ ९१ ॥
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
एतद्धि राज्ञा कर्तव्यं राजमात्राश्च ये नराः ॥
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः ॥ ९२ ॥

दशमूलस्य मिलित्वा क्वाथः । यवकोलकुलत्थानां च मिलित्वा क्वाथः । एवं बलाक्वाथेन समं त्रयः क्वाथाः पयश्चैषां चतुर्णां प्रत्येकं तैलप्रस्थादष्टगुणो द्रवो भवति । एवं तैलाद्द्वात्रिंशद्गुणं भवति । तैलं च मानविशेषानिर्देशाभावादिह प्रस्थपरिमितं ग्राह्यम् । कालानुसारिवा तगरपादिका । तगरं पिण्डतगरमूलम् । मधुरगणप्रभृतिभिः कल्कः। स्वनुगुप्तमिति । वातातपादिपरिहारेण मन्त्रेण च सुष्ठु रक्षितम् । तैलमिदं सुश्रुते मूढगर्भे पठितं तेन सूतिकायै प्रदापयेदिति विशिष्योक्तम् । अन्त्रवृद्धिमपोहतीति । अन्त्रवृद्धिमप्राप्तफलकोशां व्यपोहतीति मन्तव्यं प्राप्तफलकोशायाः पुनरसाध्यत्वात् । राजमात्रा इति । राज्ञेव मात्रा परिच्छेदो येषां ते तथा । महाबलातैलम् ॥ ८३ ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

नारायणतैलमाह—

बिल्वोऽग्निमन्थः[2] स्योनाकः पाटला पारिभद्रकः ॥
प्रसारिण्यश्वगन्धा च बृहती कण्टकारिका ॥ ९३ ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ॥
एषां दशपलान्भागांश्चतुर्[3]द्रोणेऽम्भसः पचेत् ॥ ९४ ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ॥
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ ९५ ॥
चन्दनं तगरं कुष्ठमेलापर्णीचतुष्टयम् ॥
रास्ना तुरगगन्धा च सैन्धवं च पुनर्नवा ॥ ९६ ॥
एषां द्विपलिकान्भागान्पेषयित्वा विनिक्षिपेत् ॥
शतावरीरसं चैव तैलतुल्यं प्रदापयेत् ॥ ९७ ॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम् ॥
पाने बस्तौ तथाऽभ्यङ्गे भोज्ये नस्ये च शस्यते ॥ ९८ ॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ॥
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥ ९९ ॥

---

१ क. °मान्याश्च । २ घ. बिल्वाग्निमन्थौ स्यो° । ३ क. °लान्कृत्वा चतु° । ४ क. बला ।

अधोभागे च ये वाताः शिरोमध्यगताश्च ये ॥
मन्यास्तम्भे हनुस्तम्भे दन्तरोगे गलग्रहे ॥ १०० ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ॥
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥ १०१ ॥
बधिरा लल्लजिह्वाश्च स्वल्पमेधस एव च ॥
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥ १०२ ॥
वातार्तौ वृषणो येषामन्त्रवृद्धिश्च दारुणा ॥
एतत्तैलं वरं तेषां नाम्ना नारायणं स्मृतम् ॥ १०३ ॥

पारिभद्रकः पारिभद्रमूलम् । प्रसारिणी भद्राली । बला समङ्गा सिरिं हिटिके इति लोके । अतिबला कङ्कनिका पिटारकेति प्रसिद्धा । अतिबला बलाभेद इत्यपरे मन्यन्ते। तगरं तगरपादिका तदभावे शैयली चोपडः पिण्डतगरमित्यन्ये । तुरगगन्धाऽश्वगन्धा । आजं वा यदि वा गव्यमिति । आजगव्यपयसोर्यद्यपि प्रायेण गुणसाम्यं तथाऽपि च्छागलक्षीरेण पक्वं तैलमिदमनभिष्यन्दि दोषत्रयहरं च भवतीति प्रत्येतव्यम् । नारायण संज्ञाऽस्य विष्णुनिर्मितत्वाच्छतावरी साधितत्वाद्वा । नारायणीति शतावरीपर्यायोऽस्ति । लल्लजिह्वा इति । जिह्वासङ्गात्थोत्थेलवाचः । नारायणं तैलम् ॥ ९३ ॥ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ ॥ १०३ ॥

महानारायणं तैलमाह—

शतावरी चांशुमती पृश्निपर्णी सेह्वा बला ॥
एरण्डस्य च मूलानि बृहत्याः पूतिकस्य च ॥ १०४ ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ॥
एषां दशपलान्भागाञ्जलद्रोणे विपाचयेत् ॥ १०५ ॥
पादावशेषे पूते च गर्भे चैव समावपेत् ॥
पुनर्नवावचादारुशताह्वाचन्दनागुरु ॥ १०६ ॥
शैलेयं तगरं कुष्ठमेलां मांसीं स्थिरां बलाम् ॥
अश्वाह्वां सैन्धवं रास्नां पलार्धानि च योजयेत् ॥ १०७ ॥
गव्याजपयसोः प्रस्थौ द्वौ द्वाऽवत्र प्रयोजयेत् ॥
शतावरीरसप्रस्थं तैलं प्रस्थं विपाचयेत् ॥ १०८ ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्यमतः परम् ॥
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥ १०९ ॥

१ घ. मन्दमेधस । २ क. शठी । ३ घ. बृहत्योः । ४ क. च. गर्भे चैवं स° । ५ क. घ. प्रद्यापये° ।

तैलमेतत्प्रयोक्तव्यं सर्ववातविकारिणाम् ॥
आयुष्मान्स नरः पीत्वा निश्चयेन दृढो भवेत् ॥ ११० ॥
गर्भमश्वतरी विन्देत्किं पुनर्मानुषी तथा ॥
हृच्छूलं पार्श्वशूलं च तथैवार्धावभेदकम् ॥ १११ ॥
अपचीं गलगण्डं च वातरक्तं गलग्रहम् ॥
कामलां पाण्डुरोगं[3] चापस्मारं चापि नाशयेत् ॥ ११२ ॥
तैलमेतद्भगवता विष्णुना परिकीर्तितम् ॥
नारायणमिति ख्यातं वातान्तकरणं शुभम् ॥ ११३ ॥

पूतिको लाटकरञ्जः। गवेधुकं गोरक्षतण्डुला। सहचरो नीलझिण्टी। अश्वाह्वाऽश्वकन्दा। निश्चयेनेति। अवश्यम्। तथाऽश्वतरी केस(खच)री। महानारायणं तैलम् ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ॥ ११२ ॥ ११३ ॥

अश्वगन्धादितैलमाह—

शतं पक्त्वाऽश्वगन्धाया जलद्रोणेंऽशशेषितम् ॥
विस्राव्य विपचेत्तैलं क्षीरं दत्त्वा चतुर्गुणम् ॥ ११४ ॥
कल्कैर्मृणालशालूकबिसकिञ्जल्कमालती—
पुष्पैर्ह्रीवेरमधुकसारिवापद्मकेसरैः ॥ ११५ ॥
मेदापुनर्नवाद्राक्षामञ्जिष्ठाबृहतीद्वयैः ॥
एलैलवालुत्रिफलामुस्तचन्दनपद्मकैः ॥ ११६ ॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम् ॥
हन्यात्पुष्टिं बलं कुर्यात्कृशानां मांसवर्धनम् ॥ ११७ ॥
रेतोयोनिविकारघ्नं व्रणदोषापकर्षणम् ॥
षण्ढानपि वृषान्कुर्यात्पानाभ्यङ्गानुवासनैः ॥ ११८ ॥

अंशशेषितमिति। पादशेषितम्। मृणालं स्थूलम्। बिसं मृणालान्निर्गतः प्रतानः। किञ्जल्क उत्पलवराटः पद्मकेसरस्योपात्तत्वात्। मेदास्थाने सहेति पाठः सहा माषपर्णी। अश्वगन्धा तैलम् ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥

तैलं संकुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ॥
बाहुशीर्षगते नस्यं पानं चोपरिभक्तिकम् ॥ ११९ ॥

---

१ ... । २ ख. हनुग्रहम्। ३ घ. °गं च अश्मरीं वाऽऽशु ना°। ४ क. °न्याद्व्योष°। ५ क. घ. °भ्यङ्गे मा°। ६ घ. °भक्तक°।

माषसैन्धवसाधितमिति। माषस्य क्काथः सैन्धवं कल्कः। तथाच चक्रः—काथश्च माषनिष्पाद्यः सैन्धवं कल्क एव त्विति। माषतैलम् ॥ ११९ ॥

द्वितीयमाषतैलमाह—

माषात्मगुप्तातिरसोरुबूक-
रास्नाशताह्वालवणैः सुपिष्टैः ॥
चतुर्गुणे माषबलाकषाये
तैलं कृतं हन्ति च पक्षवातम् ॥ १२० ॥

अतिरसा यष्टीमधु। उरुबूक एरण्डः। माषतैलम् ॥ १२० ॥

तृतीयं माषतैलमाह—

माषप्रस्थं समावाप्य पचेत्सम्यग्जलाढके ॥
पादशेषे रसे तस्मिन्क्षीरं दद्याच्चतुर्गुणम् ॥ १२१ ॥
प्रस्थं च तिलतैलस्य कल्कं दत्त्वाऽक्षसंमितम् ॥
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ॥ १२२ ॥
रास्नात्मगुप्तामधुकं बलाव्योषत्रिकण्टकम् ॥
पक्षघातेऽर्दिते वाते कर्णशूले सुदारुणे ॥ १२३ ॥
मन्दश्रुतौ च श्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ॥ १२४ ॥
शस्तं कलायखञ्जे च पानाभ्यञ्जनबस्तिभिः ॥
माषतैलमिति ख्यातमूर्ध्वजत्रुगदापहम् ॥ १२५ ॥

सुगमम्। माषतैलम् ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥

चतुर्थं माषतैलमाह—

माषातसीयवकुरण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः ॥
कार्पासकास्थिशणबीजकुलत्थकोल-
क्काथेन बस्तपिशितस्य रसेन वाऽपि ॥ १२६ ॥
शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या ॥
रास्नाबलामृतलताकटुकैर्विपक्वं
माषाख्यमेतदवबाहुकहारि तैलम् ॥ १२७ ॥

---

१ घ. कल्कान्दत्त्वाऽ°। २ घ. °मितान्। जी°। ३ क. घ. °ण्टटिण्टु°। ४ क. °या च ऐर°। ५ घ. °हुहरं च तै°।

अर्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम् ॥
नस्येन बस्तिविधिना परिषेचनेन
हन्यात्कटीजघनजानुरुजः समीरात् ॥ १२८ ॥

अतस्युमा । कुरण्टको नीलझिण्टी । गोकण्टको गोक्षुरकः । टुण्टुकः स्योनाकस्तस्य मूलम् । माषादिना कपिकच्छ्वन्तेन मिलित्वैकः क्वाथः । कार्पासास्थ्यादिना कोलान्तेनापरः क्वाथः । बस्तपिशितस्य रसः क्वाथः । एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम् । सरण्येति । सरणी भद्राली । अमृतलता गुडूची । कटुकं मरिचम् । माषतैलम् ॥ १२६ ॥ ॥ १२७ ॥ १२८ ॥

बृहन्माषतैलमाह—

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ॥
यवकोलकुलत्थानां छागमांसरसे पृथक् ॥ १२९ ॥
प्रस्थे तैलस्य प्रस्थं च क्षीरं दत्त्वा चतुर्गुणम् ॥
रास्नात्मगुप्तासिन्धूत्थशताह्वैरण्डमुस्तकैः ॥ १३० ॥
जीवनीयबलाव्योषैः पचेदक्षसमैः पृथक् ॥
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥ १३१ ॥
बाधिर्ये कर्णशूले च कर्णनादे च दारुणे ॥
विश्वाच्यामर्दिते कुब्जे गृध्रस्यामपतानके ॥ १३२ ॥
बस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ॥
माषतैलमिदं श्रेष्ठमूर्ध्वजत्रुगदापहम् ॥ १३३ ॥

दशमूलस्य मिलित्वा क्वाथः । एवं यवकोलकुलत्थानामपि । क्वाथप्रस्थाः षडेवात्र विभज्य तेन कीर्तिता इति चक्रः । जीवनीयादिदशकम् । बृहन्माषतैलम् ॥ १२९ ॥ ॥ १३० ॥ १३१ ॥ १३२ ॥ १३३ ॥

द्वितीयबृहन्माषतैलमाह—

द्विपञ्चमूलीं निष्क्वाथ्य तैलात्षोडशभिर्गुणैः ॥
माषाढकं साधयित्वा तं निर्यूहं चतुर्गुणम् ॥ १३४ ॥
ग्राहयित्वा पचेत्तैलं प्रस्थं छागपयःसमम् ॥
कल्कार्थं च समावाप्य भिषग्द्रव्याणि बुद्धिमान् ॥ १३५ ॥
अश्वगन्धाशठीदारुबलारास्नाप्रसारणी ॥
कुष्ठं परूषकं भार्ङ्गी द्वे विदार्यौ पुनर्नवा ॥ १३६ ॥

१ क. °सभवे पृ° । २ क. घ. °समैर्भिषक् । ३ क. घ. °स्वा च विपचेत्तैलप्रस्थं प° । ४ क. °र्गी विदारी सपु° ।

मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिका ॥
शतावरी गोक्षुरकं पिप्पलीमूलचित्रकम् ॥ १३७ ॥
जीवनीयगणं सर्वं संहृत्य च ससैन्धवम् ॥
तत्साधु सिद्धं विज्ञाय माषतैलमिदं महत् ॥ १३८ ॥
पक्षघाते हनुस्तम्भे अर्दिते सापतन्त्रके ॥
अवबाहुकविश्वाच्योः खञ्जपङ्गुलयोरपि ॥ १३९ ॥
हस्तकम्पे शिरःकम्पे कुब्जवामनयोरपि ॥
हनुमन्याग्रहे चैव साधिमन्थे च वातिके ॥ १४० ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे ॥
कलायखञ्जशमने भैषज्यमिदमादिशेत् ॥
बस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ॥ १४१ ॥

तैलात्षोडशभिर्गुणैरिति । अत्र जलैरिति शेषः । दशमूलस्याऽऽढकं जलद्रोणे क्वथनीयम् । एतेन तैलप्रस्थात्षोडशगुणं जलं भवति तच्च पादशेषं कार्यम् । तथा माषाढकमपि तैलषोडशगुणेन जलेन साधयित्वा क्वाथं पादशेषं कुर्यादिति क्वाथद्वयम् । चक्रेणाप्युक्तम्—

"दशमूलाढकं द्रोणे निष्क्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः" इति ॥

किंच । दशमूलकषायेण तैलषोडशगुणेन माषाढकं साधयित्वा तेन पादशेषेण तैलप्रस्थः पादिकः । अत्र पक्षे दशमूलपलानि २५६ जलशरावाः २५६ शेषशरावाः ६४ द्वे विदार्यौ विदारीकन्दः क्षीरविदारी च । जीवनीयगणो जीवनीयदशकम् । महामाषतैलम् ॥ १३४ ॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ ॥ १४१ ॥

माषस्यार्धाढकं दत्त्वा तुलार्धं दशमूलतः ॥ १४२ ॥
पलानि च्छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत् ॥
पूतशीते कषाये च चतुर्थांशावतारिते ॥ १४३ ॥
प्रस्थं च तिलतैलस्य पयो दत्त्वा चतुर्गुणम् ॥
आत्मगुप्तोरुबूकश्च शताह्वा लवणत्रयम् ॥ १४४ ॥
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम् ॥
सव्योषं पिप्पलीमूलं रास्नामधुकसैन्धवम् ॥ १४५ ॥

---

१ क. घ. दारुणे ।

देवदार्वमृता कुष्ठं वाजिगन्धा वचा शठी ॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुवह्निना ॥ १४६ ॥
पक्षाघातार्दिते वाते बाधिर्ये हनुसंग्रहे ॥
कर्णमन्याशिरःशूले तिमिरे च त्रिदोषजे ॥ १४७ ॥
पाणिपादशिरोग्रीवाभ्रमणे मन्दचङ्क्रमे ॥
कलायखञ्जपाङ्गुल्ये गृध्रस्यामवबाहुके ॥ १४८ ॥
पाने बस्तौ तथाऽभ्यङ्गे नस्ये कर्णाक्षिपूरणे ॥
तैलमेतत्प्रशंसन्ति सर्ववातरुजापहम् ॥ १४९ ॥

सुगमम् । महामाषतैलम् ॥ १४२ ॥ १४३ ॥ १४४ ॥ १४५ ॥ १४६ ॥ ॥ १४७ ॥ १४८ ॥ १४९ ॥

केतकिमूलबलातिबलानां यद्बहुलेन रसेन विपक्वम् ॥
तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥ १५० ॥

केतक्यादीनां बलान्तानां मिलित्वा क्काथः । बहुलानल्पशब्दयोः प्रचुरार्थत्वात्केतक्यादिक्काथतुषोदकयोः प्रत्येकमिह चातुर्गुण्यम् । बहुलेन घनेनाष्टांशशिष्टेनेत्यन्ये । अत्रापि पक्षे केतक्यादिक्काथश्चतुर्गुण एव ग्राह्यः । अत्र चक्रः—

"अनल्पवचनादत्र तुल्ये क्काथतुषोदके ।
अकल्कोऽपि भवेत्स्नेहो यः साध्यः केवले द्रवे" इति ॥

विपक्वमितिं तथा तुषोदकसिद्धमिति च पदद्वयोपादानादिह वारद्वयं पाक इत्येके । एकवारपाकेन पूर्वव्याख्ययैव प्रचारः । केतक्याद्यं तैलम् ॥ १९० ॥

अश्वगन्धाद्यं तैलमाह—

वाजिगन्धाबलाविश्वदशमूल्यम्बुकल्कितम् ॥
गृध्रस्यां तैलमैरण्डं पाने बस्तिषु शस्यते ॥ १५१ ॥

वाजिगन्धादीनां सर्वेषां क्काथः कल्कश्च । अश्वगन्धाद्यं तैलम् ॥ १९१ ॥

रसोनकल्कस्वरसेन पक्वं तैलं पिबेद्यस्त्वनिलामयार्तः ॥
तस्याऽऽशु नश्यन्ति हि वातरोगा ग्रन्था विशाला इव दुर्गृहीताः॥१५२॥

रसोनतैलम् ॥ १९२ ॥

मध्यमप्रसारणीतैलमाह—

प्रसारण्यास्तुलामश्वगन्धाया दशमूलतः ॥
तुलां तुलां पृथग्वारिद्रोणे पक्त्वांऽशशेषिते ॥ १५३ ॥
तैलाढकं चतुःक्षीरं दधितुल्यं द्विकाञ्जिकम् ॥
द्विपलैर्ग्रन्थिकक्षारप्रसारण्यक्षसैन्धवैः ॥ १५४ ॥

१ ङ. °सारिणी° । २ क. घ. °न्थिरुक्षा° ।

समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ॥
शुण्ठ्याः पञ्चदलं दत्त्वा त्रिंशद्भल्लातकानि च ॥१५५ ॥
पचेद्बस्त्यादिना वातं हन्ति संधिशिरास्थितम् ॥
पुंस्त्वोत्साहस्मृतिप्रज्ञाबलवर्णाग्निवृद्धये ॥ १५६ ॥

दशमूलतस्तुलां मिलितात् । पृथग्वारिद्रोण इत्यनेन प्रतितुलायां जलद्रोणदानं दर्शयति । ग्रन्थिकं पिप्पलीमूलम् । अक्षं सौवर्चलमिति वृन्दस्यैव व्याख्याकारः । प्रसारणीयैस्त्रिशती अक्षं सौवर्चलं त्विहेति चक्रः । ग्रन्थिकादीनां यष्ट्याह्वान्तानां द्विपलिकं मानं प्रत्येकं त्रिंशद्भल्लातकगुडकानि ।

"प्रसारण्यादिनिर्दिष्टं शतमेकं पृथक्पृथक् ।
जलद्रोणेन चैकैकं साधयेच्छ्लक्ष्णकुट्टितम्"

इति ग्रन्थान्तरे । मध्यमप्रसारणीतैलम् ॥ १५३ ॥ १५४ ॥ १५५ ॥ १५६ ॥

कुब्जप्रसारणीतैलमाह—

प्रसारणीशतं क्षुण्णं पचेत्तोयार्मणे शुभे ॥
पादशिष्टे समं तैलं दधि दद्यात्सकाञ्जिकम् ॥ १५७ ॥
द्विगुणं च पयो दत्त्वा कल्कान्द्विपलिकांस्तथा ॥
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम् ॥ १५८ ॥
शतपुष्पादेवदारुरास्नावारणपिप्पलीः ॥
प्रसारण्याश्च मूलं च मांसीभल्लातकानि च ॥ १५९ ॥
पचेन्मृद्वग्निना तैलं वातश्लेष्मामयापहम् ॥
अशीतिं नरनारीस्थान्वातरोगान्व्यपोहति ॥ १६० ॥
कौब्जं स्तिमितपङ्गुत्वं गृध्रसीं खुडुकार्दितम् ॥
हनुपृष्ठशिरोग्रीवास्तम्भं चाऽऽशु नियच्छति ॥ १६१ ॥

तैलदधिकाञ्जिकादीनां प्रत्येकमाढ[illegible]द्विगुणम्[illegible]ः [illegible]र्दितमिति । खुडुको ग्रन्थिवातः । कुब्जप्रसारणीतैलम् ॥ १५७ ॥ [illegible] १५८ ॥ १५[illegible] ॥ १६० ॥ १६१ ॥

सप्तशतकीप्रसारणीतैलमाह—

समूलपत्राम[illegible] [illegible]१६२ ॥
शतं ग्रा[illegible]त्पाट्य शरत्काले प्रसारणीम् ॥
[illegible] सहचराच्छतावर्याः शतं तथा ॥
[illegible]लाश्वगन्धात्मगुप्ताकेतकीनां शतं शतम् ॥ १६३ ॥

१ क. घ. °त्रि[illegible] च तथाऽर्दि° । ६ [illegible]स्थगम् । २ घ. °यास्त्रिंश° । ३ घ. °यार्गजे । ४ घ. मूलानि मां° । ५ क. °सीं
घ. °म्भं वाऽपि नि° ।

पचेच्चतुर्गुणं तोये द्रवैस्तैलाढकं भिषक् ॥
मस्तु मांसरसं चुक्रं पयश्चाऽऽढकमाढकम् ॥ १६४ ॥
दध्याढकसमायुक्तं पाचयेन्मृदुनाऽग्निना ॥
द्रव्याणां तु प्रदातव्या मात्रा चार्धपलानिका[1] ॥ १६५ ॥
तगरं मदनं कुष्ठं केसरं मुस्तकं त्वचम् ॥
रास्ना सैन्धवपिप्पल्यौ मांसीमञ्जिष्ठयष्टिकम् ॥ १६६ ॥
तथा मेदा महामेदा जीवकर्षभकौ पुनः ॥
शतपुष्पा व्याघ्रनखं शुण्ठी देवाह्वमेव च ॥ १६७ ॥
काकोली क्षीरकाकोली वचा भल्लातकं तथा ॥
पेषयित्वा समानेतान्साधनीया प्रसारणी ॥ १६८ ॥
नातिपक्वं[2] न शीतं च सिद्धं पूतं निधापयेत् ॥
यत्र यत्र प्रयोक्तव्यं तन्मे निगदतः शृणु ॥ १६९ ॥
कुब्जानामथ पङ्गूनां वामनानां तथैव च ॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसंधयः ॥ १७० ॥
वातशोणित[3]दुष्टानां वातोपहतचेतसाम् ॥
स्त्रीभि[4]र्दक्षीणशुक्राणां वाजीकरणमुत्तमम् ॥ १७१ ॥
वस्तौ[5] पाने तथाऽभ्यङ्गे भोज्ये चैव प्रदापयेत् ॥
प्र[6]भुक्तं शमयत्याशु वातजान्विविधान्गदान् ॥ १७२ ॥

पचेच्चतुर्गुणे तोय इति । चतुर्गुणमष्टगुणं ग्राह्यं सम्यग्द्रव्यवीर्यसंक्रान्त्यर्थमित्येके । पलोल्लेखागतमानत्वादपि द्विगुणं चतुर्गुणमित्यन्ये । प्रचारः पुनरित्थमेव । अर्धपलानिकाऽर्धपलमाना । यष्टिका यष्टीमधु । देवाह्वं देवदारु । सप्तशतकीप्रसारणीतैलम् ॥ १६२ ॥ १६३ ॥ १६४ ॥ १६५ ॥ १६६ ॥ १६७ ॥ १६८ ॥ १६९ ॥ ॥ १७० ॥ १७१ ॥ १७२ ॥

एकादशशतकीप्रसारणीतैलमाह—

शाखामूलदलैः प्रसारणितुलास्तिस्रः कुरण्टात्तुले
 छिन्नायाश्च तुले तुले रुबुकतो रास्नाशिरीषात्तुलाम् ॥
देवाह्वाच्च सकेतकाद्धटशते निष्क्वाथ्य कुम्भांशके
 तोये तैलघटं तुषाम्बुकलशौ दत्त्वाऽऽढकं मस्तुनः ॥ १७३ ॥

---

१ क. °पलांशिका । २ क °तिहिमं न । ३ घ. °तजुष्टा° । ४ क. घ. °मद्यक्षी° । ५ क. घ. नस्ये । ६ क. घ. प्रयुक्तं ।

मुक्ताच्छागरसादथेक्षुरसतः क्षीराच्च दत्त्वाऽऽढकं
स्पृक्काकर्कटजीवकाद्यविकसाकाकोलिकाकच्छुरा—
सूक्ष्मैलाघनसारकुन्दुसरलाकाश्मीरमांसीनखैः
कालीयोत्पलपद्मकाह्वयनिशाकङ्कोलकग्रन्थिकैः ॥ १७४ ॥
चाम्पेयाभयचोचपूगकटुकाजातीफलाभीरुभिः
श्रीवासामरदारुचन्दनवचाशैलेयसिन्धूद्भवैः ॥
तैलाम्भोदकटम्भराङ्घ्रिनलिकावृश्चीवकच्चोरकैः
कस्तुरीदशमूलकेतकिनतध्यामाश्वगधाम्बुभिः ॥ १७५ ॥
कौन्तीतार्क्ष्यजशल्लकीफललघुश्यामाशताह्वामयै-
र्भल्लातत्रिफलाब्जकेसरमहाश्यामालवङ्गान्वितैः ॥
सव्योषैस्त्रिफलैर्महीयसि पचेन्मन्देन पात्रेऽग्निना
पानाभ्यञ्जनबस्तिनस्यविधिना तन्मारुतं नाशयेत् ॥ १७६ ॥
सर्वार्धाङ्गगतं तथाऽवयवगं संध्यस्थिमज्जाश्रितं
श्लेष्मोत्थानपि पैत्तिकांश्च शमयेन्नानाविधानामयान् ॥
धातून्बृंहयते स्थिरं च कुरुते पुंसां नवं यौवनं
वृद्धस्यापि बलं करोति सुमहद्वन्ध्यासु गर्भप्रदम् ॥ १७७ ॥
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः
सिक्ताः शोषमुपागताश्च फलिनः स्निग्धा भवन्ति स्थिराः ॥
भग्नाङ्गाः सुदृढा भवन्ति मनुजा गावो हयाः कुञ्जराः ॥ १७८ ॥

रास्नाशिरीषयोर्मिलित्वा तुला । देवदारुकेतकयोरपि मिलित्वैव तुला । घटशते द्रोणशते । कुम्भांशक इति । द्रोणद्वयशेषे । यदुक्तम्—द्रोणतो द्विगुणः शूर्पो विज्ञेयः कुम्भ एव वेति । तुषाम्बुकलशाविति । काञ्जिकद्रोणद्वयम् । मुक्तादीनां प्रत्येकमाढकम् । जीवकाद्यं जीवनीयदशकमष्टकवर्गो वा । काकोल्यादि भागद्वयं जीवनीयगणेऽप्यस्याः स्थितत्वात् । विकसा मञ्जिष्ठा। कच्छुरा शूकशिम्बा दुरालभा वा । घनसारः कर्पूरम् । कुन्दुः कुन्दुरुः । सरला सरलकाष्ठम् । ग्रन्थिकं ग्रन्थिपर्णी । चाम्पेयं चम्पककलिका । अभयमुशीरम् । चोचं गुडत्वक् । पूगं गदारुनेली । कटुका लताकस्तूरी । अभीरुः शतावरी । तैलं सिह्लकम् । कटम्भरा प्रसारणी वृश्चिकपत्रिका वा तस्या अङ्घ्रिर्मूलम् । कच्चोरको गन्धशठी । ध्यामं गन्धतृणम् । कौन्ती रेणुकम् । तार्क्ष्यजं रसाञ्जनम् । फलं कट्फलं मदनफलं वा । लघ्वगुरु । श्यामा प्रियङ्गुः । महाश्यामा श्यामलता । कल्कभूयस्त्वादिहाधमैः

१ क. 'कर्बुर' । २ क. 'सारिणी । क. ३ ध्यामकं ।

सुगन्धैः प्रथमः पाको मध्यैर्द्वितीय उत्तमैस्तृतीयः । ततो गन्धवृद्ध्यर्थं कर्पूरकस्तूरिकाभ्यां पत्रकल्कं कार्यम् । तस्य च मानं तैलानुरूपतः सुगन्धितैलान्तरोक्तमानानुसाराद्वा । पत्रकल्कसंज्ञा च पारिभाषिकी ।

तद्यथा—"पक्कपूतेऽप्युष्ण एव सम्यक्पेषितवर्तितम् ।
दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते" इति ॥

एकादशशतकं महाप्रसारणीतैलम् ॥ १७३ ॥ १७४ ॥ १७५ ॥ १७६ ॥ ॥ १७७ ॥ १७८ ॥

या गन्धं केतकीनां वहति परिमलं वर्णतः पिञ्जराभा
स्वादे तिक्ता कटुर्वा लघुरपि तुलिता मर्दिता चिक्कणा या ॥
दग्धा नो याति भूतिं चिमिचिमितिकरा चर्मगन्धा हुताशे
सा शुद्धा शोभनीया वरमृगतनुजा राजयोग्या प्रदिष्टा ॥ १७९ ॥
करतलजलमध्ये स्थापयित्वा महद्भिः
पुनरपि तदवस्थं चिन्तनीयं मुहूर्तम् ॥
यदि भवति सरक्तं तज्जलं पीतवर्णं
न भवति मृगनाभिः कृत्रिमोऽसौ विकारः ॥ १८० ॥

वरमृगतनुजेति । कस्तूरिका । कस्तुरीपरीक्षा । कर्पूरकुङ्कुमचन्दनानामपि सुगन्धद्रव्यप्रचारत्वेन प्रशस्तानां लक्षणमुच्यते—

"पक्कात्कर्पूरतः प्राहुरपक्कं गुणवत्तरम् ।
तत्रापि स्याद्यदक्षुद्रं स्फाटिकाभं तदुत्तमम् ॥
पक्कं च सदलं स्निग्धं हरितद्युति चोत्तमम् ।
भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः ॥
पाण्डुरैः केसरैस्त्यक्तं रक्तं च मृदु चोत्तमम् ।
हीनं विरागि काश्मीरं खरपाण्डुरकेसरम् ॥
भवेत्कुचन्दनं रक्तं पीतसारं तदुत्तमम् ।
यत्पाण्डुरमसारं च न सम्यक्प्रवदन्ति तत्" इति ॥ १७९ ॥ १८० ॥

सैन्धवाद्यं तैलमाह—

द्वे पले सैन्धवात्पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ॥
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाऽऽढके ॥ १८१ ॥
आरनालात्पचेत्प्रस्थं तैलमेतैरपत्यदम् ॥
गृध्रस्यूरुग्रहार्तस्य सर्ववातविकारनुत् ॥ १८२ ॥

१ ख. °लसैरण्डसंभवात् । गृ° । २ क. घ. °हार्तीर्तस° ।

ग्रन्थिकचित्रकात् । द्वे द्वे इति । ग्रन्थिकचित्रकयोः प्रत्येकं पलद्वयमिति । सैन्धवाद्यं तैलम् ॥ १८१ ॥ १८२ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां द्वाविंशो वातव्याधिचिकित्साधिकारः समाप्तः ॥ २२ ॥

## अथ त्रयोविंशो वातरक्ताधिकारः ।

वातविकारप्रकाराद्वातव्याधिमनु वातरक्तारम्भः ।

उत्तानमवगाढं च द्विविधं वातशोणितम् ॥
त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम् ॥ १ ॥

त्वङ्मांसाश्रयमुत्तानमिति । त्वङ्मांसमात्रमाश्रितमल्पदाहरुजादिकरमुत्तानम् । गम्भीरं त्वन्तराश्रयमिति । त्वङ्मांसेतरगम्भीरधातुगतं गम्भीरम् । ननु द्वैविध्यमिदं चरकोक्तं सुश्रुते निषिद्धं तद्यथा द्विविधं वातशोणितमुत्तानमवगाढं चेत्येके भाषन्ते । तत्तु न सम्यक् । कस्मात् । कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढी भवति । मैवम् । सुश्रुतवचने सर्वमुत्तानमेव भूत्वा परं गम्भीरं क्रमेण भवतीति नियमो नास्ति तेन प्रथममपि गम्भीरं किंचिदुत्पद्यते प्रतिषेधस्तूत्तानमेवास्तीति यो मन्येत तं प्रति सुश्रुतस्य चरकेऽप्युत्तानमेवास्तीति नायं नियमः किंतु प्रथमं किंचिदुत्तानमुत्पद्यते किंचित्तु गम्भीरमिति नानाविधयोरागमयोर्मिथोऽविरोधः ॥ १ ॥

पिण्डतैलादिनाऽभ्यङ्गः पानं तिक्तादिसर्पिषः ॥
सेकलेपाद्यसृङ्मुक्तिः शोधनं चोभयोर्हितम् ॥

सेकादयोऽत्रैव वक्तव्याः । उभयोरित्युत्तानावगाढयोः ॥

गाढे विशेषतः सर्पिष्पानं शुद्धिः शिराव्यधः* ॥ २ ॥

सुगमम् ॥ २ ॥

गोधूमचूर्णं छगलीपयश्च सच्छागदुग्धो रुबुबीजकल्कः ॥
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाऽऽविकमेव शस्तम् ॥ ३ ॥

गोधूमचूर्णं छगलीपयश्चेत्येको योगः । सघृतः पुनश्च चरके पठ्यते । यथा—"वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च" इति । सच्छागदुग्धो रुबुबीजकल्क इति द्वितीयः ॥ ३ ॥

---

* ख. पुस्तके—वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत्कषायम् । क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् । इत्यधिकमत्र ।

अमृतानागरधान्यककर्षत्रितयेन पाचनं सिद्धम् ॥
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि ॥ ४ ॥

अमृतादित्रयस्य मिलित्वा कर्षत्रयं क्वथनीयम् ॥ ४ ॥

वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुसंयुतः ॥
समीरणसमायुक्तशोणितं संप्रसाधयेत् ॥ ५ ॥

पीतो गुग्गुलुसंयुत इति । शोधनार्थं प्रायेण गुग्गुलोः कर्षः । शमनार्थं पुनर्माषकचतुष्टयं प्रक्षेप एवं सर्वत्र ॥ ५ ॥

रास्नागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत्कषायम् ॥
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥ ६ ॥

चतुरङ्गुलं सुवर्णालुस्तस्येह फलम् ॥ ६ ॥

तिस्रोऽथ वा पञ्च गुडेन पथ्या जग्ध्वा पिबेच्छिन्नरुहाकषायम् * ॥
तद्वातरक्तं शमयत्युदीर्णमाजानुसंभिन्नमपि ह्यवश्यम् ॥ ७ ॥

सुगमम् ॥ ७ ॥

घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफं च ॥
वातास्रमुग्रं रुबुतैलमिश्रा शुण्ठ्याऽऽमवातं शमयेद्गुडूची ॥ ८ ॥

सुगमम् ॥ ८ ॥

अमृता वातपित्तघ्नी[1] कफमेदोविशोषिणी ॥
वातरक्तप्रशमनी कच्छूवीसर्पनाशिनी ॥ ९ ॥
गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा ॥
प्रभूतकालमासेव्यं मुच्यते वातशोणितात्† ॥ १० ॥
दशमूलीशृतं क्षीरं सद्यः शूलविनाशनम् ॥
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ ११ ॥

दशमूलशृतं क्षीरं परिषेके योज्यम् । सद्यः शूलविनाशनमिति । शूलं वातरक्तदेशे व्यथा तद्वदिति[2] परिषेकः ॥ ९ ॥ १० ॥ ११ ॥

पटोलकटुकाभीरुत्रिफलामृतसाधितम् ॥
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥ १२ ॥

---

*ख.पुस्तके—अगस्तिपुष्पचूर्णेन साधितं माहिषीपयः । तदुत्थनवनीताक्तं वातासृक्प्रबलं जयेत् ॥ १ ॥ अयं श्लोकः क्वचित्पठ्यते ।

† ख. पुस्तके—युक्पञ्चमूलपयसा लघुपञ्चमूल्या क्वाथेन वाऽमृतलताक्वथनेन वाऽपि ॥ वाप्याल्लकस्य सलिलेन युतं शृतेन पीतं शिलाजतु समीरणशोणितघ्नम् ॥ १ ॥ इत्यधिकमत्र ।

---

१ क. कफवातघ्नी । २ घ. क. 'द्वदिति ।

कटुका कटुरोहिणी । अभीरुः शतावरी । अयं योगः पित्तप्राये ॥ १२ ॥

धात्रीमुस्ताहरिद्राणां कषायं वा कफाधिके ॥ १३ ॥
कोकिलाख्यामृताक्वाथे पिबेत्कृष्णां यथाबलम् ॥
पथ्यभोजी त्रिसप्ताहान्मुच्यते वातशोणितात् ॥ १४ ॥

अयं योगः कफे । अत्र कोकिलाख्यस्य मूलम् ॥ १३ ॥ १४ ॥

कफरक्तप्रशमनं कच्छूवीसर्पनाशनम् ॥
वातरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम् ॥ १५ ॥

हृद्यं गुडघृतमिति । आहारं विहाय गुडघृतेनैव समेन सौहित्यं कर्तव्यमित्याहुः ॥ १५ ॥

सर्वेषु सगुडां पथ्यां गुडूचीक्वाथमेव वा ॥
पिप्पलीवर्धमानं वा शीलयेत्सुसमाहितः ॥ १६ ॥

पिप्पलीः क्षीरपिष्टाः । पञ्चाभिवृद्ध्या दशाभिवृद्ध्या वा पिबेत्क्षीरौदनाहारो दशरात्रं भूयश्चापकर्षयेद्यावत्पञ्चदश वेति । तदेतत्पिप्पलीवर्धमानम् ॥ १६ ॥

नवक॥

त्रिफला निम्बमञ्जिष्ठा वचा कटुकरोहिणी ॥
वत्सादनी दारुनिशा कषायो नवकार्षिकः ॥ १७ ॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम् ॥
कृच्छ्रं कपालिकाकुष्ठं पानादेवापकर्षति ॥ १८ ॥
कर्षादौ तु पलं यावद्दद्यात्षोडशिकं जलम् ॥
ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत् ॥ १९ ॥

दारुनिशा दारुहरिद्रा । पञ्च रक्तिकमाषकमानेन त्रिफलादीनां नवकर्षान्गृहीत्वाऽष्टगुणेन जलेन क्वाथः स च स्तोकं परित्यज्य पेयः । तदुक्तं चक्रेण—

"पञ्चरक्तिकमाषेण कार्योऽयं नवकार्षिकः ॥
किं त्वेवं साधिते क्वाथे योग्या मात्रा प्रदीयते" इति ।

योगोऽयं न व्यवहरति ॥ १७ ॥ १८ ॥ १९ ॥

लाङ्गल्यास्त्वमृतसमं कन्दमुद्धृत्य यत्नतः ॥
योजयेत्त्रिफलालोहरजस्त्रिकटुकैः सह ॥ २० ॥
गुग्गुल्वमृतवल्लीभिर्द्राक्षालुङ्गरसेन वा ॥
त्रिफलाद्यु[illegible]रसैर्युक्ता गुटिकाः कोलसंमिताः ॥
भक्षयेन्मधुनाऽऽलोड्य शृणु कुर्वन्ति यत्फलम् ॥ २१ ॥
पादस्फोटं महाघोरं सर्वाङ्गस्फोटनं च यत् ॥
तत्सर्वं नाशयत्याशु असाध्यं चैव शोणितम् ॥ २२ ॥

लाङ्गल्यास्त्वमृतसमेत्यादियोगोऽधिकः कचित्पठ्यते तत्र लाङ्गली लाङ्गलकी । अमृतसममममृतोपमम् । गुग्गुल्वमृतवल्लीभिरिति । गुग्गुलुः सकलचूर्णसमः । अमृतवल्ली गुडूची । बहुवचनं चेह व्यक्तिबहुत्वापेक्षया । द्राक्षालुङ्गरसेनेति । लुङ्गो मातुलुङ्गस्तस्येह मूलम् । द्राक्षामातुलुङ्गक्काथेन त्रिफलाक्काथेन च भावना ज्ञेया । वाशब्दोऽत्र योगान्तरापेक्षया । अयमपि योगो न व्यवहरति । गुग्गुलुवटिका ॥ २० ॥ ॥ २१ ॥ २२ ॥

गुडूचीघृतमाह—

गुडूचीक्काथकल्काभ्यां सपयस्कं घृतं शृतम् ॥
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥ २३ ॥
एकद्वित्रिद्रवैर्द्रव्यं द्रवं कुर्याच्चतुर्गुणम् ॥
क्षीरं स्नेहसमं दद्यात्क्षीरात्तोयं चतुर्गुणम् ॥ २४ ॥

क्काथश्चतुर्गुणः क्षीरं स्नेहसममिति प्रचारः । गुडूचीघृतम् ॥ २३ ॥ २४ ॥

शतावरीकल्कगर्भं[3] रसात्तस्माच्चतुर्गुणम् ॥
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम् ॥ २५ ॥

सुगमम् । शतावरीघृतम् ॥ २५ ॥

बलातैलं दशपाकमाह—

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ॥
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥ २६ ॥
धन्यं पुंसवनं चैव नराणां शुक्रवर्धनम् ॥
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥ २७ ॥

बलाक्काथश्चतुर्गुणश्चतुर्गुणक्षीरसाहचर्यात् । तैलमिदं यथोक्तमानेन क्काथादिना दशवारान्पक्तव्यं वीर्योत्कर्षार्थम् । अनेन पाकेन स्नेहक्षयो नास्ति क्षीरगतस्नेहेन न्यूनताभागस्य पूरणात् । प्रकृतिसमसमवेते व्याधौ तैलादिपाकेष्वनुक्तोऽपि बहुधा पाको वीर्योत्कर्षार्थं युज्यत एव । विकृतिविषमसमवेते पुनर्यथोक्तमेव कर्तव्यं संयोगशक्तेरचिन्त्यत्वात् । इह व्याधिहरमेव भेषजं पूर्वत्र तु दोषहरम् । न च दोषहरमेव व्याधिहरमिति वाच्यं वातकारिणा खदिरेण वातिककुष्ठानुपशमप्रसङ्गात् । खदिरो हि वातकृदपि कुष्ठहरत्वप्रभावाद्वातिकमपि कुष्ठमुपशमयतीति । किंच तदा प्रतिव्याधिबहुप्रयोगोपन्यासो मुनीनां मुधा स्यात्तस्माद्व्याधिहरे यथोक्तविध्यनुसरणमेव दोषहरम् । पुनर्वीर्यप्रकर्षार्थं बहुधा पाकोऽपि संगत एव किंतु वित्तव्ययप्रयासादिबाहुल्याद्वैद्यैर्नायमनुमन्यते पन्था इति । बलातैलं दशपाकम् ॥ २६ ॥ २७ ॥

---

१ क. °द्रवद्रव्यैः कुर्यात्स्नेहाच्च° । २ क. °थाच्चतुर्भिश्च च° । ३ क. °र्भे रसेन स्याच्च° ।

सारिवासर्जमञ्जिष्ठायष्टीसिक्थैः पयोन्वितम् ॥
तैलं पक्कं प्रयोक्तव्यं पिण्डाख्यं वातशोणिते ॥ २८ ॥

सारिवाऽनन्तमूलम् । सर्जः सर्जरसः स च धूणकम् । यष्टी यष्टीमधु । पयश्चतुर्गुणमिह द्रवान्तराभावात् । पिण्डाख्यमिति । पिण्डीभूतत्वान्मण्डनात्मकं मण्डनतैलमित्यर्थः । पिण्डरूपत्वादस्य कल्को न गालनीय इत्याहुः । वैद्याः पुनर्गालयन्त्येव । पिण्डतैलम् ॥ २८ ॥

सारिवासर्जयष्ट्याह्वैर्मधूच्छिष्टैः पयोन्वितैः ॥
साध्यमेरण्डतैलं वा वातरक्तरुजापहम् ॥ २९ ॥

पिण्डतैलम् ॥ २९ ॥

तृतीयं पिण्डतैलमाह—

समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम् ॥
पिण्डतैलमिति ख्यातं वातरक्तरुजापम् ॥ ३० ॥

अस्य नैव पाकः । पिण्डतैलम् ॥ ३० ॥

नागबलातैलमाह—

शुद्धां पचेन्नागबलातुलां तु जलार्मणे पादकषायशिष्टाम् ॥
विस्राव्य तैलाढकमत्र दद्यादजापयस्तैलविमिश्रितं तु ॥ ३१ ॥
नतस्य यष्टीमधुकस्य कल्कं पृथक्पृथक्पञ्चपलं विपक्वम् ॥
तद्वातरक्तं शमयत्युदीर्णं बस्तिप्रदानेन हि सप्तरात्रात् ॥ ३२ ॥
पीतं दशाहेन करोत्यरोगं तैलोत्तमं ह्यश्विमतं प्रदिष्टम् ॥ ३३ ॥

अजापयस्तैलतुल्यम् । नतं तगरपादिकम् । नागबलातैलम् ॥ ३१ ॥ ३२ ॥ ३३ ॥

कैशोरकगुग्गुलुमाह—

वरमहिषलोचनोदरसंनिभवर्णस्य गुग्गुलोः प्रस्थम् ॥
प्रक्षिप्य तोयराशौ त्रिफलां च यथोक्तपरिमाणाम् ॥ ३४ ॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन ॥
विपचेत्तदप्रमत्तो दर्व्या संघट्टयन्मुहुर्यावत् ॥ ३५ ॥
अर्धक्षपितं तोयं जातं ज्वलनस्य संपर्कात् ॥
अवतार्य वस्त्रपूतं पुनरपि संपादयेदयःपात्रे ॥ ३६ ॥
सान्द्रीभूते तस्मिन्नवतार्य हिमोपलप्रख्ये ॥
त्रिफलाचूर्णार्धपलं त्रिकटोश्चूर्णं षडक्षपरिमाणम् ॥ ३७ ॥

१ क. घ. °न्वितम् । सा° । २ क. घ. °ण्डजं तैलं वात° । ३ क. घ. °समारिचम् । ४ क. घ. °तैलं तदभ्यङ्गाद्वात° । ५ क. घ. °थक्पचेत्पञ्च° । ६ क. घ. °गं वपुष्प्रकर्षं बलवर्णतैलम् । ७ ङ. वनम° । ८ ङ. संक्षिप्य ।

[1]कृमिरिपुचूर्णार्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः ॥
पलमेकं तु गुडूच्या दत्त्वा संचूर्ण्य यत्नेन ॥ ३८ ॥
उपयुज्य चानुपानं यूषं तोयं सुगन्धिसलिलेन ॥
इच्छाहारविहारी भेषजमुपयुज्य सर्वकालमिदम् ॥ ३९ ॥
तनुरोधि वातशोणितमेकजमथ द्वंद्वजं चिरोत्थं च ॥
जयति स्रुतं परिशुष्कं स्फुटितं चाऽऽजानु यच्चापि ॥ ४० ॥
व्रणकासकुष्ठगुल्मश्वयथूदरपाण्डुरोगमेहांश्च ॥
मन्दाग्निं च विबन्धं प्रमेहपिटिकाश्च[3] नाशयत्याशु ॥ ४१ ॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान् ॥
अभिभूय जरादोषं प्रयाति कैशोरकं रूपम् ॥ ४२ ॥

वरमहिषलोचनोदरसंनिभवर्णस्येति । मत्तमहिषलोचनवल्लोहितवर्णस्य । तोयराशाविति तोयबहुत्वोपलक्षणं राशिशब्देन तु द्रोणाभिधानं न क्वापि दृष्टम् । तथा च तस्य टिप्पणी—

"प्रत्येकं त्रिफलाप्रस्थो जलं तत्र षडाढकम् ॥
गुडवद्गुग्गुलोः पाकः संबन्धस्तु विशेषतः" इति ।

प्रचारः प्रथमपक्षेण । त्रिफलां च यथोक्तपरिमाणामिति । प्रत्येकं प्रस्थमानम् । केचिद्गुग्गुलुपक्षयभयात्क्वाथ्यत्वेनोक्तमपि गुग्गुलुं विहाय क्वाथं[2] कुर्वन्ति पश्चात्सिद्धक्वाथे तप्ते गुग्गुलुं गालयन्ति । युक्तं तु गुग्गुलुना सहैव क्वाथकरणं तथैव निर्देशात् । एवममृतादिगुग्गुलावपि द्रष्टव्यम् । हिमोपलप्रख्य इति । हिमशिलावच्छीतले । अत्र चेत्थमेव शक्त्युत्कर्षो वचनादुन्नीयते । अत्र कोष्ण एव चूर्णदानं दृश्यते त्रिफलाचूर्णार्धपलं प्रत्येकम् । त्रिकटोश्चूर्णं षडक्षपरिमाणं मिलित्वा । कृमिरिपुर्विडङ्गम् । अनुपानं यूषं तोयम् । सुगन्धिसलिलेनेति । सुगन्धिसलिलेन वाशब्दोऽत्र द्रष्टव्यः । तेन यूषं तोयमनुपाने सुगन्धिसलिलेन वाऽनुपानमुपयुज्येत्यर्थः । कैशोरकं रूपमिति । किशोरको यौवनोन्मुखोऽश्वसूनुः । गुग्गुलोरपि गुडवन्मुद्रया पाकः । कैशोरको गुग्गुलुः॥३४॥ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

अमृताद्यगुग्गुलुमाह—

प्रस्थमेकं गुडूच्याश्च अर्धप्रस्थं तु गुग्गुलोः ॥
प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत् ॥ ४३ ॥

---

१ ङ. °मिजिश्चूर्णं° । २ क. घ. कार्यं । ३ ङ. °पिडिकाश्च ।

सर्वमेकत्र [1]संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि ॥
पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत् ॥ ४४ ॥
तावत्पचेत्कषायं तं यावत्सान्द्रत्वमागतम् ॥
दन्तीव्योषविडङ्गानि गुडूची त्रिफलात्वचः ॥ ४५ ॥
ततश्चार्धपलं पूतं गृह्णीयाच्च प्रति प्रति ॥
कर्षं तु त्रिवृतायाश्च सर्वमेकत्र चूर्णयेत् ॥ ४६ ॥
तस्मिन्सुसिद्धं विज्ञाय कवोष्णे निक्षिपेद्बुधः ॥
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रयोजयेत् ॥ ४७ ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥
दुष्टव्रणं प्रमेहांश्च आमवातं भगन्दरम् ॥ ४८ ॥
नाड्याढ्यवातं श्वयथुं सर्वानेतान्व्यपोहति ॥
अश्विभ्यां निर्मितः पूर्वममृताद्यो हि गुग्गुलुः ॥ ४९ ॥

तत्प्रमाणमिति । प्रस्थार्धम् । व्योषस्यार्धपलं प्रत्येकम् । त्रिफलात्वच इति । निरास्थित्रिफला । एवं सर्वत्र त्रिफलाशब्दाश्रयत्वच उपादाने । त्रिफलायास्त्वचः प्रत्येकमर्धपलम् । अमृताद्यो गुग्गुलुः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६॥४७॥४८॥४९॥

पुनर्नवागुग्गुलुमाह—

अमृतायाश्च द्विप्रस्थं प्रस्थमेकं तु गुग्गुलोः ॥
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥ ५० ॥
सर्वमेकत्र संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि ॥
पुनः पचेत्पादशेषं यावत्सान्द्रत्वमागतम् ॥ ५१ ॥
दन्तीचित्रकमूलानां कणाविश्वफलत्रिकम् ॥
गुडूचीत्वग्विडङ्गानां प्रत्येकार्धपलान्वितम् ॥ ५२ ॥
त्रिवृताकर्षमेकं तु सर्वमेकत्र चूर्णयेत् ॥
सिद्धमुष्णे क्षिपेत्तत्र अमृतागुग्गुलोः पलम् ॥ ५३ ॥
यथावह्निबलं खादेदम्लपित्ती विशेषतः ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥ ५४ ॥
दुष्टव्रणप्रमेहांश्च आमवातं भगन्दरम् ॥
नाड्याढ्यवातश्वयथून्हन्यात्सर्वामयानयम् ॥
अश्विभ्यां निर्मितो ह्येष अमृतागुग्गुलुः पुरा ॥ ५५ ॥

---

१ क. संकुट्य । २ घ. °य साधये° । ३ घ. कारयेत् । ४ क. °ताह्वयश्च गु° । ५ क. संकुट्य । ६ क. °पलोन्मित° । ७ क. घ. °त् । ततः सिद्धे क्षि° । ८ क. घ. °तात्मा हि गु° ।

अमृता.......................मृतत्वादमृता वा । पुनर्नवायोगात्पुनर्नवागुग्गुलुरिति तु नामास्यामृताद्यगुग्गुलुव्यवच्छेदार्थम् । पुनर्नवागुग्गुलुः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

योगसारामृतमाह—

शतावरी नागबला वृद्धदारकमुञ्चटा ॥ ५६ ॥
पुनर्नवाऽमृता कृष्णा वाजिगन्धा त्रिकण्टकम् ॥
पृथग्दश पलान्येषां श्लक्ष्णचूर्णानि कारयेत् ॥ ५७ ॥
तदर्धशर्करायुक्तं चूर्णं संमर्दयेद्बुधः ॥
स्थापयेत्सुदृढे भाण्डे मध्वर्धाढकसंयुतम् ॥ ५८ ॥
घृतप्रस्थेन चाऽऽलोड्य त्रिसुगन्धिपलेन च ॥
तं खादेदिष्टचेष्टाश्नो यथावह्निबलं नरः ॥ ५९ ॥
वातरक्तं क्षयं कुष्ठं कोसं पित्तसमुद्भवम् ॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान् ॥ ६० ॥
हत्वा करोति पुरुषं वलीपलितवर्जितम् ॥
योगसारामृतो नाम लक्ष्मीकान्तिविवर्धनः ॥ ६१ ॥

तदर्धशर्करायुक्तमिति । समुदितचूर्णादर्धमाना शर्करा । त्रिसुगन्धिपलेनेति । प्रत्येकम् । योगसारामृतम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ६१ ॥

दिवास्वप्नादि संतापं व्यायामं मैथुनं तथा ॥
कटूष्णगुर्वभिष्यन्दिलवणाम्लानि वर्जयेत् ॥ ६२ ॥

व्यायाममैथुने कायकर्मणी । उष्णमुष्णवीर्यं तेनानूपमांसं मधुरं तिक्तं च काकमाच्यादि कटु च यत्किंचिदुष्णवीर्यं तद्गृह्यते । अभिष्यन्दि धातुदोषरक्तस्रोतसां क्लेदप्राप्तिजनकम् । लवणाम्लौ तु विशेषार्थं पृथगेव पठितौ । तथा च सुश्रुतः—

"व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम् ।
दिवास्वप्नमभिष्यन्दि गुरु चान्नं च वर्जयेत्" ॥

कोपो मानसं कर्मेति । संसृष्टावृतवातस्य चिकित्सा सुश्रुत उक्ता ।

तद्यथा—"केवलो दोषयुक्तो वा धातुभिर्वा वृतोऽनिलः ।
विज्ञेयो लक्षणोहाभ्यां चिकित्स्यश्चाविरोधतः" ॥

अस्य व्याख्या—केवलो दोषाद्यसंसृष्टः । अत्र हि संयुक्तस्यैव चिकित्साविधिरुच्यते ननु(तु) केवलस्योक्तत्वात् । अविरोधत इति वचनात् । न हि केवलस्य वायोर्भि-

---

१ क. °दारक° । २ घ. कार्श्यं पित्तास्रसंभव° । ३ क. °फोत्थं च रो° । ४ क. घ. °प्राभिरं° । ५ घ. °न्दि दोषधातुमलस्रो° ।

कित्सायां विरोधोऽस्ति । एकमुख्यत्वात् । दोषैर्वातपित्तकफैर्युक्तो दोषयुक्तः । अनेन संयोगमात्रमभिहितं नाऽऽवरकत्वम् । धातवो रसरक्तमांसमेदोऽस्थिमज्जशुक्राणि स्वेद-विण्मूत्राणि वातपित्तकफाश्चोच्यन्ते तेषामपि शरीरधारकत्वात्तैरावृतः । तस्य द्विविध-स्यापि विज्ञानोपायं दर्शयन्नाऽऽह । लक्षणोहाभ्यामिति । वातस्य लक्षणं तोदादिकं कृष्णारुणत्वं कम्पादिकं च पित्तस्य चोषादि पीतादि दाहादिकं कफस्य कण्ड्वादि शुक्लादि प्रसेकादिकम् । ऊहः पुनरश्रुतस्य परिकल्पनया । नतु(नु) पित्तकफाभ्यां धातु-मिश्र मूर्तैरावरणं युज्यते । कथं वातेनेत्यत्राऽऽह । प्राणादीनां पञ्चानां वायूनां परस्प-रमावार्यावारकभेदेन विंशतिरावरणानि चरकाचार्येणोक्तानि । तथा च—

"मारुतानां च पञ्चानामन्योन्यावरणं शृणु ।
लिङ्गव्याससमासाभ्यामुच्यमानमथानघ ॥
प्राणो वृणोत्युदानाद्यान्प्राणं वृण्वन्ति तेऽपि च ।
उदानाद्यास्तथाऽन्योन्यं सर्व एव यथाक्रमम् ॥
विंशत्यावरणान्येतान्युल्बणानां परस्परम् ।
मारुतानां तु पञ्चानां तानि सम्यक्प्रतर्कयेत् " ॥

गयदासनाप्युक्तम्—

"अष्टावाद्ये द्वितीये षट्तृतीये च चतुष्टयम् ॥
द्वे चतुर्थेऽनिलेष्वेवं पञ्चधा वृतिर्विंशतिः" ॥

आवरणेषु वातानां प्राणोदानयोरेव गुरुतरमावरणं द्रष्टव्यं धात्वावरणेषु मेदोवृतवा-तस्य । तत्रोर्ध्वं गच्छन्नुदानः प्राणो वाऽपानस्याधोगामिनो गतिनिरोधं कुर्वन्नावारक इत्यु-च्यते । अथवा द्वयोर्मारुतयोरभिमुखमपसर्पतोर्बलवता दुर्बलोऽभिभूतः प्रत्यावृत्तः सन्नावृत इत्युच्यते । मेदोवृतवातस्य लक्षणं सुश्रुतोक्तं लिख्यते—

"रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः ।
करोति यस्य तं वैद्यः शोफवत्समुपाचरेत्" ॥

शोफमित्यपक्वशोफम् ॥ ६२ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसियोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
त्रयोविंशो वातरक्ताधिकारः समाप्तः ॥ २३ ॥

---

## अथ चतुर्विंश ऊरुस्तम्भाधिकारः ।

अतो वातजन्यत्वसामान्याद्वातरक्तानन्तरमूरुस्तम्भः । ऊरुस्तम्भे कफमेदःप्रधानैः स्नेहादीनां कर्मणां निषेधमाह—

स्नेहासृक्स्राववमनं बस्तिकर्म विरेचनम् ॥
विवर्जयेदाढ्यवाते तैश्च तस्य विरोधतः ॥ १ ॥

स्नेहः स्नेहनं तच्च पानाभ्यङ्गाभ्यामपि कफमेदोवर्धनत्वेन निषिद्धम् । बस्तिकर्मानुवासनं निरूहश्च । असृक्स्रुतिराममेदःस्तम्भेन गूढमूलं दोषं न निर्हर्तुं शक्नोतीति निषिद्धा । बस्तिवमनविरेकाश्च प्रायः कोष्ठगतदोषानेवापकर्ष्टुं समर्था न तु गम्भीरजङ्घोरुदेशदोषांस्ततस्तेषां निषेधः। स्नेहबस्तिराममेदोजनकत्वेन च निषिद्धः। अत एवाऽऽह चरकः—

"वातस्थाने हिते शैत्याद्वायोस्तम्भाच्च तद्गताः ॥
न शक्याः सुखमुद्धर्तुं जलं निम्नादिव स्थलम्"(लात्) इति ।

आढ्यवात इति । ऊरुस्तम्भे । तैश्च तस्य विरोधत इति । वृद्धिलक्षणोऽत्र विरोधः ॥ १ ॥

तस्मादत्र सदा कार्यं स्वेदलङ्घनरूक्षणम् ॥
आममेदःकफाधिक्यान्मारुतं परिरक्षता ॥ २ ॥

सुगमम् ॥ २ ॥

यत्स्यात्कफप्रशमनं न च मारुतकोपनम् ॥
तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम्* ॥ ३ ॥

कफहरं यन्मारुतहरं शुण्ठ्यादि कार्यमित्यर्थः ॥ ३ ॥

भोज्याः[1] पुराणश्यामाककोद्रवोद्दालशालयः ॥
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥ ४ ॥

उद्दालोऽरण्यकोद्रवः । शालीः रक्तशाल्यादिः । अघृतैर्घृतरहितैः । सर्षपतैलं पुनरुष्णत्वाच्च देयमपीति न प्रतिषिद्धं न विहितं च । शाकैश्चालवणैरिति । शाकानि वायसीवास्तुकवेत्राग्रादीन्यूरुस्तम्भे हितानि ज्ञेयानि । अलवणैर्लवणरहितैः शाकैः । तदर्थं तु यवक्षारादिक्षाराणां रौक्ष्येण कफमेदोहरत्वादवचारणमिति ॥ ४ ॥

आवस्थिकं स्नेहविधिमाह—

रूक्षणाद्वातकोपश्चेन्निद्रानाशार्तिसूचकः ॥
स्नेहस्वेदक्रमस्तत्र कार्यो वातामयापहः ॥ ५ ॥

---

* ख.पुस्तके—सर्वो रूक्षक्रमः कार्यस्तत्राऽऽदौ कफनाशनः । पश्चाद्वातविनाशाय कृत्स्नः कार्यः क्रियाक्रमः ॥ १ ॥ इत्यधिकमत्र ।

---

1 क. भोज्यं ।

सामान्यस्नेहनिषेधेन सममस्य विधेर्न विरोधः शङ्कनीयोऽपवादरूपत्वात् ॥ ५ ॥

प्रतारयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम् ॥
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ ६ ॥

शिवामिति । हिंसकजलजन्तुरहितां सुगमां च ॥ ६ ॥

यथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ॥

यथा विशुष्केऽस्य कफ इति । प्रतरणेन विच्छिन्ने कफे प्रतरणेन च वारिणा बहिर्निर्गच्छदूष्मणा निरुद्धस्यान्तःप्रवेशादिह स्थिरश्लेष्मविच्छेदो बोद्धव्यः ॥

शरीरबलमग्निं च कार्यैषा रक्षता क्रिया ॥ ७ ॥

सुगमम् ॥ ७ ॥

शिलाजतुं गुग्गुलुं वा पिप्पलीमथ नागरम् ॥
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलरसेन वा ॥ ८ ॥

शिलाजत्वशोधितमेवाऽऽहुः । प्रत्येकं शिलाजत्वादीनां चतुर्णां गोमूत्रेण दशमूलक्वाथेन च पानम् ॥ ८ ॥

भल्लातकामृताशुण्ठी दारुपथ्यापुनर्नवाः ॥
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिबर्हणाः ॥ ९ ॥

भल्लातकादियोगः क्वाथ्यः ॥ ९ ॥

पिप्पलीपिप्पलीमूलं भल्लातकफलानि च ॥
कल्कं मधुयुतं पीत्वा ऊरुस्तम्भाद्विमुच्यते ॥ १० ॥

पिप्पल्यादिकल्को मधुना पेयः । क्वाथेऽप्ययं योगः क्रियते पाठान्तरदर्शनात् । तद्यथा—पिप्पलीपिप्पलीमूलं भल्लातक्वाथ एव वेति चक्र इति ॥ १० ॥

त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहेत् ॥
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ ११ ॥

चव्यकटुकमिति । कटुकं त्रिकटुकम् । पुरं गोमुत्रेण वा पिबेदिति············पूर्वं पुनः संपूर्णः श्लोकः ॥ ११ ॥

लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ॥
सुखाम्बुना पिबेद्वाऽपि चूर्णं षट्चरणं नरः ॥ १२ ॥

कटुकायुतमिति । त्रिकटुयुतं कटुरोहिणीयुतं वा । सुखाम्बुनेति । उष्णोदकेन । षट्चरणं वातव्याध्युक्तम् । सुखाम्बुनैव षट्चरणस्य पानं दर्शितं पिबेत्षट्चरणमित्थं चेति ॥ १२ ॥

पिप्पलीवर्धमानं वा माक्षिकेण गुडेन वा ॥
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव च ॥ १३ ॥

---

१ क. ख. तथा । २ क. 'स्तम्भेन मु' । ३ क. घ. वा ।

गण्डीरः समठः स तु स्थलजो ग्राह्यस्तीक्ष्णत्वात् । तस्यारिष्टं संधानम् । तच्च गण्डीरस्य पलशतक्काथे गुडतुलामावाप्य धातकीलोध्रलिप्तकुम्भे संधानीयम् । ईषदम्लं यदा स्यात्तदोपयोज्यम् । किंवाऽरिष्टो निम्बः समठनिम्बयोः कल्कं चूर्णं वाऽनन्तरोक्तेन मधुना गुडेन वा सह प्रयोज्यम् ॥ १३ ॥

अष्टकट्वरतैलमाह—

पलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः ॥
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः* ॥
सैन्धवाद्यं हितं †तैलममृताद्यो हि गुग्गुलुः ॥ १४ ॥

पलाभ्यां पिप्पलीमूलनागरादिति । पिप्पलीमूलनागरयोः प्रत्येकं पलम् । अष्टकट्वर इति । अष्टगुणं कट्वरं कट्वरं सस्नेहतक्रम् । अष्टकट्वरतैलम् । सैन्धवाद्यं तैलं वातव्याध्युक्तम् । अमृताख्यो गुग्गुलुः पुनर्नवागुग्गुलुश्च । चक्रेणाप्युक्तम्—सैन्धवाद्यं हितं तैलं वर्षाभ्वमृतगुग्गुलुरिति ॥ १४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुर्विंश ऊरुस्तम्भाधिकारः समाप्तः ॥ २४ ॥

---

## अथ पञ्चविंश आमवाताधिकारः ।

---

ऊरुस्तम्भे सामस्य वायोः कीर्तनादतोऽनन्तरमामवात उच्यते—

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च ॥
विरेचनं स्नेहपानं बस्तयश्चाऽऽममारुते* ॥ १ ॥

लङ्घनविधिरामपाचनार्थं स्नेहपानमुल्बणवाते बस्तयः शोधनाः ॥ १ ॥

शठी शुण्ठ्यभया चोग्रा देवाह्वाऽतिविषाऽमृता ॥
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ २ ॥

सुगमम् ॥ २ ॥

---

* ख. पुस्तके—सस्नेहदधिसंभूतं तक्रं कट्वरमुच्यते । इत्यधिकमत्र ।

† अष्टकट्वरतैलेऽत्र तैलं सार्षपमिष्यत इति चक्रः ।

* ख. पुस्तके—रास्नैरण्डशतावरीसहचरादुस्पर्शवासा मृतादेवाह्वातिविषाभयाघनशठीशुण्ठीकषायः कृतः । पीतः सोरुबुतैल एष विहितः सामे सशूलेऽनिले जङ्घोरुत्रिकपार्श्वपृष्ठजठरे क्रोडेषु वातार्तिजित् ॥ १ ॥ इत्यधिकमत्र ।

शठीविश्वौषधीकल्कं वर्षाभूक्काथसंयुतम् ॥
सप्तरात्रं पिबेज्जन्तुरामवातविपाचने ॥ ३ ॥
दशमूलामृतैरण्डरास्नानागरदारुभिः ॥
क्काथो रुबूकतैलेन सामं हन्त्यनिलं गुरुम् ॥ ४ ॥

रुबूकतैलेनेति । शोधनार्थमेरण्डतैलस्य सार्धकर्षः समधिको वा प्रक्षेपः । शमनार्थं पुनः षडष्टौ माषकाः । रास्ना दशमूलम् ॥ ३ ॥ ४ ॥

दशमूलीकषायेण पिबेद्वा नागराम्भसा ॥
कुक्षिबस्तिकटीशूले तैलमेरण्डसम्भवम् ॥ ५ ॥

सुगमम् ॥ ५ ॥

रास्नादिपञ्चकमाह—

रास्नां गुडूचीमैरण्डं देवदारु महौषधम् ॥
पिबेत्सर्वाङ्गगे वाते सामे संध्यस्थिमज्जगे ॥ ६ ॥

पिबेदिति । क्काथरूपतया । अत्रापि विरेककरणेच्छायामेरण्डतैलं प्रक्षिपन्ति । रास्नादिपञ्चकम् ॥ ६ ॥

रास्नादिसप्तकमाह—

रास्नामृतारग्वधदेवदारुत्रिकण्टकैरण्डपुनर्नवानाम् ॥
क्काथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुजानुत्रिकपृष्ठशूली ॥ ७ ॥

रास्नासप्तकेऽपि केचिदेरण्डतैलं प्रक्षेपं वदन्ति । रास्नादिसप्तकम् ॥ ७ ॥

शुण्ठीगोक्षुरकक्काथः प्रातः प्रातर्निषेवितः ॥
सामे वाते कटीशूले पाचनो रुग्विनाशनः ॥
यवक्षारसमायुक्तो मूत्रकृच्छ्रविनाशनः ॥ ८ ॥

शुण्ठीगोक्षुरकक्काथ इति । प्रचाराच्छुण्ठीभागमेकं गोक्षुरकभागत्रयं गृहीत्वा कर्षस्यार्धपलस्य क्काथः । विरेचनार्थं पुनर्यवक्षारप्रक्षेपेणाप्ययं पेयः ॥ ८ ॥

महौषधगुडूच्योस्तु क्काथं पिप्पलिसंयुतम् ॥
पिबेदामे सरुक्शोफे कटीशूले विशेषतः ॥ ९ ॥
आमवाते कणायुक्तं दशमूलीजलं पिबेत्[३] ॥
खादेद्वाऽप्यभयाविश्वं गुडूचीं नागरेण वा ॥ १० ॥

सुगमम् ॥ ९ ॥ १० ॥

एरण्डतैलयुक्तां हरीतकीं भक्षयेन्नरो विधिवत् ॥
आमानिलार्तियुक्तो गृध्रसिवृद्ध्यर्दितो नित्यम् ॥ ११ ॥

---

१ क. °वनम् । द° । २ क. °रुपृष्ठे कटिपार्श्वशूले ॥७॥ ३ क. ख. °त् । भक्षयेद्वाऽ° ।

कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत्सदा ॥
आमवातप्रशमनं कफवातहरं परम् ॥ १२ ॥

शुण्ठीचूर्णलवणयुक्तस्य काञ्जिकस्य भक्तेन सहोपयोगः प्रचरति ॥ ११ ॥ १२ ॥

पञ्चकोलकचूर्णं च पिबेदुष्णेन वारिणा ॥
मन्दाग्निशूलगुल्मामकफारोचकनाशनम् ॥ १३ ॥
अमृतानागरगोक्षुरुमुण्डितिकावरुणकैः कृतं चूर्णम् ॥
मस्त्वारनालपीतमामानिलनाशनं ख्यातम् ॥ १४ ॥

सुगमम् ॥ १३ ॥ १४ ॥

वैश्वानरचूर्णमाह—

मणिमन्थस्य भागौ द्वौ यवान्यास्तद्वदेव च ॥
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम् ॥ १५ ॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृताः शुभाः ॥
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा ॥ १६ ॥
पीतं जयत्यामवातं गुल्महृद्वस्तिजान्गदान् ॥
प्लीहानं ग्रन्थिशूलादीनर्शांस्यानाहमेव च ॥ १७ ॥
विबन्धं जाठरान्रोगांस्तथा वै हस्तपादजान् ॥
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥ १८ ॥

मणिमन्थस्येति । सैन्धवस्य । यवान्यास्तद्वदेवेति । भागद्वयम् । दश द्वाविति । द्वादश । मस्त्वारनालादिभिर्दोषसात्म्यापेक्षया पानम् । एवमन्यत्रापि । वैश्वानरं चूर्णम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम् ॥ १९ ॥
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम् ॥
त्रिफलां नागरं चैवं सूक्ष्मचूर्णानि कारयेत् ॥ २० ॥
मस्त्वारनालतक्रेण पयोमांसरसेन वा ॥
आमवातं निहन्त्याशु श्वयथुं संधिसंस्थितम् ॥ २१ ॥

अलम्बुषां गोक्षुरकमिति । अलम्बुषा मुण्डितिका । अलम्बुषाद्यं चूर्णम् ॥ १९ ॥ ॥ २० ॥ २१ ॥

शतपुष्पा विडङ्गानि सैन्धवं मरिचं समम् ॥
चूर्णमुष्णाम्बुना पीतमग्निसंदीपनं परम् ॥ २२ ॥

१ घ. 'ह—माणि' । २ क. घ. 'दीनानाहमुदराणि वा । वि' । ३ क. 'दारक' । ४ घ. 'व श्लक्ष्णचू' ।

सुगमम् ॥ २२ ॥

हिङ्गु चव्यं विडं शुण्ठी कृष्णाजाजी सपौष्करम् ॥
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥ २३ ॥

कृष्णाजाजी कृष्णजीरकम् । भागोत्तरमिति । यथोत्तरमेकभागापेक्षया परिवृद्धम् । चूर्णं पीतमिति । उष्णाम्भुना ॥ २३ ॥

योगराजमाह—

चित्रकं पिप्पलीमूलं यवानीं कारवीं तथा ॥
विडङ्गान्यजमोदां च जीरकं सुरदारु च ॥ २४ ॥
चव्यैलासैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम् ॥
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥ २५ ॥
तालीसपत्रं पत्रं च[1] सूक्ष्मचूर्णानि कारयेत् ॥
यावन्त्येतानि द्रव्याणि[2] तावन्मात्रं तु गुग्गुलुम् ॥ २६ ॥
संमर्द्य सर्पिषा गाढं स्निग्धभाण्डे निधापयेत् ॥
अतो मात्रां प्रयुञ्जीत यथेच्छाहारवानपि[3] ॥ २७ ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ॥
आमवाताढ्यवातादीन्कृमिदुष्टव्रणानपि ॥ २८ ॥
प्लीहगुल्मोदरानाहदुर्नामानि विनाशयेत् ॥
अग्निं च कुरुते दीप्तं तेजोवृद्धिबलं तथा ॥
वातरोगाञ्जयत्येष संधिमज्जागतानपि ॥ २९ ॥

कारवी कृष्णजीरकम् । त्वगुडत्वक् । यवाग्रजं यवक्षारः । संमर्द्य सर्पिषा गाढमिति । प्रथमं तावद्घृतं दत्त्वा केवलो गुग्गुलुः पिट्टनीयः पश्चात्पुनरल्पमल्पं दत्त्वा चूर्णं पिट्टितव्यं सम्यक्सर्वचूर्णानि(नां) मी(मे)लने तु स्निग्धे भाण्डे निधेयः । अतो मात्रां प्रयुञ्जीतेति । षडष्टकमाषकरूपाम् । अत्रोष्णाम्बुना काञ्जिकेन वाऽनुपानम् । योगराजः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

अलम्बुषाद्यं चूर्णमाह—

अलम्बुषागोक्षुरकात्रिफलानागरामृताः ॥
यथोत्तरं भागवृद्ध्या श्यामाचूर्णं तु तत्समम् ॥ ३० ॥
पिबेन्मस्तुसुरातक्रकाञ्जिकोष्णोदकेन वा ॥
पीतं जयत्यामवातं सशोफं वातशोणितम् ॥ ३१ ॥

---

१ घ. च श्लक्ष्णचू° । २ क. चूर्णानि । ३ क. घ. °थेष्टाहा° ।

त्रिकजानूरुसंधिस्थं ज्वरारोचकनाशनम् ॥
अलम्बुषाद्यमिदं चूर्णं रोगानीकविनाशनम् ॥ ३२ ॥
हरीतक्यक्षधात्रीभिः प्रसिद्धा त्रिफला क्रमात् ॥
प्रत्येकं तेन चामुष्माद्भागवृद्धिर्यथोत्तरम् ॥ ३३ ॥

यथोत्तरं भागवृद्ध्येति । यद्यत्परं तत्तदेकभागवृद्धमित्यर्थः । श्यामा वृद्धदारकम् । तत्सममिति । मिलितचूर्णसमम् । हरीतक्यक्षधात्रीभिः प्रसिद्धा त्रिफलेति । वृद्धवैद्यव्यवहारोऽयं वृन्देन लिखितः । हरीतक्यामलकबिभीतकानीति त्रिफलेति सुश्रुतः । प्रत्येकं तेन चामुष्मादिति । अमुष्मात्क्रमात्त्रिफलायाः प्रत्येकं भागवृद्धिरित्यर्थः । अलम्बुषाद्यं चूर्णम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

पथ्याविश्वयवानीभिस्तुल्याभिश्चूर्णितं पिबेत् ॥ ३४ ॥
तक्रेणोष्णोदकेनापि अथवा काञ्जिकेन तु ॥
आमवातं निहन्त्याशु शोथं मन्दाग्निताममपि ॥ ३५ ॥

पथ्यादिभिः कृतं चूर्णं पिबेत् । चूर्णितमिति भावेक्तः ॥ ३४ ॥ ३५ ॥

अजमोदादिवटकमाह—

अजमोदमरिचपिप्पलिविडङ्गसुरदारुचित्रकशताह्वाः ॥
सैन्धवपिप्पलिमूलं भागा नवकस्य पलिकाः स्युः ॥ ३६ ॥
शुण्ठी दशपलिका स्यात्पलानि तावन्ति वृद्धदारस्य ॥
पथ्यापलानि पञ्च च सर्वं चैकत्र कारयेच्चूर्णम् ॥ ३७ ॥
समगुडवटकान्कृत्वा[1] चूर्णं वा[2]ऽप्युष्णवारिणा पिबतः ॥
नश्यन्त्यामानिलजाः सर्वे रोगास्तु[3] कोष्ठगताः ॥ ३८ ॥
विश्वाचीप्रतितूनीतूनीरोगाश्च गृध्रसी चोग्रा ॥
कटिबस्ति[4]जानुगुदजं स्फुटनं[5] चैवास्थिजङ्घयोस्तीव्रम् ॥ ३९ ॥
श्वयथुः[6] सर्वाङ्गसंधिषु ये चान्ये चाऽऽमवातसंभूताः ॥
सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ ४० ॥

अजमोदा यवानी । नवकस्येति । उक्ताजमोदादिनवकस्य । पलिका भागाः प्रत्येकम् । पलानि तावन्तीति । दश पलानि । समगुडवटकानिति । समेनैव गुडेन किंचिज्जलं दत्वा वह्निसंबन्धाद्द्रवीकृतेन वटकाः कार्याः । अन्यथा वटकभावोऽस्य दुष्करः । चूर्णं वेति । गुडं विहाय । अजमोदाद्यो वटकः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥

---

१ क. घ. °रुपृष्ठस्थं । २ क. °कानदश्चूर्णं । ३ क. घ. वाऽप्युष्ण° । ४ क रोगाः सुदारुणाः शीघ्रम् । वि° । ५ घ. °स्तिगुदस्फु° । ६ घ. °नं स्फुटनं चै° । ७ क. घ. °थुः स्तब्धाङ्ग° ।

शुण्ठीघृतमाह—

नागरकाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ॥
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥ ४१ ॥
वातश्लेष्मप्रशमनमग्निसंदीपनं परम् ॥
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥ ४२ ॥

चतुर्गुणेन तेनेति । नागरकाथेनेति नागरकल्कं विनोदकेन चेति । शुण्ठीकल्कं दत्त्वा प्रचरत्येतत् । शुण्ठीघृतम् ॥ ४१ ॥ ४२ ॥

अमृतायाः कषायेण कल्केन च महौषधात् ॥
मृद्वग्निना घृतं सिद्धं वातरक्तहरं[1] परम् ॥ ४३ ॥
आमवाताढ्यवातादीन्कृमिकुष्ठव्रणानि च ॥
अर्शांसि गुल्मरोगांश्च नाशयेदाशु योजितम् ॥ ४४ ॥

सुगमम् । गुडूचीघृतम् ॥ ४३ ॥ ४४ ॥

काञ्जिकषट्पलमाह—

हिङ्गु त्रिकटुकं चव्यं मणिमन्थं तथैव च ॥
कल्कान्कृत्वा तु पलिकान्घृतप्रस्थं विपाचयेत् ॥ ४५ ॥
आरनालाढकं दत्त्वा तत्सर्पिर्जठरापहम् ॥
शूलं विबन्धमानाहमामवातं कटीग्रहम् ॥
नाशयेद्ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ ४६ ॥

त्रिकटु प्रत्येकं पलिकम् । मणिमन्थं सैन्धवम् ॥ ४५ ॥ ४६ ॥

पुष्ट्यर्थं[2] पयसा साध्यं दध्ना विण्मूत्रसंग्रहे[3] ॥
दीपनार्थे मतिमता मस्तुना च प्रकीर्तितम् ॥ ४७ ॥

अयं ग्रन्थो गतषट्पलकेन संबध्यते । विण्मूत्रसंग्रह इति । विण्मूत्रसंग्रहे कर्तव्यम् । काञ्जिकषट्पलं घृतम् ॥ ४७ ॥

सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ॥
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ ४८ ॥

सुगमम् । शुण्ठीघृतम् ॥ ४८ ॥

सिद्धार्थकखलिप्रस्थं सुधौतं निस्तुषं जले ॥ ४९ ॥
मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम् ॥
धान्यराशौ ततो दद्यात्संचूर्ण्य पलिकानि तु ॥ ५० ॥

---

१ क. घ. °मिवृष्यं° । २ क. गोघृतं । ३ क. °प्रसैन्धवम् । दी° ।

अलम्बुषा गोक्षुरकं शतपुष्पा पुनर्नवा ॥
प्रसारणी वरुणत्वक्शुण्ठी मदनमेव च ॥ ५१ ॥
सम्यक्पाकं च विज्ञाय सिद्धा तण्डुलमिश्रिता ॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता ॥ ५२ ॥
भक्षिता लवणोपेता जयेदामं महारुजम् ॥
एकजं द्वंद्वजं साध्यं सांनिपातिकमेव च ॥ ५३ ॥
कट्यूरुवातमानाहं जानुगं त्रिकमारुतम् ॥
उदावर्तहरा पेया बलवर्णाग्निकारिणी ॥ ५४ ॥

सर्षपपिण्याकं चूर्णयित्वा तोयेनाऽऽलोड्य च्छाणयित्वा निस्तुषीकृत्य संशोष्याऽऽतपे प्रस्थो ग्राह्यः । तत इति । धान्यराशावाकृष्य । अलम्बुषा मुण्डितिका । वरुणस्य त्वक् । सम्यक्पाकमिति । अम्लत्वम् । सिद्धा तण्डुलमिश्रितेति । एषा शण्डाकी पलादिमात्रया गृहीता तण्डुलमिश्रिता सती सिद्धा कार्या पेया साध्येत्यर्थः । तथा च क्वचित्पाठः पेया तण्डुलमिश्रितेति । तण्डुलपिष्टकमिश्रणेन वटकः कार्य इत्यन्ये । सिद्धा च सहिङ्गुसैन्धवसंयुता सर्षपतैलेन परिभृष्टा लवणोपेता भक्षितेति योजना । शण्डाकी ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

रसोनपिण्डमाह—

पलशतं रसोनस्य तिलस्य कुडवं तथा ॥
हिङ्गुत्रिकटुकं क्षारौ द्वौ पञ्च लवणानि च ॥ ५५ ॥
शतपुष्पा तथा कुष्ठं पिप्पली मूत्रचित्रकौ ॥
अजमोदा यवानी च धान्यकं चापि बुद्धिमान् ॥ ५६ ॥
प्रत्येकं च पलं चैषां श्लक्ष्णचूर्णानि कारयेत् ॥
घृतभाण्डे दृढे चैव स्थापयेद्दिनषोडश ॥ ५७ ॥
प्रक्षिप्य तैलमानीं च प्रस्थार्धं काञ्जिकस्य च ॥
खादेत्कर्षप्रमाणं तु तोयं मद्यं पिबेदनु ॥ ५८ ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंस्थिते ॥
अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च ॥
सोन्मादे वातभग्ने च शूले जन्तुषु शस्यते ॥ ५९ ॥

रसोनस्येति । निस्त्वचः पिष्टस्य । तिलस्यापि सुपिष्टस्य कुडवः । तैलमानीं तैलाष्टपलानि । जन्तुष्विति । कृमिषु । रसोनपिण्डः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ॥ ५९ ॥

---

१ क. घ. 'नुग्रन्थिक' । २ ग. ङ. 'द्धार्थेत' । ३ क. घ. 'षां सूक्ष्मचू' । ४ ङ. 'ते आद्यवा' ।

रसोनस्य शतं क्षुण्णं तदर्धं निस्तुषात्तिलात् ॥
पात्रे गव्यस्य तक्रस्य पिष्टैर्द्रव्यैः समं क्षिपेत् ॥ ६० ॥
धान्यं त्रिकटुकं चव्यं चित्रकं गजपिप्पली ॥
अजमोदा त्वगेले च ग्रन्थिकं च पलांशकम् ॥ ६१ ॥
शर्करायाः पलान्यष्टौ पलार्धं मरिचस्य च ॥
कुष्ठाजाज्योश्च चत्वारि मधुनः कुडवं तथा ॥ ६२ ॥
आर्द्रकस्य च चत्वारि सर्पिषोऽष्टौ पलानि च ॥
तिलतैलस्य तावन्ति शुक्लस्यापि च विंशतिम् ॥ ६३ ॥
सिद्धार्थकस्य चत्वारि राजिकायास्तथैव च ॥
कर्षप्रमाणं दातव्यं हिङ्गु लवणपञ्चकम् ॥ ६४ ॥
एकीकृत्य दृढे कुम्भे धान्यमध्ये निधापयेत् ॥
द्वादशाहात्समुद्धृत्य प्रातः खादेद्यथाबलम् ॥ ६५ ॥
सुरा सौवीरकं सीधुं मद्यं चानु पिबेन्नरः ॥
जीर्णे यथेप्सितं भोज्यं दधिपिष्टकवर्जितम् ॥ ६६ ॥
एष मासोपयोगेन सर्वान्व्याधीन्नियच्छति ॥
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ ६७ ॥
विंशतिं श्लैष्मिकांश्चैव प्रमेहांश्चैव विंशतिम् ॥
उदराष्टकमर्शांसि गुल्मं पञ्चविधं तथा ॥ ६८ ॥
अष्टादशविधं कुष्ठं क्षयरोगहरं परम् ॥
वेपथुं गुल्मशूलं च स्तम्भं चाऽऽशु व्यपोहति ॥ ६९ ॥
च्युतसंध्यस्थिभग्नानां संधानकरणं भवेत् ॥
दृष्टिवर्णकरं वृष्यमायुष्यं बलवर्धनम् ॥ ७० ॥

पात्र इति । आढके । मधुनश्च गुडस्येति पाठो बहुपुस्तके दृश्यते व्यवहारश्चानेनैव । बृहद्रसोनपिण्डः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ ७० ॥

*"क्षुण्णं रसोनपलशतमसिततिलानां पलानि पञ्चाशत् ॥
घृतलिप्तभाजनस्थे तक्रेण समेन तत्कुर्यात् ॥ १ ॥
विंशतिपलानि चुक्रात्सगुडार्द्रकमातुलुङ्गमेतावत् ॥
तिलतैलानि च तावत्तावन्त्येवात्र सर्पिषो दद्यात् ॥ २ ॥
शतपुष्पागजपिप्पलिदाडिमवृक्षाम्लधातकीमुस्तम् ॥
त्र्यूषणकुष्ठजयानि द्राक्षा सैला सजीरकद्वितया ॥ ३ ॥

* एतदादि भेलजैरजितामिलन्तो ग्रन्थो घ. पुस्तके नास्ति ।

सुरदारु सिन्धु सविडं सौवर्चलरोमकं च सामुद्रम् ॥
पलसंमितानि कृत्वा श्लक्ष्णचूर्णवद्दापयेन्मतिमान् ॥ ४ ॥
आलोड्य धान्यराशौ सप्ताहांस्त्रीन्व्यसेच्च कृतरक्षः ॥
उद्धृत्य तदनु सिद्धं सुतिथिमुहूर्ते तथा सुनक्षत्रे ॥ ५ ॥
त्वक्पत्रैलाकेसरकर्पूरलवङ्गजातिचूर्णेन ॥
सुरभीकृतं च नरः खादेद्विपलोन्मितं पिण्डम् ॥ ६ ॥
अत्यर्थोष्णविवर्जी तृषितश्च पिबेत्सुरां यथेष्टम् ॥
अमृतादमृताख्योऽयं रसोनपिण्डः पराशरेणोक्तः ॥ ७ ॥
हतपतितच्युतभग्नसंधिविमुक्तास्थिभग्नदेहानाम् ॥
अस्मात्परं नराणां न ह्यस्ति भेषजं वाऽन्यत् ॥ ८ ॥
बलवर्णवह्निजननं स्मृतिमेधाबुद्धिवर्धनं धन्यम् ॥
शमयति सर्वविकाराञ्शतशोऽन्यैर्भेषजैरजितान् ॥ ९ ॥"

( क्षेपकोऽमृतरसोनपिण्डः । )

दधिमत्स्यगुडक्षीरपोतकीमाषपिष्टकम् ॥
वर्जयेदामवातार्तो मांसमानूपजं च यत् ॥ ७१ ॥
अभिष्यन्दकरा ये च ये चान्ये गुरुपिच्छिलाः ॥
वर्जनीयाः प्रयत्नेन आमवातार्दितैर्नरैः ॥ ७२ ॥

माषपिष्टकमिति । माषकृतपिष्टकम् ॥ ७१ ॥ ७२ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चविंश आमवाताधिकारः समाप्तः ॥ २५ ॥

---

## अथ षड्विंशः शूलाधिकारः ।

---

आमवातेन शूलस्य संभवादथ शूलम् ।

वमनं लङ्घनं स्वेदः पाचनं फलवर्तयः ॥
क्षारश्चूर्णानि गुटिकाः शस्यन्ते शूलशान्तये ॥ १ ॥

वमनमुत्क्लिष्टे कफे । लङ्घनमामपाचनार्थम् । स्वेदः पित्तजं विहाय । क्षारः परिणामशूले वक्ष्यमाणः । चूर्णमिहैवाधिकारे वक्तव्यम् ॥ १ ॥

आशुकारी हि पवनस्तस्माच्चं त्वरया जयेत्* ॥

---

* ख. पुस्तके—वातस्यानु जयेत्पित्तं पित्तस्यापि क्षये कफम् । त्रयाणां वा जयेत्पूर्वं यो भवेद्बलवत्तरः ॥ १ ॥ इत्यधिकमत्र ।

आशुकारी शीघ्रमत्ययकारित्वात् । हि यस्मात् । तं वातम् ॥

तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥ २ ॥

तस्य पुरुषस्य वातिकशूलाक्रान्तस्य । अन्ये तु तस्य वातस्य यच्छूलं तेनाऽऽक्रान्तस्येत्याहुः ॥ २ ॥

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ॥
ससैन्धवव्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः ॥ ३ ॥

कुलत्थं लावमांसं च मिलितं यथोचितं वारिणा निष्क्वाथ्य विमृद्य च्छाणयित्वा यूषः कार्यः । स्नेहः परिभर्जनार्थम् । सैन्धवव्योषादिभिश्च यथायोगं संस्कारः ॥ ३ ॥

शूले निरन्नकोष्ठेऽद्भिरुष्णाभिश्चूर्णिताः पिबेत् ॥
हिङ्गुप्रतिविषाव्योषवचासौवर्चलाभयाः ॥ ४ ॥

निरन्नकोष्ठ इति । अजीर्णकोष्ठशून्यः । हिङ्गुप्रतिविषेति । प्रतिविषाऽतिविषा । अस्य योगस्य परिणामे नोपयोगः ॥ ४ ॥

बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ॥
सहिङ्गुलवणं पीतं सद्यो वातरुजं जयेत् ॥ ५ ॥

अयं योगः क्वाथः । हिङ्गुलवणे प्रक्षिप्य पेयः ॥ ५ ॥

तुम्बुरूण्यभयाहिङ्गु पौष्करं लवणत्रयम् ॥
पिबेद्यवाम्बुना वातशूलगुल्मापतन्त्रकी* ॥ ६ ॥

यवाम्बुनेति । यवक्वाथेन । स च क्वाथविधिना कार्यः । तुम्बुरुप्रभृति प्रक्षेपः । तुम्बुरु स्वनामप्रसिद्धम् ॥ ६ ॥

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत् ॥
हिङ्गुसौवर्चलोपेतं सद्यः शूलनिवारणम् ॥ ७ ॥
हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्चलेन वा ॥
विश्वैरण्डयवक्वाथः पीतः शूलनिवारणः ॥ ८ ॥

हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्चलेन वेति । सहयोगे तृतीया ॥ ७ ॥ ८ ॥

तद्वद्बुबुयवक्वाथो हिङ्गुसौवर्चलान्वितः ॥
यवानीहिङ्गुसिन्धूत्थक्षारसौवर्चलाभयाः ॥
सुरामण्डेन पातव्या वातशूलनिवारणः ॥ ९ ॥

---

* ख. पुस्तके—पथ्या सौवर्चलं क्षारं हिङ्गुसैन्धवदीप्यकम् । चूर्णं मद्यादिभिः पीतं वातशूलनिवारणम् ॥ १ ॥ इत्यधिकमत्र ।

१ ङ. कषायः । २ ङ. °भैरुष्णाम्बु° । ३ क. °निषवणाः । क्षा° ।

क्षारो यवक्षारः । सुरामण्डेनेति । सुराया उपरितनस्वच्छद्रवेण । एवमन्यत्रापि ॥ ९ ॥

सौवर्चिकाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः ॥
मातुलुङ्गरसैः पिष्टा गुटिकाऽनिलशूलनुत् ॥ १० ॥

गुटिकोष्णोदकानुपाना भक्षणीया । अत्राम्लिका तेत्तलिः ॥ १० ॥

हिङ्ग्वम्लकृष्णामलकं यवानी-
क्षाराभयासैन्धवतुल्यभागम् ॥
चूर्णं पिबेद्वारुणिमण्डमिश्रं
शूले प्रवृद्धेऽनिलजे शिवाय[2] ॥ ११ ॥

अम्लोऽम्लवेतसः ॥ ११ ॥

तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि ॥
गुटिका शमयत्याशु शूलं चैवातिदुःसहम् ॥ १२ ॥

तिलैरिति । पिष्टैः । गुटिकेयं कोष्णा भ्रामयितव्या ॥ १२ ॥

नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ॥
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलहा ॥ १३ ॥

जीवन्तीमूलकल्कः पेयः ॥ १३ ॥

संप्रति पित्तजशूलचिकित्सामाह—

गुडः शालिर्यवाः क्षीरं सर्पिष्पानं विरेचनम् ॥
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ १४ ॥

गुडः पुराणो[3] ज्ञेयः ॥ १४ ॥

पैत्ते तु[4] शूले वमनं पयोम्बुरसैस्तथेक्षोः सपटोलनिम्बैः ॥ १५ ॥

पैत्ते तु शूले वमनमिति । पित्तजे वमनमामाशयस्थितपित्तहरणार्थम् । सपटोलनिम्बैरिति । पटोलनिम्बकल्कयुतैः । मदनफलयोगमप्यत्रेच्छन्ति ॥ १५ ॥

शीतावगाहाः पुलिनाः[5] प्रवाता[6] भाण्डानि कांस्यानि जलप्लुतानि ॥
अन्यानि शस्तानि च शीतलानि सचन्दनाश्चन्द्रकराः सुशीताः ॥ १६ ॥

मृगमर्म[7] ॥ १६ ॥

कांस्यराजतताम्राणि भाजनानि च सर्वतः ॥
परिपूर्णानि तोयस्य शूलस्योपरि निक्षिपेत् ॥ १७ ॥

परिपूर्णानि तोयस्येति । पूरणगुणेत्यादिज्ञापकात्षष्ठी । तोयं शीतं ज्ञेयम् ॥ १७ ॥

---

१ घ. °वर्चलाम्लि° । २ क. शिवायाः । ३ क. पित्ते । ४ क. च । ५ क. घ. पुलिनाः ६ क. घ. सवाता । ७ क. °नाग्राश्च क° । ८ क. °मू । मणिरा° ।

विरेचनं पित्तहरं च शस्तं रसाश्च शस्ताः शशलावकानाम् ॥
संतर्पणं लाजमधूपपन्नं योगाः सुशीता मधुसंप्रयुक्ताः ॥ १८ ॥

विरेचनं पित्तहरमिति । पित्तहरमधुरगणोपहितम् । संतर्पणं लाजमधूपपन्नं लाजसक्तुमधुभ्यां निर्मितं तर्पणम् ॥ १८ ॥

छर्द्यां ज्वरे पित्तभवे च शूले घोरेऽपि दाहे तृषितेऽतिमात्रम् ॥
यवस्य पेयां मधुना विमिश्रां पिबेत्सुशीतां मनुजः सुखार्थी ॥ १९ ॥

यवस्य पेयामिति । यवयवागूम् ॥ १९ ॥

धात्र्या रसं विदार्या वा त्रायन्तीगोस्तनाम्बुना ॥
पिबेत्सशर्करं मद्यं पित्तशूलनिषूदनम् ॥ २० ॥

योगत्रयमिदम् ॥ २० ॥

शतावरीरसं क्षौद्रयुक्तं प्रातः पिबेन्नरः ॥
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ २१ ॥

सुगमम् ॥ २१ ॥

शतावरीसयष्ट्याह्वाट्यालकुशगोक्षुरैः ॥
शृतशीतं पिबेत्तोयं सगुडक्षौद्रशर्करम् ॥
पित्तासृग्दाहशूलघ्नं सद्योदाहज्वरापहम् ॥ २२ ॥

शृतशीतमिति । शृतमेव व्यजनादिना शीतम् ॥ २२ ॥

त्रिफलानिम्बयष्ट्याह्वकटुकारग्वधैः शृतम् ॥
पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ॥ २३ ॥
बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुवालिकाः ॥
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ २४ ॥

योगः क्वाथः । इक्षुवालिका खरजडिका(?) ॥ २३ ॥ २४ ॥

प्रलिह्यात्पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ॥ २५ ॥

सुगमम् ॥ २५ ॥

अथ कफजे चिकित्सितमाह—

श्लेष्मात्मके लङ्घनंच्छर्दनानि शिरोविरेकं मधुसीधुपानम् ॥
मधूनि गोधूमयवानरिष्टान्सेवेत रूक्षान्कटुकांश्च सर्वान् ॥ २६ ॥

मधुसीधुपानमिति । मधुसीधू मद्यविशेषौ । अरिष्टान्संधानविशेषान् ॥ २६ ॥

---

१ क. °धूकपानं यो° । २ क. छर्दिर्ज्वरे । ३ क. °षितोऽति° । ४ क. °स्य तोयं म° । ५ क. विमिश्रं । ६ क. °शीतं म° । ७ क. घ. °म्बु वा । पि । ८ क. घ. सद्यः । ९ घ. बृहत्यो । १० क. घ. °नपाचना° ।

लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् ॥
सुखोष्णेनाम्बुना पातुं कफशूले प्रदापयेत् ॥ २७ ॥

लवणत्रयसंयुक्तामिति । लवणत्रयं सौवर्चलसैन्धवबिडानि लवणगणे प्रथमं पठितानि । लवणत्रयादिना चूर्णं कार्यम् ॥ २७ ॥

बिल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् ॥
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलहरं परम् ॥ २८ ॥

बिल्वमूलादिविश्वभेषजान्तं क्वाथः । हिङ्गुसैन्धवे प्रक्षेपः ॥ २८ ॥

मातुलुङ्गरसो वाऽपि शिग्रुक्वाथस्ततः परः ॥
सक्षारो मधुना पीतः पार्श्वहृद्बस्तिशूलनुत्* ॥ २९ ॥

मातुलुङ्गरसो वेति । मातुलुङ्गमूलक्वाथः । सौभाञ्जनमूलक्वाथः । श्लेष्मशूलहरा पेया पञ्चकोलेन साधिता(?) ॥ २९ ॥

त्रिदोषजचिकित्सामाह—

विदारीदाडिमरसः सव्योषलवणान्वितः ॥
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम् ॥ ३० ॥

विदारीदाडिमरस इति । विदारीकन्ददाडिमफलयोः क्वाथः स्वरसो वा ॥ ४० ॥

एरण्डद्वादशकमाह—

एरण्डफलमूलानि बृहतीद्वयगोक्षुरम् ॥
पर्णिन्यः सहदेवा च सिंहपुच्छीक्षुवालिका ॥ ३१ ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत् ॥
पृथग्दोषभवं शूलं हन्यात्सर्वभवं तथा ॥ ३२ ॥

एरण्डस्य फलं मूलं च । बृहतीद्वयं कण्टकारी बृहती च । पर्णिन्यश्चतस्र एव । कपिञ्जलाधिकरणन्यायात्पुनः पर्णीनीत्रयग्रहणं नाऽऽद्रियेते । सहदेवा दण्डोत्पलभेदः । सिंहपुच्छी कट्टराशिङ्गुच्छकम् । अथवा सिंहपुच्छी शृगालविन्ना पृश्निपर्णीभेदः । इक्षुवालिका षड्गली । सुश्रुत इक्षुवालिकास्थान इक्षुरकपाठस्तत्र कोकिलाक्षकः । यवक्षारयुतमिति । यवक्षारस्तस्य हि सप्तमाषकमानः प्रक्षेपः । एरण्डद्वादशकः ॥ ३१ ॥ ३२॥

गोमूत्रशुद्धं मण्डूरं त्रिफलाचूर्णसंयुतम् ॥
विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ३३ ॥

गोमूत्रशुद्धं गोमूत्रे सप्तधा निर्वापणेन शुद्धं मण्डूरं मिलितत्रिफलाचूर्णसमम् । तत्पञ्चमाषकमुपयोज्यम् ॥ ३३ ॥

---

* ख. पुस्तके—श्लेष्मशूलहरा पेया पञ्चकोलेन साधिता । इत्यधिकमत्र ।

---

१ क. घ. °क्तो निहन्त्याशु । २ ङ. °यन्ते स° ।

शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम् ॥
उष्णोदकेन तत्पीतं शूलं हन्ति त्रिदोषजम् ॥ ३४ ॥

शङ्खस्य मनाग्दग्धस्य चूर्णम् । अस्य माषकमेकं समधिकं वा लवणव्योषयोर्मिलित्वा माषकद्वयं हिङ्गुनो रक्तिकाद्वयमधिकं दत्त्वा पिबेत् ॥ ३४ ॥

संप्रत्यामशूलचिकित्सितमाह—

आमशूले क्रिया कार्या कफशूलविनाशिनी ॥
सेव्यमामहरं सर्वं यद्यदग्निविवर्धनम् ॥ ३५ ॥

आमशूलहरमग्निवृद्धिकरं पञ्चकोलादि सेव्यम् ॥ ३५ ॥

एरण्डसप्तकमाह—

एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटमूलकृतः कषायः ॥
सक्षारहिङ्गुलवणो रुबुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः ॥ ३६ ॥

पाषाणभेदवर्जमेरण्डादीनां सर्वेषां मूलम् । पाषाणभित्पाषाणभेदः स च स्वनामख्यातः । त्रिकटो गोक्षुरकः । लवणं सैन्धवं श्रेष्ठत्वात् । एवं सर्वत्र । अत्र क्षारादीनां प्रायः प्रक्षेपे मानप्रचारो यवक्षारचूर्णमाषाश्चत्वारो हिङ्गु रक्तिकात्रयं सैन्धवचूर्णं माषमेकमेरण्डतैलं माषाश्चत्वारः । एरण्डसप्तकः ॥ ३६ ॥

सहिङ्गुतुम्बुरुव्योषयवानीचित्रकाभयाः ॥
सक्षारलवणं चूर्णं पिबेत्प्रातः सुखाम्बुना ॥ ३७ ॥
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥
चित्रकग्रन्थिकैरण्डशुण्ठीधान्यं जले शृतम् ॥ ३८ ॥
शूलानाहविबन्धेषु सहिङ्गुविडसैन्धवम् ॥
दीप्यकं सैन्धवं पथ्या नागरं च चतुःसमम् ॥
चूर्णं शूलं जयत्याशु समस्याग्नेश्च दीपनम् ॥ ३९ ॥

दीप्यकं सैन्धवमिति । दीप्यकं यवानिका । वाग्भटे नागरस्थाने पिप्पली दृश्यते ॥ ३७ ॥ ३८ ॥ ३९ ॥

समाक्षिकं बृहत्यादिं पिबेत्पित्तानिलात्मके ॥

समाक्षिकं बृहत्यादिमिति । बृहत्यादिमिहैव पित्तशूले बृहत्यौ गोक्षुरैरण्डेत्यादिनोक्तं संनिपातज्वरोक्तं वा मधु प्रक्षिप्य तं पिबेत् ॥

व्यामिश्रं वा विधिं कुर्याच्छूले मारुतपित्तजे ॥ ४० ॥

१ क. ब. तत्पेयं शू' । २ घ. 'शु मन्दस्या' ।

पटोलत्रिफलारिष्टक्वाथं मधुयुतं पिबेत् ॥
पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये ॥ ४१ ॥

अयं योगोऽम्लपित्ते प्रचरति ॥ ४० ॥ ४१ ॥

पित्तजे कफजे वाऽपि क्रिया या कथिता पृथक् ॥
एकीकृत्य प्रयुञ्जीत तां शूले कफपित्तजे ॥ ४२ ॥
वमनं रेचनं चैव वीक्ष्य दोषबलाबलम् ॥
कर्तव्यं कफपित्तोक्तं यथायोग्यं भिषग्जितम् ॥ ४३ ॥

॥ ४२ ॥ ४३ ॥

रुचकादिचूर्णमाह—

चूर्णं समं रुचकहिङ्गुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसंभवासु ॥
हृत्पार्श्वपृष्ठजठरार्तिविषूचिकासु
पेयं तथा यवरसेन तु विड्विबन्धे ॥ ४४ ॥
क्वाथेन चूर्णपानं यत्तत्र क्वाथप्रधानता ॥
प्रवर्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः ॥ ४५ ॥
हिङ्गुनः स्वल्पमानोक्तेः समशब्दे सहार्थता ॥ ४६ ॥

सममिति पदं सहार्थे तेन शुण्ठ्यम्बुना सह रुचकादिचूर्णं पेयमिति योजना कर्तव्या । समशब्दस्य सहार्थत्व उपपत्तिं वृन्द एव दर्शयति । रुचकं सौवर्चलम् । तीक्ष्णत्वेन शुण्ठ्याः कर्षार्धस्याल्पस्य वा क्वाथः । अत्र प्रक्षेपः सौवर्चलचूर्णं माषमेकम् । शुण्ठीचूर्णं माषद्वयम् । हिङ्गु रक्तिकात्रयम् । यवरसेन यवक्वाथेन । प्रवर्तते न तेनात्र चूर्णापेक्षी चतुर्द्रव इति । पातव्यश्च चतुर्द्रव इति परिभाषया चूर्णपानार्थयुक्तश्चतुर्गुणद्रवोऽत्र न प्रवर्तते तेन द्विपले क्वाथे चूर्णकर्ष इत्यर्थः । हिङ्गुनः स्वल्पमानोक्तेः समशब्दे सहार्थतेति । माषिकं हिङ्ग्वित्यादिना प्रक्षेपे हिङ्गुनो माषकमानत्वेन नियतत्वादिह रुचकादिसमत्वमसंगतमतः समशब्दः सहार्थे तेनेह स्वल्पं हिङ्गु देयमिति तात्पर्यार्थः । चक्रेणाप्युक्तम्—

"समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः ।
तेनाल्पमानमेवेह हिङ्गु संपरिदीयते" इति ॥

रुचकादिः ॥ ४४ ॥ ४५ ॥ ४६ ॥

---

१ क. 'योगं भि' ।

विश्वोरुबूकदशमूलयवाम्भसा च
द्विक्षारहिङ्गुलवणत्रयपुष्कराणाम् ॥
चूर्णं पिबेद्धृदयपार्श्वकटीग्रहाम-
पक्वाशयांसभृशरुग्ज्वरगुल्मशूली ॥ ४७ ॥

अधमविधानपरिग्रहेण विश्वोरुबूकदशमूलानां मिलित्वा कर्षः । यवस्य च कर्षः । अनयोः क्वाथः । अत्र द्विक्षारादिचूर्णं पूर्ववदभ्युपगम्य प्रक्षेप्तव्यम् ॥ ४७ ॥

हिङ्गु सौवर्चलं पथ्या बिडसैन्धवतुम्बुरु ॥
पौष्करं च पिबेच्चूर्णं दशमूलयवाम्भसा ॥ ४८ ॥
पार्श्वहृत्कटिपृष्ठांसशूले तन्द्रापतानके ॥
शोथे श्लेष्मप्रसेके च गलरोगे च शस्यते ॥ ४९ ॥

दशमूलयवाम्भसेति । दशमूलकषाययवकषाययोः क्वाथेन ॥ ४८ ॥ ४९ ॥

रसोनं मद्यसंमिश्रं पिबेत्प्रातः प्रकाङ्क्षितः ॥
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥ ५० ॥
हिङ्गु त्रिकटुकं कुष्ठं यवक्षारं ससैन्धवम् ॥
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः ॥ ५१ ॥
तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ॥
प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम् ॥ ५२ ॥

तीक्ष्णायो लोहं तच्च मारितशोधितं ग्राह्यम् । त्रिफलाया एकभागसमं लोहचूर्णम् । एतच्च मिलित्वा माषद्वयमुपयोज्यम् । लोहपत्रिकया तु विधाने मिलित्वा द्विचतुर्माषोपयोगः । अयमेव योगो यष्टीमधुयोगाद्योगान्तरं प्राप्तोऽमृताख्यं भवति ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥

मूत्रान्तःपाचितां शुष्कां लोहचूर्णसमन्विताम् ॥
सगुडामभयामद्यात्सर्वशूलप्रशान्तये ॥ ५३ ॥

मूत्रान्तःपाचितामिति ॥ गोमूत्रोत्स्विन्नां लोहचूर्णेन सहैव मूत्रे पाचितामित्येके । सगुडां समगुडाम् ॥ ५३ ॥

वाते निरूहाः सविरेचनाश्च
क्षीरप्रयोगा मधुराश्च पित्ते ॥
तिक्ताः कषायाः कटुकास्तथैव
वाम्यश्च शूले कफसंनिविष्टे ॥ ५४ ॥

सुगमम् ॥ ५४ ॥

दाधिकं घृतमाह—

नागरं पिप्पली बिल्वं कारवी[1] चव्यचित्रकम् ॥
हिङ्गुदाडिमवृक्षाम्लवचाक्षाराम्लवेतसम् ॥ ५५ ॥
वर्षाभूः कृष्णलवणमजाजी बीजपूरकम् ॥
दधि त्रिगुणितं सर्पिस्तत्सिद्धं दाधिकं स्मृतम् ॥ ५६ ॥
गुल्मार्शःप्लीहहृत्पार्श्वशूलयोनिरुजापहम् ॥
दोषसंशमनं श्रेष्ठं दाधिकं परमं स्मृतम् ॥ ५७ ॥

कृष्णलवणः सौवर्चलभेदस्तदभावे सौवर्चलमेव । उक्तं हि—

न काललवणे गन्धः सौवर्चलगुणो हि स इति । बीजपूरकमिति । बीजपूरस्य मूलम् । दध्ना त्रिगुणेनैव पाकः । स्वरसक्षीरमङ्गल्यैरित्यादिपरिभाषां चतुर्गुणजलदानार्थमुक्तां नाऽऽद्रियन्ते । दाधिकं घृतम् ॥ ५५ ॥ ५६ ॥ ५७ ॥

कम्बलावृतगात्रस्य प्राणायामं प्रकुर्वतः ॥
कटुतैलाक्तसक्तूनां धूपः शूलापहः परः[2] ॥ ५८ ॥

प्राणायाममिति । उच्छ्वासधारणम् ॥ ५८ ॥

वेदना च तृषा मूर्छा आनाहो गौरवारुची ॥
कासः श्वासश्च हिक्का[3] च शूलस्योपद्रवाः स्मृताः ॥ ५९ ॥

सुगमम् ॥ ५९ ॥

व्यायामं मैथुनं मद्यं लवणं कटुकानि च ॥
वेगरोधं शुचं क्रोधं[4] वर्जयेच्छूलि वैदलम् ॥ ६० ॥

शूलि वैदलमिति । शूलं जन्यत्वेनेहास्तीति शूलि । एतच्च वैदलविशेषणं किंवा छन्दोनुरोधाद्ध्रस्वत्वं तेन शूली नर इत्यर्थः ॥ ६० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
षड्विंशः शूलाधिकारः समाप्तः ॥ २६ ॥

---

## अथ सप्तविंशः परिणामशूलाधिकारः ।

---

लङ्घनं वमनं शस्तं विरेकश्चानुवासनम् ॥
निरूहो वाजिगन्धादिर्माधुतैलिकबस्तयः ॥ १ ॥

शूलप्रकारत्वात्परिणामशूलमुच्यते । एतच्च माधवकारेण रुग्विनिश्चये शूलाधि-

---

१ क. घ. 'वी त्वथ चि' । २ घ. शूलहरः स्मृतः । प्रा' । ३ घ. हिध्मा । ४ क. 'धं शूली जयाच्च केवल' ।

कार एव वर्शितं बृन्देन तु चिकित्सितविधियोगात्पृथगधिकारेण लिखितम् । लङ्घनं वमनं चाऽऽमाशयस्थे दोषैः पच्यमानाशयस्थे विरेको निरूहश्च पक्वाशयस्थेऽनुवासनम् । वाजिगन्धादिनिरूहो माधुतैलिकबस्तिश्च परिमाणशूलचिकित्सैषा यस्य तन्त्रस्य तस्य ज्ञेयौ । परिणामशूलचिकित्सा हि चरकसुश्रुतयोर्नास्ति । तन्त्रान्तरापरिज्ञानात्तु तौ चरके सुश्रुते वाऽभिहितौ ग्राह्यौ ॥ १ ॥

विडङ्गतण्डुलव्योषत्रिवृद्दन्ति सचित्रकम् ॥
सर्वाण्येतानि चाऽऽहृत्य सूक्ष्मचूर्णानि कारयेत् ॥ २ ॥
गुडेन मोदकान्कृत्वा भक्षयेत्प्रातरुत्थितः ॥
उष्णोदकानुपानं च दद्यादग्निविवर्धनम् ॥
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ ३ ॥

विडङ्गतण्डुलं विडङ्गस्य निस्तुषः सारभागः । गुडेन मोदकानिति । द्विगुणेन गुडेन ॥ २ ॥ ३ ॥

नागरतिलगुडकल्कं पयसा संसाध्य यः पुमानद्यात् ॥
उग्रं परिणतिशूलं तस्यापैतीह सप्तरात्रेण ॥ ४ ॥

नागरतिलगुडकल्कमिति । यवागूवद्वा क्षीरेण साधयित्वा भक्षयेत् ॥ ४ ॥

एरण्डवह्निशम्बूकवर्षाभूगोक्षुरं समम् ॥
अन्तर्दग्ध्वा पिबेदद्भिरुष्णाभिः शूलशान्तये ॥ ५ ॥

शम्बूकं निर्मांसं शम्बूकम् । उष्णाम्बुना गालयित्वा घृताक्तमुखकुहरेण पेयम् । पूर्वो योगोऽयं च कफे ॥ ५ ॥

शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ॥
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ ६ ॥
शम्बूकं त्र्यूषणं चैव पञ्चैव लवणानि च ॥
समांशां गुटिकां कृत्वा कलम्बकरसेन वा ॥ ७ ॥
प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ॥
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ ८ ॥

कलम्बकरसेन वेत्ययं वाशब्दः पूर्वयोगापेक्षया संहितायाम् ॥ ६ ॥ ७ ॥ ८ ॥

यः पिबति सप्तरात्रं सक्तूनेकान्कलाययूषेण ॥
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम् ॥ ९ ॥

सक्तूनेकान्कलाययूषेणेति । यवसक्तूनेकान्कलाययूषेण पिबेत् । कलायो वर्तुलः । एष विधिः पित्तश्लेष्मजे शूले युक्तः ॥ ९ ॥

---

१ ङ. 'नि संहृ' । २ ङ. 'दकं कृत्वा । ३ क. घ. 'ल्वतैलश्च' ।

लोहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा ॥
पक्तिशूलं च शमयेत्तन्मलं वा प्रयोजितम् ॥ १० ॥

लोहचूर्णस्यैको भागः । वरा त्रिफला तस्याः प्रत्येकं चूर्णसमभागत्वम् । तन्मलं वेति । लोहमलम् । एतदपि वरायुक्तं बोद्धव्यम् । लोहमलस्य तु मिलितत्रिफलातुल्यो भागः ॥ १० ॥

कृष्णाभयालोहचूर्णं लिह्यात्समधुशर्करम् ॥
परिणामभवं शूलं सद्यो हन्ति सुदारुणम् ॥ ११ ॥

मधुशर्करेति स्थाने गुडदानाद्योगान्तरं भवति ॥ ११ ॥

पथ्यालोहरजः शुण्ठीचूर्णं माक्षिकसर्पिषा ॥
परिणामरुजं हन्ति वातपित्तकफात्मिकाम् ॥ १२ ॥

सुगमम् ॥ १२ ॥

सामुद्राद्यं चूर्णमाह—

सामुद्रं सैन्धवं क्षारो रुचकं रोमकं विडम् ॥ १३ ॥
दन्ती लोहरजःकिट्टं त्रिवृत्सूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ॥ १४ ॥
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥
जीर्णे जीर्णे च भुञ्जीत मांसादिघृतभोजनम् ॥ १५ ॥
नाभिशूलं हरेन्नूनं गुल्मप्लीहकृतं च यत् ॥
विद्रध्यष्ठीलिकं हन्ति कफवातोद्भवं तथा ॥ १६ ॥
शूलानामपि सर्वेषामौषधं नास्त्यतः परम् ॥
परिणामसमुत्थस्य विशेषेणान्तकृन्मतम् ॥ १७ ॥

सामुद्रं कडकचं (मीठ) रुचकं सौवर्चलं रोमकं रुमानदीभवं लवणं तदभावे साम्भरीलवणम् । लोहरजःकिट्टं लोहकिट्टरजः । लक्षणव्यभिचारचिह्नान्न पूर्वनिपातः । अनेन प्रचारः । किंच लोहरजो लोहकिट्टं च दध्यादित्रयं मिलित्वा चतुर्गुणं चूर्णभागसमं वा दत्त्वा मन्दाग्निना पक्तव्यमाचूर्णभावात् । एतच्च चूर्णं वातकफशूले भद्रम् । केचिदन्तर्धूममस्य पावकमाहुः । दध्यादिना च चतुर्गुणेन पाकः प्रचरति । सामुद्राद्यं चूर्णम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

पिप्पलीघृतमाह—

---

१ क. वचायु° । २ घ. क. °युक्तमपि बो° । ३ क. घ. मांसादिघृतसाधितम् । ४ क. घ. °लं च हृच्छूलं गु° ।

सपिप्पलीगुडं सर्पिः पचेत्क्षीरे चतुर्गुणे ॥
विनिहन्त्यम्लपित्तं च शूलं च परिणामजम् ॥ १८ ॥

पिप्पलीघृतम् ॥ १८ ॥

क्वाथेन कल्केन च पिप्पलीनां सिद्धं घृतं माक्षिकसंप्रयुक्तम् ॥
क्षीरानुपस्यैव निहन्त्यवश्यं शूलं प्रवृद्धं परिणामसंज्ञम् ॥ १९ ॥

माक्षिकसंप्रयुक्तमिति । सिद्धशीते घृते पादिकमधुयुक्तम् । क्षीरानुपस्येति । क्षीरमनुपिबतः । तत्र यदि घृतमनुपीयते तदा क्षीरमनुपानमथ भक्तेन सह खाद्यते तदा क्षीरेण भोक्तव्यम् । क्षीरोपयोगश्चेह पिप्पल्याः कटुतीक्ष्णत्वादुक्तः । पिप्पलीघृतम् ॥ १९ ॥

कोलादि मण्डूरमाह—

कोलाग्रन्थिकशृङ्गबेरचपलाक्षारैः समं चूर्णितं
मण्डूरं सुरभीजलेऽष्टगुणिते पक्त्वाऽथ सान्द्रीकृतम् ॥
तं खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभु-
ग्जेतुं वातकफामयान्परिणतं शूलं च शूलानि च ॥ २० ॥

कोला चवी । चपला पिप्पली । समं चूर्णितं मण्डूरमिति । सर्वचूर्णसमं मण्डूरम्। सुरभीजले गोमूत्रे । अष्टगुणे समुदितचूर्णात् । प्रचारोऽपीत्थं प्रायः । मण्डूरचूर्णात्कवलादष्टगुण इत्येके । आसन्नपाके कोलादिचूर्णप्रक्षेप एवं सर्वत्र मण्डूरे । कोलादिमण्डूरः ॥ २० ॥

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयवक्षारैः ॥
प्रस्थमयोमलरजसः पलांशिकैश्चूर्णितैर्मिश्रैः ॥ २१ ॥
अष्टगुणमूत्रयुक्तं क्रमपाकात्पिण्डतां नयेत्सर्वम् ॥
कोलप्रमाणगुटिकास्तिस्रो भोज्यादिमध्यविरतौ च ॥ २२ ॥
रससर्पिर्यूषपयोमांसैरश्नन्नरो निवारयति ॥
अन्नविवर्तनशूलं गुल्मप्लीहाग्निसादांश्च ॥ २३ ॥

कोलप्रमाणेत्यष्टमाषमाना अष्टमाषकैरेव तिस्रस्ता वटिकाः कार्याः । प्रचारः पुनस्त्रिचतुर्माषकैः । अन्नविवर्तनशूलं परिणामशूलम् । भीमवटकमण्डूरम् ॥ २१ ॥ २२ ॥ ॥ २३ ॥

मण्डूरस्य पलान्यष्टौ गोमूत्रेऽर्धाढके पचेत् ॥
क्षीरप्रस्थं च तत्सिद्धं पक्तिशूलहरं नृणाम् ॥ २४ ॥

क्षीरमण्डूरम् ॥ २४ ॥

---

१ ख. मनिवं । २ क. ध. लोहकिट्टं ।

मण्डूरवटिकामाह—

मण्डूरस्य पलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ॥
चपलानागरक्षारपिप्पलीमूलपिप्पलीः ॥ २५ ॥
संचूर्णानि क्षिपेत्तस्मिन्पलांशाः सान्द्रतां गते ॥
गुटिकाः कल्पयेत्तेन पक्तिशूलनिवारणीः ॥ २६ ॥

चपला चवी हस्तिपिप्पलीत्यन्ये । वटिकामण्डूरम् ॥ २५ ॥ २६ ॥

शतावरीमण्डूरमाह—

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ॥
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ॥ २७ ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः ॥
विपचेत्सर्वमेकत्र यावत्पिण्डत्वमागतम् ॥ २८ ॥
सिद्धं तद्भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा ॥
वातात्मकं पित्तभवं शूलं च परिणामजम् ॥ २९ ॥
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः ॥
रसो गन्धः शुभः पाके वर्तिः स्याद्गाढमर्दनात् ॥ ३० ॥

मध्ये भोजनस्य वाशब्दः समुच्चये तेन भोजनस्य मध्येऽग्रतश्च भक्षयेदित्यर्थः । शतावरीमण्डूरम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

गुडमण्डूरमाह—

विडङ्गं चित्रकं चव्यं त्रिफला त्र्यूषणानि च ॥
नवभागानि चैतानि लोहकिट्टसमानि च ॥ ३१ ॥
गोमूत्रं द्विगुणं दत्त्वा मूत्रार्धिकगुडान्वितम् ॥
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम् ॥ ३२ ॥
स्निग्धभाण्डे विनिक्षिप्य भक्षयेत्कोलमात्रया ॥
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः ॥ ३३ ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम् ॥
कामलां पाण्डुरोगं च शोथं मन्दाग्नितामपि ॥ ३४ ॥
अर्शांसि ग्रहणीदोषं कृमिगुल्मोदराणि च ॥
नाशयेदम्लपित्तं च स्थौल्यं चैवापकर्षति ॥ ३५ ॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च ॥
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञितः ॥
शूलार्तानां कृपाहेतोस्तारया परिकीर्तितः ॥ ३६ ॥

१ क. चव्याग्निना । २ क 'शूलनिवारणः । का' ।

नवभागानि चैतानीति। मिलित्वा। लोहकिट्टसमानि चेति। लोहकिट्टस्यापि नव भागानित्यर्थः। गोमूत्रं द्विगुणमिति। मिलितचूर्णात्। एतच्च पलोल्लेखागतमानत्वाद्द्विगुणं ग्राह्यम्। मूत्राधिकगुडान्वितमिति। सर्वचूर्णसमो गुड इत्यर्थः। तारामण्डूरगुडः॥ ३१॥ ३२॥ ३३॥ ३४॥ ३५॥ ३६॥

अक्षामलकशिवानां स्वरसैः पक्वं सुलोहजं रेणुम्॥
सगुडं यद्युपयुङ्क्ते मुञ्चति शुली त्रिदोषजं शूलम्॥ ३७॥

अक्षामलकशिवानां स्वरसैरिति। मिलित्वा चतुर्गुणैः स्वरसैः प्रत्येकमन्ये। सगुडमिति। लोहरजः समगुडम्। त्रिफलालोहः॥ ३७॥

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लोहचूर्णस्य॥ ३८॥
यष्टीमधुकरजश्च द्विपलं दद्यात्पटे घृष्टम्॥
अमृताक्वाथेनैतच्चूर्णं भाव्यं तु सप्ताहम्॥ ३९॥
चण्डातपे विशुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम्॥
घृतमधुना[1] संयुक्तं भक्तादौ मध्यतोऽन्ते च॥ ४०॥
त्रीनपि वारान्खादेत्पथ्यं दोषानुबन्धेन॥
भक्तस्याऽऽदौ नाशयति[2] दोषान्पित्तानिलोद्भूतान्॥ ४१॥
मध्येऽन्नं विष्टम्भं जयति नृणां विदह्यते नान्नम्॥
पानान्नकृतान्दोषान्भक्तान्ते शीलितं जयति॥ ४२॥
एवं जीर्यति चान्ने शूलं नृणां सुकष्टमपि॥
हरति च सहसा युक्तो योगश्चायं जरत्पित्तम्॥ ४३॥
चक्षुष्यं पलितघ्नं कफपित्तभवाञ्जयेद्रोगान्॥
प्रसादयति च रक्तं पाण्डुत्वं कामलां जयति॥ ४४॥

अमृताक्वाथेनैतच्चूर्णं भाव्यमिति। अमृतामिहाऽऽमलकीमाहुः। जरत्पित्तमम्लपित्तम्। धात्रीलोहः॥ ३८॥ ३९॥ ४०॥ ४१॥ ४२॥ ४३॥ ४४॥

खण्डामलकीमाह—

स्विन्नपीडितकूष्माण्डात्तुलार्धं भृष्टमाज्यतः॥
प्रस्थार्धे खण्डतुल्यं तु पचेदामलकीरसात्[3]॥ ४५॥
प्रस्थे सुस्विन्नकूष्माण्डरसप्रस्थे[4] च घट्टयन्॥
दर्व्या पाकं गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत्॥ ४६॥
द्वे द्वे[5] पले कणाजाजीशुण्ठीनां मरिचस्य च॥
पलं तालीसधान्याकं चतुर्जातकमुस्तकम्॥ ४७॥

---

१ क. °क पथ्यानां। २ क. °ना सह भुक्तं। ३ ग. °ति व्याधीन्पि°। ४ क. °स्थे विपाचयेत्। द°। ५ क. °लं जातीस°।

कर्षप्रमाणं प्रत्येकं प्रस्थार्धं माक्षिकस्य च ॥
पक्तिशूलं निहन्त्येतद्दोषत्रयकृतं च यत् ॥ ४८ ॥
छर्द्यम्लपित्तमूर्छाश्च श्वासकासावरोचकम् ॥
हृच्छूलं रक्तपित्तं च पृष्ठशूलं च नाशयेत् ॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम् ॥ ४९ ॥

खण्डतुल्यमिति । खण्डस्यापि पञ्चाशत्पलानि । पक्तिशूलं परिणामशूलम् । खण्डामलकी ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

कलायचूर्णभागौ द्वौ लोहचूर्णस्य चापरः ॥
कारवेल्लपलाशानां रसेनैव विमर्दितम् ॥ ५० ॥
कर्षमात्रां ततश्चैकां भक्षयेद्गुटिकां नरः ॥
मण्डानुपाना सा हन्ति जरत्पित्तं सुदारुणम् ॥ ५१ ॥

कलायचूर्णभागाविति । कलायो वर्तुलः कलायः । अपर इत्येकः । कारवेल्लपलाशानामिति । पलाशं पत्रम् । मण्डानुपाना यवमण्डानुपानम् ॥ ५० ॥ ५१ ॥

लिह्याद्वा त्रैफलं चूर्णमयश्चूर्णसमायुतम् ॥
यष्टीचूर्णेन वा युक्तं लिह्यात्क्षौद्रेण तद्वदे ॥ ५२ ॥

त्रिफलायाः प्रत्येकं लोहचूर्णसमोऽशः । तद्वद इति । जरत्पित्ते ॥ ५२ ॥

पित्तान्तं वमनं कृत्वा कफान्तं च विरेचनम् ॥ ५३ ॥
अन्नद्रवे तु तत्कार्यं जरत्पित्ते यदीरितम् ॥
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ॥ ५४ ॥

अन्नद्रव इति । भुक्ते जीर्यति जीर्णे वा यच्छूलमुपजायत इत्यादिनोक्तः शूलविशेषोऽन्नद्रवः ॥ ५३ ॥ ५४ ॥

माषेण्डरी सतुषिका स्विन्ना सर्पिर्युता हिता ॥
गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम् ॥
ससितं शीतदुग्धेन मृदितं वा हितं मतम् ॥ ५५ ॥

गोधूममण्डकमिति । गोधूमकृतो भक्ष्यविशेषः । मृदितं वा हितमिति । मृदितं संयावाकृतिलेहः ॥ ५५ ॥

अन्नद्रवे दुश्चिकित्स्यो दुर्विज्ञेयो महागदः ॥
तस्मात्तस्य प्रशमने परं यत्नं समाचरेत् ॥ ५६ ॥
अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः ॥
तस्मादत्रान्नपानानि मात्राहीनानि कल्पयेत् ॥ ५७ ॥

---

१ क. घ. °क्तं तिलान्क्षौद्रे° । २ क. तन्नयेत् । ३ क. °म् । दुष्टान्नव्यत्ययात्कार्यं जरत्पित्ते यथोचिते । आ° ।

अम्लद्रवे तु यत्प्रोक्तं जरत्पित्तेऽपि तद्धितम् ॥
इति संक्षेपतः प्रोक्तमम्लद्रवचिकित्सितम् ॥ ५८ ॥

सुगमम् ॥ ५६ ॥ ५७ ॥ ५८ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तविंशः परिणामशूलाधिकारः समाप्तः ॥ २७ ॥

---

## अथाष्टाविंश उदावर्ताधिकारः ।

---

पवनाविनाभूतयोगित्वसाधर्म्याच्छूलानन्तरमुदावर्तः । उदावर्तेऽपि हि सर्वत्र शूलवदवश्यंभावी वायुः । यदुक्तम् —

"सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः ॥
वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये" इति ।

उद्गतेन वेगेनाऽऽवृतस्य वायोर्वृत्तिरत्रेत्युदावर्तो(र्त इति) निरुक्तिरस्य ।

त्रिवृत्सुधापत्रतिलादिशाकग्राम्यौदकानूपरसैर्यवान्नम् ॥
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात्प्रसन्नागुडसीधुपायी ॥ १ ॥

तिलादिशाकेत्यत्राऽऽदिशब्दात्सप्तलानां पत्रादिपरिग्रहः । अन्यैश्च सृष्टानिलमूत्रविड्भिरिति । अन्यैरपि विण्मूत्राद्यनुलोमनैः क्षीरादिभिरद्यात् । गुडकृतसीधुः ॥ १ ॥

आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते ॥

मारुतज इति । मारुतजवेगविघातजे । एवं पुरीषज इत्यादावपि व्याख्येयम् । आस्थापनं निरूहस्तच्चाऽऽनुलोमिकवातहरद्रव्यकृतम् । स्निग्धस्विन्ने विशिष्यत इति केचित्पठन्ति तत्र स्निग्धस्विन्न आतुर इति शेषो विशिष्यते विशिष्टं भवति विशेषेण क्रियत इति तात्पर्यार्थः ॥

पुरीषजे तु कर्तव्यो विधिरानाहिकस्तु यः ॥
क्षीरवैतरणौ बस्ती युञ्ज्यात्तत्र चिकित्सकः ॥ २ ॥

विधिरानाहिक इति । फलवर्त्यादिः । तुशब्दादनुक्तमन्यदपि पुरीषानुलोमनं कर्तव्यम् ॥ २ ॥

श्यामा दन्ती द्रवन्ती च महाश्यामा स्नुही त्रिवृत् ॥ ३ ॥
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिल्वकः ॥
कम्पिल्लकः करञ्जश्च हेमक्षीरीत्ययं गणः ॥ ४ ॥

---

१ ड. °त्पित्ते तु त° । २ ड. °शाङ्खिनी° । ३ ड. शूलादावश्यं° ।

सर्पिस्तैलरजःक्वाथकल्केष्वन्यतमेन तु ॥
उदावर्तोदरानाहविषगुल्मविनाशनः ॥ ५ ॥

श्यामा श्याममूला त्रिवृत् । द्रवन्ती चीरितपत्रा दन्ती । स्रुगित्यस्य स्थाने त्वगिति पाठान्तरे द्रवन्त्यास्त्वक् । स्नुक्शिम्रुरिति लोके । महाश्यामा वृद्धदारकः । सप्तलाशङ्खिन्यौ नीलश्वेतवुन्हे । सप्तला चर्मकषेत्यन्ये । श्वेताऽपराजिता कटभी वा । तिल्वकः शाबरो लोध्रः । हेमक्षीरी सुवर्णक्षीरी तदभावे कुष्ठम् । एवं सर्वत्र । अन्यतमेन त्वतः परं युक्त इति शेषः ॥ ३ ॥ ४ ॥ ५ ॥

त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः ॥
गुटिका गुडतुल्यास्ता विड्विबन्धगदापहाः ॥ ६ ॥

द्विचतुष्पञ्चभागिका इति । यथाक्रमम् । गुडतुल्या इति । समुदिततुल्यो गुडः ॥ ६ ॥

हरीतकी यवक्षारः पीलुनी त्रिवृता तथा ॥
घृतैश्चूर्णमिदं पेयमुदावर्तविनाशनम् ॥ ७ ॥

पीलुनी मूर्वा । पीलु(लू)नीति पाठे पीलूत्तरापथिकं फलं तदेव युक्तमिह स्रंसित्वात् ॥ ७ ॥

हिङ्गुकुष्ठवचास्वर्जिविडं चेति द्विरुत्तरम् ॥
पीतं मद्येन तच्चूर्णमुदावर्तहरं परम् ॥ ८ ॥

स्वर्जिः स्वर्जिकाक्षारः । द्विरुत्तरमिति । यथोत्तरं द्विगुणम् ॥ ८ ॥

नाराचकचूर्णमाह—

खण्डपलं त्रिवृतासममुपकुल्याकर्षचूर्णितं श्लक्ष्णम् ॥
प्राग्भोजने च समधु विडालपदकं लिहेत्प्राज्ञः ॥ ९ ॥
एतद्गाढपुरीषे पित्ते च कफे च विनियोज्यम् ॥
स्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना ॥ १० ॥

त्रिवृतासममिति । त्रिवृच्चूर्णस्यापि पलम् । उपकुल्या पिप्पली । प्राग्भोजनमि(ने चे)ति । परिणामे भोजनसंनिधाने । नाराचकचूर्णम् ॥ ९ ॥ १० ॥

हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्तिं सुवर्तिताम् ॥
घृताभ्यक्तां गुदे दद्यादुदावर्तविनाशिनीम् ॥ ११ ॥

हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्तिमिति । हिङ्गुमाषः सैन्धवकर्षः १ मधुपलम् १ एवं व्यवहाराद्गृहीत्वा पक्त्वा च फलवर्तिं कुर्यात् । हिङ्गुसैन्धवे समे मधु चतुर्गुणमित्यन्ये ॥ ११ ॥

मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ॥
गुडक्षारसमायुक्ता फलवर्तिः प्रशस्यते ॥ १२ ॥

गौराः सर्षपाः । गुडः समुदायसमः । गुडं च मनाग्जलं दत्त्वा पक्त्वा च वर्तिः कर्तव्येति व्याख्यातारः ॥ १२ ॥

---

१ क. 'क्षारपीलूनि त्रि' । २ घ. कुम्भं ।

आगारधूमसिन्धूत्थतैलयुक्ताम्लमूलकम् ॥
क्षुण्णनिर्गुण्डिपत्रं वा स्विन्ने पायौ क्षिपेद्बुधः ॥ १३ ॥

आगारधूमो लंघूरिति । क्षुण्णनिर्गुण्डिपत्रमिति । निर्गुण्डी सिन्दुवारः । अत्राऽऽगारधूमाद्यनुवर्तते ॥ १३ ॥

सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् ॥

सिन्धूत्थजरणाद्यस्तु शाणका इत्यत्राऽऽद्यपदेन संगृहीतत्वात्सौवर्चलमाषचतुष्टयमिह प्रक्षेपः स्वयुक्त्या प्रचारात्पुनरेकाद्विमाषकं तत्प्रक्षेप्यम् । मदिराऽऽहारद्रव्यत्वात्प्रचुरा ग्राह्या ॥

एलां वाऽप्यथ मद्येन क्षीरवारि पिबेद्बुधः ॥
दुस्पर्शास्वरसं वाऽपि कषायं ककुभस्य च ॥ १४ ॥

क्षीरेण समेन मिश्रितं वारि क्षीरवारि । दुस्पर्शा दुरालभा ॥ १४ ॥

ईर्वारुबीजं तोयेन पिबेद्वाऽलवणीकृतम् ॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा ॥ १५ ॥

ईर्वारुर्ग्रीष्मकर्कटिका । अलवणीकृतमिति । सैन्धवयोगादल्पलवणीकृतम् । पञ्चमूलीशृतं क्षीरमिति । पञ्चमूली तृणपञ्चमूली । डल्लणस्त्वेवं व्याख्याति । पञ्चमूली लघुपञ्चमूलं समानतन्त्रसंवादात् । तन्त्रान्तरे चोक्तम्—लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नर इति ॥ १५ ॥

सर्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ १६ ॥

सर्वथैवेति । कात्स्न्र्येन ॥ १६ ॥

जृम्भजोदावर्तचिकित्सितमाह—

स्नेहैः स्वेदैरुदावर्तं जृम्भजं समुपक्रमेत् ॥

स्नेहस्वेदैरिति । पदद्वयेऽपि बहुवचनत्वाच्चतुर्भिः स्नेहैश्चतुर्भिः स्वेदैरित्यर्थः । ( जृम्भजं ) जृम्भावेगविघातजम् । जृम्भा हांछीकेति लोके ॥

अश्रुजोदावर्तचिकित्सामाह—

अश्रुमोक्षोऽश्रुजे कार्यः स्निग्धस्विन्नस्य यत्नतः ॥ १७ ॥

अश्रुमोक्षोऽश्रुनिःसरणं तच्च तीक्ष्णाञ्जनादिविधिना ॥ १७ ॥

क्षवजे क्षवपत्रेण घ्राणस्थेनाऽऽनयेत्क्षवम् ॥

क्षवपत्रेणेति । क्षवच्छिक्काकारकतरुः । हांछिकेति प्रसिद्धः ॥

उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ १८ ॥

क्रमोपेतमिति । स्नैहिकधूमपानोक्तक्रमयुक्तम् ॥ १८ ॥

छर्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत् ॥

---

१ ख. स्निग्धे । २ क. गन्धेन । ३ क. वा । ४ ङ. एर्वारुबीजं ।

छर्द्याघातमिति । छर्द्या वेगघातजं रोगं कुष्ठविसर्पादिकं कार्ये कारणोपचारात् । एवं क्षुद्विघात इत्यादावपि व्याख्येयम् । यथादोषमिति । यत्र दूषको दोषश्छर्दिविघातजरोगे जातस्तं तद्विपरीतैर्नस्यादिभिर्जयेत् । आदिशब्दाद्वमनादयः ॥

बस्तिशुद्धिकरावापं चतुर्गुणजलं पयः ॥ १९ ॥
आवारिनाशात्क्वथितं पीतवन्तं प्रकामतः ॥
रमयेयुः प्रिया नार्यः शुक्रोदावर्तिनं नरम् ॥ २० ॥

बस्तिशुद्धिकरावापमिति । बस्तिशुद्धिकराणि कूष्माण्डतृणपञ्चमूलवीरतरादीनि । आवाप इति क्षीरसाधनार्थं कल्कः । कल्ककल्पनव्यवस्था च क्षीरपरिभाषया । पयः क्षीरम् । प्रकामत इति । यथेच्छम् । रमयेयुर्मैथुने योजयेयुः । यदत्र रमणे स्त्रीणां कर्तृत्वेनाभिधानं तच्छुक्रोदावर्तिनो हर्षाधिक्यसंजननार्थम् । प्रिया मनोनुकूलाः ॥ १९ ॥ ॥ २० ॥

अत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ॥
शालिः पयो निरूहाश्च हितं मैथुनमेव च ॥ २१ ॥

अवगाहो वातहरद्रव्यक्काथे कोष्णे कार्यः । चरणायुधाः कुक्कुटाः । हितं मैथुनमेवेति । मैथुनमौपरिष्टं तेन हि वायोः प्रकोपो न स्याच्छुक्रस्य चानुलोमनमित्याहुः ॥ २१ ॥

क्षुद्विघाते हितं स्निग्धमुष्णमल्पं च भोजनम् ॥

चकाराल्लघ्वपि ॥

तृष्णाघाते पिबेन्मन्थं यवागूं चापि शीतलाम् ॥ २२ ॥

मन्थः सघृतशीतजलप्लुताः सक्तवः । यवागूरत्र पेया । चकाराच्छीतलजलावगाहनादिकं ग्राह्यम् ॥ २२ ॥

रसेनाद्यात्सुविश्रान्तः श्रमश्वासातुरो नरः ॥

रसेन मांसरसेन । विश्रान्त इति विरतक्रियः ॥

निद्राघाते पिबेत्क्षीरं स्वप्याच्चेष्टकथां नरः ॥ २३ ॥

क्षीरं गोक्षीरं न माहिषं प्रधानकल्पनाश्रयणात्समानतन्त्रदर्शनाच्च । तथा च तद्वचः । निद्राघाते पिबेत्क्षीरं गोः स्वप्यादथवा नर इति । इष्टकथा अनुकूलकथाः । शृणुयादिति शेष इति डल्लणः । अन्यस्तु व्याचष्टे । निद्राघाते पिबेत्क्षीरमिति । क्षीरमिह माहिषमिच्छति निद्राकरत्वात् । इष्टकथारत इति पाठान्तरम् ॥ ९३ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टाविंश उदावर्ताधिकारः समाप्तः ॥ २८ ॥

---

१ क. 'धारतः । क्षी' ।

## अथैकोनत्रिंश आनाहाधिकारः ।

---

अतः परमानाहचिकित्सोच्यते—

आनाहेऽपि प्रयुञ्जीत उदावर्तहरां क्रियाम् ॥

सामे पुनरानाहे लङ्घनपाचनमेव कार्यम् । उक्तं हि—उदावर्तक्रियाऽऽनाहे सामे पाचनलङ्घनमिति ॥

द्विरुत्तरं हिङ्गु वचा सकुष्ठा सुवर्चिका चैव विडङ्गचूर्णम् ॥
सुखाम्बुनाऽऽनाहविषूचिकार्तिहृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥१ ॥

यथोत्तरं क्रमाद्विगुणाः । सुवर्चिका सुवर्चिकाक्षारः । सुखाम्बुनेत्यतः परं पीतमिति द्रष्टव्यम् ॥ १ ॥

वचाभयाचित्रकयावशूकान्सपिप्पलीकातिविषान्सकुष्ठान् ॥
उष्णाम्बुनाऽऽनाहविमूढवातान्पीत्वा जयेदाशु हितौदनाशी ॥ २ ॥
त्रिवृद्धरीतकी श्यामाः स्नुहीक्षीरेण भावयेत् ॥
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चाऽऽनाहभेदिकाः ॥ ३ ॥

श्यामा श्याममूला त्रिवृत । त्रिवृदादि सर्वं चूर्णीकृत्य स्नुहीक्षीरेण भावयित्वा वटिकाः कार्याः । योगोऽयमतिक्रूरे कोष्ठे ॥ २ ॥ ३ ॥

राँढधूमविडव्योषगुडमूत्रैर्विपाचिता ॥
गुदेऽङ्गुष्ठसमा वर्तिर्निधेयाऽऽनाहशूलनुत् ॥ ४ ॥

राँढो मदनफलम् । धूमो गृहधूमः । गुडः समुदायात्स(यस)मः । गोमूत्रं चतुर्गुणं किं वा यावता गोमूत्रेण च पाकाद्वार्तिः कर्तुमायाति तावत्तदुभयं देयम् ॥ ४ ॥

वर्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ॥
मधुनि गुडे वा पाय्वीरिताऽङ्गुष्ठप्रमाणवर्तिरियम् ॥ ५ ॥
दृष्टफला शनैः शनैः प्रणिहिता गुदे घृताभ्यक्ता ॥
आनाहोदावर्तप्रशमनी जठरगुल्मनिवारणी ॥ ६ ॥

त्रिकट्वादीनां मिलित्वा कर्षः । गुडः कर्षः । मधु पलमित्येके । समभागं त्रिकटुकादिद्रव्यं गृहीत्वा वार्तिः कर्तव्येत्यन्ये । गुडे वेति । वाशब्दः पूर्वयोगापेक्षया विकल्पे समुच्चये वा द्रष्टव्यः । पाय्वीरितेति । गुदक्षिप्ता । दर्वीरितेति पाठान्तरे दर्विकया घट्टितेत्यर्थः ॥ ५ ॥ ६ ॥

शुष्कमूलाद्यं घृतमाह—

---

१ क. °म् । उष्णाम्बु° । २ घ. °लीसाति° । ३ घ. राठधू° । ४ घ. राठो । ५ क. वा दर्वी-रि° । ६ घ. °रशूलानि° । ७ घ. ङ. गुडेन ।

मूलकं शुष्कमार्द्रं च वर्षाभूमूलपञ्चकम् ॥ ७ ॥
आरेवतफलं चाप्सु तेन पक्त्वा पचेद्घृतम् ॥
तत्पीतमात्रं शमयेदुदावर्तमशेषतः ॥ ८ ॥

शुष्कं मूलकविशेषणम् । आर्द्रमार्द्रककन्दम् । आर्द्रकं चेति परेण योज्यम् । शुष्कमिति मूलकार्द्रकयोर्विशेषणमिति डल्लणः । वर्षाभूः पुनर्नवा । मूलपञ्चकं पञ्चमूलं तच्च महत् । आरेवतफलं सुवर्णालुफलम् । पक्त्वेति क्वाथपाकपरिभाषया । तेन क्वाथेन । अकल्कमिदम् । शुष्कमूलकाद्यं घृतम् ॥ ७ ॥ ८ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्री-
श्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्याया-
मेकोनत्रिंश आनाहाधिकारः समाप्तः ॥ २९ ॥

---

## अथ त्रिंशो गुल्माधिकारः ।

लघ्वन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम् ॥
बृंहणं च भवेत्सर्वं तद्धितं सर्वगुल्मिनाम् ॥ १ ॥
गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरणीया ॥
मारुतेऽत्र विजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म निहन्यात् ॥ २ ॥

गुल्मेऽप्युदावर्तो वायुरानाहश्च संभवतीति तदनन्तरं गुल्मः । अस्य च निरुक्तिः सुश्रुतेनैव कृता । तद्यथा—

"कुपितानिलमूलत्वाद्गूढमूलोदयादपि ।
गुल्मवद्वा विशालत्वाद्गुल्म इत्यभिधीयते" ।

लघु द्रव्यं लघु सर्वगुल्मेषु वातप्रकोपि(?) दीपनलघ्वन्नोपदेशोऽग्निसंधुक्षणार्थम् । वायुं विना सर्वगुल्मानामसंभवाद्वायुविजय एव हि सर्वत्र हित इत्याह—उपायैर्भेषजैः । सर्वश इति । सर्वगुल्मे । विधिवदित्यनेन केवलानिलारब्धेऽनिलमेव केवलं जयेदन्यास्मिन्पित्तादिज आवरकाविरोधेनेति दर्शयति ॥ १ ॥ २ ॥

स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ॥
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ ३ ॥

स्वेदो गुल्ममपोहतीति । स्वेदः पित्तजं विना ॥ ३ ॥

इदानीं वातगुल्मचिकित्सामाह—

प्रागेव वातिके गुल्मे सुस्निग्धं स्वेदितं नरम् ॥
रेचितं स्नेहरेकैश्च निरूहैः सानुवासनैः ॥
उपाचरेद्भिषक्प्राज्ञो मात्राकालविवेकतः ॥ ४ ॥

---

१ क. घ. चापि तैं । २ घ. ॅत्पीयमानं श ॅ ।

सुस्निग्धमिति । सामान्येनाभिधानाद्यथास्वं चतुर्भिरपि स्नेहैस्तैलघृतवसामज्जभिः सुस्निग्धं सर्वेषामेव वातहन्तृत्वात् । अत एव तन्त्रान्तरेऽभिहितम्—

"रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत् " इति ।

अन्यत्राप्युक्तम्—

"सर्वत्र प्रथमे गुल्मे स्नेहस्वेदोपपादिते ॥
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते " इति ॥

स्नेहविरेकैरिति । स्नेहविरेचनैर्बिन्दुघृतादिभिः । मात्राकालविवेकत इति । निरूहानुवासनविधौ या मात्रोक्ता यश्च कालः पक्षाद्विरेको वान्तस्य ततः पक्षान्निरूहणमित्यादिनोक्तस्तयोर्विवेकेन ॥ ४ ॥

गुल्मिनां जाङ्गलरसस्य पानमाह—

सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः ॥
कटुत्रिकसमायुक्ता हिताः पानेषु गुल्मिनाम् ॥ ५ ॥

सुखोष्णा ईषदुष्णाः । जाङ्गलानां रसा जम्बालविष्किरमांसानां संस्कृता रसाः । सुस्निग्धाः सम्यक्स्नेहसंस्कृताः । हिता इति । यथादोषमिति शेषः ॥ ५ ॥

गुल्मेषु यौगिकान्स्वेदानाह—

कुम्भीपिण्डेष्टकास्वेदान्कारयेत्कुशलो भिषक् ॥ ६ ॥

कुम्भीस्वेदो वातहरक्वाथादिपूर्णकुम्भाभ्यन्तरबाष्पेण स्वेदनम् । कृसरापायसादिभिर्वस्त्रबद्धैः स्वेदः पिण्डस्वेदः । इष्टकयाऽग्नितप्तया वातहरक्वाथसिक्तया स्वेदः । स्वेदान्कारयेद्वातश्लेष्मातके सशूले कठिने च गुल्मे ॥ ६ ॥

उपनाहाश्च कर्तव्याः सुखोष्णाः साल्वणादयः ॥

साल्वणादय इत्यत्राऽऽदिपदेन वेसवारादिपरिग्रहः । स्वेदाः पच्यमानाभिमुखे गुल्मे कार्याः ॥

स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः ॥
स्वेदोऽनुलोमनं चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ७ ॥

स्थानावसेको रक्तस्येति । स्थिरगुल्मे गुल्मस्थानाद्रक्तस्यावसेकः । बाहुमध्ये शिराव्यध इति । तथाच—

"पच्यमाने तथा गुल्मे प्रथमं रक्तमोक्षणम् ।
बाहुभ्यां रक्तशुद्ध्यर्थमेवं संपद्यते सुखम् " इति ॥

बाहुमध्ये संधेरधस्तादल्पाशिरा वेध्या न तु मध्याशिरा तस्या मर्मत्वात् । शिराव्य-

---

१ क. ध. 'ष्टेष्टिका' । २ घ. क. इष्टिक' ।

धश्च यस्मिन्पार्श्वे गुल्मस्तत्पार्श्वस्थबाहौ । विधिः पुनरेष दोषचिकित्सया गुल्मस्याप्रशमे स्वेदादिविधिना शोणितदुष्टौ सत्याम् ॥ ७ ॥

मातुलुङ्गरसो हिङ्गु दाडिमं विडसैन्धवम् ॥
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ८ ॥

मातुलुङ्गरसादिकं प्रक्षिप्य सुरामण्डः पेयः । सुरामण्डश्च रोगयौगिकतया मनाक्प्रभूतो न तु चूर्णाच्चतुर्गुणः । एवमन्यत्राध्यायेऽन्यत्रापि सुरया भेषजपाने ॥ ८ ॥

पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ॥
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ ९ ॥

तदेव तैलं पयसेति । एरण्डतैलमेव पित्तानुबन्धे वाते पयसा पेयम् ॥ ९ ॥

स्वर्जिकाकुष्ठसहितः क्षारः केतकिजोऽपि वा ॥
तैलेन पीतः शमयेद्गुल्मं पवनसंभवम् ॥ १० ॥

स्वर्जिकाकुष्ठाभ्यां समः केतकिजः क्षारः । क्षारोपयोगे चो(चौ)जोरक्षार्थं क्षीरघृताभ्यां भोज्यम् । योगोऽयं कफानुबन्धे वाते । वाशब्द इह पूर्वयोगापेक्षया । तैलेनेति । तिलतैलेन । केचिद्योगद्वयं व्याख्यानयन्ति । क्षारो यवक्षारस्तत्र स्वर्जिकाकुष्ठसहितो यवक्षारस्तैलेनेत्येको योगः । केतकिजोऽपि वेत्यत्र क्षार इति संबध्यते तेन केतकिजोऽपि वा क्षारः पीतस्तैलेनेति द्वितीयो योगः ॥ १० ॥

वातगुल्मप्रतीकारे प्रकुप्यति यदा कफः ॥
शस्तमुल्लेखनं तत्र चूर्णाद्याश्च कफापहाः ॥ ११ ॥

शस्तमुल्लेखनमिति । उल्लेखनं वमनम् । एतच्च न वामयेत्तैमिरिकं न गुल्मिनमिति वचनेन गुल्मे निषिद्धमप्यवस्थायामपवादभूतम् । चूर्णाद्या इत्यत्राऽऽद्यशब्देन क्षारारिष्टादिपरिग्रहः ॥ ११ ॥

यदि कुप्यति वा पित्तं विरेकस्तत्र भेषजम् ॥
दोषघ्नैरप्यशान्ते तु गुल्मे शोणितमोक्षणम् ॥ १२ ॥

सुगमम् ॥ १२ ॥

काकोल्यादिमहातिक्तवासाद्यैः पित्तगुल्मिनम् ॥
स्नेहितं स्रंसयेत्पश्चाद्योजयेद्बस्तिकर्मणा ॥ १३ ॥

काकोल्यादिघृतं काकोल्यादिगणस्य क्वाथकल्कसाधितं महातिक्तकघृतं कुष्ठोक्तं वासाद्यं घृतं रक्तपित्तोक्तम् । वासाद्यैरित्यतः परं घृतैरिति शेषः । स्रंसयेद्विरेचयेन्मधुरैर्योगैरारग्वधादिभिः क्षीरशर्करादिभिश्चेति शेषः । बस्तिकर्मणेति । अनुवासननिरूहाभ्याम् ॥ १३ ॥

स्निग्धोष्णजे पित्तगुल्मे कम्पिल्लं मधुना लिहेत् ॥
रेचनार्थी रसं वाऽथ द्राक्षायाः सगुडं पिबेत् ॥ १४ ॥
दाहशूलादिसंक्षोभस्वप्ननाशारुचिज्वरैः ॥
विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत् ॥ १५ ॥

विदह्यमानमिति । पच्यमानम् । उपनाहयेदिति । व्रणशोथोक्तपाचनपिण्डैः प्रलेपयेत् ॥ १४ ॥ १५ ॥

पक्वस्तु पीडितोन्नामी बहिस्तुङ्गोऽल्पवेदनः ॥
श्यावो बस्तिनिभस्तत्र व्यधः शोधनरोपणम् ॥ १६ ॥

पीडितोन्नामीति । पीडितः सन्नाऽऽन्तरमुन्नमतीत्यर्थः । बहिस्तुङ्गो बाह्योन्नतः । बस्तिनिभ इति । अम्बुपूर्णदृतिपुटतुल्यः । ननु सुश्रुते गुल्मस्य पाको निषिद्धः । तद्यथा—"स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः ।
अन्तः सरति यस्माच्च न पाकमुपयात्यतः" इत्यादि ।

अत्राऽऽत्मनीति स्वावयवैः । उच्यते । यस्त्वकृतवस्तुपरिग्रहो गुल्मो न पच्यत एव दोषमात्राधिष्ठानत्वात् । यस्तु कृतवस्तुपरिग्रहतया रक्तादिविदाहवान्पच्यते स खलु न गुल्म इति सुश्रुते तदा किंतु शीघ्रविदाहनिमित्तकोऽपि विद्रधिरेव । तदुक्तम् । स वै शीघ्रविदाहित्वाद्विद्रधिस्तु निरुच्यत इति । चिकित्साभेदोऽपि नास्ति । ननु गुल्माक्रान्तत्वेन गुल्मत्वं मा भूत्कासादुत्पन्नस्य यक्ष्मणः कासत्वप्रसङ्ग इति । कार्तिकस्त्वाह—वातिक एव संगतत्वाद्वातिक एव गुल्मो न पच्यते भेदः पुनरयं तदा विद्रधिगुल्मयोर्विद्रधिराचिरपाकश्चिरपाकस्तु गुल्म इति ॥ १६ ॥

स्वयमूर्ध्वमधो वाऽपि स चेद्दोषः प्रवर्तते ॥
द्वादशाहमुपेक्षेत रक्षन्नन्यैरुपद्रवान् ॥ १७ ॥

यदि स्वयमेका(वा)न्तर्भिन्ने गुल्मे सति दोषः पूयमूर्ध्वमधो वा गच्छति तदा द्वादशाहमुपेक्षेयं (त)तेन(?) रोपणशोधनादिकं कुर्यात् । अन्नैरित्यविदाहिलघुभिः । उपद्रवाञ्ज्वरादीन् । चरकेऽप्युक्तम्—

"स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ।
दशाहं द्वादशाहं वा रक्षन्नन्यानुपद्रवान्" इति ॥ १७ ॥

परं तु शोधनं सर्पिः शुद्धे समधु तिक्तकम् ॥ १८ ॥

परं तु शोधनं सर्पिरिति । द्वादशाहात्परं शोधनद्रव्यसाधितं घृतं पेयम् । शुद्धे समधु तिक्तकमिति । तिक्तकद्रव्यसाधितं घृतं समधु रोपणं शुद्धे ॥ १८ ॥

---

१ क. 'ग्धोत्तजे ।

स्नेहोपनाहनस्वेदतीक्ष्णस्रंसनबस्तिभिः ॥
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥ १९ ॥

तीक्ष्णस्रंसनबस्तिभिरिति । तीक्ष्णेन विरेकेण तीक्ष्णैश्च निरूहैरित्यर्थः । तीक्ष्णत्वं च विरेकनिरूहयोस्तीक्ष्णदन्त्यादितीक्ष्णारग्वधादिद्रव्ययोगात् । वमनं पुनरिह गुल्मिन उत्सर्गतो निषिद्धत्वान्नोक्तम् ॥ १९ ॥

पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ॥
कफगुल्मी पिबेत्काले जीर्णमार्द्वीकमेव च ॥ २० ॥

पञ्चमूली महती कफवातहरत्वात् ॥ २० ॥

यवानीचूर्णितं तक्रं विडेन लवणीकृतम् ॥
पिबेत्संदीपनं वातमूत्रवर्चोनुलोमनम् ॥
व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः ॥ २१ ॥

व्यामिश्रदोष इति । त्रये(?) द्वंद्वश्च प्रकृतिसमसमवेतो मन्तव्यः । विकृतिविषमसमवेतस्यानुपदेशात् ॥ २१ ॥

संनिपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥ २२ ॥

संनिपातोत्थित इति । संनिपातोऽपि प्रकृतिसमसमवेत एव ज्ञेयः । विकृतिविषमसमवेतः पुनरसाध्यः । त्रिदोषघ्नो विधिः प्रत्येकदोषजगुल्मोक्तो विधिः क्रमेण दोषबलाद्यपेक्षया सर्व एव प्रयोज्यः । त्रिदोषहरद्रव्यसाधितैर्वा स्नेहादिभिः कार्यः ॥ २२ ॥

वचाऽभया विडं शुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः ॥
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशकाः क्रमात् ॥ २३ ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ॥
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥ २४ ॥

दीप्यको यवानिका । मद्यादिभिरित्यत्राऽऽदिशब्देनोष्णोदकादिपरिग्रहः ॥ २३ ॥ ॥ २४ ॥

यवानीहिङ्गुसिन्धूत्थक्षारसौवर्चलाभयाः ॥
सुरामण्डेन पातव्या गुल्मशूलनिषूदनाः ॥ २५ ॥

क्षारो यवक्षारः । योगोऽयमुष्णाम्बुना प्रचरति ॥ २५ ॥

हिङ्ग्वादिचूर्णमाह—

गद्यम् । हिङ्गुत्रिकटुकवचाजमोदाधान्यकाजगन्धादाडिमतिन्तिडीकपाठाचित्रकचव्यसैन्धवविडसौवर्चलयवक्षारस्वर्जिकापिप्पलीमूलाम्लवेतसशठीपुष्करहपुषाजाजीपथ्या विचूर्ण्य मातुलुङ्गाम्बुना

१ घ. त्रये द्वं° । २ ड. °म्लेन व° ।

**बहुशः परिभाव्याक्षमात्रा गुटिकाः कारयेत् । ततः प्रातरेकैकां वातरोगी भक्षयेत् । एष खलु योगो गुल्मश्वासकासारोचकहृद्रोगाध्मानपार्श्वोरुबस्तिशूलानाहमूत्रकृच्छ्रार्शःप्लीहोदरपाण्डुरोगानपहन्ति । तूनीप्रतितून्योश्चात्यर्थमुपयुज्यत इति ॥ १ ॥**

हितोऽस्ति सरत्वादधोगच्छतीति हिङ्गु । अजमोदा यवानिका । अजगन्धा फोंफानिका बोबईका इति देशान्तरे प्रसिद्धा । तित्तिडी शैलजं तिन्तिडीकम् । अजं स्वाभाविकं मन्दाग्नित्वमजति क्षिपतीत्यजाजी जीरकः । मातुलुङ्गाम्बुनेति । मातुलुङ्गरसेन । बहुशः सप्तवारान् । सप्ताहं भावनाविधेरन्यत्रोक्तत्वात् । मातुलुङ्गरसभावनां विना चूर्णं व्यवहरति । चरकेऽप्युक्तम्—

"भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुटिकाः कार्याः कार्मुकाः स्युस्ततोऽधिकम्" इति ।

हिङ्ग्वादिगुटिका वातगुल्मिनां कृते द्विगुणक्षारहिङ्ग्वम्लवेतसाः कार्याः ।

उक्तं च—"यच्चूर्णं गुटिका याश्च कर्तव्या वातगुल्मिनाम् ।
द्विगुणक्षारहिङ्ग्वम्लवेतसास्ता हिता इति" ॥

गुटिका चेयं प्रचारात्षडष्टकमाषकमाना भक्ष्या मद्येनोष्णाम्बुनाऽनुपानम् । हिङ्ग्वादि चूर्णम् । इति गद्यम् ॥ १ ॥

**पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च संस्तरचितं लवणोपधानम् ॥
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ २६ ॥**

पूतिको लदाकः (?) । गजचिर्भिटं गोरक्षकर्कटी । वह्निश्चित्रकः । संस्तरेण चितमास्तरणरूपतया चितम् । लवणोपधानमिति । लवणगर्भं तच्च पूतिकपत्रादिसमम् । सुश्रुते पत्रलवणविधौ टीकाकृद्भिरेवं व्याख्यातत्वात् । पूतिकपत्रादिसंस्तरे सैन्धवं दत्त्वा तदुपरि पुनः पूतिकपत्रादिकं रचितान्तर्धूमं दग्धव्यम् ।

अत्र तन्त्रान्तरम्—

"चिरबिल्वाङ्कोलव्योषमैन्द्रीचव्याग्निसैन्धवम् ।
संस्तरेण चितं दग्धं गुल्मघ्नं मस्तुना पिबेत्" इति ॥

अत्र चिरबिल्वोपादानं पूतीकेन सहादूरगुणत्वात् ॥ २६ ॥

**हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकी ॥
श्यामा बिडं सैन्धवं च यवक्षारं महौषधम् ॥ २७ ॥**

यवक्काथोदकेनैतद्घृतभृष्टं तु पाययेत् ॥
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥ २८ ॥

तुम्बुरु स्वनामविख्यातम् । श्यामा त्रिवृत् । हिङ्गुप्रभृतीनां च चूर्णं प्रभूतं कृत्वा पातव्यम् । यवक्काथोदकेनेति । यवक्वाथेनोष्णोदकेन वा पिबेत् । इहैव योगे वैद्यप्रसारक उष्णोदकमेरण्डतैलं वाऽ(चा)धिकं पठितम् ।

तद्यथा—"उष्णोदकेन पातव्यमेतत्सरुबुतैलकम् ।
एतेन गुल्मनिचयः सशूलः सपरिग्रहः ।
शाम्यते योगराजेन पवनेन घनो यथा ॥

यवक्षारोदकेनेति पाठान्तरम् । भिद्यत इति । विलीयते । सपरिग्रहः सवास्तुरचल इत्यर्थः ॥ २७ ॥ २८ ॥

वचा हरीतकी हिङ्गु सैन्धवं साम्लवेतसम् ॥
यवक्षारं यवानीं च पिबेदुष्णेन वारिणा ॥ २९ ॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम् ॥
भिनत्ति सप्तरात्रेण वह्निवृद्धिं करोति च ॥ ३० ॥

सुगमम् ॥ २९ ॥ ३० ॥

पिप्पलीपिप्पलीमूलाजाजीचित्रकसैन्धवैः ॥
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम् ॥ ३१ ॥

अयं योगो वातश्लेष्मजे ॥ ३१ ॥

नादेयीकुटजार्कशिग्रुबृहतीस्नुग्बिल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटापामार्गनीपाग्निकान् ॥
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितं
हिङ्ग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ ३२ ॥

नादेयी भूमिजम्बूः । व्याघ्री कण्टकारिका । पारिभद्रकजटा पारिभद्रकस्य मूलम् । अग्निश्चित्रकः । सलवणा इति । लवणं सैन्धवं लवणा ज्योतिष्मतीत्येके । नादेयीप्रभृतीन्दग्ध्वा क्षारः कार्यः । अस्याऽऽढकं पलशतं वा पानीयक्षारपाकविधिना चतुर्गुणेन षड्गुणेन चोदकेन पक्त्वा चतुर्भागशेषे वा कल्कस्तु पानीय एकविंशतिवारान्परिस्राव्य स्थापयेत् । अस्य कर्षमर्धपलं वा हिङ्ग्वादिचूर्णपादिकमावाप्य मांसरसक्षीरघृतानामन्यतमेषु प्रक्षिप्य पिबेन्मांसरसादिभिश्च भोक्तव्यमोजोरक्षणार्थम् । अन्ये पुनराहुः— एकदा विपाच्य स्थापिते क्षाराम्भसि व्यम्लत्वादिदोषशङ्का स्यादतः कृतक्षारादग्नेर्बलाबलाद्यपेक्षया पलादिपरिमितं क्षारं गृहीत्वा प्रत्यहं पूर्वविधिना क्वथनविधिना क्षाराम्बु

---

१ घ. वह्निवृद्धिं ।

कार्यमिति । हिङ्ग्वादिप्रतिवापमिति । हिङ्ग्वादेः षाद्विकस्य प्रतिवापं प्रक्षेपो यत्र तथा । एतदिति । क्षारजलम् । यस्य तन्त्रस्यायं प्रयोगस्तत्तन्त्रोक्तहिङ्ग्वाद्यपरिज्ञानाद्व-क्ष्यमाणो हिङ्ग्वादिरनन्तरपठितत्वात्संग्रहकारस्याभिमतो लक्ष्यते । गुल्मोदराष्ठीलि-श्विति । समुदितान्मत्वर्थीय इति तदन्ताद्विभक्तिः ॥ ३२ ॥

हिङ्गूग्रगन्धाविडशुण्ठ्यजाजीहरीतकीपुष्करमूलकुष्ठम् ॥
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविषूचिकासु ॥ ३३ ॥

उग्रगन्धा वचा । पौष्करमूलं तद्विटपशाखाश्च कुष्ठमिति ज्ञेयम् । भागोत्तरमिति । उत्तरोत्तरमेकभागवृद्धम् । उष्णाम्बुना पानमस्य । एष योगो वाग्भटेऽधिकत्रिवृद्दन्तीयो-गात्पठितस्तद्यथा—

"हिङ्गूग्राविडशुण्ठ्यजाजिविजयावाट्याभिधानामयै-
श्चूर्णैः कुम्भनिकुम्भमूलसहितैर्भागोत्तरं वर्धितैः ।
पीतं(तः) कोष्णजलेन कोष्ठजरुजागुल्मोदरादीनयं
शार्दूलः प्रसभं प्रमथ्य हरति व्याधीन्मृगौघानिव" इति ।

अत्र विजया हरीतकी वाट्याभिधानं पुष्करं कुम्भा त्रिवृन्निकुम्भो दन्ती । इत्थ-मप्यस्य प्रचारः । हिङ्ग्वादिः ॥ ३३ ॥

त्रिफलाकाञ्चनक्षीरीसप्तलानीलिनीवचाः ॥
त्रायन्तीहपुषातिक्तात्रिवृत्सैन्धवपिप्पलीः[1] ॥ ३४ ॥
पिबेद्विचूर्ण्य मूत्रोष्णवारिमांसरसादिभिः ॥
सर्वगुल्मोदरप्लीहकुष्ठार्शःशोषपीडितः ॥ ३५ ॥

सप्तला चर्मकषा । नीलिनी नीलवुन्हा । विरेचकोऽयं योगः ॥ ३४ ॥ ३५ ॥

शताह्वाचिरबिल्वत्वग्दारुभार्गीकणोद्भवः ॥
कल्कः पीतो हरेद्गुल्मं तिलक्वाथेन रक्तजम् ॥ ३६ ॥

शताह्वादिकणान्तः प्रक्षेपः । चिरबिल्वत्वक्करञ्जत्वक् । तिलक्वाथेन तिलफलक्वाथेन । एवमुत्तरयोगेऽपि तिलस्यैव क्वाथः । तिलनालक्षारक्वाथेनापि केचित्प्रचरन्ति । रक्तज-मार्तवजम् ॥ ३६ ॥

तिलक्वाथो गुडव्योषहिङ्गुभार्गीयुतो भवेत् ॥
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ ३७ ॥

गुडादयः प्रक्षेप्याः । हिङ्गुस्थाने घृतस्य पाठः क्वचित् । हिङ्गुना तु प्रचारः । नष्टे पुष्प इति । अदृश्यमान आर्तवे ॥ ३७ ॥

१ घ. 'धान्याम' । २ घ. 'ली: । पचेद्वि' ।

पीतो धात्रीरसो युक्त्या किंशुकक्षारसाधितः ॥
क्षारत्र्यूषणसंयुक्ता मदिरा चास्रगुल्मनुत् ॥ ३८ ॥
विशेषमपरं चास्य शृणु रक्तप्रसादनम् ॥
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा (?) ॥
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ॥ ३९ ॥

युक्त्येति । यथार्हमात्रया । किंशुकक्षारसाधित इति । किंशुकक्षारेण पाकात्स्रा-विता(तो) धात्रीरसेनैव किंशुकक्षारपाकात्परिस्रावणीय इत्यर्थः । भाक्ति इति पाठेऽप्ययमेवार्थः । क्षारत्र्यूषणसंयुक्तेति । क्षारो यवक्षारः । रक्तगुल्मचिकित्सितं दशमे मासि व्यतिक्रान्ते कार्यम् । यदाह चरकः—स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्य इति । तदा हि रक्तगुल्मस्य निरामत्वात्क्रियायाः साफल्यम् । अत एवोक्तम् । रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणमिति । अतोऽर्वाक्पुनः सामगुल्मे विधिरामज्वर इव विफली भवति व्याधिवृद्धिं वा जनयति । गदाधरस्तु गर्भाशङ्कानिरासार्थं दशमासप्रतीक्षणमिति न वाच्यं यः स्पन्दते पिण्डित एव नाङ्गैरिति लक्षणेनैव गर्भशङ्का* ............................................. ॥ ३८ ॥ ३९ ॥

हपुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ॥
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम् ॥ ४० ॥
सकोलमूलकरसं सक्षीरदधिदाडिमम् ॥
तत्परं वातगुल्मघ्नं शूलानाहविबन्धनुत् ॥ ४१ ॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ॥
पार्श्वहृद्बस्तिशूलं च घृतमेतद्व्यपोहति ॥ ४२ ॥
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ ॥
तत्र स्नेहसमान्याहुरर्वाक् स्याच्चतुर्गुणम् ॥ ४३ ॥

*......................................क †शुण्ठकस्य क्वाथो न पुनरार्द्रस्य स्वरसस्तस्य गुल्मे निषिद्धत्वात् । दाडिमस्याप्यत्र रसो द्रवसाहचर्यात् ।

तथा च विश्वामित्रः—

"पृथ्वीकाचित्रकव्योषहपुषाजाजिसैन्धवैः ।
सचव्यपिप्पलीमूलैः पिष्टैर्दीप्यकसंयुतैः ॥

---

* अत्रत्या टीका त्रुटिता सा डल्लणात्संग्रहीतव्येति मम भाति ।
† अत्र टीकानुरोधेन 'अर्वाक्स्याच्च चतुर्गुणम्' इति पाठोऽपेक्षितः ।
* अत्रत्याऽप्यग्रिमा टीका त्रुटिता साऽपि डल्लणादेव संग्रहीतव्येति भाति ।
† मूलकस्येति मम भाति मूलवचने शुण्ठकपदस्यापाठात् । न पुनरार्द्रस्येति निषेधस्याऽऽममूलकस्यैव युक्तत्वाच्च ।

मूलदाडिमकोलानां रसे पयसि दध्नि च ।
सिद्धं घृतं जयेद्गुल्मं वातोत्थं वह्निदीपनम्" इति ॥

एवं पञ्चभिर्द्रवैः प्रत्येकं स्नेहसमैः पाकः । स्नेहसमान्याहुरिति । प्रत्येकम् । अर्वाक्स्याच्च चतुर्गुणमिति । एकेनापि द्वाभ्यामपि त्रिभिरपि चातुर्गुण्यमित्यर्थः । अत्र चतुष्प्रभृतीति पाठः परिभाषायामस्यां युक्तः । हपुषाद्यं घृतम् ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥

दन्तीहरीतकीमाह—

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ॥
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥ ४४ ॥
ततोऽष्टभागशेषेण पचेद्दन्तीसमं गुडम् ॥
ताश्चाभयास्त्रिवृच्चूर्णात्तैलाच्चापि चतुष्पलम् ॥ ४५ ॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहेऽथ शीतले ॥
क्षौद्रार्धकुडवं दद्याच्चातुर्जातपलं तथा ॥ ४६ ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ॥
स्निग्धो विरिच्यते दोषः प्रस्थमद्याद्रसौदनम् ॥ ४७ ॥
प्लीहश्वयथुगुल्मार्शोहृत्पाण्डुग्रहणीगदाः ॥
शाम्यन्त्युत्क्लेशविषमज्वरकुष्ठान्यरोचकाः ॥ ४८ ॥

विंशतिः पञ्च चाभया इति । पञ्चविंशतिरभयाः । गुडकानि(दन्त्याः पलानी)ति । एतान्यगस्तिहरीतकीवत्कर्पटे पोटलीं बद्ध्वा क्वथनीयानि । दन्तीसमं गुडमिति । पञ्चविंशतिपलम् । तैलमुत्स्विन्नहरीतकीभर्जनार्थम् । त्रिवृच्चूर्णं केचित्कल्याणगुडवत्तैल एव क्षिपन्ति । सिद्धे लेहेऽपरचूर्णदानसमये युक्तमस्याः प्रदानम् । पलमेकं कणाशुण्ठ्योर्मिलित्वा । सिद्धे लेहे च शीतले । क्षौद्रार्धकुडवमिति । मधुनश्चत्वारि पलानि सिद्धे लेहेऽतिशीते देयानि । सुशीते मधुदानं शक्त्युत्कर्षार्थं न तूष्णविरोधिशङ्कयोपयोगो ह्युष्णे न च विरुद्धः (?)। तथा हि चरके—सक्षौद्रां शर्करां पक्त्वा कुर्यान्मृद्भाजने नव इति । अत्र मधुनः पाको दर्शितः । एवमन्यत्रापि बोद्धव्यम् । चातुर्जातपलं मिलित्वा । दोषः प्रस्थमिति । प्रस्थोऽत्रार्धत्रयोदशपलम् ।

यदुक्तम्—"वमने च विरेके च तथा शोणितमोक्षणे ।
अर्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति ।

दन्तीहरीतकी ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

त्र्यूषणाद्यं घृतमाह—

---

क. ख. च । तेनाह ।

त्र्यूषणत्रिफलाधान्यविडङ्गचव्यचित्रकैः ॥
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ४९ ॥

सक्षीरमिति । द्रवान्तराभावात्क्षीरं चतुर्गुणम् । त्र्यूषणाद्यं घृतम् ॥ ४९ ॥

द्राक्षाद्यं घृतमाह—

द्राक्षामधुकखर्जूरं विदारीं सशतावरीम् ॥
परूषकाणि त्रिफलां साधयेत्पलसंमिताम्[1] ॥ ५० ॥
जलाढके पादशेषे रसमामलकस्य च ॥
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥ ५१ ॥
साधयेत्तु घृतं सिद्धं शर्कराक्षौद्रपादिकम् ॥
*पित्तगुल्महरं सर्पिः सर्वपित्तामयापहम् ॥ ५२ ॥

आमलकरसघृतेक्षुरसक्षीराणि क्वाथशेषसमानि प्रत्येकम् । चक्रेणाप्युक्तम्— ' साहचर्यादि(ह) पृथग्घृतादेः क्वाथतुल्यता ' इति । शर्कराक्षौद्रपादिकं मिलित्वा । द्राक्षाद्यं घृतम् ॥ ५० ॥ ५१ ॥ ५२ ॥

व्योषाद्यं घृतमाह—

सव्योषक्षारलवणं दशमूलशृतं घृतम् ॥
कफगुल्मं[2] हरत्याशु सहिङ्गुबिडदाडिमम् ॥ ५३ ॥

क्षारो यवक्षारः । व्योषादीनां कल्कः । दशमूलस्य क्वाथः । यदुक्तमन्यत्र—

"दशमूलकषायेण दाडिमक्षारहिङ्गुभिः ।
सर्पिः सव्योषलवणैर्विपक्वं कफगुल्मनुत्" इति ॥

व्योषाद्यं घृतम् ॥ ५३ ॥

क्षीरषट्पलकघृतमाह—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥ ५४ ॥
क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम् ॥
ग्रहणीपाण्डुहृद्रोगप्लीहकासज्वरापहम् ॥ ५५ ॥

क्षीरप्रस्थेनेति । क्षीरप्रस्थेनैव केवलेन घृतेन पाकमिह ब्रुवते । क्षीरषट्पलकं घृतम् । ॥ ५४ ॥ ५५ ॥

धात्रीषट्पलकघृतमाह—

* घ. पुस्तके—"प्रयोजयेत्पित्तगुल्मे सर्वपित्तविकारनुत्" इति पाठः ।

१ क. 'ताम्' । ज' । २ क. घ. 'ल्मं जयत्यां' ।

धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम् ॥
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ९६ ॥

षडङ्गमिति । प्रत्येकं पलिकपञ्चकोलयवक्षारकल्कितम् । षडंशमिति पाठे षडंशा यस्मिन्घृते तत्षडंशं घृतं षट्पलमिति श्रीब्रह्मदेवः । शर्करासैन्धवोपेतमिति । शर्करासैन्धवयोर्मिलित्वा पादिकयोः प्रक्षेपः । अत्र शर्करा पलद्वयं सैन्धवस्यैको भाग इत्याहुः । सर्वगुल्मिनामिति । प्रत्येकं वातादिगुल्मिनाम् । अत्र योगे तन्त्रान्तरम्—

"पञ्चकोलैर्घृतं पक्वं सक्षारैः पलिकैः पिबेत् ।
क्षीरे धात्रीरसे चापि सितासैन्धवयोजितम् ॥
गुल्मार्शःपाण्डुरोगं च प्लीहज्वरमरोचकम् ॥
हन्याद्वातकफौ पित्तं षट्पलं नाम दीपनम्" इति ॥

धात्रीषट्पलकं घृतम् ॥ ९६ ॥

वार्श्चीवारिष्टमाह—

वृश्चीवमुरुबूकं च वर्षाभूबृहतीद्वयम् ॥
चित्रकं च जलद्रोणे पचेत्पादावशेषितम् ॥ ९७ ॥
मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत् ॥
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्धसंयुतम् ॥ ९८ ॥
तुषोषितं दशाहं तं जीर्णभक्तः पिबेन्नरः ॥
अरिष्टोऽयं जयेद्गुल्ममविपाकं सुदुस्तरम् ॥ ९९ ॥

वृश्चीवः श्वेतपुनर्नवा । उरुबूकः शुक्लैरण्डः । वर्षाभू रक्तपुनर्नवा । बृहतीद्वयमिति । एका चणकफला द्वितीया स्थूलफला । वृश्चीवादीनां चित्रकान्तानामाढकम् । अन्ये त्विति मन्यन्ते वृश्चीवादीनां शतपलं ग्राह्यम् । द्रोणे द्रव्यतुला मतेति वचनात् । पादावशेषितं पादावशिष्टम् । म(मा)गधा(ध्या)दिप्रमाणं यावन्मात्रेण कुम्भस्य सम्यक्प्रलेपनं भवति । मगधा(मागधी) पिप्पली । पथ्याचूर्णार्धसंयुतमिति । हरीतकीचूर्णार्धप्रस्थसंयुक्तम् । तुषोषितं तुषधान्यराशौ स्थितम् । बुसोषितमिति पाठे बुसमध्ये स्थितम् । जीर्णभक्तो लुप्तकोष्ठः । अस्य पलमर्धपलं वा प्रातरुत्थाय योज्यम् । वृश्चीवारिष्टः ॥ ९७ ॥ ॥ ९८ ॥ ९९ ॥

गुल्मनिषिद्धान्याह—

वल्लूरं मूलकं मत्स्याञ्छुष्कशाकानि वैदलम् ॥
न खादेदालुकं गुल्मी मधुराणि फलानि च ॥ १०० ॥

वल्लूरं शुष्कमांसम् । मूलकमार्द्रं शुष्कस्य वातकफहरत्वात् । एतच्च हरितवर्गोपल-

१ क. 'भवि पा' ।

क्षणं गुल्मे हारितवर्गस्याप्यहितत्वात् । वैदलं मुद्गवनमुद्गादिः । आलुकं पिण्डालुककाष्ठालुकमध्वालुकहस्त्यालुकशालूकशृङ्गाटमृणालबिसादिकम् । मधुराणि फलानि क्षीरिवृक्षफलानि । क्षा(क्षी)रपाणौ न्यग्रोधादिफलवर्जे(न)स्योक्तत्वात् । डल्लणस्तु—मधुराणि फलानि न्यग्रोधादिक्षीरिवृक्षफलानि चोचमोचादीनि चकारादेवंविधान्यन्यान्यपि जाम्बवकपित्थतिन्दुकादीनि वर्ज्यानीति व्याख्याति ॥ ६० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्री-
श्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
त्रिंशो गुल्माधिकारः समाप्तः ॥ ३० ॥

---

## अथैकत्रिंशो हृद्रोगाधिकारः ।

गुल्मस्य हृदयमपि स्थानमुक्तमतो हृदयगतत्वसामान्याद्धृद्रोग उच्यते । हृद्रोगो हृच्छूलम् । हृदि भङ्गव्यथेति गदाधरः । वातहृद्रोगचिकित्सामाह—

वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरम् ॥
द्विपञ्चमूलीकाथेन सस्नेहलवणेन च ॥ १ ॥

वातोपसृष्टे हृदये वातहृद्रोग इत्यर्थः । वातजे वमनोपदेशः कफस्थानत्वाद्धृदयस्य । उक्तं च—"अन्यस्थानगतं दोषं स्थानिवत्समुपाचरेत्" इति । एवं पित्तजेऽपि वमनम् । एवं चरकेऽपि । हृद्रोगिणो यद्यप्यवम्या उक्तास्तथाऽपि कफोत्थ उत्क्लेशे बलीयसि सर्वत्रैव वमनम् । दशमूलक्काथे वामनीयमदन इत्यादियोगः कार्यः । तथा सति वमनस्य सुकरत्वात् ॥ १ ॥

वमनानन्तरं यत्कार्यं तदाह—

पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम् ॥
सौवर्चलमथो शुण्ठी अजमोदावचूर्णितम् ॥ २ ॥
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः ॥
पाययेच्छुद्धदेहं च स्नेहेनान्यतमेन वा ॥ ३ ॥

फलं मातुलुङ्गदाडिमादि हृद्यत्वात्तस्य च रसो ग्राह्यो वाते(न्ते) यौगिकत्वात् । धान्याम्लं काञ्जिकम् । कौलत्थः कुलत्थयूषः । स्नेहेनान्यतमेन वेति । घृततैलवसामज्जानामन्यतमेन पानार्थम् । फलधान्याम्लादिबहुद्रवद्रव्योपदर्शनं सात्म्याद्यपेक्ष्यम् । पिप्पल्याद्यं चूर्णम् ॥ २ ॥ ३ ॥

नागरं वा पिबेदुष्णं कषायं चाग्निवर्धनम् ॥
कासश्वासानिलहरं शूलंहृद्रोगनाशनम् ॥ ४ ॥

नागरं वा पिबेदुष्णं कषायमिति । नागरं नागरकृतम् ॥ ४ ॥

पित्तहृद्रोगे वमनमाह—

श्रीपर्णीमधुकक्षौद्रसितागुडजलैर्वमेत् ॥
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥
घृतं कषायांश्चोद्दिष्टान्पित्तज्वरविनाशनान् ॥ ५ ॥

श्रीपर्णीफलं गम्भारीफलम् । मधुकं यष्टीमधु । श्रीपर्णीमधुकयोर्ज्ञेयं(?) योग्यत्वात् । जलमर्धशृतक्काथः । अत्र क्षौद्रसितागुडान्प्रक्षिप्य पित्तजे वमेत् । किंवा जलस्य श्रीपर्ण्यादिभिः सर्वैः सह संबन्धात्पञ्च योगा अमी । मधुरैः शृतं घृतमिति । मधुरगणक्काथकल्कसाधितं घृतम् । कषायांश्चोद्दिष्टानिति । चन्दनोशीरश्रीपर्णीत्यादिनोक्तान् ॥५॥

शीताः प्रदेहाः परिषेचनानि तथा विरेको हृदि पित्तदुष्टे ॥
द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे च पित्तापहमन्नपानम् ॥ ६ ॥

द्राक्षादिभिर्युक्तमन्नपानं मन्थयूषादि वमनविरेचनशुद्धे कार्यम् ॥ ६ ॥

पिष्ट्वा पिबेच्चापि सितां जलेन यष्ट्याह्वयं तिक्तकरोहिणीं च ॥७॥
अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये ॥
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥ ८ ॥

प्रत्येकमर्जुनत्वगादिभिः साधितं क्षीरं सितया सह पेयमिति चत्वारो योगाः । केवलाम्भःसाधितक्षीरे सिताप्रक्षेपात्पञ्चधा । पञ्चमूली त्वल्पा ॥ ७ ॥ ८ ॥

श्लैष्मिकहृद्रोगाचीकित्सामाह—

घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये ॥
हृद्रोगजीर्णज्वरपित्तरक्तं हत्वा भवेयुश्चिरजीविनस्ते* ॥ ९ ॥
वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते ॥
वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च पाययेत् ॥ १० ॥

वचानिम्बकषायाभ्यामिति । अनयोरेककषायेण वामे(न्तं) वमनं किंवा वचाकल्को निम्बस्य कषाय आभ्यां मिलित्वा वमनम् । हृदि हृद्रोगे तात्स्थ्यात्तच्छब्दः । वातहृद्रोग हृच्चूर्णं पिप्पल्यादीति । इहैव पिप्पल्येत्यादिना निर्दिष्टं न····परं च पिप्पल्यादिगणं पिबेदिति शङ्कनीयं यतः सौश्रुतोऽयं ग्रन्थः । तथाऽस्य स्थाने केचिदेवं पठन्ति वातजे चूर्णमुद्दिष्टं पाययेद्भोजयेच्च तमि(दि)ति । अस्यार्थः । श्लेष्महृद्रोगे वचानिम्बकषायाभ्यां वान्तं वातजे हृद्रोग उक्तं चूर्णं पिप्पल्येलेत्यादिकं पाययेत् । न केवलं तच्चूर्णं पाययेत् । भोजयेच्च तदिति । वातजहृद्रोगोक्तं चूर्णं भोजयेच्च । भक्तेन सह खादयेदित्यर्थः ॥ ९ ॥ १० ॥

---

* ख. पुस्तके—" दाडिमं कृष्णलवणं शुण्ठी हिङ्ग्वम्लवेतसम् । अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम् ॥ १ ॥ इत्यधिकमत्र ।

त्रिदोषजे लङ्घनमादितः स्यादन्नं च सर्वेषु हितं विधेयम् ॥
हीनातिमध्यत्वमवेक्ष्य चैव कार्यं त्रयाणामपि कर्म शस्तम् ॥ ११ ॥

त्रिदोषजे लङ्घनमादित इति । त्रिदोषहृद्रोगे हृदयस्य कफस्थानत्वादादौ लङ्घनेन कफ एव जेतव्य इति भावः । त्रिदोषज उल्बणदोषप्रतिक्रियासूत्रमाह । हीनत्वमधिकत्वं मध्यत्वं चेति हीनातिमध्यत्वं दोषाणां हीनत्वादिकं प्रतीत्य यत्कर्म शस्तमधिक(कादि)हन्तृतया तत्कार्यमिति तात्पर्यार्थः ॥ ११ ॥

चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम् ॥
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ १२ ॥
तैलाज्यगुडविपक्वं चूर्णं गोधूमपार्थजं वाऽपि ॥
पिबति पयोऽनु[1] च स भवेज्जितसकलहृदामयः पुरुषः ॥ १३ ॥

तैलाज्यगुडान्मिलित्वा पादिकान्दत्त्वा गोधूमपार्थचूर्णं गोधूमार्जुनत्वक्चूर्णं समभागं तोयेनोत्कारिकावद्विपाच्य भक्ष्यम् । किंच गोधूमपार्थसमो गुडः । तैलाज्ये संस्कारार्थं स्तोकमात्रया देये । पार्थोऽर्जुनः । वाशब्दो योगान्तरापेक्षया ॥ १२ ॥ १३ ॥

गोधूमककुभचूर्णं छागपयोगव्यसर्पिषा पक्वम् ॥
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥ १४ ॥

अयं योगोऽपि च्छागक्षीरेण सर्पिर्मधुशर्कराणां पूर्ववन्मात्रां गृहीत्वोत्कारिकावद्विपक्तव्यः । मधु शीते प्रदेयम् ॥ १४ ॥

मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत् ॥
हृद्रोगकासश्वासघ्नं ककुभस्य च वल्कलम् ॥ १५ ॥
रसायनं परं बल्यं वातजिन्मासयोजितम् ॥
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम् ॥ १६ ॥

मूलं नागबलायास्तु चूर्णमिति । चूर्णं चूर्णरूपं तेन नागबलामूलेन समानाधिकरणम् । ककुभस्य च वल्कलमिति । ककुभत्वक्चूर्णमपि दुग्धेन पेयम् । योगद्वयमिदम् ॥ १५ ॥ १६ ॥

हिङ्ग्रुग्रगन्धाबिडविश्वकृष्णाकुष्ठाभयाचित्रकयावशूकम् ॥
पिबेत्ससौवर्चलपौष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम्[3] ॥ १७ ॥

हिङ्ग्वादीनां चूर्णं यवक्वाथे प्रक्षिप्य पिबेत् ॥ १७ ॥

दशमूलकषायं तु लवणक्षारयोजितम् ॥
श्वासकासं सहृद्रोगं गुल्मशूलं च नाशयेत् ॥ १८ ॥

सुगमम् ॥ १८ ॥

---

१ ङ. °ति च प° । २ ङ. °नु भवति जित° । ३ क. घ. °भयेषु । हि° ।

कृमिहृद्रोगचिकित्सामाह—

कृमिहृद्रोगिणं स्निग्धं भोजयेत्पिशितौदनम् ॥
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ॥ १९ ॥

कृमिहृद्रोगिणमिति । पिशितप्रधानमोदनं पिशितौदनं पिशितौदनं तु दध्ना पललेन संयुक्तं त्र्यहं भोजयेत्कृमीणामुत्क्लेशनार्थम् । दध्नेति सहार्थे तृतीया । उपेतमित्यस्य समानलिङ्गत्वेन दध्ना सह संबन्धात् । पललं भृष्टतिलचूर्णम् । उत्क्लेशनानन्तरं किं कुर्यादित्याह—पश्चाद्विरेचयेदित्यादि । सुगन्धिभिः सलवणैर्योगैरिति । विरेचनयोगैश्चातुर्जातसुगन्धिभिः । सौगन्धिकत्वं च वान्तिशङ्कानिरासार्थम् । इत्थमुत्क्लिष्टाः कृमयः कोष्ठमायान्ति तत्रस्थाश्च सुखं ह्रियन्ते ।

अथ डल्हणव्याख्या—सुगन्धिभिर्योगैर्विरेचनकल्पोक्तैः शर्कराक्षौद्रसंयुक्तैरित्यादिभिः । सलवणैर्योगैरिति । समात्रिवृन्नागरकाभयाः स्युरित्यादिभिः । साजाजिशर्करैरिति सुगन्धियोगसलवणयोगविशेषणं साजाजिकानां वैरेचनिकानां योगानामनिर्देशात् । तेनाजाजीशर्करासहितैः सुगन्धिभिर्योगैरथवा सलवणैरप्यजाज्यादियुक्तैर्विरेचयेदिति । केचित्सलवणैरित्यत्र सपललैरिति पठित्वा सभृष्टतिलकल्कैः सुगन्धिभिर्योगैर्विरेचयेदिति व्याख्यानयन्ति । कृमिहृद्रोगे वमनं न योज्यं कृमिजर्जरहृदयत्वात् । अत एव सुगन्धियोगैर्विरेचनं युक्तं वमनशङ्काभयादिति ॥ १९ ॥

पीतविरेचकस्यानुपानमाह—

विडङ्गगाढं धान्याम्लं पाययेद्धितमुत्तमम् ॥ २० ॥

विडङ्गगाढं विडङ्गोत्कटं धान्याम्लं काञ्जिकमनुपानम् । विडङ्गगाढैरिति पाठे तु पूर्वेणैव संबन्धः । विडङ्गदानं च कृमीणां विक्षोभकरणार्थं विनाशार्थं वा । वमनं पुनरिह कृमिकारणग्रन्थिरूपशोथविघट्टनशङ्कया तथा वमनेन ह्रियमाणकृमीणां शिरोगतेन्द्रियोपघाताभिधानोपदिष्टम् ॥ २० ॥

कृमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम् ॥
हृदि स्थिताः पतन्त्येवमधस्तात्कृमयो नृणाम् ॥ २१ ॥

पिबेन्मूत्रं विडङ्गामयसंयुतमिति । आमयः कुष्ठम् । एवमनन्तरोक्तविधिना विडङ्गकुष्ठचूर्णं प्रक्षिप्य गोमूत्रं च विरेकार्थं पिबेत् ॥ २१ ॥

विरेचनानन्तरमग्निसंधुक्षणार्थं परिशिष्टकृमिविनाशार्थमन्नसंसर्गमाह—

यवान्नं वितरेच्चास्मै सविडङ्गमतः परम् ॥ २२ ॥

यवान्नं यवपेयादि वितरेद्दद्यात् । सविडङ्गमिति । षडङ्गविधिना विडङ्गकषायसाधितम् । अत इति । विरेकात् ॥ २२ ॥

---

१ क. 'गाढैर्वान्या' ।

वल्लभघृतमाह—

मुख्यं शतार्धं च हरीतकीनां सौवर्चलस्यापि पलद्वयं च ॥
पक्वं घृतं वल्लभकेति नाम्ना हृच्छ्वासगुल्मोदरमारुतघ्नम् ॥ २३ ॥

मुख्यं श्रेष्ठं हरीतकीनां गुडकं हरीतकी सौवर्चलं च कल्कं घृतस्य प्रस्थः पानीयेन चतुर्गुणेन पाकः । वल्लभकं घृतम् ॥ २३ ॥

श्वदंष्ट्राद्यं घृतमाह—

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ॥
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरम् ॥ २४ ॥
पलिकान्साधयेत्तेषां रसे क्षीरचतुर्गुणे ॥
कल्कैः स्वगुप्तर्षभकमेदाजीवन्तिजीवकैः ॥ २५ ॥
शतावर्यर्धि(वृद्धि)मृद्वीकाशर्कराश्रावणीबिसैः ॥
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥ २६ ॥
मूत्रकृच्छ्रप्रमेहार्शःकासश्वासक्षयापहः ॥
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ २७ ॥

कत्तृणं गन्धतृणम् । पलाशा शठी । एतस्मिन्नेकादशपले क्वाथेऽष्टगुणेन जलेनैकादश-(श)रावान्दत्त्वा क्वाथः पादशेषः पादोनशरावत्रयं ततश्चतुर्गुणं क्षीरमेकादशशरावरूपमिति किंचिदूनाध्यष्टगुणः पाकः । अन्ये त्वाहुः—एकादशपलक्वाथ्यद्रव्य आढकं जलं शेषः प्रस्थं ततश्चतुर्गुणं क्षीरमाढकमेवं पञ्चगुणः पाकः प्रचरति । श्रावणी मुण्डितिका देशान्तरीयफलं वा । बिसं मृणालम् । श्वदंष्ट्राद्यं घृतम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

बलाद्यं घृतमाह—

घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम् ॥
हृद्रोगशूलक्षयरक्तपित्तकासानिलासृक्शमयत्युदीर्णम् ॥ २८ ॥

अम्बु क्वाथः । बलाद्यं घृतम् ॥ २८ ॥

पार्थस्य कल्कस्य रसेन सिद्धं शस्तं घृतं सर्वहृदामयेषु ॥ २९ ॥

सुगमम् । अर्जुनघृतम् ॥ २९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकत्रिंशो हृद्रोगाधिकारः समाप्तः ॥ ३१ ॥

---

१ क. सिद्धं । २ क. बलका° । ३ घ. °कट्तृण° । ४ क. घ. °सदम् । क॰ । ५ घ. °क्षतर° । ६ घ. °ल्कस्वर° ।

## अथ द्वात्रिंशो मूत्रकृच्छ्राधिकारः ।

हृद्रोगो हृदयगतो हृदयं च मर्म तेन मर्मगतत्वसाधर्म्याद्बस्तिगतं मूत्रकृच्छ्रमुच्यते । मूत्रकृच्छ्रं महता कष्टेन मूत्रस्य प्रवृत्तिः ॥

अश्मरीशान्तिविधयो य उक्ताः प्रसमीक्ष्य तान् ॥
यथादोषं प्रयुञ्जीत स्नेहादिमपि च क्रमम् ॥ १ ॥

अश्मरीशान्तिविधय इति । अश्मरीणां चतसृणां यच्चिकित्सितं तदष्टस्वपि मूत्रकृच्छ्रेषु दोषानतिक्रमेण कुर्यादित्यर्थः । स्नेहादिमपीति । स्नेहनिरूहोत्तरबस्त्यादिविधिं चकाराद्वक्ष्यमाणमूत्राघातचिकित्सितमपि ॥ १ ॥

अभ्यञ्जनस्नेहनिरूहबस्तिस्वेदोपनाहोत्तरबस्तिसेकान् ॥
स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥ २ ॥

स्थिरादिभिरिति । स्वल्पपञ्चमूलेन ॥ २ ॥

अमृतानागरं धात्रीवाजिगन्धात्रिकण्टकान् ॥
प्रपिबेद्वातरोगार्तः शूलवान्मूत्रकृच्छ्रवान् ॥ ३ ॥

क्वाथोऽयम् । वाजिगन्धाऽश्वकन्दः ॥ ३ ॥

सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्बस्तिपयोविरेकाः ॥
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्यः ॥ ४ ॥

ग्रैष्मो विधिरिति ।

"शीतं सशर्करं मन्थं जाङ्गलान्मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन्ग्रीष्मे न सीदति" ॥

इत्यादिना चरके[1] तस्य शितीयो(?) विधिः । पुनः शिशिरसेकावगाहाद्युपदर्शनमिह विशेषार्थम् । द्राक्षाविदारीक्षुरसैर्घृतैश्चेति सहयोगे तृतीया ॥ ४ ॥

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् ॥
पित्तकृच्छ्रहरं पञ्चमूलं बस्तिविशोधनम् ॥
एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ ५ ॥

सुगमम् ॥ ५ ॥

शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकसेरुकाणाम् ॥
क्वाथं सुशीतं मधुशर्करात्तं पिबञ्जयेत्पैत्तिकमूत्रकृच्छ्रम् ॥ ६ ॥

सुगमम् ॥ ६ ॥

---

१ क. 'चरके' । क्वा' ।

हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ॥
क्वाथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ ७ ॥

राजवृक्षस्य फलम् । धन्वयवासो दुरालभा ॥ ७ ॥

गुडेनाऽऽमलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् ॥
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥ ८ ॥

सुगमम् ॥ ८ ॥

मूत्रेण सुरया वाऽपि कदलीस्वरसेन वा ॥
कफकृच्छ्रविनाशाय श्लक्ष्णं पिष्ट्वा त्रुटिं पिबेत् ॥ ९ ॥

त्रुटिमिति । एलाम् ॥ ९ ॥

तक्रेण पिष्टं[1] शितिमारकस्य[2] बीजं पिबेत्कृच्छ्रविनाशनाय ॥
पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ १० ॥

शितिमारकस्येति । शितिमारः शालिंचः । प्रवालचूर्णमिति । प्रवालो विद्रुमः ॥ १० ॥

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम् ॥
त्रिभ्योऽधिके प्राग्वमनं कफे स्या-
त्पित्ते विरेकः पवने तु बस्तिः ॥ ११ ॥

वातजादिमूत्रकृच्छ्रनिर्दिष्टभेषजं सर्वं समत्रिदोषजे कृच्छ्रे मिलितं कार्यं तच्च वायोः स्थानानुपूर्व्या विधेयं न त्रिदोषज्वर इव कफस्थानानुपूर्व्या । समत्रिदोषजेऽपि कृच्छ्रे वातस्थानजत्वेन वात एव पूर्वं जेतव्य इति भावः । विषमसंनिपातजे चिकित्सा-माह—किंचा(त्रिभ्यो)धिक इत्यादि । त्रिभ्योऽधिक इति ग्रन्थः कफे पित्ते तथा पवन इत्यत्र संबध्यते ॥ ११ ॥

बृहतीधावनीपाठायष्टीमधुकलिङ्गकाः ॥
पाचनीयो बृहत्यादिः कृच्छ्रे दोषत्रयापहः ॥ १२ ॥

धावनी कण्टकारिका ॥ १२ ॥

गुडेन मिश्रितं क्षीरं कदुष्णं कामतः पिबेत् ॥
मूत्रकृच्छ्रेषु सर्वेषु शर्करावातरोगनुत् ॥ १३ ॥

क्षीरं कदुष्णमिति । वातकफजे । पित्तजे तु शीतम् ॥ १३ ॥

तथाऽभिघातजे[3] कुर्यात्सद्यो व्रणचित्सितम् ॥
मूत्रकृच्छ्रे सदा चास्य कार्या वातहरी क्रिया ॥ १४ ॥

---

१ क. घ. युक्तं । २ ङ. सितिवारकस्य । ३ घ. °भिवात° ।

वातहरी क्रियेति । आनाहोक्ता ॥ १४ ॥

स्वेदचूर्णक्रियाभ्यङ्गबस्तयः स्युः पुरीषजे ॥ १५ ॥

चूर्णक्रिया फलवर्तिः । [illegible]द्रव्यचूर्णं दत्त्वा गुदे नलिकया फुङ्कनम्॥ १५॥

क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत् ॥
मूत्रकृच्छ्रं शकृज्जं च पीतः शीघ्रं निवारयेत् ॥ १६ ॥

शकृज्जमिति । पुरीषजम् ॥ १६ ॥

शर्कराश्मरिकृच्छ्रे च शर्कराश्मरिनाशनम् ॥

शर्कराश्मरिनाशनमिति । शर्कराश्मरीचिकित्सितम् ॥

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ॥ १७ ॥

सुगमम् ॥ १७ ॥

वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥

सुगमम् ॥

एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ॥
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरं च तत् ॥ १८ ॥

सुगमम् ॥ १८ ॥

त्रिकण्टकारग्वधदर्भकाश-
दुरालभापर्वतभेदपथ्याः ॥
निघ्नन्ति पीता मधुनाऽश्मरीं च
संप्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥ १९ ॥

त्रिकण्टकेत्यादियोगः क्वाथः । पर्वतभेदः पाषाणभेदः । मधु प्रक्षेपः ॥ १९ ॥

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा ॥
यद्वा गुडेन सहितान्यवलिह्य चैता-
न्यासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ २० ॥

यद्वा गुडेन सहितानीति । समेन गुडेन ॥ २० ॥

अयोरजः सूक्ष्मपिष्टं मधुना सह योजितम् ॥
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ २१ ॥

अयोरज इति । जारितपुटितं लोहचूर्णं विशेषतो मूत्रकृच्छ्रहरैः पुटितम् ॥ २१ ॥

सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः ॥
निदिग्धिकारसो वाऽथ सक्षौद्रः कृच्छ्रनाशनः ॥ २२ ॥

सुगमम् ॥ २२ ॥

१ क. यात् । २ घ. °लैर्मिलि° । ३ घ. °जः सूक्ष्मपि° ।

शतावरीकाशकुशश्वदंष्ट्रा-
विदारिकेक्ष्वामलकेषु सिद्धम् ॥
सर्पिः पयो वा सितया विमिश्रं
कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥ २३ ॥

घृतसाधनपक्षे शतावर्यादिभिः कल्को द्रवं जलम् । सितया विमिश्रमिति । पादिकया सितया विमिश्रम् । शतावरीघृतं दुग्धं वा ॥ २३ ॥

त्रिकण्टकाद्यं घृतमाह—

त्रिकण्टकैरण्डकुशाद्यभीरुकर्कारुकेक्षुस्वरसेन सिद्धम् ॥
सर्पिर्गुडार्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातदोषे* ॥ २४ ॥

कुशादि तृणपञ्चमूलम् । अभीरुः शतावरी । कर्कारुकः कूष्माण्डभेदो जोताल इति लोके । त्रिकण्टकादीनां सर्वेषां स्वरसस्तदभावे कषायः । गुडार्धांशयुतमिति । घृतार्धभागगुडयुतम् । गुडं च दत्त्वैव पाकः सिद्धे वा प्रक्षेपः । त्रिकण्टकाद्यं घृतम् ॥ २४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
द्वात्रिंशो मूत्रकृच्छ्राधिकारः समाप्तः ॥ ३२ ॥

---

## अथ त्रयस्त्रिंशो मूत्राघाताधिकारः ।

मूत्रविकृतिसामान्यान्मूत्राघातारम्भः । मूत्रस्याऽऽघातो विबन्धो मूत्राघातः । मूत्रकृच्छ्रमूत्राघातयोश्चायं भेदो मूत्रकृच्छ्रे मूत्रत्वमधिकं मनाग्विबन्धो मूत्राघाते तु विबन्धो महान्मूत्रत्वमल्पमिति । ननु यथा नामादिभेदेन भिन्ना मूत्राघाता दर्शितास्तथैव चिकित्साऽपि भिन्ना वक्तुमुचिता कुतोऽत्र सामान्येन चिकित्सोक्ता । उच्यते । सर्वेष्वेव मूत्राघातेषु यतो वातः कारणमतः सामान्येन चिकित्सितमुक्तं भवति । एवं यदि तत्र वायुरेव कारणं किं तर्हि तत्र पित्तकफावप्यारम्भकत्वेन निर्दिष्टौ तत्कथमेकैव चिकित्सा सर्वेषूदावर्तेषु । सत्यम् । सर्वेऽपि मूत्राघाताः प्रायशो वातजन्याः पित्तकफौ पुनरावरकौ तस्मात्तेषामेकैव चिकित्सा दोषादिबलविकल्पं रोगतत्त्वं द्रव्यतत्त्वं च विज्ञाय भिषजा प्रयोज्या ।

स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम् ॥
ततः संशुद्धदेहस्य हिताश्चोत्तरबस्तयः ॥ १ ॥

---

* ख.पुस्तके—आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः । घटो यथा तथा सिद्धो बस्तिर्मूत्रेण पूर्यते ॥ १ ॥ इत्यधिकमत्रैव ।

सुगमम् ॥ १ ॥

पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ॥
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम् ॥
पिबेद्गुडोपदंशान्वा लिह्यादेतान्पृथक्पृथक् ॥ २ ॥

तिलादिति । तिलनालात् । इह वक्ष्यमाणं पृथक्पृथगिति संबध्य पृथक्पृथक्पाटल्यादीनां क्षारस्राविणोदकेन समां मदिरां त्वगेलोषणचूर्णं प्रक्षिप्य पिबेत् । कार्तिकस्तु मदिरामित्यस्य स्थाने मतिमानिति पठित्वा चूर्ण(क?)मिति च व्याहृत्य व्याचष्टे पाटल्यादीनां चूर्णं क्षारोदकेन मुष्ककक्षारवारिणा पिबेदिति ।

तथा च विश्वामित्रः—

"पाटलेः पारिभद्राद्वा तिलाद्वाऽपि यवाग्रजात् ।
कणैलात्वग्युतं चूर्णं मुष्ककक्षारवारिणा ॥
पिबेद्गुडेन मिश्रं वा लिह्यान्मूत्रविघातनुत्" इति ॥

एतत्संवादादत्रोषणं पिप्पली । गुडोपदंशं वा(शान्वा) लिह्यादेतानिति । एतान्पृथक्पाटल्यादिक्षारान्गुडोपदंशान्गुडमिश्रान्वा लिह्यात् । डल्लणोक्तपाठे व्याख्यातम् ।

तद्यथा—"पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
क्षारोदकेन मतिमांस्त्वगेलोषणचूर्णकम् ॥
पिबेद्गुडेन मिश्रान्वा लिह्याल्लेहान्पृथक्पृथक् ॥

यावशूको यवक्षारः । पारिभद्रः पर्वतनिम्बः । अन्ये पारिभद्रशब्देन कण्टकिवृक्षं रक्तकुसुमं फलभद्रसंज्ञं वदन्ति । उषणं पिप्पली । पाटल्यादीनां क्षारोदकेन सह त्वगेलोषणचूर्णकं पिबेत् । अन्ये त्वगेलोषणचूर्णकमित्यत्र त्वगेलोषणसंयुतादिति पठन्ति तत्र पाटल्यादेस्तिलान्ताद्द्रव्यास्त्वगेलोषणसंयुतात्पृथक्पृथग्यच्चूर्णम् । चूर्णमिति कर्मपदानिर्देशात्तन्त्रयुक्त्या द्रष्टव्यम् । तत्क्षारोदकेन मुष्ककक्षारोदकेन पिबेत् । तत्कृतान्वा पृथक्पृथग्लेहान्गुडमिश्राल्लिह्यादिति व्याख्यानयन्ति । तथा च विश्वामित्रः—पाटलेः पारिभद्राद्वेत्यादि । मतिमानित्यत्र मदिरामिति केचित्पठन्ति तथा गुडेन मिश्रान्वेत्यत्र गुडोपदंशान्वेति पठन्ति तच्च पाठद्वयमनार्षम् ॥ २ ॥

त्रिफलाकल्कसंयुक्तं लवणं वाऽपि पाययेत् ॥

त्रिफलाकल्कसंयुक्तं लवणं पिबेदित्यत्रापि पानार्थं क्षारोदकेनेत्यनुवर्तत इति कार्तिकः । अन्ये पुनरुष्णाम्बुनैवाऽऽहुः ॥

निदिग्धिकायाः स्वरसं पिबेद्वा तान्तवस्रुतम् ॥ ३ ॥

तान्तवस्रुतमिति । वस्त्रगालितम् ॥ ३ ॥

१ क. 'दंशं वा लि' । २ घ. 'णं चापि ।

जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि ॥

जले कुङ्कुमकल्कं चे(वे)ति । कुङ्कुमकल्कं शीतकषायविधिना जले पर्युषितं प्रातर्वस्रस्रुतं सक्षौद्रं पिबेत् । कुङ्कुमकर्ष चेति पाठान्तरम् ॥

सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम् ॥ ४ ॥

क्षारवद्वा परिस्रुतमिति । पानीयमुष्ककक्षारवत्परिस्रुतं किंवा पाटलाभस्म परिस्रुतं क्षारवत्क्षारयुक्तं पिबेत् ॥ ४ ॥

कल्कमीर्वारुबीजानामक्षमात्रं ससैन्धवम् ॥
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥ ५ ॥

ईर्वारुर्ग्रीष्मकर्कटिका । अक्षमात्रं कर्षप्रमाणम् । धान्याम्लं काञ्जिकम् ॥ ५ ॥

सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः ॥ ६ ॥

सुरा पिष्टकृता ॥ ६ ॥

दाडिमाम्बुयुतं मुख्यमेलाबीजं सनागरम् ॥
पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते ॥ ७ ॥

दाडिमाम्बुयुतमिति । दाडिमफलरसयुतम् । नागरान्तोऽयमेको योगः । सुरां सलवणामिति द्वितीयः । दाडिमाम्लां युतां मुख्यामेलाजीरकनागरैः । पीत्वा सुरां सलवणामिति तु सुश्रुते पाठादेक एवायं युज्यते । अस्यार्थः । दाडिमाम्लां दाडिमेनाम्लीकृताम् । युतामित्यत्रैलाजीरकनागरैरिति योज्यम् । मुख्यां सुरां पैष्टीमित्यर्थः । सलवणां सैन्धवयुताम् ॥ ७ ॥

पिबेच्छिलाजतु क्वाथे गणे वीरतरादिके ॥

सुगमम् ॥

रसं दुरालभाया वा कषायं वासकस्य वा ॥ ८ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूले ॥
गुडप्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ९ ॥

गुडप्रगाढमिति पूर्वेण संबध्यते । त्रिकण्टकादिसिद्धं वा तृणपञ्चमूलसिद्धं वा पयो गुडप्रगाढं हितम् ॥ ८ ॥ ९ ॥

शृतशीतपयोभोजी चन्दनं तण्डुलाम्बुना ॥
पिबेत्सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥ १० ॥

चन्दनमिति । श्वेतचन्दनमतिशीतलत्वात् । उष्णवात इति । तातन्याम् ॥ १० ॥

स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते ॥
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ॥
ताम्रचूडवसातैलं हितं चोत्तरबस्तिषु ॥ ११ ॥

१ क. 'दक्षीभ' ।

स्त्रीणामतिप्रसङ्गेनेत्यादिग्रन्थो मेढ्रप्रवृत्तिप्रसङ्गादुक्तः ॥ ११ ॥

स्वगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः ॥
समांशमर्धभागानि क्षीरक्षौद्रघृतानि च ॥ १२ ॥
सर्वं सम्यग्विमथ्याक्षमात्रं लीढ्वा पयः पिबेत् ॥
हन्ति शुक्रक्षयोत्थांश्च दोषान्वन्ध्यासुतप्रदम् ॥ १३ ॥

स्वगुप्ताफलं शूकशिम्बाफलम् । कृष्णा पिप्पली न कृष्णेति क्षुरकविशेषणं सुश्रुते पिप्पलीपाठात् । तद्यथा—स्वयंगुप्ता फलं चैव तथैवेक्षुरकस्य च । पिप्पलीचूर्णसंयुक्तमित्यादि । इक्षुरकः कोकिलाक्षस्तस्य च बीजम् । सिता शर्करा । रजश्चूर्णम् । अर्धभागानि क्षीरक्षौद्रघृतानि चेति । समुदितचूर्णात्क्षीरादीनि प्रत्येकमर्धपलानि ॥ १२ ॥ १३ ॥

चित्रकाद्यं घृतमाह—

चित्रकं सारिवा चैव बला कालानुसारिवा ॥ १४ ॥
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत् ॥
तथैव मधुकं दद्याद्दद्यादामलकानि च ॥ १५ ॥
घृताढकं पचेदेतैः कल्कैरक्षसमन्वितैः ॥
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् ॥ १६ ॥
शीतं परिस्रुतं चैव शर्कराप्रस्थसंयुतम् ॥
तुगाक्षीर्याश्च तत्सर्वं मतिमान्प्रतिमिश्रयेत् ॥ १७ ॥
ततो मितं पिबेत्काले यथादोषं यथाबलम् ॥
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत् ॥ १८ ॥
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगिताम् ॥
जीवनीयं च वृष्यं च सर्पिरेतन्महागुणम् ॥ १९ ॥
प्रजाहितं च धन्यं च सर्वरोगहरं[1] शिवम् ॥
सर्पिरेतत्प्रयुञ्जीत स्त्री गर्भं लभतेऽचिरात् ॥ २० ॥
असृग्दोषं जयेच्चापि योनिदोषांश्च संहतान्[2] ॥
मूत्रदोषेषु सर्वेषु कुर्यादेतच्चिकित्सितम्* ॥ २१ ॥

कालानुसारिवा तगरपादिका । विशाला गोरक्षकर्कटी । विशल्यापाठे तु कोष्ठपाटला[3] । विशालया प्रचारः । चित्रफला गोडुम्बीगोदुग्धिकेन्द्रवारुणीपर्याया । तुगाक्षी-

* ख. पुस्तके—गङ्गावल्या मूलं क्वथितं घृततैलसैन्धवैर्मिश्रम् । मूत्रमतिरुद्धं वेगात्प्रपीतमात्रं प्रवर्तयति ॥ १ ॥ चित्रफला गोदुग्धी । इत्यधिकमत्र ।

१ घ. 'रोगापहं शि' । २ क. 'दोषान्सनातनान्' । ३ घ. कोष्ठपाटला ।

र्यश्चेत्यत्र च प्रस्थसंयुतमित्येतत्समासान्तर्भूतमप्याकृष्य संबन्धनीयम् । मितमित्युचितमानम् । काले जीर्णान्नलक्षणे । यथादोषमित्यत्र यथाशब्दः साकल्ये येन सर्वेषु च रोगेषु शुक्रदूषकेषु व्याधिप्रत्यनीकतया घृतमिदं हितम् । यथाबलमिति । देहाग्निबलरूपम् । धन्यामिति । रोगहरत्वेन नीरोगस्य धनोपार्जनशक्तेः । सर्पिरित्येतत्पदप्रतिपादनमतिप्रवृत्तिदर्शनार्थम् । चित्रकाद्यं घृतम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां त्रयस्त्रिंशो मूत्राघाताधिकारः समाप्तः ॥ ३३ ॥

---

## अथ चतुस्त्रिंशोऽश्मर्यधिकारः ।

---

* मूत्ररोधित्वसाधर्म्याद्थाश्मर्यारम्भः ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ॥
यवक्षारगुडं दत्त्वा क्राथयित्वा पिबेद्धिताम् ॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ॥ १ ॥

यवक्षारगुडं दत्त्वेति । यवक्षारं गुडं प्रक्षिप्य ॥ १ ॥

गद्यम् । वीरतरसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदाग्निमन्थमोरटवशिरवसुकभल्लूककुरण्टकेन्दीवरकपोतवङ्काश्वदंष्ट्राश्चेति ॥१॥

वीरतरः शरः । अन्ये तु वीरतरुर्वेदत्रं(वेल्लं)तरुरिति नाम्ना प्रसिद्धो जाङ्गलदेशे नर्मदातटे चर्मण्वतीनदीसमीपे च ।

तल्लक्षणमुच्यते—

"वेल्लंतरो जगति वीरतरुः प्रसिद्धः
श्वेतासितारुणविलोहितपीतपुष्पः ।
आदारितुल्यकुसुमः शमिसूक्ष्मपत्रः
स्यात्कण्टकी विजलदेशज एष वृक्षः" इति ॥

सहचरद्वयं नीलपीतपुष्पकुरण्टद्वयम् । रक्तपुष्पनीलपुष्पकण्टाशेरीयाद्वयमिति डल्लणः । दर्भः प्रसिद्धः । वृक्षादनी वन्दाको वांदु इति लोके वृक्षकलिम्बुकमपरे । गुन्द्रा गुलुञ्चः पट्टेरकभेदो गादर इति लोके । नलो दूर्वाकाराङ्कुरान्तःसुषिरः स्वनाम्ना ख्यातः । कुशो ह्रस्वदर्भः । काशश्चामरपुष्पः । अश्मभेदः पाषाणभेदः । अग्निमन्थस्तेजोवृक्षः । अरणीति

---

१ घ. 'त्पदं प्र' । २ घ. 'दम' । ३ घ. 'भल्लुक' ।

लोके। मोरटोऽङ्कोल्लपुष्पो हस्तिकर्णपलाश इत्येके।इक्षुमूलमित्यन्ये। वसुको वसुहट्टकः। वसुको बुको बकपुष्प इति लोक इति डल्लणः। वशिरः सूर्यावर्तोऽपामार्ग इत्येके। भल्लुकः श्योनाकास्तिन्दुकः इति लोके। कुरण्टिका श्रीहस्तिनी। कृष्णसूक्ष्मफला शिखालिकेति लोके। इन्दीवरश्रूया । डल्लणस्त्विन्दीवरेऽपि तद्भेदो दीर्घपत्रो बहुलपुष्पः कपोतवङ्का सुवर्चला केवाडवेंदुआ । अन्ये शिरीषसदृशपत्रा स्वल्पविटपेति द्रव्यान्तरमाहुः। श्वदंष्ट्रो गोक्षुरकः। इति गद्यम् ॥ १ ॥

वीरतरादिरित्येष गणो वातविकारनुत् ॥
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ २ ॥

अश्मरी बस्तिपाषाणा सैवातिभिन्ना शर्करा । मूत्रकृच्छ्रो दुःखमूत्रता। मूत्राघातो मूत्रावरोधः। रुजाशब्दो रोगवचनः स चाश्मर्यादिषु प्रत्येकं संबध्यते ॥ २ ॥

शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ॥ ३ ॥
अभयारग्वधफलैः क्वाथं कुर्याद्विचक्षणः ॥
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ॥ ४ ॥
अश्मरीमूत्रकृच्छ्रघ्नं दीपनं पाचनं परम् ॥
हन्यात्कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥ ५ ॥

पाषाणः पाषाणभेदः ॥ ३ ॥ ४ ॥ ५ ॥

पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा ॥
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ॥ ६ ॥
कपोतवङ्कार्तगलकाञ्चनोशीरगुच्छकाः ॥
वृक्षादनी भल्लकश्च वरुणः शाकजं फलम् ॥ ७ ॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ॥
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम् ॥
भिनत्ति वातसंभूतामश्मरीं क्षिप्रमेव च ॥ ८ ॥

वसुको बकपुष्पः। वशिरो मर्कटसंज्ञस्तृणविशेषः सूर्यावर्तभेद इत्यन्ये। अश्मन्तकोऽम्ललोटकः। कोविदारसदृशपत्रो मलुभावा। कपोतवङ्का कटभीसदृशपत्रो विटपो मध्यदेशे प्रसिद्धः। आर्तगलोऽम्रेडाकः। डल्लणस्त्वार्तगलः ककुभः सुगन्धिमूलः कवहा इति नाम्ना पूर्वदेशे प्रसिद्धः । अन्ये तु बर्हिः केसरिकण्टकितफलो विटप इति व्याख्यानयन्ति। काञ्चनो कञ्जुको विटपश्चीरितपत्रः। अन्ये कचक इति पठन्ति कचको मध्यलेखानिचितश्लक्ष्णकसदृशपत्र ईषद्रक्तमूलः कचक इति मालवदेशे प्रसिद्धः। गुच्छकोवडुंपः(?)। गुन्द्रा इति डल्लणः। वृक्षादनी वन्दाकः। भल्लकः श्योनाकः। शाकजं फलं कर्कशमसृणपृष्ठोदरपत्रो वृक्षस्तस्य फलं न मूलादिः। कतकफलं तोयप्रसादनं

१ ग. क. भल्लूकः।

शशकशुष्कपुरीषप्रतिमम् । ऊषकादिप्रतीवापमिति । अनन्तरं वक्ष्यमाणोषकादिकल्कः । एषामिति । पाषाणभेदादीनाम् । एषां सामान्यस्नेहकषायपरिभाषया कषायः । ऊषकादीनां स्नेहपादेन कल्कः ॥ ६ ॥ ७ ॥ ८ ॥

ऊषकादिगणमाह—

गद्यम् । ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकं चेति ॥ १ ॥

ऊषकः क्षारः । अथवोषकः क्षारमृत्तिका वाराणसीसमीपे वडहरदेशे बाहुल्येन भवति । ऊस इति लोके । कासीसद्वयं धातुकासीसं तुवरकं भस्मसदृशं किंचिदम्लं लवणरसं द्वितीयं पुष्पकासीसमीषत्पीतं तुवररसं तद्भेद एव । तुत्थं कर्परिकातुत्थं खापरीया इति लोके । अन्ये मयूरग्रीवमाहुः । इति गद्यम् ॥ १ ॥

ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ॥
अश्मरीशर्करामूत्रशूलघ्नः कफगुल्मनुत् ॥ ९ ॥

शेषं सुबोधम् ॥ ९ ॥

क्षारान्यवागूं पेयां च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन्वातनाशने ॥ १० ॥

क्षाराश्चात्र पातव्यास्ते च पूर्णत्वात्कर्षमात्रया सलिलेन मस्त्वादिबस्तिशोधनद्रव्येण वा पलद्वयचतुष्टयप्रमाणेन । क्षारोदकपक्षे तु कर्षद्वयं त्रयं वा षड्गुणेन वा जलेन बहुशः परिस्राव्य पूतं पेयम् । यवाग्वादयश्चात्र पलद्रव्यक्काथेन कर्तव्याः । भोजनानि भक्ष्यादयः । चकाराच्चूर्णानामपि समुच्चयः । वर्गेऽस्मिन्निति । क्काथद्रव्यवर्गे वातनाशन इति विशेषणात्प्रतीवापद्रव्यं तु कफहरमिति शक्तिविशेषाधानार्थं संयुज्यमानं क्षारादिष्वपि प्रक्षेपेण देयमित्याहुः । *इदमर्थं वृन्दोऽपि दर्शयिष्यति । तद्यथा—कुर्यात्क्षारादिकं क्वाथ्यैस्तस्मिन्क्षेपमवापकैरिति । क्षेपं प्रक्षेपम् । अवापकैः कल्कद्रव्यैः । अवापकैरिति प्रयोगश्चिन्त्यः । †अन्यपूर्वाद्वीया रावाशब्दस्य साधितत्वात् । वर्गशब्दोपादानादिह यथालाभं प्रयोगः ॥ १० ॥

पित्ताश्मरीचिकित्सामाह—

काशः कुशः शरो गुच्छ इत्कटो मोरटोऽश्मभित् ॥ ११ ॥
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥
भल्लूकः पाटली पाठा पत्तरोऽथ कुरण्टिका ॥ १२ ॥
पुनर्नवा शिरीषश्च कथितास्तेन साधितम् ॥
घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च ॥ १३ ॥

* अमुमर्थमिति भाति । † आङ्पूर्वाद्डुवब्बीजसंतान इत्यस्येति मम भाति ।

१ ब. पुनर्नवे ।

त्रपुसेर्वारुकादीनां बीजैश्चाऽऽवापितं शुभम् ॥
भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव च ॥ १४ ॥
क्षारान्यवागूः पेयाश्च कषायाणि पयांसि च ॥
भोजनानि च कुर्वीत वर्गेऽस्मिन्पित्तनाशने ॥ १५ ॥
कुर्यात्क्षारादिकं क्वाथ्यैस्तस्मिन्क्षेपमवापकैः ॥
वर्गत्वेन यथालाभं परिभाषा प्रवर्तते ॥ १६ ॥
शिलाजतु शिलाह्वं स्यात्पुण्ड्रको गुन्द्रैगुच्छकौ ॥
मधुकः कृतह्रस्वत्वाद्बीजैर्बीजक उच्यते* ॥ १७ ॥

इत्कटो महती खग्गली । मोरट इक्षुमूलम् । अश्मभित्पाषाणभेदस्तदभावे चर्मकारालुकम् । पत्तूरः शालिञ्चः शिरिवालिका इति । कुरण्टिका शिरिवालिकाभेदो लोहितपुष्पः । एषां सर्वेषां क्वाथः । शिलाह्वादिभिः कल्कः । शिलामधुकबीजैरित्यत्र बीजपदमिन्दीवरेण संबन्धनीयं न तु बीजो बीजकः पीतशालो वाग्भटसंवादात् ।

तद्यथा—"पिष्टेन त्रपुसादीनां बीजेनेन्दीवरस्य च ॥
मधुकेन शिलाजेन पिबेदश्मरिभेदनम्" इति ॥

मधुकः कृतह्रस्वत्वाद्बीजैर्बीजक इति तु वचनं वृन्दस्य संमोहात् । अस्यार्थः । ह्रस्वमधुकशब्देन चेद्यष्टीमधुकमुच्यते तस्य बीजेनाव्यवहाराद्बीजो बीजक इति ।

"घृतं शिलाजं मधुकं बीजमैन्दीवरं तथा ॥
त्रपुसेर्वारुकादीनां बीजैरावाप्य तच्छुभम्"

इति पाठः सुश्रुते । तत्र शिलाजं शिलाजतु । इन्दीवरं शिरिवालिकाभेदो दीर्घपत्रो बहुलपुष्पः । जैज्जटस्त्विन्दीवरं नीलोत्पलं तन्नेच्छति गयी ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

कफाश्मरीचिकित्सामाह—

गणे वरुणकादौ तु गुग्गुल्वेलाहरेणुभिः ॥
कुष्ठमुस्ताह्वमरिचचित्रकैः ससुराह्वयैः ॥ १८ ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ॥
भिनत्ति कफसंभूतामश्मरीं क्षिप्रमेव च ॥ १९ ॥

---

* ख. पुस्तके—तिलापामार्गकदलीपलाशयवसंभवः । क्षारः पेयोऽविमूत्रेण शर्करास्वश्मरीषु च ॥ १ ॥ क्रौञ्चोष्ट्रारासभास्थीनि श्वदंष्ट्रातालपत्रिके । वरामोदः कदम्बस्य मूलं विश्वस्य चौषधम् ॥ २ ॥ पित्ताश्मशर्करां भिन्द्युः सुरयोष्णोदकेन वा । क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिपातनः ॥ ३ ॥ इत्यधिकमत्र ।

---

१ ङ. °वाग् पे° । २ ङ. °स्मिन्प्रक्षेपपादिकैः । ३ क. ख. °न्द्रग्रन्थिकौ ।

क्षारान्यवागूं पेयां च कषायाणि पयांसि च ॥
भोजनानि प्रकुर्वीत वर्गेऽस्मिन्कफनाशने ॥ २० ॥

वरुणादिगणेन क्वाथः शेषेण कल्कः । मुस्ताह्वस्थाने भद्रादिपाठः सुश्रुते । भद्रादि भद्रदारुकुष्ठहरिद्रेत्यादि । अजासर्पिः केचिन्न पठन्ति ते प्रकरणात्पूर्वोदितात्सामान्येनैव गव्यमेव घृतं ददति ॥ १८ ॥ १९ ॥ २० ॥

वरुणादिगणमाह—

गद्यम् । वरुणार्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतिकनक्तमाल-मोरटाग्निमन्थसैरेयकद्वयबिम्बीवसुकवशिरचित्रकशतावरीबिल्वा-जशृङ्गीदर्भबृहतीद्वयं चेति ॥ १ ॥

वरुणस्तिक्तसारः शाकद्रुमः । वरुण इति लोके । आर्तगलोऽर्गोडकोऽर्जुनो वा । आर्तगलः ककुभः सुगन्धमूलः कहा इति नाम्ना पूर्वदेशे प्रसिद्ध इति डल्लणः । शिग्रुः सौभाञ्जनकः । मधुशिग्रू रक्तशिग्रुः । तर्कार्यरणिका । मेषशृङ्गी स्वनामप्रसिद्धा मेढासिंगीति लोके । मेषशृङ्गी कर्कटशृङ्गीति डल्लणः । पूतिकश्चिरबिल्वः । नक्तमालो बृहत्करञ्जः । मोरटोऽङ्कोल्लपुष्पः । मोरड इति लोके । हस्तिकर्णपलाश इत्यन्ये मूर्वा वा । अग्निमन्थो गणिकारिका तेजोवृक्षः । द्वितीयो राणिकः । सैरेयकद्वयं रक्तपुष्पनील-पुष्पकंटासेतीयाद्वयम् । बिम्ब्योष्ठोपमफलिका बिम्बीरिति लोके । टिंडुरिकेति प्रसिद्धेति डल्लणः । चित्रकः प्रसिद्धः । शतावरी प्रसिद्धा । वसुको बकः । बकपुष्प इति लोके । अन्ये तु वसुकोऽर्कः । वशिरो मर्कटपिप्पली तृणजातिरपामार्ग इति प्रसिद्धः । सूर्यावर्तो वा । बिल्वः श्रीफलः । अजशृङ्ग्यावर्तनिका छगलविषाणिका तूत्तमारणी मिंढिआउलि इति लोके । दर्भः कुशः । बृहतीद्वयं कण्टकारिकाद्वयम् । एका स्थूलफला द्वितीया ह्रस्वफला ॥ १ ॥

वरुणादिगणो ह्येष कफमेदोनिवारणः ॥
विनिहन्ति शिरःशूलं गुल्माभ्यन्तरविद्रधीन् ॥ २१ ॥

॥ २१ ॥

शुक्राश्मर्यां तु सामान्यो विधिरश्मरिनाशनः ॥
यवक्षारगुडोन्मिश्रं पिबेत्पुष्पफलोद्भवम् ॥
रसं मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम् ॥ २२ ॥

पुष्पफलोद्भवम् । रसमिति । कूष्माण्डफलरसम् ॥ २२ ॥

नागरवरुणकगोक्षुरपाषाणभेदकपोतवङ्कजः क्वाथः ॥
गुडयावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ २३ ॥

वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ॥
कषायः क्षारसंयुक्तः शर्करां च भिनत्त्यपि ॥ २४ ॥

पिबेद्वरुणमूलत्वक्काथं तत्कल्कसंयुतम् ॥
क्काथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिपातनः ॥ २५ ॥
पिबेद्वरुणमूलत्वक्कषायं गुडसंयुतम् ॥
अश्मरीं पातयत्याशु बस्तिशूलविनाशनम् ॥ २६ ॥
एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः ॥
शृतं पिबेदश्मजतु प्रगाढं सशर्करे साश्मरिमूत्रकृच्छ्रे ॥ २७ ॥

उपकुल्या पिप्पली । कौन्ती रेणुकम् । अश्मजतु प्रगाढमिति । शोधितशिलाजतुनस्त्रिचतुरमाषकाः प्रक्षेपः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ॥
अविक्षीरेण सप्ताहं पेयमश्मरिभेदकम् ॥ २८ ॥

त्रिकण्टको गोक्षुरकः । अविर्मेषी । अनेन योगेन शर्करा भिद्यते ॥ २८ ॥

कुलत्थाद्यं घृतमाह—

कुलत्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम् ॥
बीजानि कूष्माण्डकगोक्षुराभ्यां घृतं पचेत्तद्वरुणस्य तोये ॥ २९ ॥
दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रे मूत्राभिघातं च समूत्रबन्धम् ॥
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढवृक्षानिव वज्रपातः ॥ ३० ॥

शीतली स्वनामख्याता । शर्कराऽप्यत्र कल्कन्यायेन । कुलत्थाद्यं घृतम् ॥ २९ ॥ ३० ॥

शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम् ॥
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात्सशर्करम् ॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गविशोधनम् ॥ ३१ ॥

शरादिपञ्चमूल्या इति । तृणपञ्चमूलस्य । सशर्करमिति । सिद्धे घृते पादिकः शर्कराप्रक्षेपः । शराद्यं घृतम् ॥ ३१ ॥

वरुणाद्यं घृतमाह—

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् ॥
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥ ३२ ॥
वरुणः कदली बिल्वं तृणजं पञ्चमूलकम् ॥
अमृतां चाश्मजं देयं बीजं च त्रपुषस्य च ॥ ३३ ॥
शतपर्वा तिलक्षारः पलाशक्षारमेव च ॥
यूथिकायास्तु मूलानि कार्षिकाणि समावपेत् ॥ ३४ ॥

---

१ घ. °नः । वरुणत्वक्कषायं तु पीतं च गु° । २ घ. °दनम् । ३ घ. सिद्धं क्षिपात्स° । ४ ङ. ।

अंशमात्रां पिबेज्जन्तुर्वैकाकाञ्ज्ञयेतदा ॥
जीर्णे चाग्निमिवेत्पूर्वं गुडं क्षीरं तु मस्तुना ॥ ३५ ॥
अश्मरीं शर्करां चैव मूत्रकृच्छ्रं विनाशयेत् ॥
सैन्धवाद्यं च यत्तैलमृषिभिः परिकीर्तितम् ॥ ३६ ॥

कदली कदल्याः फलमामं मूलं वा । अश्मजं शिलाजतु । शतपर्वा वंशास्तस्य नीली दूर्वा वा । तिलक्षारस्तिलनालभस्म । पूर्वमिति । भोजनात् । वरुणाद्यं घृतम् ॥ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

तत्तैलं द्विगुणक्षीरं पचेद्वीरतरादिना ॥
क्वाथेन पूर्वकल्केन साधितं तु भिषग्वरैः ॥ ३७ ॥
एतत्तैलवरं श्रेष्ठमश्मरीणां विनाशनम् ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्छिते मथिते तथा ॥ ३८ ॥
भग्ने श्रमाभिपन्ने च सर्वथैव प्रशस्यते ॥
वध्माधिकारनिर्दिष्टं सैन्धवाद्यमिहेष्यते ॥ ३९ ॥

सैन्धवाद्यं वर्ध्माधिकारोक्तं तत्राश्मरीहरत्वश्रुतेः । पूर्वेण(पूर्व)कल्केनेति । तत्रोक्तसैन्धवादिकल्केन । वीरतराद्यं घृतम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुस्त्रिंशोऽश्मर्यधिकारः समाप्तः ॥ ३४ ॥

---

## अथ पञ्चत्रिंशः प्रमेहाधिकारः ।

---

बस्तिविकृत्यभिकारात्प्रमेहः । प्रमेहिणो हितमाहारमाह—

श्यामाकाः कोद्रवोद्दालगोधूमचणकाढकी ॥
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा ॥ १ ॥

उद्दालो नवकोद्रवः । आढकी तुवरीबीजम् ॥ १ ॥

मेहिनां तिक्तशाकानि जाङ्गला हरिणाण्डजाः ॥
यवान्नविकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ॥ २ ॥

तिक्तशाकानि प्रपुन्नाटपटोलादीनि । अण्डजाः पक्षिणः । यवान्नविकृतिर्यवान्नं यवविकाराश्चापूपादयः ॥ २ ॥

पारिजातजयानिम्बवह्निगायत्रि(त्री)णां पृथक् ॥
पाठायाः सागुरोः पीतद्वयस्य दारदस्य च ॥ ३ ॥

---

१ क. ख. अक्ष मां । २ क. पिबेतन्मापिबेन वा । ३ । ३ ख. प्रयोजयेद् । ४ क. °हकम् । कु° ।

जलेक्षुमद्यसिकताशनैर्लवणपिष्टकाः ॥
सान्द्रमेहान्क्रमाद्घ्नन्ति अष्टौ क्वाथाः समाक्षिकाः ॥ ४ ॥

पारिजातः पारिभद्रः। जया जयन्ती, अरणिका। वह्निश्चित्रकः। गायत्री खदिरः। पाठायाः सागुरोरित्येकः क्वाथः। पीताद्वयस्येति। पीता हरिद्राऽयमप्येकः। शारदः सप्तपर्णः ॥ ३ ॥ ४ ॥

दूर्वाकसेरुपूतीककुम्भीकप्लवशैवलम् ॥
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥ ५ ॥

पूतीकः करञ्जः। कुम्भीकः पान्ही। सुश्रुते च प्लव(स्थाने कैवर्तमुस्तक ?)पाठात्प्लवः कैवर्तकमुस्तकः ॥ ५ ॥

त्रिफलारग्वधद्राक्षाकषायो मधुसंयुतः ॥
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम् ॥ ६ ॥

सुगमम् ॥ ६ ॥

अथ कफप्रमेहेष्वेव सामान्ययोगा उच्यन्ते—

रोध्राभयाकट्फलमुस्तकानां विडङ्गपाठार्जुनधन्वनानाम् ॥
कदम्बशालार्जुनदीप्यकानां विडङ्गदार्वीधवशल्यकानाम् ॥
चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः ॥ ७ ॥

धन्वनः स्वनामख्यातः। दीप्यको यवानी। धवः पर्वतोद्भवः। शल्यकं मदनफलम् ॥ ७ ॥

अथ पित्तप्रमेहेषु सामान्ययोगानाह—

रोध्रार्जुनोशीरकुचन्दनानामरिष्टसेव्यामलकाभयानाम् ॥ ८ ॥
धात्र्यर्जुनारिष्टकवत्सकानां नीलोत्पलैलातिनिशार्जुनानाम् ॥
चत्वार एते विहिताः कषायाः पित्तप्रमेहे मधुसंप्रयुक्ताः ॥ ९ ॥

कुचन्दनं रक्तचन्दनम्। अरिष्टो निम्बः। सेव्यमुशीरम्। अभया हरीतकी। तिनिशोऽच्छकः ॥ ८ ॥ ९ ॥

अश्वत्थचतुरङ्गुलन्यग्रोधादिफलत्रयम् ॥
सरक्तसारमञ्जिष्ठा क्वाथाः पञ्च समाक्षिकाः ॥ १० ॥
नीलहारिद्रशुक्ताख्यक्षारगण्डीरिकाह्वयान् ॥
मेहान्हन्युः क्रमादेते सक्षौद्रो रक्तमेहजित् ॥
क्वाथः खर्जूरकाश्मर्यतिन्दुकास्थ्यमृताकृतः ॥ ११ ॥

चतुरङ्गुलः किरमालकः। सरक्तसारमञ्जिष्ठेत्येकयोगकः क्वाथः। रक्तसारो रक्तचन्दनम्। शुक्ताख्योऽम्लाक्षः। मण्डीरिकाह्वयो मञ्जिष्ठाह्वयः। मेहान्हन्युरिति। हन्यु-

---

१ क. °[illegible]। सां°। २ का °रमाक्षिका°।

र्थापयेयुः । पित्तमेहानां याप्यत्वात् । किंवा नात्यन्तदुष्टे मेदसि पित्तजा अपि साध्याः । साध्यास्तु मेदो यदि न प्रदुष्टमिति चरकवचनात् ॥ १० ॥ ११ ॥

वातिकमेहचतुष्टये चिकित्सामाह—

छिन्नावह्लिकषायेण पाठाकुटजरामठम् ॥
तिक्तां कुष्ठं च संचूर्ण्य सर्पिर्मेहे पिबेन्नरः ॥ १२ ॥

सर्पिर्मेहादिषु (?) छिन्नादिकषायेषु क्षौद्रावापः कार्यः । तन्त्रान्तरनिदर्शनान्मधुनो मेहहरत्वाच्च ॥ १२ ॥

कदरखदिरपूगक्वाथं क्षौद्राह्वये पिबेत् ॥

कदरो विट्खदिरः । खदिरस्तदितरः । पूगः पर्कटिः ॥

अग्निमन्थकषायं तु वसामेहे प्रयोजयेत् ॥ १३ ॥

सुगमम् ॥ १३ ॥

पाठाशिरीषदुस्पर्शमूर्वाकिंशुकतिन्दुकम् ॥
कपित्थानां भिषक्क्वाथं हस्तिमेहे प्रयोजयेत् ॥ १४ ॥

तिन्दुककपित्थयोः फलम् । तिन्दुकः केदुरिति लोके । वातमेहेष्वसाध्येष्वपि चिकित्साभिधानमिदं मेहानां चिरानुबन्धित्वात्किंचिल्लाभे तयापानार्थम्[*] ॥ १४ ॥

कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि ॥
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात्कफपित्तमेही ॥ १५ ॥

चूर्णानीति विशेष्यपदं कम्पिल्लादिजानि चूर्णानीत्यर्थः । एवं वैभीतेत्यादावपि व्याख्येयम् । विभीते भवं वैभीतं भवार्थेऽण् । एवं रौहितकादावपि । रोहितको रोहिडः । कफपित्तमेहीति । कफमेही वा पित्तमेही वेत्यर्थः ॥ १५ ॥

मेहेषु सामान्ययोगानाह—

स्निग्धं वान्तं विरिक्तं च निरूढं पाययेद्रसम् ॥
धात्र्याः सर्वप्रमेहेषु निशाक्षौद्रसमन्वितम् ॥ १६ ॥

धात्र्या रसः स्वरस एव व्यवहारात् । निशा हरिद्रा । कल्पनामाह । आमलकरसस्य चत्वारि पलानि हरिद्रा कर्षप्रमाणं तथा मधु च कर्षप्रमाणमेवैवं विमथ्य पिबेत् ॥ १६ ॥

कषायमथ वा दारुत्रिफलामुस्तकैः शृतम् ॥

अत्रापि निशाक्षौद्रसमन्वितमित्यनुवर्तयितव्यम् ॥

त्रिफलादारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा ॥ १७ ॥

सुगमम् ॥ १७ ॥

---

* किंचिल्लाभे यापनार्थमिति मम भाति ।

कुटजासनदार्व्यब्दफलत्रयभवोऽथ वा ॥

अत्रापि क्षौद्रेणा(त्याथ)नुवर्तते । असनः पीतशालः । दार्वी दारुनिशा ॥

गुडूच्याः स्वरसः पेयो मधुना सर्वमेहनुत् ॥ १८ ॥

सुगमम् ॥ १८ ॥

शाल्मुष्कककम्पिल्लकल्कमक्षसमं पिबेत् ॥
धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥ १९ ॥

सुगमम् ॥ १९ ॥

फलत्रिकं दारुनिशां विशालां
मुस्तं च निष्काथ्य निशांशकल्कम् ॥
पिबेत्कषायं मधुसंप्रयुक्तं
सर्वप्रमेहेषु समुत्थितेषु ॥ २० ॥

त्रिफलादीनां मुस्तान्तानां पलं षोडशगुणं जलं दत्त्वा चतुर्भागावशिष्टं ग्राह्यम् । तथा चोक्तम्—

द्रव्यमापोत्थि(थि)तं काथ्यं दत्त्वा षोडशिकं जलम् ।
पादशेषं च कर्तव्यमेष क्वाथविधिः स्मृतः ॥

निशांशकल्कमिति । निशाभागकल्कम् । तत्सहितमेव त्रिफलादिद्रव्यं निष्काथ्य कषायं पिबेदित्येके । निशाया अंशश्चतुर्थभागः कल्कः प्रक्षेपरूपो यत्र तत्तथेत्यन्ये । पूर्वव्याख्यायाः प्रचारः प्रायेण ॥ २० ॥

मधुना त्रिफलाचूर्णमथ वाऽश्मजतूद्भवम् ॥
लोहजं वाऽभयोत्थं वा लिह्यान्मेहनिवृत्तये ॥ २१ ॥

चूर्णमिति पदं समासान्तर्भूतमप्यनुवर्तयितव्यम् । अभयोत्थमिति । हरीतकीभवं न चामयमुशीरं तद्भवम् । हरमेखलमनुवदता चक्रेणापि लिखितम्—

"त्रिफलालोहशिलाजतुपथ्याचूर्णं वलीढमेकैकम् ॥
मधुनाऽमृतास्वरसमिति सर्वान्मेहान्निवारयति"इति ॥ २१ ॥

न्यग्रोधादिचूर्णमाह—

न्यग्रोधोदुम्बराश्वत्थश्योनाकारग्वधासनम् ॥
आम्रं कपित्थं जम्बूं च प्रियालं ककुभं धवम् ॥ २२ ॥
मधूकं मधुकं रोध्रं वैरणं पारिभद्रकम् ॥
पटोलं मेषशृङ्गीं च दन्तीं चित्रकमाढकीम् ॥ २३ ॥

१ क. [illegible] । २ क. भवनं ।

करञ्जं त्रिफलाशक्रभल्लातकफलानि च ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ २४ ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ॥
फलत्रयरसं चानुपिबेन्मूत्रं विशुध्यति ॥ २५ ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ॥
प्रशमं यान्ति योगेन पिटिका न प्रजायते ॥ २६ ॥

असनः पतिशालः । आम्रकपित्थजम्बूनां फलास्थि । ककुभं भवमित्यस्य स्थाने ककुभत्वचमिति पाठान्तरम् । मधुकस्य सारः करञ्जस्य फलम् । अयं योगः सामान्यचूर्णयोजनापरिभाषया योज्यः ।

"कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः ॥
द्रवशुक्त्याऽवलेढव्यः पातव्यश्च चतुर्द्रवः " इति ।

न्यग्रोधाद्यं चूर्णम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

त्रिकण्टकाश्मन्तकसोमवल्कैर्भल्लातकैः सातिविषैः सरोध्रैः ॥
वचापटोलार्जुननिम्बमुस्तैर्हरिद्रया पद्मकदीप्यकैश्च ॥ २७ ॥
मञ्जिष्ठया चागुरुचन्दनैश्च सर्वैः समस्तैः कफवातजेषु ॥
मेहेषु तैलं विपचेद्घृतं तु पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥ २८ ॥

अश्मन्तको मलुआ । सोमवल्कः कट्फलम् । दीप्यको यवानी । सर्वैरित्युक्तं सर्वैः स्नेहसाधनं स्यादत उक्तम् । समस्तैरिति । सर्वैर्यथोक्तैः समुदितैरेव न यथालाभेन स्नेहं विपचेदित्यर्थः । मिश्रमिति । घृतति(तै)लयमकम् । त्रिषु लक्षणेष्विति । त्रिदोषलक्षणमेलके सति त्रिदोषजं(जत्वं)च कफपित्तजमेहेष्वेवानुबन्ध्यानुबन्धकृतं मन्तव्यम् । किंच सर्वेषामेव मेहानां त्रिदोषजत्वादुक्तात्रिदोषजत्वं कदाऽपि भवतीति ज्ञेयम् । त्रिकण्टकाद्यं घृतं तैलं यमकं च ॥ २७ ॥ २८ ॥

त्रिकटुत्रिफलाचूर्णतुल्ययुक्तं तु गुग्गुलुम् ॥ २९ ॥
गोक्षुरक्वाथसंयुक्तं गुटिकां कारयेद्भिषक् ॥
दोषकालबलापेक्षी भक्षयेद्वाऽऽनुलोमिकीम् ॥ ३० ॥
न चात्र परिहारोऽस्ति कर्म कुर्याद्यथेप्सितम् ॥
प्रमेहान्वातरोगांश्च मूत्राघातोदरं जयेत् ॥ ३१ ॥

त्रिकटुत्रिफलाचूर्णतुल्ययुक्तं तु गुग्गुलुमिति । त्रिकटुत्रिफलाचूर्णैस्तुल्यैर्युक्तम् । गोक्षुरक्वाथसंयुक्तमिति । गोक्षुरक्वाथभावितं सप्ताहभावनया ॥ २९ ॥ ३० ॥ ३१ ॥

कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम् ॥

---

१ क. ब. वेगेन ।

सर्पिरकल्कमेव ॥

पित्तमेहघ्ननिर्यूहसिद्धं पित्ते हितं घृतम् ॥ ३२ ॥

सुगमम् ॥ ३२ ॥

धन्वन्तरं घृतमाह—

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी ॥
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥ ३३ ॥
सुधानीपकदम्बाश्च बिल्वभल्लातकानि च ॥
शठी पुष्करमूलं च पिप्पलीमूलमेव च ॥ ३४ ॥
पृथग्दशपलानेतान्भागांस्तोयार्मणे पचेत् ॥
यवकोलकुलत्थानां प्रस्थं प्रस्थं च दापयेत् ॥ ३५ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली ॥ ३६ ॥
शृङ्गवेरं विडङ्गानि वचा कम्पिल्लकं तथा ॥
गर्भेणानेन तत्सिद्धं पाययेच्च यथाबलम् ॥ ३७ ॥
एतद्(द्धा)न्वन्तरं नाम विख्यातं सर्पिरुत्तमम् ॥
कुष्ठगुल्मप्रमेहांश्च श्वयथुं वातशोणितम् ॥ ३८ ॥
प्लीहोदराणि चार्शांसि विद्रधीन्पिटकास्तथा ॥
अपस्मारं तथोन्मादं सर्पिरेतान्नियच्छति ॥
पाठान्तरे शृतं तोयं काथ्यादष्टगुणं त्विह ॥ ३९ ॥

करञ्जौ द्वौ करञ्जपूतिकरञ्जकौ । अनयोश्च फलं मेहहरत्वात् । यदुक्तम्—करञ्ज-हिं(किं)शुकारिष्टफलं जन्तुप्रमेहनुदिति । (सुधा) स्नुहीमूलमिह तन्त्रान्तरे मूलपाठात् । नीपकदम्बकयोरल्पमहद्भेदाद्भेदः किंवा कदम्बो भूकदम्बः स चालम्बुध(ष)स्तन्त्रान्तरे भूकदम्बपाठात् । नीपस्थाने क्वापि निम्बस्य पाठः । अस्यापि फलम् । पृथग्दशपला-न्भागानिति । दशमूलमपि प्रत्येकं दशपलिकम् । तत्र प्रतिशतं तोयार्मणदानं शताधि-कद्रव्ये पुनरष्टगुणं जलम् । तथाच चक्रः—

"पृथक्तोयार्मणं त्वत्र पचेद्द्रव्याच्छतं शतम् ।
शतत्रयाधिके तोयमुत्सर्गक्रमतो भवेत्" ॥

अत्र मध्यद्रव्यस्योभयगामित्वात्तोयमुत्सर्गतोऽष्टगुणं मतमिति । अन्ये त्वाहुः । दशमूलस्य मिलित्वा दश पलानि । करञ्जादीनां पिप्पलीमूलान्तानां मिलित्वा दश पलानि । यवकोलकुलत्थानां च प्रत्येकं त्रयेणाष्टचत्वारिंशत्पलानि । एवं मिलित्वा काथ्य-

---

१ क. 'हिंशुका' ।

द्रव्याणामष्टषष्टिपलानि तत्र यथोक्ततोयार्मणेनैव क्राथो युक्तः । अर्मणो द्रोणः । पाठान्तरे शृतं तोयं काथ्यादष्टगुणं त्विह । अस्यार्थः—घृतमेतदेव काप्यन्यथा पठ्यते तत्र च क्राथार्थमष्टगुणं तोयं दर्शितं तत्प्रामाण्यादिहाप्यष्टगुणं तोयं देयम् । पाठान्तरे यथा—दशमूलहरीतकीदेवदारुकरञ्जद्वयवर्षाभूदन्तीभूमिकदम्बभल्लातकपुष्करमूलार्कमूल-स्नुहीमूलवरुणपिप्पलीमूलानि प्रत्येकं दशपलोन्मितानि यवकोलकुलत्थप्रस्थत्रयं चाष्टगुणेऽ-म्भसि पादशेषं कषायमवतारयेदिति । अर्मणशब्दश्च भूरिजलोपलक्षण इति वृन्दाभि-प्रायः । इत्थमेव व्यवहारो युक्तः । निचुलो हिज्जलः । रोहिषं गन्धतृणम् । धान्व-न्तरं घृतम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

शालसारादितोयेन भावितं च शिलाजतु ॥
पिबेत्तेनैव संशुद्धकायः पिष्टं यथाबलम् ॥ ४० ॥
जाङ्गलानां रसैः सार्धं तस्मिञ्जीर्णे च भोजनम् ॥
कुर्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥ ४१ ॥
मधुमेहं विहायासौ शर्करामश्मरीं तथा ॥
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ ४२ ॥

शिलाजतुभावनार्थं क्राथविधौ परिभाषा—

"तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्राथ्यम् ।
तत्क्राथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥
तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः" इति ॥

भावनं च दशाहं ततो द्विगुणं त्रिगुणं वा यदुक्तम् । भावितानिव······· । सप्ताह-मन्यत्र भावनमुक्तम्—

"प्रक्षिप्योद्धृत्य मा(चाऽऽ)वापं पुनस्तत्प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना" इति ॥

तेनैवेति । शालसारादितोयेन । संशुद्धकायः कृतवमनविरेकः । पिष्टं चूर्णितम् । यथाग्निबलं तदधीनत्वात्कायस्य । जाङ्गलमांसरसेन भोजनोपदेशश्चेह शोधकश्च स्वेद-कत्वाच्छिलाजतुनो वातकोपशङ्कया । तुलां यावदुपयुञ्जीतेति । प्रतिदिनमत्र कर्षा-दिमात्रया तावानुपयोगोऽस्य यावत्तुला न पूर्यत इत्यर्थः । मधुमेहं विहायेति । उत्प-न्नमात्रं मधुमेहम् । चिरजस्यासाध्यत्वात् । किंच महाप्रभावत्वाद्योगोऽयमसाध्यमपि मधुमेहं साधयतीति । अस्य डल्हणोक्ता व्याख्या लिख्यते । शालसारादितोयेनेत्यादि । शिलाजतुप्रकाराः सुश्रुतोक्ता लिख्यन्ते ।

तद्यथा—मासे शुक्रे शुचौ चैव शैलाः सूर्यांशुतापिताः ।

जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥
शिलाजत्विति विख्यातं सर्वव्याधिविनाशनम् ॥

यद्यप्यन्यस्मिन्काले शिलाजतु दृश्यते तथाऽप्याषाढज्येष्ठपरिगृहीतं खरतरणिकिरणतापिताभ्यः शिलाभ्यो गुणवत्तरं भवति । ननु शिलानां रूक्षकठिनानां कथं स्निग्धद्रवस्वरसः संभवतीत्याह—

*"तथादीनां तु लोहानां षण्णामन्यतमान्वयम् ।
ज्ञेयं तत्स्वल्वतश्चापि षड्योनि प्रथितं क्षितौ" ॥

तथादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहानि षट्तेषामन्यतमान्वयं षड्योनि षट्कारणकं तु(तत्तु)—

"अम्लं च सकषायं च कटु पाके शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य संभवः ॥
हेम्नोऽथ रजतात्ताम्राद्वरं कृष्णायसादपि" इति ॥

इति शिलाजतुचतुष्टयं तन्त्रान्तरे प्रोक्तं तत्तेषां चतुर्णामपि मुख्यानां गुणख्यापनाय नान्ययोनिशिलाजतुनिवारणाय ॥

"लोहाद्द्रवति तद्यस्माच्छिलाजतु जतुप्रभम् ।
तस्य लोहस्य यद्वीर्यं रसं चापि बिभर्ति तत्" ॥

अत्र चकारेण वर्णं प्रभावं च बिभर्तीत्यनुक्तं समुच्चीयते तत्र यल्लोहाज्जातं स्यात्तल्लोहस्यैव वीर्यरसौ बिभर्ति तानि च लोहानि सुवर्णादीनि ।

तद्यथा—"सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः ।
विषदोषहरं शीतं सकषायं रसायनम्" ॥

सुवर्णादिधातूनां गुणानाह—

"रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् ।
वयसः स्थापनं शीतं लेखनं वातपित्तजित् ॥
ताम्रं सतिक्तमधुरं कषायं लेखनं लघु ।
कटुपाकरसं शीतं रोपणं कफपित्तजित् ॥
सतिक्तलवणं भेदि पाण्डुत्वकृमिवातनुत् ।
लेखनं स्वल्पपित्तं च त्रपु सीसं च तद्गुणम् ॥
चक्षुष्यं कृष्णलोहं स्यात्कषायं स्वादुतिक्तकम् ।
लेखनं वातलं शीतं कृमिपित्तकफप्रणुत्" इति ।

यद्यपि जतुप्रकाशो लाक्षासदृशः शिलास्रावः शिलाजतुशब्देनोक्तस्तथाऽपि सुवर्णादिनिर्यासेऽपि शिलाजत्विति प्रयोगः सर्षपादितैलवदौपचारिको द्रष्टव्यः । अथ सुवर्णा-

* त्रप्वादीनामिति सम्मते पाठः ।

दीन्यपि पार्थिवत्वसामान्याच्छिलावदुपचर्यन्ते । तत्र श्रीहरिश्चन्द्राचार्येण सुवर्णं समलाः पञ्चेति चरकश्लोकव्याख्यानं कुर्वता स्वर्णादिमला एव शिलाजतून्यभिहितानि । तन्त्रान्तरीयैस्तु सुवर्णादिधातवः ।

"हेमाद्याः सूर्यसंतप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदु मृत्स्नाच्छं तद्वदन्ति शिलाजतु ॥
मधुरं च सतिक्तं च जपापुष्पनिभं च यत् ।
विपाके कटुकं शीतं तत्सुवर्णस्य निस्रवम् ॥
राजतं कटुकं श्वेतं शीतं स्वादु विपच्यते ।
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु ॥
यत्तु गुग्गुलुसंकाशं तिक्तं च लवणान्वितम् ।
विपाके कटुकं शीतं सर्वश्रेष्ठं तदायसम् ॥
गोमूत्रगन्धः सर्वेषां सर्वं योज्यं च कर्मसु ।
रसायनप्रयोगेषु पश्चिमं तु विशिष्यते" इति ।

सर्वेभ्यः कृष्णायसं विशिष्टम् । अत उक्तम्—"त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् । अस्यार्थः—त्रपुसीसयोर्लोहत्वस्य नातिप्रसिद्धत्वादय इति विशेषणं त्रपुसीसायःसमुद्भवं शिलाजतु त्रपुसीसायसं तदादिभूतं येषां तानि त्रपुसीसायसादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहजानीति । त्रपुसीसोद्भवं व्याधिप्रत्यनीकमिहोच्यते ।

"सर्वश्रेष्ठं तु सौवर्णं सौवर्णादायसं वरम् ।
अपि तद्भावनाहीनं श्रेष्ठं योग्यं रसायने ॥
रोगाणां हनने योग्यं यथास्वौषधभावितम्" इति ।
"विकल्पानवशिष्टांस्तु क्षीरवीर्यान्समादिशेत्" ॥

इति सामान्यलक्षणाभिधानम् ।

तत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥
कटुपाक्युष्णवीर्यं च शोषणं छेदनं तथा ।

शोषणं दुष्टरक्तादेः । छेदनं कफग्रन्थ्यादेः ।

तेषु प्रधानलक्षणमाह—

"तेषु यत्कृष्णमलघु स्निग्धं निःशर्करं च यत् ।
गोमूत्रगन्धि यच्चापि तत्प्रधानं प्रचक्षते" इति ॥

शालसारादितोयेनेत्यादि । शालसारादितोयेनेति । तत्र भाव्यद्रव्यसमं कथनीयद्रव्यमष्टगुणे जले निष्क्वाथ्याष्टभागावशिष्टेन कषायमानं तन्त्रान्तरप्रामाण्याद्दशाहं विंशतिदिनानि त्रिंशद्दिनानि वा भावयेत् । संशुद्धकायः संशुद्धदेहः । तेनैव सारोदकेनैव ।

पिबेत्प्रभात एव तन्त्रान्तरप्रामाण्यात् । यथाबलं यथाग्निबलं पाकस्य तदायत्तत्वात् । जाङ्गलमांसरसैर्भोजयेत् । अन्यथा शोषणच्छेदनत्वाद्वातप्रकोपः स्यात् । शिलाजतुनस्तुलां पलशतं युञ्ज्यात् । मधुमेहं *निहन्त्याश्विति । तथा च सुश्रुतः—

"वपुर्वर्णबलोपेतो मधुमेहविवर्जितः ।
जीवेद्वर्षशतं पूर्णमजरोऽमरसंनिभः ॥
शतं शतं तुलायां तु सहस्रं दशतौलिके ।
भल्लातकविधानेन परिहारविधिः स्मृतः ॥
मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम् ।
शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम् ॥
अपहन्त्यचिरात्कालाच्छिलाजतु निषेवितम् ।
न सोऽस्ति रोगो यं वाऽपि न निहन्याच्छिलाजतु ॥
शर्करां चिरसंभूतां भिनत्ति च तथाऽश्मरीम् " इति ।

न सोऽस्ति रोगोऽत्र रोगशब्दो दोषेषु वर्तते । अथवा शस्त्रासाध्येष्वश्मर्यादिष्विति ॥ ४० ॥ ४१ ॥ ४२ ॥

शिलाजतुप्रयोगेणैव माक्षिकधातुप्रयोगमतिदिशन्नाह—

माक्षिकं धातुमप्येवं युञ्ज्यादस्याप्ययं गुणः ॥ ४३ ॥

माक्षिकं धातुमप्येवमिति । धातुमाक्षिकमप्यनेनैव विधिनोपयुञ्जीत माक्षिकं धातुमिति द्विविधमपि सुवर्णमाक्षिकं रजतमाक्षिकं च । तथा च सुश्रुतः—

"एवं वा माक्षिकं धातुं तापीजममृतोपमम् ।
मधुरं काञ्चनाभासमम्लं च रजतप्रभम् ।
पिबन्हन्ति जराकुष्ठमेहपाण्ड्वामयक्षयान् " इति ।

तथा—"तद्भावितः कुलत्थांश्च कपोतांश्च विवर्जयेदिति ।

तद्भावित इति ताभ्यां शिलाजतुमाक्षिकाभ्यां भावितो व्याप्तदेहः । शिलाजतुमाक्षिकव्याप्तदेहस्य द्वयोरपि वीर्योत्कर्षाच्छिलामयत्वेनैव तन्मयं शरीरं स्यात् । कुलत्थास्तु यथा शिलां भेत्स्यन्ति तथा शिलाजतुमाक्षिकवीर्यस्यापहन्तारो भवन्ति तद्वत्कपोतोऽपि खरतरशिलाभोजनः पाषाणमपि जरयत्यतः कुलत्थकपोतौ यावज्जीवं वर्जयेदिति ॥ ४३ ॥

अतः परं प्रमेहपिटिकाचिकित्सितमाह—

शराविकाद्याः पिटकाः साधयेच्छोफवद्भिषक् ॥
पक्वाश्चिकित्सेद्व्रणवत्तासां पानेषु शस्यते ॥
क्वाथो वनस्पतेर्बास्तं मूत्रं तीक्ष्णं च शोधनम् ॥ ४४ ॥

---

* मधुमेहं विहायासाविति मम भाति ।

शोफवद्व्रणशोफवत्साधयेदपक्काः पिटिकाः । तासां प्राग्रूप इति शेषः । वनस्पतेरपि (रिति)वटादेः । बास्तं मूत्रं छागलं मूत्रम् । तीक्ष्णं च शोधनं वमनं रेचनं च ॥ ४४ ॥

एलादिकेन कुर्वीत तैलं च व्रणरोपणम् ॥ ४५ ॥
आरग्वधादिना कुर्यात्क्काथमुद्वर्तनानि च ॥
शालसारादिना सेकं भोज्यादि च कणादिना ॥ ४६ ॥

एलातगरकुष्ठेत्यादावेलादिः । रोपणावस्थायां रोपणे कर्तव्य आदौ तैलमेव नान्यत्कषायादिकं सर्वेष्वेव मेहेष्वतिप्रवृत्त्या वातवृद्धेस्तैलस्य वातदोषप्रत्यनीकत्वात् । तथा बद्धमूत्रत्वेन प्रमेहव्याधिप्रत्यनीकत्वाच्च । एलादिकेनेति यत्राधिकरणेनोक्तिरित्यादिपरिभाषाव्यापारादेलादिगणः कल्कः । द्रवं जलम् । गणत्वादिह क्काथकल्कौ कार्याविंत्यन्ये । आरग्वधादिना क्काथः पानार्थं परिषेकार्थं वा । क्काथमुत्सादनाय चेति पाठः सुश्रुते । तत्रोत्सादनं निम्नव्रणस्योन्नतिकरणम् । उत्सादनोपक्रमावस्थायामारग्वधादिनैवोत्सादनम् । एवं वक्ष्यमाणेषु परिषेचनादिष्वत्रोक्तवर्गेणैव नियमः । भोज्यादीति । अत्यन्नपानम् । कणादिना पिप्पल्यादिना ॥ ४५ ॥ ४६ ॥

सौवीरकसुरासुक्तं तैलं क्षीरं गुडं घृतम् ॥
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ४७ ॥

सुरा पिष्टमयी । अनूपा महिषादयः ॥ ४७ ॥

प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम् ॥
विशदं तिक्तकटुकं तदाऽऽरोग्यं प्रचक्षते ॥ ४८ ॥

प्रमेहनिवृत्तिलक्षणमाह—

मूत्रमनाविलमिति । अनाविलं स्वच्छमेदोमांसक्लेदादिदूष्ययोगविरहात् । विशदमनुपहतवर्णम् । डल्हणस्तु—अनाविलं प्रसन्नं विशदं रूक्षमिति व्याख्याति । तेजति स्म तिक्तं कटुत आवृणोतीति कटु मूत्रस्य तिक्तकटुत्वं पिपीलिकामाक्षिकादीनामपसर्पणेन ज्ञातव्यम् । अन्ये त्वेवं पठन्ति । प्रमेहिणो यदा मूत्रमनाविद्धमपिच्छिलम् । तत्राप्यनाविद्धं प्रसन्नम् । आरोग्यं प्रमेहरोगाभावः ॥ ४८ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्री-
श्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
पञ्चत्रिंशः प्रमेहाधिकारः समाप्तः ॥ ३५ ॥

## अथ षट्त्रिंशो मेदोरोगाधिकारः ।

मेदः प्रमेहदूष्यत्वेनोक्तं मेदःप्रमेहदोषजं च स्थौल्यमिति प्रमेहानन्तरं स्थौल्यम् ।

पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः ॥
लेखना बस्तयश्चैव सेव्या मेदस्विना सदा ॥ १ ॥

उद्दालो वनकोद्रवः । लेखना बस्तय इति ।

"त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमन्विताः ॥
ऊषकादिप्रतीवापा बस्तयो लेखनाः स्मृताः" ॥ १ ॥

निद्राप्रसङ्गस्य स्थौल्यहेतोः प्रतिषेधोपायमाह—

चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम् ॥
उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः ॥
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥ २ ॥

रक्तमोक्षणं शिराव्यधेन । सत्त्वौदार्यं सत्त्वगुणोद्रेकः । तमोजयस्तमोगुणविजयः स च योगाभ्यासाद्भवति ॥ २ ॥

व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः ॥
संतर्पणकृतैर्दोषैर्लौल्यं मुक्त्वा विमुच्यते ॥ ३ ॥

संतर्पणकृतैर्दोषैरिति । संतर्पणनिमित्तैर्विकारैः । ते च कण्डूप्रमेहपिटिकाकोठादयः । दोषप्रभेदेन चेह विकाराभिधानं कारणे कार्योपचारात् । लौल्यं मुक्त्वेति । भक्षणलोलुपतां विमुच्य ॥ ३ ॥

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः ॥
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनम् ॥ ४ ॥

सुगमम् ॥ ४ ॥

प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ॥ ५ ॥

मधुयुतं वारीति । अतुल्यमानं क्षारत्वात् । कौपं जलमिति केचित् ॥ ५ ॥

विडङ्गादियोगमाह—

विडङ्गनागरक्षारकाललोहरजो मधु ॥
यवामलकचूर्णं तु योगोऽतिस्थौल्यनाशनः ॥

क्षारो यवक्षारः । काललोहरजो लोहचूर्णम् ॥

उष्णमन्नस्य मण्डं वा पिबेत्कृशतनुर्भवेत् ॥ ६ ॥

सुगमम् ॥ ६ ॥

---

१ क. °न्ता स्वेदः कृपा । २ क. ख्याकृता । ३ क. °ल्याजिन्नवेत् । क्षा°।

सचव्यजीरकव्योषहिङ्गुसौवर्चलानलाः ॥
मधुना सक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ ७ ॥

अनलश्चित्रकः । सक्तव इह भाविव्योषाद्ययोगन्यायात्सर्वचूर्णतः षोडशगुणाः ॥ ७ ॥

व्योषाद्यं योगमाह—

व्योषं विडङ्गं शिग्रूणि त्रिफलां कटुरोहिणीम् ॥
बृहत्यौ द्वे हरिद्रे च पाठामतिविषां स्थिराम् ॥ ८ ॥
हिङ्गुकेम्बुकमूलानि यवानीधान्यचित्रकम् ॥
सौवर्चलमजाजीं च हपुषां चेति चूर्णयेत् ॥ ९ ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ॥
सक्तूनां षोडशगुणो भागः संतर्पणं पिबेत् ॥ १० ॥
प्रयोगादस्य शाम्यन्ति रोगाः संतर्पणोत्थिताः ॥
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ॥ ११ ॥
प्लीहपाण्ड्वामयः शोथा मूत्रकृच्छ्रमरोचकः ॥
हृद्रोगो राजयक्ष्मा च कासः श्वासो गलग्रहः ॥ १२ ॥
कृमयो ग्रहणीदोषाः श्वैत्यं स्थौल्यमतीव च ॥
नराणां दीप्यते वह्निः स्मृतिर्बुद्धिश्च वर्धते ॥ १३ ॥

केम्बुकमूलानीति । केम्बुकं स्वनामप्रसिद्धम् । तैलमधुघृतानां प्रत्येकं समुदितचूर्णतुल्यमानत्वम् । सक्तूनां च षोडशगुणो भागः समुदितचूर्णापेक्षया । संतर्पणमिति । द्रवपरिप्लुतसक्तुरूपं तेन संतर्पणसंज्ञकस्याप्यपतर्पणत्वं ज्ञेयम् । मात्रा स्यादाहारद्रव्यप्रधानत्वाद्भूयसी । श्वैत्यं श्वित्रं श्वेतवर्णता वा कफकृता । व्योषादिर्मन्थप्रयोगः ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

त्रिफलाद्यं तैलमाह—

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ॥
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥ १४ ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ॥
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥ १५ ॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ॥
स्थूलतालस्यकण्ड्वादीञ्जयेत्कफकृतान्गदान् ॥ १६ ॥

इन्द्रसुरा गोरक्षकर्कटी निर्गुण्डी वा । सुरसादिरसाप्लुतमिति । सुरसादिगणस्य क्वाथः । त्रिफलादयश्च कल्कः ॥ १४ ॥ १५ ॥ १६ ॥

---

१ क. मस्तुना । २ क. घ. समं ।

मेदःप्रदोषात्संभवतोः स्वेददौर्गन्ध्ययोः प्रतीकारमाह—

शिरीषलामज्जकहेमरोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः ॥

लामज्जकमुशीरम् । हेम नागकेसरचूर्णम् ॥

पत्राम्बुलोहाभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ १७ ॥

पत्रं तमालपत्रमिति बाष्पचन्द्रः । अम्बु वालकम् । अभयमुशीरम् । लोहमगरु । चन्दनं श्वेतचन्दनं रक्तचन्दनमितीशानः ॥ १७ ॥

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ॥

बिल्वपत्ररसो वाऽपि गात्रदौर्गन्ध्यनाशनः ॥ १८ ॥

शङ्खचूर्णेन संयुत इति । शङ्खं दग्ध्वा चूर्णं ग्राह्यम् । बिल्वपत्ररसोऽपि शङ्खचूर्णसंयुत इति ॥ १८ ॥

हरीतकी लोध्रमरिष्टपत्रं चूतत्वचो दाडिमवल्कलं च ॥

एषोऽङ्गरागः कथितोऽङ्गनानां जङ्घाकषायश्च नराधिपानाम् ॥ १९ ॥

अरिष्टपत्रं निम्बपत्रं फेनिलवृक्षपत्रं वा । चूतत्वगाम्रच्छल्लिः । दाडिमवल्कलम् । अङ्गरागो वर्णप्रसादकरः । जङ्घाकषायो जङ्घोद्वर्तनाय कल्कः । प्रायेण हीश्वराणां गजादिवाहनाज्जङ्घा विवर्णा भवति तत्सवर्णकरणार्थं जङ्घाकषायविधिः । पत्रं च दद्यान्मदयन्तिकाया लेपोऽङ्गरागो नरदेवयोग्य इति पाठान्तरम् । मदयन्तिका मेंहेंदीति लोके यस्याः पिष्टैः पत्रैर्नखानां रागमुत्पादयन्ति स्त्रियः ॥ १९ ॥

गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम् ॥

कक्षादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयेन ॥ २० ॥

वर्णोज्ज्वलं हरितालं गन्धको वा लेपोऽयं कुष्ठे । गोमूत्रेण गोपयसा युक्तं दौर्गन्ध्यहरं पयसा रजनीद्वयेन च संयुक्तं तिलकादानेन वशीकरणम् ॥ २० ॥

नवकगुग्गुलुमाह—

व्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ॥

खादन्सर्वाञ्जयेद्व्याधीन्मेदःश्लेष्मामवातजान् ॥ २१ ॥

अग्निश्चित्रकः । समं मिलितं(त) व्योषादिचूर्णसमम् । नवकगुग्गुलुः ॥ २१ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां

श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां

षट्त्रिंशो मेदोवृद्ध्यधिकारः समाप्तः ॥ ३६ ॥

१ क. प्रहर्षः ।

## अथ सप्तत्रिंश उदराधिकारः ।

उदरोत्सेधसाधर्म्यात्स्थौल्यानन्तरमुदरम् ।

रक्तशालिर्यवा मुद्गा जाङ्गलाश्च रसा हिताः ॥
विरेकास्थापनं शस्तं सर्वेषु जठरेषु च ॥ १ ॥

विरेकास्थापनमिति । उदरे संचितत्वान्मलस्य सर्वदा विरेचनं हितम् । उक्तं हि—"दोषातिमात्रोपचयात्स्रोतोमार्गनिरोधनात् ।
संभवत्युदरं तस्मान्नित्यमेनं विरेचयेत्" इति ॥
आस्थापनं निरूहः स पुनरुदावर्ताद्यवस्थायां प्रयोज्यः ॥ १ ॥

वातोदरं बलवतः स्नेहस्वेदैरुपाचरेत् ॥
स्निग्धाय स्वेदिताङ्गाय दद्यात्स्नेहविरेचनम् ॥ २ ॥

स्नेहस्वेदैरुपाचरेदिति । नन्विह "विवर्जयेत्स्नेहपानमजीर्णी चोदरी ज्वरी" इति वचनात्स्नेहनं निषिद्धम् । किंच नैते स्वेद्या नोदरी नातिसारीत्यनेन च स्वेदस्यापि निषेधः कृतस्तत्कथं स्नेहस्वेदोपदेशः । उच्यते—स्वतन्त्रयोः स्नेहस्वेदयोर्निषेधो बोद्धव्यो न तु शोधनाङ्गभूतयोः । अन्यथा दोषहरणस्य दुष्करत्वात् ॥ २ ॥

सुविरक्तो नरो यस्तु पुनराध्माति तं भिषक् ॥
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥ ३ ॥

पुनराध्मातीति । आध्मात्यापूर्णोदरो भवति । आध्मातीत्याध्माशब्दात्क्विबन्तात्क्विपा साध्यम् ॥ ३ ॥

सामुद्राद्यं चूर्णमाह—

सामुद्रसौवर्चलसैन्धवानि क्षारं यवानामजमोदकं च ॥
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गुविडं चेति समानि दद्यात् ॥ ४ ॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वे कवलं प्रशस्तम् ॥
वातोदरं गुल्ममजीर्णभुक्तं वातप्रकोपं ग्रहणीं च दुष्टाम् ॥
अर्शांसि कुष्ठानि च पाण्डुरोगं भगंदरांश्चेति निहन्ति सद्यः ॥ ५ ॥

सामुद्रं कडकचम् । क्षारं यवानामिति । यवक्षारम् । घृतप्लुतानीति । घृतप्लुतभक्तोपरि चूर्णं मात्रया दत्त्वा प्रथमं द्वित्रान्कवलान्हिङ्गुवष्टकवद्भुञ्जीत । कवलमिति जातावेकवचनम् । सामुद्राद्यं चूर्णम् ॥ ४ ॥ ५ ॥

वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ॥

सुगमम् ॥

---

१ ङ. क्षारो । २ घ. कुर्यात् ।

शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ६ ॥

सुगमम् ॥ ६ ॥

यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ॥

सुगमम् ॥

संनिपातोदरी तक्रं त्रिकटुक्षारसैन्धवैः ॥ ७ ॥

सुगमम् ॥ ७ ॥

स्नुहीपयोभावितानां पिप्पलीनां पयोशनः ॥
सहस्रमुपयुञ्जीत शक्तितो जठरामयी ॥ ८ ॥

स्नुहीपयोभावितानां पिप्पलीनामिति । भावनमेकविंशतिवारान् । यदाह क्षा(क्षी)रपाणिः—महावृक्षक्षीरेण त्रिःसप्तकृत्वः पिप्पलीर्भावयित्वैकां द्वे वा प्रयच्छेद्विरेकार्थमिति । स्नुही सेहुण्डः स च बहुकण्टकः श्रेष्ठः ।

उक्तं च—"द्विविधः स मतोऽल्पैश्च बहुभिश्चैव कण्टकैः ।
सुतीक्ष्णकण्टकै रम्यैः प्रवरो बहुकण्टकः" ॥

एतान्पिप्पलीगुडकांस्त्रींश्चतुरः पञ्च वा कोष्ठानुरूपं प्रत्यहमेकान्तरं द्व्यन्तरं वा विरेकार्थं क्षीरेण पिबेत् । विरेचनानन्तरं गुरुणा क्षीरेण भोजनं प्रयोगसात्म्यत्वात् । यथोदावर्तिनि विरिक्तस्य काञ्जिककोद्रवान्नभोजनोपदेशः । सहस्रमुपयुञ्जीतेति । यथोक्तक्रमेण सहस्रं यावदुपयोगः । उत्सर्गोऽयं तेनातोऽर्वागौषधविधिर्भवत्येव । शक्तित इति । यावता कालेन शक्नुयाद्भक्षयितुं पिप्पलीसहस्रमेकाद्वित्रिचतुष्टयत्वे(ये)न ॥ ८ ॥

शिलाजतूनां मूत्राणां गुग्गुलोस्त्रैफलस्य च ॥
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ ९ ॥

समासान्तर्भूतमपि प्रयोग इति पदं (प्रत्येकं) संबन्धनीयम् । प्रयोगोऽभ्यासः॥९॥

स्नुक्पयसा परिभाविततण्डुलचूर्णैर्विनिर्मितः पूपः ॥
उदरमुदारं हिंस्याद्योगोऽयं सप्तरात्रेण ॥ १० ॥

पूपः पिष्टकम् । उदारं प्रवृद्धम् ॥ १० ॥

पिप्पलीवर्धमानं वा कल्पदृष्टं प्रयोजयेत् ॥
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ ११ ॥

कल्पदृष्टमिति । चरकरसायनविधिदृष्टं तं च विधिं प्लीहयकृच्चिकित्सिते दर्शयिष्यामः ॥ ११ ॥

दशमूलदारुनागरच्छिन्नरुहापुनर्नवाभयाक्वाथः ॥
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च ॥ १२ ॥

१ क. घ. चा ।

क्वाथ इत्यस्य स्थाने युक्त इति पाठे क्वाथ इति शेषः। क्वाथ इति बहुवृक्षं वनमितिवदभेदविवक्षया समाधेयम्। किंच क्वाथान्तर्भावाद्युक्तो योजितः ॥ १२ ॥

पटोलादिचूर्णमाह—

पटोलमूलं रजनीं विडङ्गं त्रिफलात्वचम् ॥ १३ ॥
कम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ॥
षडाद्यान्कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ॥ १४ ॥
कृत्वा चूर्णं तु तां मुष्टिं गवां मूत्रेण ना पिबेत् ॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम् ॥ १५ ॥
मण्डं पेयां च पीत्वा वा सव्योषं षडहं पयः ॥
शृतं पिबेत्ततश्चूर्णं पिबेदेवं पुनः पुनः ॥ १६ ॥
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकानि च ॥
कामलां पाण्डुरोगं च श्वयथुं चापकर्षति ॥ १७ ॥

नीलिनी नीलबुध्नामूलम्। षडाद्यान्कार्षिकानिति। पटोलमूलादीनि त्रिफलान्तानि प्रत्येकं कार्षिकाणि। अन्यांस्त्रींश्च द्वित्रिचतुर्गुणानिति। कम्पिल्लादीनि त्रीणि कर्षापेक्षया यथाक्रमं द्वित्रिचतुर्गुणानि। मुष्टिमिति। पलम्। जाङ्गलरसैर्भुञ्जीत मृदुमोदनम्। मण्डं पेयां च पीत्वेति। विरेचनदिन उत्तमाग्निर्जाङ्गलरसमृद्वोदनं भुञ्जीत मन्दाग्निश्च मण्डं पेयां वा पिबेत्। अतः षडहं यावत्सव्योषं जले शृतं पयः पिबेत्। ततः सप्तमे पुनः पटोलादिचूर्णं पेयम्। एवं पुनः पुनरस्योपयोगः। पटोलाद्यं चूर्णम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

नारायणचूर्णमाह—

यवानी हपुषा धान्यं त्रिफला सोपकुञ्चिका ॥
कारवी पिप्पलीमूलमजगन्धा शठी वचा ॥ १८ ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका ॥
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ १९ ॥
विडङ्गं च समांशानि दन्त्या भागत्रयं तथा ॥
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥ २० ॥
एष नारायणो नाम चूर्णो रोगगणापहः ॥
नैनं प्राप्यातिवर्तन्ते रोगा विष्णुमिवासुराः ॥ २१ ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ॥
आनाहवाते सुरया वातरोगे प्रसन्नया ॥ २२ ॥

१ क. घः 'नन्त्यांस्त्रीं'। २ क. घ. आनद्धवा'।

दधिमण्डेन विद्ध(द्धा)ग्रे दाडिमाम्बुभिरर्शसि ॥
परिकर्ते सवृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ २३ ॥
भगंदरे पाण्डुरोगे कासे श्वासे गलग्रहे ॥
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे ॥ २४ ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ॥
यथार्हस्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २५ ॥

उपकुञ्चिका स्वल्पजीरकम् । कारवी कृष्णजीरकम् । अजगन्धाऽजमोदा फोंफानीचा । जीरकं महत् । दन्त्या भागत्रयमेकभागापेक्षया । एवमुत्तरत्रापि द्वैगुण्यं चातुर्गुण्यं च ज्ञेयम् । त्रिवृद्विशाले प्रत्येकं द्विगुणे । तसाला चर्मकषा नीलबुध्ना वा । नैनं प्राप्येत्यादिना नारायणसधर्मितया नारायणसंज्ञाऽस्येति दर्शयति । बदराम्बुनेति । बदरक्काथेन । सवृक्षाम्लैरिति दाडिमाम्बुभिरित्यस्य विशेषणं दाडिमवृक्षाम्लक्काथेनेत्यर्थः । उष्णाम्बुभिरित्येतद्भगंदरादिष्वप्यनुवर्तनीयम् । किंच यथार्थ(र्ह)मिति वचनादन्यैरपि दोषव्याधिविपरीतैर्द्रव्यैर्भगंदरादिषु पानम् । सगरे कृत्रिमे विष इति । गरं स्यात्कृत्रिमं विषमित्यनेन गरं कृत्रिमं विषं चैकमेवेत्येके तन्न । यतः कृत्रिमं कृतं संयोगजनितं गरं च दूषीविषतामुपेतं विषमुच्यते । मृतकीटकादिचूर्णं गर इत्यन्ये । नारायणं चूर्णम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

दशमूलषट्पलकमाह—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥
सक्षारैरर्धपलिकैर्द्विः प्रस्थं सर्पिषः पचेत् ॥ २६ ॥
कल्कैर्द्विपञ्चमूलस्य तुलार्धस्य रसेन तु ॥
दधिमण्डाढकं दत्त्वा तत्सर्पिर्जठरापहम् ॥
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ॥ २७ ॥

अर्धपलिकैर्द्विः प्रस्थं सर्पिषः पचेदित्यत्र द्विरिति प्रस्थेनार्धपलिकैरित्यनेन च योज्यम् । द्विः प्रस्थं द्विगुणं प्रस्थं पचेत् । द्विरर्धपलिकैः प्रत्येकम् ।

तथा च जातूकर्णः—

"दशमूलतुलार्धरसे सक्षारैः पञ्चकोलकैः पलिकैः ।
साध्यं घृताढकार्धं द्विर्मस्तुकमुदरगुल्मघ्नम्" इति ॥

अन्यस्तु क्रियाख्या(म्या)वृत्तौ सुपो(चो वि)हितत्वादुक्तसामग्र्या वारद्वयं पाकमाह । जातूकर्णसंवादोऽपि व्यभिचारी यतो घृतमेतदेवोदरे वाग्भटेनान्यथा पठितं यथा—"षट्पलं दशमूलाम्बुमस्तुद्व्याढकसंयुतम्" इति । किंतु मानाधिक्याद्वाग्भटोक्तस्य

१ क. विद्धाग्रे ।

प्रयोगान्तरत्वं कल्पयितुं शक्यं जातूकर्णसंवादः पुनः सकलद्रव्यतुल्यत्वात्षट्पलनाम-(मान)त्वानुपपत्तेर्व्यवहाराच्च न त्यक्तुमुचितः । सुच्प्रत्ययोऽपि क्रियाभ्यावृत्तिमन्तरेण दृश्यते यथा—"त्रिःसप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य स जामदग्न्यः" इत्यादौ । अत्र तु षट्पले षडेव पलानि पक्कानि गुणवन्ति योगसंस्कारशक्तेरचिन्त्यत्वात् । बहुना चेत्प्रयोजनं तदा पुनः पुनः पक्तव्यं यतः षट्संख्यया काचिद्विशिष्टा शक्तिरभिधीयते । उक्तं च—"नवत्वात्सुपुराणाच्च संख्याविभागयोजनैः ॥

परिमाणाकृतिभ्यां च विशिष्टा शक्तिरिष्यते " इति ब्रह्मदेवः ।

दशमूलषट्पलकं घृतम् ॥ २६ ॥ २७ ॥

चित्रकघृतमाह—

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ॥
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ २८ ॥

सक्षारमिति । यवक्षारस्यापि पलम् । अन्यत्राप्युक्तम् । अग्निक्षारपलाभ्यां द्विमूत्रचतुर्जलं च घृतप्रस्थमिति । चित्रकघृतम् ॥ २८ ॥

नागरं त्रिपलं प्रस्थं घृततैलं तथाऽऽढकम् ॥ २९ ॥
मस्तुनः साधयित्वा च पिबेत्सर्वोदरापहम् ॥
कफमारुतसंभूते गुल्मे चैतत्प्रशस्यते ॥ ३० ॥

सुगमम् । नागराद्यं यमकम् ॥ २९ ॥ ३० ॥

बिन्दुघृतमाह—

अर्कक्षीरपले द्वे तु स्नुहीक्षीरपलानि षट् ॥
पथ्या कम्पिल्लकं श्यामा शम्याकं गिरिकर्णिका ॥ ३१ ॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकं तथा ॥
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ ३२ ॥
अथास्य मलिने कोष्ठे बिन्दुमात्रां प्रदापयेत् ॥
यावतोऽस्य पिबेद्विन्दूंस्तावद्वेगाद्विरिच्यते ॥ ३३ ॥
कुष्ठं गुल्ममुदावर्तं श्वयथुं सभगंदरम् ॥
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ॥ ३४ ॥

श्यामा श्याममूला त्रिवृत् । गिरिकर्णिकाऽपराजिता । नीलिनी नीलबुध्ना । शङ्खिनी श्वेतबुध्ना पाकार्थं चतुर्गुणजलमात्रा । तथाच क्वचिट्टिप्पण्याम्—

"स्नुह्यर्कपयसोरत्र पाकार्थानुपपत्तितः ।
चतुर्गुणं जलं देयं पाकार्थं बिन्दुसर्पिषि" । इति ।

मात्राऽस्य कोष्ठानुरूपं षडष्टौ माषकाः । मलिन इति बहुमले । बिन्दुघृतम् ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥ ३४ ॥

एतद्धिन्दुघृतं नाम्ना येनाभ्यक्तो विरिच्यते ॥
मूत्राण्यष्टावुदरिणां पाने सेके प्रयोजयेत् ॥ ३५ ॥

सुगमम् ॥ ३५ ॥

देवद्रुमं शिग्रुमयूरकं च गोमूत्रपिष्टामथवाऽश्वगन्धाम् ॥
पीत्वाऽऽशु हन्यादुदरं प्रवृद्धं कृमीनशेषानुदरं च दूष्यम् ॥३६॥

मयूरकोऽपामार्गः । गोमूत्रपिष्टामिति । देवद्रुमादीनां गोमूत्रेणैव पेषणम् । पानमप्येषां गोमूत्रेणैव । एक एवायं योगः । अथवाशब्दः पूर्वयोगापेक्षया ॥ ३६ ॥

स्नुक्क्षीरदन्तीत्रिफलाविडङ्गसिंहीत्रिवृच्चित्रककर्षकल्कैः ॥
घृतं विपक्वं कुडवप्रमाणं तोयेन तस्याक्षमपार्धकर्षम् ॥ ३७ ॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते पेयां सुखोष्णां वितरेद्विधिज्ञः ॥
नाराचमेतज्जठरामयानां युक्त्योपयुक्तं शमनं प्रदिष्टम् ॥ ३८ ॥

सुगमम् । नाराचघृतम् ॥ ३७ ॥ ३८ ॥

संप्रत्युदराधिकार एव तत्कारणत्वात्प्रवृद्धप्लीहयकृच्चिकित्साभिधानम्—

यवानिकाचित्रकयावशूकषड्ग्रन्थिदन्तीमगधोद्भवानाम् ॥
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥ ३९ ॥

षड्ग्रन्थि पिप्पलीमूलम् । पानार्थमुष्णतोयादि बहुद्रवोपदेशो दोषमाल्याद्यपेक्ष्यः ॥ ३९ ॥

पलाशक्षारतोयेन पिप्पली भाविता शुभा ॥
गुल्मप्लीहार्तिशमनी अग्निदीप्तिकरी स्मृता ॥ ४० ॥

पलाशक्षारतोयेन पिप्पली भावितेति । सप्तधा क्षारोदकभावितपिप्पलीगुटिका वर्धमानक्रमेण पयसा पेया । पयोऽनुपानं वा । तत्पिप्पलीकल्कमध्यात् ॥ ४० ॥

विडङ्गार्काग्निसिन्धूत्थसक्तून्दग्ध्वा वचान्वितान् ॥
पिबेत्क्षीरेण संचूर्ण्य गुल्मप्लीहोदरापहान् ॥ ४१ ॥

विडङ्गादीनि घृतेन संनीय दग्धव्यानि ॥ ४१ ॥

क्षारं वा बिडकृष्णाभ्यां पूतिकस्याम्लनिःस्रुतम् ॥
प्लीहयकृत्प्रशान्त्यर्थं पिबेत्प्रातर्यथाबलम् ॥ ४२ ॥

पूतिकस्य क्षारमम्लनिःस्रुतं काञ्जिकपरिस्रुतं बिडलवणपिप्पलीचूर्णप्रक्षेपेण पिबेत् । सुश्रुतेऽप्युक्तम्—अम्लस्रुतं पूतिकरञ्जक्षारं बिडलवणपिप्पलीप्रगाढं पाययेदिति । अत्राम्लस्रुतमिति स्रावणविधिना काञ्जिकेन परिस्रुतमिति कार्तिककुण्डादिभिष्टीकाकारैर्विवृतमिति । एतेनाम्बुनिःस्रुतमित्यपाठ एव ॥ ४२ ॥

१ क. घ. 'मीन्प्रवृद्धान्' । २ क. घ. 'ग्नाज्यामि' ।

अर्कपत्रं सलवणमन्तर्धूमं विदाहयेत् ॥
मस्तुना वा पिबेत्क्षारं प्लीहरोगं व्यपोहति ॥ ४३ ॥

अर्कपत्रं सलवणमिति । सलवणं समसैन्धवम् ॥ ४३ ॥

पातव्यो शुक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ॥
पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ ४४ ॥

उदधिशुक्तिज इति । उदधिग्रहणमन्यजलाश्रयस्थितशुक्तिग्रहणनिराकरणार्थं स्वरूपपरं वा । पयसा वा प्रयोक्तव्याः पिप्पल्य इति । वर्धमानक्रमेण । स हि क्रमो यथा—

"क्रमाद्वृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ।
वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट्प्रकीर्तितः ।
यस्त्रिपिप्पलिपर्यन्तः प्रयोगः सोऽवरः स्मृतः ॥
दशभिर्दशभिश्चैव पिप्पलीभिर्विवर्धयेत् ।
पञ्चभिः पञ्चभिर्वाऽपि शतादपहरेत्पुनः ॥
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।
चूर्णीकृता ह्रतबलैर्देहदोषामयान्प्रति" इति ॥ ४४ ॥

भल्लातकाभयाजाजीगुडेन सह मोदकः ॥
सप्तरात्राभिहन्त्येष प्लीहानमपि दारुणम् ॥ ४५ ॥

सुगमम् ॥ ४५ ॥

सौभाञ्जनकनिर्यूहं सैन्धवाग्निकणान्वितम् ॥
पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥ ४६ ॥

पलाशक्षारयुक्तं वेति । पलाशक्षारोदकयुक्तम् ॥ ४६ ॥

तिलान्सलवणांश्चैव घृतं षट्पलकं तथा ॥

तिलान्सलवणानिति । तिलनालक्षारोदकं सैन्धवं योज्यं सलवणमित्याहुः । घृतं षट्पलकं ज्वरोक्तम् ॥

प्लीहोदिष्टां क्रियां सर्वां यकृतः संप्रकल्पयेत् ॥ ४७ ॥

सुगमम् ॥ ४७ ॥

लशुनं पिप्पलीमूलमभयां चैव भक्षयेत् ॥
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ ४८ ॥

---

१ क. घ. तं । २ क. ख. 'मतिदा' ।

पिबेद्गोमूत्रगण्डूषमित्येतदनुपानम् ॥ ४८ ॥

शरपुङ्खायाः कल्कस्तक्रेण निषेवतो यथाग्निबलम् ॥
यदि न जयेत्प्लीहानं शैलोऽपि तदा जले प्लवते ॥ ४९ ॥

सुगमम् ॥ ४९ ॥

शार्ङ्गे(र्ङ्गी)ष्टानिर्यूहः ससैन्धवस्तिन्तिडीकसंमिश्रः ॥
प्लीहव्युपरमयोगः पक्वाम्ररसोऽथ वा समधुः ॥ ५० ॥

शार्ङ्गे(र्ङ्गी)ष्टानिर्यूह इति । शार्ङ्गीष्टा गुञ्जा काकजङ्घा वा । पक्वाम्ररसः समधुर्वा-तद्गुष्टे ॥ ५० ॥

रोहितकाभयाक्षोदभावितं मूत्रमम्बु वा ॥
पीतं सर्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत् ॥ ५१ ॥

क्षोदश्चूर्णं रोहितकहरीतक्योश्चूर्णकर्षेण पलद्वयमानं गोमूत्रमम्बु वा भाव्यं व्यवहारान्मूत्रं विरेचनार्थमम्बु शमनार्थमिति व्यवस्था ॥ ५१ ॥

दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक् ॥
विध्येत्प्लीहविनाशाय यकृन्नाशाय दक्षिणे ॥ ५२ ॥

दध्ना भोजनं पूर्वदिने तदहर्वा शोणितोत्क्लेशार्थम् । वामबाहुमध्य इति । कूर्परसंधेरधस्तात् ॥ ५२ ॥

प्लीहानं मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये ॥ ५३ ॥

प्लीहानं मर्दयेदिति । शिरायां विद्धायां तेन प्लीह्नो दुष्टं रक्तं निःसरति ॥५३॥

निकुम्भकुडवक्वाथप्रस्थे तत्कल्कसंयुतम् ॥
सर्पिः प्रस्थं पचेत्प्लीहकामलापाण्डुरोगनुत् ॥ ५४ ॥

दन्तीघृतम् ॥ ५४ ॥

चित्रकघृतमाह—

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत् ॥
आरनालं तु द्विगुणं दधिमण्डं चतुर्गुणम् ॥
पञ्चकोलकतालीसक्षारैर्लवणसंयुतैः ॥ ५५ ॥
द्विजीरकं निशायुग्मं मरिचं तत्र दापयेत् ॥
प्लीहगुल्मोदराध्मानपाण्डुरोगारुचिज्वरान् ॥ ५६ ॥
वस्तिहृत्पार्श्वकट्यूरुशूलोदावर्तपीनसान् ॥
हन्यात्पीतं तदर्शोघ्नं शोफघ्नं वह्निदीपनम् ॥
बलवर्णकरं चापि भस्मकं च नियच्छति ॥ ५७ ॥

तुलाक्वाथ इति । तुलायाः क्वाथे । आरनालं तु द्विगुणमिति । घृतापेक्षया काञ्जिकं द्विगुणम् । एवं दधिमण्डस्यापि चातुर्गुण्यम् । दधिमण्डो मस्तु । क्षारो यवक्षारः ।

लवणं सैन्धवम् । केचित्पुनरिह योगान्तरदर्शनाद्यवक्षारस्वर्जिकाक्षाराभ्यां लवणपञ्चकेन च व्यवहरन्ति—पञ्चकोलकतालीसं द्वौ क्षारौ लवणानि चेति । भस्मकं च नियच्छतीति । चित्रकघृतम् ॥ ९५ ॥ ९६ ॥ ९७ ॥

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम् ॥
पचेत्प्लीहाग्निसादादियकृद्रोगहरं परम् ॥ ९८ ॥

सुगमम् । पिप्पलीघृतम् ॥ ९८ ॥

रोहितकघृतमाह—

रोहितकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः ॥
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ५९ ॥
पलिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया ॥
रोहितकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ६० ॥
प्लीहातिवृद्धिं शमयेदेतदाशु प्रयोजितम् ॥
तथा गुल्मज्वरश्वासक्रिमिपाण्डुत्वकामलाः ॥ ६१ ॥

रोहितकस्य पञ्चविंशत्या पलैः कोलप्रस्थद्वयेन मिलित्वा सप्तपञ्चाशत्पलानि क्वाथ्यानि स्युः । शुष्कबदराभाव आर्द्रबदरप्रस्थद्वयं द्विगुणं ग्राह्यं तेष्वष्टगुणं जलं पादशेषः कषायो द्विपलाधिकचतुर्दशशरावैः । अन्ये तु जलद्रोण एव शेषमाढकं कषायमाहुः । वैद्यप्रसारके तु षोडशगुणं जलं विवृतम् । तैः सर्वैश्चापि तुल्ययेति । पञ्चपलया । पिष्टैरिति । पञ्चकोले रोहितकत्वचा पिष्टयेति ज्ञेयम् । रोहितकं घृतम् ॥ ५९ ॥ ६० ॥ ॥ ६१ ॥

महारोहितकघृतमाह—

रोहितकात्पलशतं क्षोदयेद्बदराढकम् ॥ ६२ ॥
साधयित्वा जलद्रोणे चतुर्भागावशेषितम् ॥
घृतप्रस्थं समावाप्य च्छागक्षीरं चतुर्गुणम् ॥ ६३ ॥
तस्मिन्दद्यादिमान्कल्कान्सर्वांस्तानक्षसंमितान् ॥
व्योषं फलत्रिकं हिङ्गु यवानीं तुम्बरुं विडम् ॥ ६४ ॥
अजाजीं कृष्णलवणं दाडिमं देवदारु च ॥
पुनर्नवां विशालां च यवक्षारं सपौष्करम् ॥ ६५ ॥
विडङ्गं चित्रकं चैव हपुषां चविकां वचाम् ॥
एतैर्घृतं विपक्वं तत्स्थापयेद्भाजने शुभे ॥ ६६ ॥
पाययेत्त्रिपलां मात्रां व्याधेर्बलमपेक्ष्य च ॥
रसकेनाथ यूषेण पयसा वाऽपि भोजयेत् ॥ ६७ ॥

१ क. ख. 'प्रयोज्य ।

उपयुक्ते घृते तस्मिन्व्याधीन्हन्यादिमान्बहून् ॥
यकृत्प्लीहोदरं चैव प्लीहशूलं यकृत्तथा ॥ ६८ ॥
कुक्षिशूलं हृदि शूलं पार्श्वशूलमरोचकम् ॥
विबन्धशूलं शमयेत्पाण्डुरोगं सकामलम् ॥ ६९ ॥
छर्द्यतीसारशमनं तन्द्राज्वरविनाशनम् ॥
महारोहितकं नाम प्लीहघ्नं श्रेष्ठमौषधम् ॥ ७० ॥

जलद्रोण इत्येतदावर्तनीयम् । तेन जलद्रोणद्वयेनेह रोहितकपलशतस्य बदराढकस्य च मिलित्वा क्राथो युक्तः । कृष्णलवणं सौवर्चलभेदः । महारोहितकं घृतम् ॥ ६२ ॥ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तत्रिंश उदराधिकारः समाप्तः ॥ ३७ ॥

---

## अथाष्टात्रिंशः शोथोदराधिकारः ।

उदर एवोपद्रवभूतशोथसंबन्धेन चिकित्साविशेषयोगाद्वृन्दः परिकल्प्य शोथोदरं दर्शयति—

हरीतकीनागरदेवदारुपुनर्नवाछिन्नरुहाकषायः ॥
सगुग्गुलुर्मूत्रयुतश्च पेयः शोथोदराणां प्रवरः प्रयोगः ॥ १ ॥

प्रतिदिनोपयोगे गुग्गुलोर्माषकचतुष्टयं गोमूत्रस्यार्धपलं कर्षो वा प्रक्षेपः । विरेचने तु कर्तव्ये प्रचुरत्वमनयोः ॥ १ ॥

एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा ॥
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च ॥ २ ॥

एरण्डतैलं दशमूलमिश्रमिति । दशमूलस्य क्वाथः । एरण्डतैलं प्रक्षेपः । गोमूत्रयुक्तस्त्रिफलारसो वेति । बद्धकोष्ठतायां गोमूत्रेणैव त्रिफलाक्वाथः कार्यः । योगोऽयं पित्तकफोदरे सशोथे युक्तः ॥ २ ॥

पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः ॥
सर्वाङ्गशोफोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥ ३ ॥

सुगमम् ॥ ३ ॥

पुनर्नवां दार्वभयां गुडूचीं पिबेत्समूत्रां महिषाक्षयुक्ताम् ॥
त्वग्दोषशोफोदरपाण्डुरोगस्थौल्यप्रसेकोर्ध्वकफामयेषु ॥ ४ ॥

पुनर्नवादीनां चूर्णं गुग्गुलुयुक्तं गोमूत्रेण पेयम्—

"गोमूत्रेणामृतादारुवर्षाभूचेतकीरजः ।
पिबेद्गुग्गुलुसंयुक्तं शोथोदरविनाशनम्" इति ॥

अत्र चेतकी हरीतकी ॥ ४ ॥

गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम् ॥
क्षीरान्नभुक्केवलमेव गव्यमूत्रं पिबेद्वा श्वयथूदरेषु ॥ ५ ॥

क्षीरं गवां वा त्रिफलाविमिश्रमिति । त्रिफलायाः क्वाथः कल्को वा क्षीरमात्रेणान्नभुक् ॥ ५ ॥

पुराणं माणकं पिष्ट्वा द्विगुणीकृततण्डुलम् ॥
साधितं क्षीरतोयाभ्यामभ्यसेत्पायसं तु तत् ॥ ६ ॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ॥
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥ ७ ॥

पुराणमाणकमालूकं पलमानं पिष्टतण्डुलपलद्वयं च मनाक्चूर्णितं क्षीरतोयाभ्यां साधयित्वा पायसः कार्यः । अस्योपयोगेऽपरमन्नं व्यञ्जनं च नाश्नीयादित्याहुः । योगोऽयं शोथमात्रेण प्रचरति ॥ ६ ॥ ७ ॥

पुनर्नवादार्व्यमृता पाठा बिल्वं श्वदंष्ट्रिका ॥
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम् ॥ ८ ॥
समभागानि संचूर्ण्य गवां मूत्रेण ना पिबेत् ॥
बहुप्रकारं शोथं च सर्वगात्रविसारिणम् ॥
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोद्धतानपि* ॥ ९ ॥

सुगमम् ॥ ८ ॥ ९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टात्रिंशः शोथोदराधिकारः समाप्तः ॥ ३८ ॥

* ख. पुस्तके—दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति । तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च ॥ १ ॥ शालिषष्टिकगोधूमयवनीवारभोजनम् । विरेकास्थापनं श्रेष्ठं सर्वेषु जठरेषु च ॥ २ ॥ औदकानूपजं मांसं शाकपिष्टकृतं तिलम् । व्यायामाध्वदिवास्वप्नयानयानं च वर्जयेत् ॥ ३ ॥ तथोष्णलवणाम्लानि विदाहीनि गुरूणि च । नाद्यादन्नानि जठरी तोयपानं च वर्जयेत् ॥ ४ ॥ इत्यधिकमत्र ।

---

१ क, ख. 'दाऽमृता पाठा दारु विश्वं श्व' ।

## अथैकोनचत्वारिंशः शोथाधिकारः ।

उदर उपद्रवरूपतया शोफस्य संभवात्तदनन्तरं शोथः । अयं च शोफः सर्वाङ्गसरणयोग्यो व्रणशोथाद्भिन्नः ॥

शुण्ठीपुनर्नवैरण्डपञ्चमूलशृतं जलम् ॥
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे ॥ १ ॥

पञ्चमूलं महदुष्णवीर्यतया विशेषेण वातयौगिकत्वात् । पानाहारपरिग्रह इति । अन्नपानसंस्कारे ॥ १ ॥

क्षीराशिनः पित्तकृते तु शोथे त्रिवृद्गुडूचीत्रिफलाकषायम् ॥
पिबेद्गवां मूत्रविमिश्रितं वा फलत्रिकाचूर्णमथाक्षमात्रम् ॥ २ ॥

सुगमम् ॥ २ ॥

पुनर्नवाविश्वत्रिवृद्गुडूचीशम्याकपथ्यामरदारुकल्कम् ॥
शोथे कफोत्थे महिषाक्षमूत्रयुक्तं पिबेद्वा सलिलं तथैषाम् ॥ ३ ॥

पुनर्नवादीनां कल्कं गुग्गुलुमूत्रयुक्तं पिबेत् । पिबेद्वा सलिलं तथैषामिति । एषां पुनर्नवादीनां क्वाथं वा गुग्गुलुगोमूत्रे प्रक्षिप्य पिबेत् ॥ ३ ॥

कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः ॥
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनं च ॥ ४ ॥

सिकता वालुका । पुराणपिण्याकः पुराणसर्षपखलिः । शिग्रोस्त्वक्सौभाञ्जनत्वक् । कुलत्थशुण्ठीजलं कुलत्थशुण्ठ्योर्मिलितयोः क्वाथः । क्वाथमूत्राभ्यां प्रत्येकं मिलित्वा वा परिषेकः । चण्डा चौरपुष्पिका ॥ ४ ॥

अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः ॥
शोथं प्रवृद्धं चिरजं त्रिदोषं निघ्नन्ति भूनिम्बमहौषधे च ॥ ५ ॥
पिप्पल्यादिरजोनाम्ना चरके पठ्यते त्वयम् ॥
योगोऽत्र चविकास्थाने ग्राह्या मातङ्गपिप्पली ॥ ६ ॥

सुखतोयमुष्णोदकम् । उष्णोदकविधौ च तन्त्रान्तरम्—

"क्वाथ्यमानं च यत्तोयं निष्फेनं निर्मलीकृतम् ।
चतुर्थांशावशिष्टं तु तदुष्णोदकमिष्यते" इति ॥

अजाज्यादीनां चूर्णमुष्णोदकेन पेयम् । भूनिम्बमहौषधे चेति । कल्कोऽयमुष्णोदकेन पेयः । चविकायाः पुनः स्थाने ग्राह्या मातङ्गपिप्पलीति वृन्दः । मातङ्गपिप्पली हस्तिपिप्पली । टिप्पणिका वृन्दस्य नातिहृदयंगमा । यतश्चरके शोथचिकित्सिते पिप्पल्यादिचूर्णे गजपिप्पलीशब्देन चव्येव व्याख्याता टीकाकृद्भिः । किं च पञ्चकोलं चवीं विना क्वचिन्नोक्तम् । निघण्टावपि हस्तिपिप्पलीति चव्याः

पर्यायोऽस्ति । त्रिदोषमिति । वातादिभिः प्रत्येकं मिलितैर्वा कृतं त्रिदोषजशोथस्यापि साध्यत्वेनोक्तत्वात् ॥ ५ ॥ ६ ॥

आर्द्रकस्य रसः पीतः पुराणगुडमिश्रितः ॥
अजाक्षीराशिनः शीघ्रं सर्वशोथहरो भवेत्* ॥ ७ ॥

आर्द्रकस्य रसः पीत इति । आर्द्रकस्य रसो यथार्हमात्रया पुराणगुडेन समेन सहोपयोज्यः ॥ ७ ॥

पुनर्नवादारुशुण्ठीक्वाथे मूत्रेऽथ केवले ॥
दशमूलरसे वाऽपि गुग्गुलुः शोथनाशनः ॥ ८ ॥

मूत्रेऽथ केवल इति । मूत्रं स्त्रीगवीभवं ग्राह्यं लाघवात्तीक्ष्णत्वाच्च ।
यदुक्तम्—"लाघवं जातिसामान्ये स्त्रीणां पुंसां च गौरवम् ।
स्त्रीणां मूत्रं गवां तीक्ष्णं न तु पुंसां तथाविधम् ॥
†चितास्मिकाः स्त्रियो यस्मात्सौम्यास्तु पुरुषाः स्मृताः" इति ॥ ८ ॥

बिल्वपत्ररसं पेण्डु सोषणं श्वयथौ त्रिजे ॥
विट्सङ्गे चैव दुर्नाम्नि विदध्यात्कामलासु च ॥ ९ ॥

सोषणमिति । समरीचम् ॥ ९ ॥

गुडपिप्पलिशुण्ठीनां चूर्णं श्वयथुनाशनम् ॥
आमाजीर्णप्रशमनं शूलघ्नं बस्तिशोधनम् ॥ १० ॥

सुगमम् ॥ १० ॥

पुरं मूत्रेण संसेव्यं पिप्पली वा पयोन्विता ॥
गुडेन वाऽभया तुल्या विश्वं वा शोथरोगिणाम् ॥ ११ ॥

पिप्पली वा पयोन्वितेति । वर्धमानक्रमेणेतरकल्कबद्धा पिप्पली सेव्या ॥ ११ ॥

गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा ॥
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥१२॥
शोथप्रतिश्यायगलास्यरोगा-
न्सश्वासकासारुचिपीनसादीन् ॥
जीर्णज्वरार्शोग्रहणीविकारा-
न्हन्यात्तथाऽन्यान्कफवातरोगान् ॥ १३ ॥

---

* ख. पुस्तके—तथा च चरकः—कृष्णा सपाठा गजपिप्पली च निदिग्धिका नागरचित्रकं च ।
सपिप्पलीमूलरजन्यजाजीमुस्तं च चूर्णं सुखतोयपीतम् ॥ १ ॥ पीतं त्रिदोषं चिरजं च शोफं कुष्ठं च चूर्णस्य हि संप्रयोगात् । मांसै रसैर्धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥ २ ॥ इत्यधिकमत्र ।
† तन्त्रान्तराच्छोधनीयम् । पित्तात्मिका इति भाति ।

---

१ घ. 'शिला श्री' । २ क. पूर्त ।

कर्षाभिवृद्ध्या त्रिपलप्रमाणमिति । गुडार्द्रकादयस्तुल्यभागाः सन्तः प्रतिदिनं मेलयित्वा कर्षेण वर्धयितव्याः । एवं द्वादशभिर्दिनैस्त्रिपलं भवति । ततस्त्रिपलमेव पक्षं मासं वा यावत्खादन् । किंवा प्रथमं कर्षं खादन् । ततः कतिचिद्दिनानि कर्षस्यैवाभ्यासः । ततः परमपरकर्षं वर्धयेत् । तस्यापि पुनरभ्यासः । एवं कर्षेण कर्षेण वृद्ध्या यथा पक्षेण मासेन वा त्रिपलं स्यात्तथा विधेया वृद्धिः । अन्ये त्वाहुः—पक्षमथापि मासमित्यत्राथशब्दः कार्त्स्न्ये अपिशब्दः समुच्चये । तेन मासं पक्षं च मासार्धमासं वाण्या इ(द्यादि)त्यर्थः । सार्धमासेन त्रिपलं कर्षोपयोगात्प्रभृति प्रत्यहं माषचतुष्टयविधिना भवति । अत्र व्याख्याने कर्षादारभ्य माषकचतुष्टयमेव वृद्धिर्नाधिका । व्यवहारोऽपीत्थं प्रायः । कर्षे तु गुडनागरयोरर्धपला वृद्धिरप्युक्ता । तद्यथा—

"पक्षविवृद्धं चाऽऽर्द्रकमद्याद्दशवासराणि गुडेन समम् ।
पञ्चपलमेव ततो द्विदशाहात्सरसप्रेश(?)मुद्राशीति" ॥ १२ ॥ १३ ॥

**स्थलपद्ममयं कल्कं पयसाऽऽलोड्य पाययेत् ॥**
**प्लीहामयहरं चैव सर्वाङ्गैकाङ्गशोथजित् ॥ १४ ॥**

स्थलपद्ममयं कल्कमिति । स्थलपद्मं माणकम् । अस्य पुराणमालुकं ग्राह्यम् ॥ १४ ॥

**क्षीरं शोथहरं दारुवर्षाभूनागरैः शृतम् ॥**
**पेयं वा चित्रकव्योषवृद्धदारुप्रसाधितम् ॥ १५ ॥**

सुगमम् ॥ १५ ॥

**सिंहास्यामृतभण्टाकीक्वाथं पीत्वा समाक्षिकम् ॥**
**कृच्छ्रं शोथं जयेज्जन्तुः श्वासं कासं ज्वरं वमिम् ॥ १६ ॥**

सिंहास्यो वासा । भण्टाकी कण्टकारी ॥ १६ ॥

**भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्वाथः ॥**
**अपहरति नियतमाशु श्वयथुं सर्वाङ्गगं नृणाम्* ॥ १७ ॥**

पेयः पुनर्नवाक्वाथ इति । अनुपानमिदम् । एतच्च पुनर्नवामूलकर्षे निष्क्वाथ्य कार्यम् । अतोऽधिकमात्रयाऽनुकरणे भूरिभेषजत्वादग्निवधादिदोषः स्यात् । एवं सर्वत्र क्वाथेऽनुपाने ज्ञेयम् ॥ १७ ॥

**त्रिफलायोरजःक्षारैः शोथजित्त्रिफलारसः ॥**

त्रिफलारस इति । त्रिफलाक्वाथे त्रिफलाचूर्णादीनां प्रक्षेपः ।

**यष्टीदुग्धतिलैर्लेपो नवनीतेन संयुतः ॥**
**शोथमारुष्करं हन्ति वृन्तैः शालदलस्य वा ॥ १८ ॥**

---

* ख. पुस्तके—सेकस्तथाऽर्कवर्षाभूनिम्बक्वाथेन शोथजित् । इत्यधिकमत्र ।

यष्टी यष्टीमधुः । शोथमारुष्करमिति । भल्लातजं शोथम् । वृन्तैः शालदलस्य वेति पृथग्योगः ॥ १८ ॥

शोथे विषनिमित्ते तु विषोक्ता शस्यते क्रिया ॥ १९ ॥

सुगमम् ॥ १९ ॥

पुनर्नवाचित्रकदेवदारुपञ्चोषणक्षारहरीतकीनाम् ॥
कल्केन पक्कं दशमूलतोये घृतोत्तमं शोथनिषूदनं च* ॥ २० ॥

पञ्चोषणं पञ्चकोलम् । पुनर्नवाद्यं घृतम् ॥ २० ॥

रसे विपाचयेत्सर्पिः पञ्चकोलकुलत्थयोः ॥
पुनर्नवायाः कल्केन घृतं शोथविनाशनम् ॥ २१ ॥

सुगमम् । पञ्चकोलाद्यं घृतम् ॥ २१ ॥

सचित्रका धान्ययवानिपाठाः
सदीप्यकास्त्र्यूषणवेतसाम्लाः ॥
बिल्वात्फलं दाडिमयावशूकं
सपिप्पलीमूलमथापि चव्यम् ॥ २२ ॥
पिष्ट्वाऽक्षमात्राणि जलाढकेन
पक्त्वा घृतप्रस्थमथोपयोज्यम् ॥
अर्शांसि गुल्मं श्वयथुं च कृत्स्नं
निहन्ति वह्निं च करोति दीप्तम् ॥ २३ ॥

दीप्यकं जीरकम् । वेतसाम्लोऽम्लवेतसः । बिल्वात्पलमस्य पाठे बिल्वं पलमानं शेषद्रव्यं तु कार्षिकम् । चित्रकाद्यं घृतम् ॥ २२ ॥ २३ ॥

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन ॥
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ॥
अर्शोतिसारानिलगुल्ममेहांस्तद्धन्ति संवर्धयते च वह्निम् ॥ २४ ॥

घटे चित्रकमूलकल्कलेपं तिलोत्सेधं मानमुपदिशन्ति । दध्यागतं दधिभावमागतम् । तेनेति तद्दधिमन्थनोत्थेन । एतच्च तक्रेणेत्यनेन सह योज्यम् । तेन तक्रेणेत्यर्थः । चित्रकं घृतम् ॥ २४ ॥

माणकघृतमाह—

माणककाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ॥
एकजं द्वंद्वजं शोथं त्रिदोषं च व्यपोहति ॥ २५ ॥

---

* ख. पुस्तके—भल्लातश्वयथुं हन्ति ध्रुवमाश्वत्थधावनात् । महिषीक्षीरपिष्टैर्वा नवनीतसमन्वितैः ॥ १ ॥ भल्लातककृतः शोथस्तिलैर्लिप्तः प्रशाम्यति । इत्यधिकमत्र ।

माणकाल्कक्काथार्थमष्टगुणं जलं न तु मृदुत्वाच्चतुर्गुणं तथा सति यवागूवत्क्काथः स्यात्। माणकाल्कं चाऽऽर्द्रमेव सर्वत्र ग्राह्यम्। माणकघृतम् ॥ २१ ॥

शैलेयाद्यं तैलमाह—

शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः ॥
प्रियंगुथौणेयकहेममांसीतालीसपत्रप्लवधान्यपत्रैः ॥ २६ ॥
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चापि यथोपलाभम् ॥
वातात्मकेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥२७॥

कौन्ती रेणुकम्। त्वगुडत्वक्। पलाशः शठी। थौणेयकं ग्रन्थिपर्णम्। एतच्छन्दोनुरोधादिह सकाररहितं ज्ञेयम्। प्लवः कैवर्तमुस्तकः। श्रीवेष्टको नवनीतखोटिः। ध्यामकं गन्धतृणम्। सुपिष्टैः शैलेयादिभिस्तैलं सिद्धमुपदिशन्ति तैरेव सुपिष्टैः प्रदेहमप्युशन्ति। उशन्तीच्छन्ति। शैलेयाद्यं तैलम् ॥ २६ ॥ २७ ॥

शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः ॥
पक्वमभ्यञ्जनात्तैलं समूलं शोथनाशनम् ॥ २८ ॥

शुष्कमूलकाद्यं तैलम् ॥ २८ ॥

कंसहरीतकीमाह—

द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानां च शतं गुडाच्च ॥
लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च ॥ २९ ॥
प्रस्थार्धमात्रं मधुनः सुशीते किंचिच्च चूर्णादपि यावशूकात् ॥
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥ ३० ॥
श्वासज्वरारोचकमेहगुल्मान्प्लीहत्रिदोषोदरपाण्डुरोगान् ॥
कार्श्यामवातावसृगम्लपित्तवैवर्ण्यमूत्रानिलशुक्रदोषान् ॥ ३१ ॥
सांनिध्यान्मधुनो मानं व्योषादेर्मिलितस्य च ॥
किंचिच्च कर्षपर्यायः शुक्तिरर्धपलं मता ॥ ३२ ॥
दशमूलीहरीतक्यास्तु(तु)ल्या कंसहरीतकी ॥
मानं तेनात्र तत्रत्यं चरके प्राह जैज्जटः ॥ ३३ ॥

कषाये कंस इति। पादशेषेणाऽऽढकमानं क्वाथे। एतावन्मानश्च क्वाथो दशमूले चतुःषष्टिपलमाने क्वाथ्यमाने भवति। अभयागुडकानां शतं गुडाच्च शतम्। व्योषत्रिसुगन्धयोरिति(ह) मानस्यानिर्देशेऽपि लेहान्तरोक्तचूर्णमानानुसारेण मानं ज्ञेयम्। तथाग-स्त्यहरीतक्यां गुडतुलायां पिप्पलीचूर्णकुडव उक्तस्तद्वदिहापि गुडपलशते व्योषस्य कटुत्र-यस्य मिलित्वा कुडवः। च्यवनप्राशे सार्धपञ्चाशत्पले चातुर्जातस्य पलमुक्तं तद्वदि-

१ क. घ. शुष्के। २ क. घ. तथा।

ह्यपि गुडपलशते द्विपलं मिलित्वा त्रिसुगन्धं यावच्छूकस्तु किंचिच्छब्दस्याल्पवचनाद-प्रोक्तव्योषादिचूर्णार्धमानः किंवा किंचिच्छब्दः कर्षपर्यायः । तेन यवक्षारस्य कर्षो ग्राह्यः । वृन्दस्तु 'सांनिध्यान्मधुनो मानं व्योषादेर्मिलितस्य तु' इत्यनेन व्योषत्रि-सुगन्धयोरष्टपलत्वं ब्रूते । यवक्षारस्तु कर्षमान एवेति तस्याऽऽशयः । जातूकर्ण्यसंवा-दात्पुनस्त्र्यूषणयवक्षाराणां प्रत्येकं पलं त्रिसुगन्धि च प्रत्येकं कर्षमानम् ।

तथाच जातूकर्णः—"दशमूलकषायस्य कंसे पथ्याशतं गुडात् ।
तुलां पञ्चशतो दद्याद्व्योषक्षारचतुष्पलम् ॥
त्रिसुगन्धि सुवर्णांशं प्रस्थार्धं मधुनो हिमे" इत्यादि ॥

अत्र चतुष्पलं मिलित्वा सुवर्णांशं प्रत्येकं प्रचारश्चेत्थमेव ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥

दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥
तुलां गुडाद्धनव्योषयवक्षारचतुष्पलम् ॥ ३४ ॥
त्रिजातकं सुवर्णांशं प्रस्थार्धं मधुनो हिमे ॥ ३५ ॥
दशमूलहरीतक्यः शोथान्हन्युः सुदुर्जयान् ॥
ज्वरारोचकमेहार्शःकुष्ठपाण्डूदरामयान् ॥ ३६ ॥

दशमूलहरीतकी ॥ ३४ ॥ ३५ ॥ ३६ ॥

पुनर्नवामृतादारुदशमूलजलाढके ॥
आर्द्रकस्वरसप्रस्थे गुडस्य तु तुलां पचेत् ॥ ३७ ॥
तत्सिद्धं व्योषपत्रैलात्वक्चव्यैः कार्षिकैः पृथक् ॥
चूर्णीकृतैः क्षिपेच्छीते मधुनः कुडवं लिहेत् ॥ ३८ ॥
लेहः पौनर्नवो नाम शोथशूलनिषूदनः ॥
कासश्वासारुचिहरो बलवर्णाग्निवर्धनः ॥ ३९ ॥

सुगमम् । पुनर्नवालेहः ॥ ३७ ॥ ३८ ॥ ३९ ॥

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवा स्वप्नमजाङ्गलं च ॥
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्जयेच्च ॥ ४० ॥
ग्राम्याजानूपपिशितलवणं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि च कृशरं विज्जलं मद्यमम्लम् ॥
धानावल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
स्वप्नं चारात्रौ श्वयथुगदवान्वर्जयेन्मैथुनं च ॥ ४१ ॥ *

---

* ख. पुस्तके—अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् । नारीं शोफो मुखाद्धन्ति कुक्षिगुह्या-दुभावपि ॥ १ ॥ इत्यधिकमत्र ।

अजाङ्गलं चेत्यतः परं मांसमिति शेषः । स्त्रियो ढाकुमिति केचित्पठन्ति ॥ ४० ॥ ४१ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्री-
कण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकोनच-
त्वारिंशः शोफाधिकारः समाप्तः ॥ ३९ ॥

## अथ चत्वारिंशत्तमो वृद्ध्यधिकारः ।

शोथप्रकारत्वादथ वृद्धिः । वृद्धिः कुरण्ड इति लोके ।

गुग्गुलुं रुबुतैलं वा गोमूत्रेण पिबेन्नरः ॥
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥ १ ॥

सुगमम् ॥ १ ॥

सक्षीरं वा पिबेत्तैलं मासमेरण्डसंभवम् ॥

सुगमम् ॥

तैलं नारायणं योज्यं पानाभ्यञ्जनबस्तिषु ॥ २ ॥

सुगमम् ॥ २ ॥

चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ॥
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ॥ ३ ॥

सुगमम् ॥ ३ ॥

पञ्चवल्कलकल्केन सघृतेन प्रलेपनम् ॥

सुगमम् ॥

सर्वं पित्तहरं कार्यं रक्तजे रक्तमोक्षणम् ॥ ४ ॥

रक्तजे रक्तमोक्षणमिति । अपक्वे रक्तजे रक्तस्रवणं जलौकाभिः कार्यम् । तथा च सुश्रुतः—मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेदिति ॥ ४ ॥

श्लेष्मवृद्धिं तूष्णवीर्यैर्मूत्रपिष्टैः प्रलेपयेत् ॥

उष्णवीर्यैरिति । अजगन्धादिभिर्मिश्रकोक्तैः । अन्यैश्चाऽऽरग्वधादिभिः ॥

पीतदारुकषायं च पिबेन्मूत्रेण संयुतम् ॥ ५ ॥

गोमूत्रेणैव पीतदारुक्वाथः कार्य इत्याहुः । मूत्रस्य तु प्रक्षेपो युक्तः । पीतदारु देवदारु । डल्लणस्त्विति व्याचष्टे—गोमूत्रक्वथितस्यैव दारुहरिद्राकषायस्य पलं पीतदारुस्थाने केचिद्देवदारु पठन्ति ॥ ५ ॥

स्विन्नं मेदःसमुत्थं तु लेपयेत्सुरसादिना ॥
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥ ६ ॥

पत्रपुटबद्धगोमयपिण्डादिना स्विन्नं सुरसादिगणेन गोमूत्रेण पिष्टेन शिरोविरेचनद्रव्यैर्गोमूत्रपिष्टैः सुखोष्णैर्वा लेपयेत् । शिरोविरेचनद्रव्याणि पिप्पलीविडङ्गापामार्गशिग्रुशिरीषसिद्धार्थकादीनि सुश्रुते संशोधनसंशमनीयोक्तानि । मूत्रमिह शिरोविरेचनद्रव्यत्वेन लब्धमपि पुनः पेषणार्थमुक्तम् ॥ ६ ॥

संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत् ॥
सीवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ॥ ७ ॥

संस्वेदनं कर्तव्यं शस्त्रकर्मवेदनानिवारणार्थं त्वगादिमृदुकरणार्थं च । मूत्रप्रभवां मूत्रसंधारणजाम् । वस्त्रपट्टेन वेष्टनं कर्मसौकर्यार्थम् । व्रीहिमुखेन शस्त्रविशेषेण विध्येत् । व्यधश्च मूत्रस्रावणार्थम् । एतदनन्तरं यदाह सुश्रुतः—

"अथात्र द्विमुखीं नाडीं दत्त्वा विस्रावयेद्भिषक् ॥
मूत्रं नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत्" इति ॥ ७ ॥

प्राप्तफलकोषाया अन्त्रवृद्धेरसाध्यत्वादप्राप्तफलकोषायास्तस्याश्चिकित्सामाह—

मुष्ककोशमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः ॥
वातवृद्धिक्रमं कुर्याद्दाहं तत्राग्निना हितम् ॥ ८ ॥

वातवृद्धिक्रमः स्नेहपानादिरनुवासनान्तः । तत्राग्निना दाहं कुर्यात् । अत्रार्थे सुश्रुतः—

"तप्तया वङ्क्षणस्थानं दहेदर्धेन्दुवक्रया ॥
सम्यङ्मार्गावरोधार्थं कोशप्राप्तां तु वर्जयेत्" इति ॥ ८ ॥

शङ्खोपरि च कर्णान्ते त्यक्त्वा सीवनिमादरात् ॥
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ९ ॥

शङ्खभ्रुवोरन्तोपरि कर्णललाटयोर्मध्ये । त्यक्त्वा सीवनिमादरादिति । केशान्तसीवनीयं मर्मत्वात्परित्यज्य । व्यत्यासाद्वेति । वामकोषे वृद्धौ दक्षिणे दक्षिणकोषे वृद्धौ वामे यदा पुनरुभयतो वृद्धिस्तदोभयभागव्यधः । वाशब्दो वृद्ध्यन्तरापेक्षया । अन्त्रवृद्धिनिवृत्तये वङ्क्षणस्थाया इति वाक्यशेषः ॥ ९ ॥

अङ्गुष्ठमध्ये त्वक्छित्त्वा दहेदङ्गविपर्यये ॥ १० ॥

अङ्गुष्ठमध्ये त्वक्छित्त्वेति । हस्ताङ्गुष्ठमध्ये त्वङ्मात्रं छित्त्वा दहेत् । अस्मादेव निर्देशात्त्वक्शब्दो नपुंसकोऽप्यस्तीत्युन्नीयते । त्वचं छित्त्वाऽङ्गुष्ठमध्य इति पुनः पाठः साधुः । अङ्गविपर्यय इत्यत्र विपर्ययार्थः पूर्ववत् ॥ १० ॥

रास्नायष्ट्यमृतैरण्डबलागोक्षुरसाधितः ॥
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः ॥ ११ ॥

सुगमम् ॥ ११ ॥

तैलमेरण्डजं पीत्वा बलासिद्धं पयोन्वितम् ॥
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः* ॥ १२ ॥

सुगमम् ॥ १२ ॥

हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम् ॥
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ १३ ॥

मूत्रसिद्धां गोमूत्रस्विन्नाम् । सतैलां सैरण्डतैलाम् । योगोऽयं विरेचनार्थं गोमूत्रेणैव पेयः । कल्करूपोऽप्ययमुष्णोदकानुपानः सेव्यः ॥ १३ ॥

गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैन्धवचूर्णयुक्ताम् ॥
खादेन्नरः कोष्णजलानुपानामिहन्ति वृद्धिं चिरजां प्रवृद्धाम् ॥ १४ ॥

सुगमम् ॥ १४ ॥

त्रिफलाक्वाथगोमूत्रं पिबेत्प्रातरतन्द्रितः ॥
कफवातोत्थितं हन्ति श्वयथुं वृषणोद्भवम् ॥ १५ ॥

त्रिफलाक्वाथगोमूत्रमिति । त्रिफलायाः क्वाथे गोमूत्रप्रक्षेपः ॥ १५ ॥

सरलागुरुकुष्ठानि देवदारु महौषधम् ॥
मूत्रारनालसंपिष्टं शोफघ्नं कफवातजित् ॥ १६ ॥

सरलं सरलकाष्ठम् । मूत्रारनालसंपिष्टमिति । गोमूत्रकाञ्जिकाभ्यां मिलित्वा पिष्टम् । लेपोऽयम् ॥ १६ ॥

भृष्टो रुबूकतैलेन कल्कः पथ्यासमुद्भवः ॥
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः† ॥ १७ ॥

सुगमम् ॥ १७ ॥

गव्यं घृतं सैन्धवसंप्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात् ॥
सप्ताहमादित्यकरैर्विपक्वं निहन्ति कौरण्डमतिप्रवृद्धम् ॥ १८ ॥

शम्बूकभाण्ड इति । शम्बूक एव भाण्डं तत्र ढक्कणिकां स्फोटयित्वाऽन्तर्जन्तुयुक्ते निहितम् । लेपोऽयम् ॥ १८ ॥

वचासर्षपकल्केन प्रलेपः शोथनाशनः ॥ १९ ॥

सुगमम् ॥ १९ ॥

संप्रति वर्ध्मनो लक्षणं निर्दिशति—

---

* ख. पुस्तके—इन्द्रायुधरविक्षीरमिश्रैश्चणकसक्तुभिः । सिन्दूरसैन्धवोपेतैर्लेपो हन्ति कुरण्डजम् ॥ १ ॥ इत्यधिकमत्र ।

† ख.पुस्तके—त्र्यूषणं पिप्पलीमूलं देवदारु फलत्रिकम् । कषायं पाययेद्ध्येष सक्षारलवणत्रिकम् ॥ १ ॥ त्रिभिर्मासैः प्रशाम्येत वृद्धिर्वातकफात्मिका । इत्यधिकमत्र ।

---

१ क. °वचूर्णयु° ।

अत्यभिष्यन्दिगुर्वामसेवनान्निचयं गतः ॥
करोति ग्रन्थिवच्छोफं दोषो वङ्क्षणसंधिषु ॥
ज्वरशूलाङ्गसादाढ्यं तं वर्ध्ममिति निर्दिशेत् ॥ २० ॥

रुग्विनिश्चयेऽनुक्तत्वाल्लक्षणं लिखितवान्वृन्दः। वर्ध्म वाङ्ोसीति लोके ॥ २० ॥

मूलं बिल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधारुष्करम् ॥
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितं
पीतं काञ्जिककोष्णतोयमथितैश्चूर्णीकृतं वर्ध्मजित् ॥ २१ ॥

बिल्वादीनां शिग्रुकतर्वन्तानां सर्वेषां मूलम्। अरलुकः श्योनाकः। श्यामा वृद्धदारुकः। काञ्जिककोष्णतोयमथितानामन्यतमेन प्रकृत्याद्यपेक्षया पानम् ॥ २१ ॥

अविक्षीरेण गोधूमकल्कं कुन्दुरुकस्य च ॥
प्रलेपनं सुखोष्णं स्याद्वर्ध्मशूलहरं परम् ॥ २२ ॥

अविक्षीरेण पिष्ट्वा गोधूमकुन्दुरुणीलेप एको योगः। वाशब्दो योगान्तरापेक्षया। अत एव क्वचिच्चकारः पठ्यते। कल्कमिति निर्देशात्कल्कशब्दो नपुंसकोऽप्यस्तीति गम्यते। कुन्दुरु स्वनामख्यातम् ॥ २२ ॥

मृतमात्रे तु वै काके विशस्ते तु प्रवेशयेत् ॥
वर्ध्मं मुहूर्तं मेधावी तत्क्षणादरुजं भवेत् ॥ २३ ॥

मृतमात्र इति। सद्यो मारिते। विशस्ते पाटिते। काकस्य क्रोडं पाटयित्वा तत्र क्रोडे वर्ध्म प्रवेशनीयम्। तत्प्रबन्धः कार्यः ॥ २३ ॥

सैन्धवादितैलमाह—

सैन्धवं मदनं कुष्ठं शताह्वा निचुलं वचा ॥
ह्रीवेरं मधुकं भार्गी देवदारु सनागरम् ॥ २४ ॥
कट्फलं पौष्करं मेदा चविका चित्रकं शठी ॥
विडङ्गातिविषे श्यामा रेणुका नीलिनी स्थिरा ॥ २५ ॥
बिल्वाजमोदे कृष्णा च दन्ती रास्ना च तैः समैः ॥
साध्यमेरण्डजं तैलं तैलं वा कफवातनुत् ॥ २६ ॥

निचुलो वेतसः श्यामा त्रिवृद्वृद्धप्रसारके व्याख्याता। नीलिनी नीलबुह्मा। तैलं वा कफवातनुदिति। तिलतैलं जलेन पाकः। बृहत्सैन्धवाद्यं तैलम् ॥ २४ ॥ २५ ॥ २६ ॥

वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाममारुतान् ॥
आनाहमश्मरीं चैव हन्यात्तदनुवासनम् ॥
घृतं सौरेश्वरं योज्यं वर्ध्मवृद्धिनिवृत्तये ॥ २७ ॥

---

१ घ. 'हाव्यमा'। २ क. घ. 'सनात्'। ३ क. सर्वेश्वरं नाम।

सुगमम् । सुश्रुते वृद्धिषु परिहार्यमुक्तम् ।

तद्यथा—"अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम् ।

अत्यासनं चंक्रमणमुपवासं गुरूणि च" इति ॥

चंक्रमणं गमनम् ॥ २७ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
चत्वारिंशो वृद्ध्यधिकारः समाप्तः ॥ ४० ॥

---

## अथैकचत्वारिंशो गलगण्डाद्यधिकारः ।

---

शोफाधिकाराद्गलगण्डादयः ।

यवमुद्गपटोलादि कटुरूक्षं च भोजनम् ॥
छर्दिं सरक्तमुक्तिं च गलगण्डे प्रयोजयेत् ॥ १ ॥

रूक्षभोजनोपदेशः कफवातमेदःकारणत्वाद्गलगण्डस्य । छर्दिमिति वान्तिम् । रक्तमुक्तिर्जलौकादिभिः ॥ १ ॥

निचुलं शिग्रुबीजानि दशमूलमथापि वा ॥
आलेपनं वातगण्डे सुखोष्णं संप्रशस्यते ॥ २ ॥

सुगमम् ॥ २ ॥

देवदारुविशाले च कफगण्डे प्रलेपनम् ॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः ॥
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥३ ॥

लेपोऽयं वक्ष्यमाणश्च लेपः कोष्णः कार्यः ॥ ३ ॥

सर्षपाञ्शिग्रुबीजानि शणबीजातसीयवान् ॥
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥ ४ ॥
गण्डानि ग्रन्थयश्चैव गण्डमालाः समुत्थिताः ॥
प्रलेपातेन शाम्यन्ति विलयं यान्ति वाऽचिरात् ॥ ५ ॥

सुगमम् ॥ ४ ॥ ५ ॥

जीर्णकर्कारुकरसं बिडसैन्धवसंयुतम् ॥
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥ ६ ॥

कर्कारुस्तिक्ततुम्बी कूष्माण्डभेदो वा । तरुणमिति जातमात्रम् ॥ ६ ॥

जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम् ॥
पिबेत्कोद्रवतक्राशी गलगण्डोपशान्तये ॥ ७ ॥

जलकुम्भीकं पान्ही तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिबेत् ॥ ७ ॥

महिषीमूत्रविमिश्रं लोहमलं संस्थितं घटे मासम् ॥
अन्तर्धूमविदग्धं लिह्यान्मधुनाऽथ गलगण्डे ॥ ८ ॥

सुगमम् ॥ ८ ॥

मूर्वावर्तरसोनाभ्यां गलगण्डोपनाहनम् ॥
स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥ ९ ॥

गलगण्डोपनाहनमिति । उपनाहनं बहलोष्णः प्रलेपः । स्फोटास्रावैरित्युपनाहनकृतैः ॥ ९ ॥

तैलं पिबेच्चामृतवल्लिनिम्बहंसाह्वयावृक्षकपिप्पलीभिः ॥
सिद्धं बलाभ्यां च सदेवदारु हिताय नित्यं गलगण्डरोगे ॥ १० ॥

हंसाह्वया हंसपादी । तैलं पिबेत्सिद्धमिति संबन्धः । दूरस्थानामपि पदानामेकीकरणं योग इति तन्त्रयुक्तेः । अमृताद्यं तैलम् ॥ १० ॥

जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्तिताः ॥ ११ ॥
तासां स्थूलशिरे कृष्णे छिन्द्यात्ते च शनैः शनैः ॥
बडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान् ॥ १२ ॥
स्रुते रक्ते व्रणे तस्मिन्दद्यात्सगुडमार्द्रकम् ॥
भोजनं चानभिष्यन्दि यूषः कौलत्थ इष्यते ॥ १३ ॥

दद्यात्सगुडमार्द्रकमिति । गुडार्द्रकं चर्वणेन प्रचरति ॥ ११ ॥ १२ ॥ १३ ॥

कर्णयुग्मबहिःसंधिमध्याभ्यासे स्थितं च यत् ॥
उपर्युपरि तच्छिन्द्याद्गलगण्डे शिरात्रयम् ॥ १४ ॥

संधिमध्याभ्यास इति । अभ्यासः संनिधिः ॥ १४ ॥

तुम्बीतैलमाह—

विडङ्गक्षारसिन्धूग्रारास्नाभिर्व्योषदारुभिः ॥
कटुतुम्बीफलरसे कटुतैलं विपाचितम् ॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥ १५ ॥

क्षारो यवक्षारः । उग्रा वचा । तुम्बीतैलम् ॥ १५ ॥

विडङ्गानलसिन्धूत्थरास्नोग्राक्षारदारुभिः ॥ १६ ॥
तैलं चतुर्गुणे सिद्धं कटुतुम्बीरसेऽथ तत् ॥
गण्डमालाहरं श्रेष्ठं गलगण्डहरं परम् ॥ १७ ॥

सुगमम् । तुम्बीतैलम् ॥ १६ ॥ १७ ॥

अतः परं गण्डमालाचिकित्सितम् ।

माक्षिकाढ्यः सकृत्पीतः क्वाथो वरुणमूलजः ॥
गण्डमालां निहन्त्याशु चिरकालानुबन्धिनीम् ॥ १८ ॥

सकृदित्येकदा प्रयोगस्तुतिरियम् ॥ १८ ॥

पिष्ट्वा ज्येष्ठाम्बुना पेयाः काञ्चनारत्वचः शुभाः ॥
विश्वभेषजसंयुक्ता गण्डमालापहाः पराः* ॥ १९ ॥

ज्येष्ठाम्बुनेति । तण्डुलोदकेन । काञ्चनारः काञ्चन इति ख्यातः ॥ १९ ॥

अलम्बुषादलोद्भूतात्स्वरसाद्द्वे पले पिबेत् ॥
अपच्या गण्डमालायाः कामलायाश्च नाशने ॥ २० ॥

अलम्बुषादलोद्भूतादिति । अलम्बुषा मुण्डितिकाऽलम्बुषो वा ॥ २० ॥

वनकार्पासिकामूलं तण्डुलैः सह योजितम् ॥
पक्त्वा पूपूलिकां[1] खादेदपचीनाशनाय च ॥ २१ ॥

अपचीनाशनाय चेत्यत्र चकारेण गण्डमालाहरत्वमपि प्रस्तुतं समुच्चीयते ॥ २१ ॥

सौभाञ्जनं देवदारु काञ्जिकेन तु पेषितम् ॥
कोष्णं प्रलेपनं हन्यादपचीमतिदुस्तराम् ॥ २२ ॥

सुगमम् ॥ २२ ॥

आरग्वधशिफां क्षिप्रं सम्यक्तण्डुलवारिणा ॥
पिष्ट्वा नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥ २३ ॥

सुगमम् ॥ २३ ॥

गण्डमालामयार्तानां नस्यकर्मणि योजयेत् ॥
निर्गुण्ड्यास्तु शिफां सम्यग्वारिणा परिपेषिताम् ॥ २४ ॥

सुगमम् ॥ २४ ॥

कोशातकीनां स्वरसेन नस्यं तुम्ब्यास्तथा पिप्पलिसंयुतेन ॥
तैलेन वाऽरिष्टभवेन कुर्याद्वचोपकुल्ये सह माक्षिकेण ॥ २५ ॥

पिप्पलीसंयुतेन कोशातकीस्वरसेन तथा तुम्बीस्वरसने सह योज्यम् । अरिष्टभवेने-त्यस्य स्थानेऽरिष्टभवस्येति पाठान्तरे बीजस्येति शेषः । वचेत्यादि योगान्तरम् ॥२५॥

अतःप्रभृति ग्रन्थिचिकित्सा ।

ग्रन्थिष्वामेषु कुर्वीत भिषक्शोथप्रतिक्रियाम् ॥
पक्वानापीड्य संशोध्य रोपयेद्व्रणभेषजैः ॥ २६ ॥

* ख.पुस्तके—रवौ वारे मानी शुचिरुषसि गत्वाऽभिदमनीसिफामाहृत्पोटादर्शदिवसे पोष्यमभ्रुतम् । रसं तं कौमार्यास्तिलजयुतमासेवितमिदं(गल)ग्रन्थेर्मालामपहरति कालत्रयमिदम् ॥ १ ॥ इत्यधिकमत्र ।

१ क. घ. पूपलिकां ।

शोथप्रतिक्रियामिति । अपतर्पणादिविरेचनान्तानेकादश द्विव्रणीयोक्तानुपक्रमान्कुर्यात् ॥ २६ ॥

इदानीं वातादिजनितग्रन्थिविशेषेणाऽऽलेपादीनाह—

**हिंस्रा सरोहिण्यमृताऽथ भार्गी श्योनाकबिल्वागुरुकृष्णगन्धाः ॥**
**गोपित्तपिष्टाः सह तालपत्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ २७ ॥**

हिंस्रा कालीयकडः । रोहिणी कटुरोहिणी । अमृता गुडूची । बिल्वस्थाने क्वचित्कृष्णापाठः । कृष्णगन्धा सौभाञ्जनकः शमीत्यपरे । गोपित्तपिष्टा इत्यत्र गोजी च पिष्टेति पाठान्तरम् । गोजी गोजिह्वा शाखोटक इत्यन्ये । तालपत्री तालमूली ॥ २७ ॥

**जलौकसः[1] पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च ॥**
**काकोलिवर्गस्य च शीतलानि पिबेत्कषायाणि सशर्कराणि ॥ २८ ॥**

सुगमम् ॥ २८ ॥

**द्राक्षारसेनेक्षुरसेन वाऽपि चूर्णं पिबेद्वाऽपि हरीतकीनाम् ॥**

**चूर्णं पिबेद्वाऽपीति** । वाशब्दो योगान्तरापेक्षया । **हरीतकीनामिति** । बहुवचनं सप्तविधाया अपि हरीतक्या ग्रहणार्थम् ।

वचनं हि—"विजया रोहिणी चैव जीवन्ती पूतनाऽमृता ।
अभया कालिका ज्ञेया इत्येताः सप्त जातयः" इति ॥

**मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रलेपानवचारयेद्वा ॥ २९ ॥**

सुगमम् ॥ २९ ॥

**हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक्श्लेष्मसमुत्थिते तु ॥**
**स्विन्नस्य विम्लापनमेव कुर्यादङ्गुष्ठवेणूदृषदीसुतैस्तु ॥ ३० ॥**

**हृतेषु दोषेष्विति** । वमनादिना कफादौ रक्तमोक्षणेन च रक्ते हृते सति । **यथानुपूर्व्येति** । स्नेहस्वेदादिक्रमं कृत्वेत्यर्थः । छन्दोनुरोधाद्वेणू । दृषदीसुतः शिलापुत्रकः । अङ्गुष्ठलोहोपलवेणुदण्डैरिति तु क्वापि पाठो निर्दोषः । उपलः पाषाणः ॥ ३० ॥

**विकङ्कतारग्वधकाकणन्तीकाकादनीतापसवृक्षमूलैः ॥**
**आलेपयेदेनमलाबुभार्गीकरञ्जकालामदनैश्च विद्वान् ॥ ३१ ॥**

विकङ्कतो वयंकिलिरिति ख्यातः । आरग्वधः किरमालकः । काकणन्ती गुञ्जा । काकादनी वायसतिन्दुकः । अहिंस्रा, इत्यन्ये । तापस इङ्गुद इति डल्लणः । काला कडावकडो मञ्जिष्ठा वा ॥ ३१ ॥

**दन्ती चित्रकमूलत्वक्सौधार्कपयसी गुडः ॥**
**भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ॥ ३२ ॥**

---

[1] क. घ जलायुकाः ।

सौधार्कपयसी इति । स्नुह्यर्कयोः क्षीरम् ॥ ३२ ॥

ग्रन्थीनमर्मप्रभवानपक्वानुद्धृत्य चाग्निं विदधीत वैद्यः ॥
क्षारेण चैतान्प्रतिसारयेत्तु संलिख्य संलिख्य यथोपदेशम् ॥ ३३ ॥

नन्वयं ग्रन्थः सुश्रुतेऽपच्यां पठितः । ग्रन्थौ न तु कफजे ।
तत्रैतादृशः पठितः—

"अमर्मजातं शममप्रयान्तमपक्वमेवापहरेद्विदार्य ॥
दाहे स्थिते चासृजि सिद्धकर्मा ततः क्षतोक्तं च विधिं विदध्यात्" इति ॥

तत्कुता ग्रन्थावस्य पाठः । उच्यते । अपच्या सह तुल्यक्रियत्वाद्ग्रन्थेरर्थस्य * चाद्रावपचीग्रन्थमेव ग्रन्थौ लिखितवान्संग्रहकारकः । अपक्वानामान् । उद्धृत्य विदार्य । आमच्छेदननिषेधस्यापवादोऽयम् । आमच्छेददोषे सुश्रुतः—आमच्छेदे सिरास्नायुव्यापादनं शोणितातिप्रवृत्तिरित्यादि । अग्निं विदधीत । अग्निना दहेदित्यर्थः । क्षारेण वेति । विकल्पो दोषापेक्षोऽवस्थापेक्षो वा । प्रतिसारयेत्प्रतिलेपयेत् । यथोपदेशमिति । क्षारलेपोक्तविधानेन ॥ ३३ ॥

संप्रत्यर्बुदचिकित्सितमाह—

ग्रन्थ्यर्बुदानां च यतोऽविशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः ॥
ततश्चिकित्सेद्भिषगर्बुदानि विधानविद्ग्रन्थिचिकित्सितेन ॥३४॥

अविशेष इति । बाहुल्येनाविशेषः । तेन विशेषोऽपि स्तोकोऽनयोरस्ति ग्रन्थिः पाकवानर्बुदमपाकप्रायमिति ॥ ३४ ॥

वातार्बुदे चाप्युपनाहनानि स्निग्धैश्च मांसैरथ वेसवारैः ॥
स्वेदं विदध्यात्कुशलस्तु नाड्या शृङ्गेण रक्तं बहुशो हरेच्च ॥ ३५ ॥

नाड्येति । नाडीस्वेदविधिना ॥ ३५ ॥

स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्बुदे कायविरेचनं च ॥

स्वेदोपनाहा मृदव इति । मृदुः स्वेदो द्रवस्वेदः । उपनाहश्च काकोल्यादिद्रव्यकृतः । क्षीराम्लपिष्टश्च नात्युष्णः । कायविरेचनमित्यत्र कायपदं शिरोविरेचनव्यवच्छेदार्थम् ॥

विघृष्य चोदुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलेपः ॥
श्लक्ष्णीकृतैः सर्जरसप्रियंगुपत्राङ्गलोध्रार्जुनयष्टिसाह्वैः ॥ ३६ ॥

भृशं विघृष्य गोज्युक्जुम्बर्यादिपत्रैः । उदुम्बरः काकोदुम्बरिका कर्कशपत्रत्वात् । शाको महातरुजस्तरुः कर्कशपत्रः । शाको खरमसृणपत्रो महातरुः श्रीपर्ण इति लोके ।

* चिन्त्यमिदम् ।

१ क. ख. प्रलिम्पेत् ।

इति डल्लणः । गोजी दार्वीपत्रिका शाखोटक इत्यन्ये । पत्राङ्गं रक्तचन्दनम् । अर्जुन-स्थानेऽञ्जनपाठेऽञ्जनं स्रोतोऽञ्जनम् । यष्टिसाह्वो यष्टीमधुः ॥ ३६ ॥

लेपनं शङ्खचूर्णेन सह मूलकभस्मना ॥
कफार्बुदापहं कुर्याद्ग्रन्थ्यादिषु विशेषतः ॥ ३७ ॥

सुगमम् ॥ ३७ ॥

निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमर्दितैश्च ॥ ३८ ॥
लेपं विदध्यात्क्रिमयो यथाऽत्र मुञ्चन्त्यपत्यान्यथ मक्षिका वा ॥
अल्पावशिष्टं क्रिमिभिः प्रजग्धं लिखेत्ततोऽग्निं विदधीत पश्चात् ॥ ३९ ॥

निष्पावः श्वेतशिम्बिः । पिण्याकः खलिः । विदध्यात्कुर्यात् । क्रमयो यथाऽत्रेत्यतः परं भवन्तीति शेषः । मुञ्चन्तीति पाठेऽपत्यान्यथ मक्षिका वेत्यतः परं मुञ्चन्तीति द्रष्टव्यम् । मूर्छन्ति मूञ्चन्त्यथ मक्षिका वा, इति पाठे मूर्छन्ति पतन्ति मूञ्चन्त्यथ मक्षिका, इति डल्लणः । ततोऽग्निं विदधीतेति परिशिष्टस्य दाहार्हत्वाच्च ॥ ३८ ॥ ३९ ॥

यदल्पमूलं त्रपुताम्रसीसैः संवेष्ट्य पत्रैरथ वाऽऽयसैर्वा ॥
क्षाराग्निशस्त्राण्यवचारयेच्च मुहुर्मुहुः प्राणमवेक्षमाणः ॥ ४० ॥

त्रप्वादिनिर्मितैः पत्रैः संवेष्ट्य स्थापयेदिति व्याख्येयम् । त्रप्वादिघट्टनमेवार्बुदोपशमनं न तु क्षाराद्यवचारणमात्रं त्रप्वादिपत्रसंवेष्टनस्य पूर्वकालभावित्वादित्याहुः । त्रपु रङ्गः । क्षारादयश्चार्बुदे महति न सकृदेवावचारणीया बलभ्रंशभयादित्यत उक्तं क्षाराग्निशस्त्राण्यवचारयेच्चेत्यादि ॥ ४० ॥

यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्यथोक्तम् ॥

यदृच्छयेति । कारणानियमेन । अनियतमभिघातादिकं पाककारणं प्राप्येत्यर्थः । यत्तु न पाकमायान्तीत्युक्तं तत्प्रायिकं ज्ञेयम् । पाकक्रमेणेति । पाकोक्तपाटनशोधनादिक्रमेण । यथोक्तमिति । यथाविधिविहितेन ॥

सशेषदोषाणि हि योऽर्बुदानि करोति तस्याऽऽशु पुनर्भवन्ति ॥
तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथा विषाग्नी ॥ ४१ ॥

सुगमम् ॥ ४१ ॥

उपोदकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ॥
प्रणश्यन्त्यचिराच्छूर्णा पिटकार्बुदजातयः ॥ ४२ ॥

पिटकार्बुदजातय इति । अर्बुदजातयोऽर्बुदप्रकाराः ॥ ४२ ॥

उपोदका काञ्जिकतक्रपिष्टा तयोपनाहो लवणेन मिश्रः ॥
दृष्टोऽर्बुदानां प्रशमाय कैश्चिद्दिने दिने रात्रिषु मर्मजानाम् ॥ ४३ ॥

---

१ क. घ. 'त्र मूर्छन्त्य' । २ रू. दुष्टार्बुदानां ।

सुगमम् ॥ ४३ ॥

स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ॥
लवणेनाथ वा स्वेदः सीसकेन तथैव च ॥ ४४ ॥

स्नुहीगण्डीरिकाखण्डैस्तप्तैः स्वेदनम् ॥ ४४ ॥

हरिद्रालोध्रपत्राङ्गगृहधूममनःशिलाः ॥
मधुप्रगाढो लेपोऽयं मेदोर्बुदहरः परः ॥ ४५ ॥

सुगमम् ॥ ४५ ॥

एतामेव क्रियां कुर्यादशेषां शर्करार्बुदे ॥ ४६ ॥

सुगमम् ॥ ४६ ॥

अपचीचिकित्सितमाह—

सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ॥
छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ॥ ४७ ॥

अपचीरुग्विनिश्चये..............म ॥ ४७ ॥

अश्वत्थकाण्डं निचुलं गवां दन्तं च दाहयेत् ॥
सप्ताहमलसंयुक्तं भस्म हन्त्यपचीं क्षणात्* ॥ ४८ ॥

सुगमम् ॥ ४८ ॥

पार्ष्णिं प्रति द्वादश चाङ्गुलानि
मित्वेन्द्रबस्तिं परिवर्ज्य सम्यक् ॥
विदार्य मत्स्याण्डनिभानि वैद्यो
निष्कृष्य जालान्यनलं विदध्यात् ॥ ४९ ॥

पार्ष्णिं गुल्फादधोदेशमिन्द्रबस्तिं परित्यज्य चतुर्विंशत्यङ्गुलगुल्फजङ्घामध्ये पश्चाद्भागस्थितमिन्द्रबस्तिं द्व्यङ्गुलमानं मर्म विहाय विदारयेत् । जालानि मेदोजालानि । एवमपच्या मूलोच्छेदात्प्रणाशः । यदाह भोजः—

"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् ॥
जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान्बहून् ।
कुर्वन्ति" इत्यादि ॥

डल्हणोक्ता व्याख्या लिख्यते—स्थानकर्माभिधाय स्थानान्तरकर्म निर्दिशन्नाह—

पार्ष्णिं प्रति द्वे दशे चाङ्गुलानि मित्वेन्द्रबस्तिं परिवर्ज्य धीमान् ॥
विदार्य मत्स्याण्डनिभानि वैद्यो निष्कृत्य जालान्यनलं विदध्यात् ।

* ख.पुस्तके—अन्तर्धूमं दहेत्काकं कृष्णाहिं वा भिषग्वरः । तेनापची सुकृच्छ्राऽपि तैलाक्ता क्षु शाम्यति । इत्यधिकमत्र ॥

१ क. घ. °भल्लस° । २ क. घ. °पचीव्रणान् ।

पार्ष्णिः पश्चाद्भागो गुल्फस्य । द्वादशाङ्गुलानि मित्वोर्ध्वमिन्द्रबस्तिं परित्यज्य च्छित्वा मेदोजालानि मत्स्याण्डेन निभान्याकृष्याग्निमवचारयेत् । जङ्घामध्ये द्व्यङ्गुलमिन्द्रबस्तिः । जैज्जटाचार्यस्त्वर्धाङ्गुलमाह । अन्ये तु पार्ष्णि प्रतीत्यत्र प्रतिशब्दो विपरीतार्थः । तेन विपरीतायां पार्ष्ण्यामित्यर्थः । तेन दक्षिणभागगतायामपच्यां वामजङ्घायां वामभागगतायामपच्यां दक्षिणजङ्घायामुभयतोभागगतायामुभयतः कर्म कर्तव्यमिति ज्ञेयम् । भागे च परिप्रती इत्युक्तत्वाद्भागार्थोऽपि प्रतिशब्दो व्याख्यातः । तेन पार्ष्णिभागे जङ्घायाः पाश्चात्यभागे व्यधः कार्यः । द्वे दश चाङ्गुलानि मित्वेत्यत्र पृथग्विभक्तिनिर्देशात्पार्ष्णितो दशाङ्गुलानि विहायाङ्गुलद्वयमात्रो व्यधः कार्य इति ज्ञेयः(म्)। इन्द्रबस्तिं त्रयोदशेऽङ्गुले स्थितमर्धाङ्गुलप्रमाणं परित्यज्य हित्वा धीमान्बुद्धिमानूहापोहे योग्यो दृष्टकर्मेत्यर्थः । वैद्यो यः सम्यगायुर्वेदविद्यां वेत्ति । जालानि मेदोजालानि । अनलं विदध्यादपुनर्भवायाग्नितप्तया शलाकया दहेदित्यर्थः । एवं हि मूलच्छेदादपच्युपशम इति वदन्ति । अमुमेवार्थं केचिदनेन पाठेन पठन्ति—

'आ गुल्फकर्णात्सुमितस्य जन्तोस्तस्याष्टभागं खुलकाद्विभज्य ॥
घोणर्जुवेधः सुरराजबस्तोर्हित्वाऽक्षिमात्रं त्वपरे वदन्ति' ॥

आ खुलकाद् गुल्फकर्णात् । गुल्फौ कर्णाविव यस्य स तथा । खुलको जङ्घापादयोः संधिः । सुरराजबस्तेरिन्द्रबस्तेः । अष्टभागं जङ्घायाश्चरणहीनाया विंशत्यङ्गुलाया अष्टमो भागः सार्धमङ्गुलद्वयं हित्वा यद्यपि द्व्यङ्गुलमिन्द्रबस्तिस्तथाऽपि तदुपघातपरिहारार्थं सार्धमेवाङ्गुलद्वयम् । अन्ये त्वक्षिमात्रमेव द्व्यङ्गुलं नेत्रप्रमाणं हित्वेति वदन्ति । घोणर्जुवेध इति । गुल्फकर्णस्य खुलकस्य घोणा नासेव घोणा यथोत्तरीयकण्डरा तस्या ऋजुरवक्रो वेधो व्यधः । कुर्यादित्यत्रापि पाठे स एवार्थः । अपच्यासु (चीपु) जङ्घाकण्डरागतमेदोमूलजत्वमुक्तं भोजेन—

"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् ॥
जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान्बहून्" इत्यादि ॥

इति गयी । जैज्जटाचार्यस्याप्ययमभिप्रायः । गूढपदभङ्गटिप्पणकेऽन्यथा व्याख्यातम् । आ गुल्फकर्णादिति । गुल्फकर्णावभिव्याप्य । आङत्राभिविधौ न मर्यादायाम् । सुमितस्य सुनिश्चितं मितस्य तस्य प्रमाणस्य षट्सप्ताङ्गुलमित्यस्य । अष्टभागं सार्धनवाङ्गुलमात्रं खुलकात्पार्ष्णिभागात्व्यङ्गुलप्रमाणाद्विभज्य पृथक्कृत्य घोणा नासा तस्या ऋजु यथा भवत्य(ति तथाऽ)वक्रो वेधः कर्तव्यः । यद्य विध वेधने (इति) धातो रूपं तथाऽपि वेधशब्दोऽत्र व्यधने वर्तते धातूनामनेकार्थत्वात् । स च खुलकस्यांङ्गुलत्रितयमष्टभागस्य च सार्धनवाङ्गुलनवकमेकं सार्धद्वादशाङ्गुलपरिमाणेनेन्द्रबस्तिमर्मापि परिहृतं भवेदेतदुक्तमिन्द्रबस्तिं हित्वेति ।

यथा चोक्तम्—"त्रयोदशाङ्गुले पार्ष्णि प्रति कालान्तरासुहृत् ।
इन्द्रबस्तिरसृक्स्रावी मांसगोऽर्धाङ्गुलो भवेत्" ।

अक्षिमात्रमङ्गुलद्वयप्रमाणमपरे भिषज इति वदन्ति । एवं प्रथमश्लोकेनाधस्ताद्वितीयश्लोकेनेन्द्रबस्तेरुपरिष्टाज्जङ्घायाः पाश्चात्यभागगतकण्डराया द्व्यङ्गुलमात्रो व्यधः कार्य इति स्थितम् । एवमनुपशमे वामपार्श्वजायां दक्षिणजङ्घापृष्ठमध्यादिन्द्रबस्तेरधस्तादूर्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा मत्स्याण्डजालनिभं मेदोपनीयाग्निना दहेत् । अनेनेतरपार्श्वजा व्याख्याता । एवमुभयपार्श्वजायामुभयत इति ।

भोजोऽत्राऽऽह—"वातपित्तकफा वृद्धा मेदश्च पवनान्वितम् ।
जङ्घायाः कण्डरां प्राप्य मत्स्याण्डसदृशान्बहून् ॥ १ ॥
कुर्वन्ति ग्रन्थीन्यस्तेभ्यः पुनः प्रकुपितोऽनिलः ।
दोषैस्तैरूर्ध्वगो वक्षःकक्षामन्यागलाश्रितः ॥ २ ॥
नानाप्रकारान्कुरुते ग्रन्थीन्सा त्वपची मता ।
व्यामिश्रदोषोत्पन्नां तु कृच्छ्रसाध्यां विनिर्दिशेत् ॥ ३ ॥
तासां वातोत्तरा कृष्णा वातिकीवेदनायुता ।
क्षिप्रपाकसमुत्थाना दाहयुक्ता च पैत्तिकी ॥ ४ ॥
गूढाविपाका कठिना कफात्स्निग्धा रुजाकरी ॥
मेदोधिका श्लैष्मिकी च विशेषात्सा समार्दवा ॥ ५ ॥
तां तु मालाकृतिं मन्याकण्ठहृद्धनुसंधिषु ॥
गलमालां विजानीयादपचीतुल्यलक्षणाम्" इति ॥ ६ ॥

तस्माज्जङ्घायामेव कर्मणा मूलोच्छेदः कर्तव्य इति गूढपदभङ्गात् । वाग्भटेन चोभयत्रापि व्यधो दर्शितः ।

यथा—"इत्यशान्तौ गदस्यान्यपार्श्वजङ्घासमाश्रितम् ॥
बस्तेरूर्ध्वमधस्ताद्वा मेदो हित्वाऽग्निना दहेत्" इति ॥ ४९ ॥

कर्मान्तरमाह—

**मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक् ॥**
**अङ्गुलान्तरितं सम्यगपचीनां प्रशान्तये ॥ ५० ॥**

हस्तबाहुबन्धः । कुर्याद्रेखात्रयमग्निना । अस्य डल्हणोक्ता व्याख्या लिख्यते—हन्वस्थिसंधिमन्यागलस्थितापच्यां जङ्घागतकर्माभिधाय कक्षाकूर्परसंधिगतापचीषु बाहुगतमेव कर्म निर्दिशन्नाह—मणिबन्धेत्यादि । अत्रापि पूर्ववत् । एतेनेतरसक्थि बाहू च व्याख्याताविति वचनात् । इन्द्रबस्तेरष्टभागमक्षिमात्रं वा विहायाग्रे च रेखात्रयम् ।

तत्रापि विंशत्यङ्गुलजङ्घाया द्वादशाङ्गुलानि किंचिदधिको भागः । एवं षोडशाङ्गुलकूर्परमणिबन्धमध्ये किंचिदधिकानि नवाङ्गुलानि मित्वा रेषात्रयमङ्गुलान्तरमिति ॥ ९० ॥

गण्डमालापच्योस्तैलमाह—

गण्डमालापहं तैलं सिद्धं शाखोटकत्वचा ॥
विम्ब्यश्वमारनिर्गुण्डीसाधितं वाऽपि नावनम् ॥ ९१ ॥

शाखोटकत्वचा क्वाथकल्कीकृतयेत्याह गदाधरः । कल्कमात्ररूपयेत्यन्ये । विम्ब्यश्वमारनिर्गुण्डीति । विम्बी डिम्बिका । अश्वमारः करवीरः । एतयोः कल्कं निर्गुण्ड्याः स्वरसः । नावनं नस्यं नस्येन च विधानं मूर्ध्निगतत्वाद्दोषस्य । शाखोटकबिम्बाद्यं तैलम् ॥ ९१ ॥

निर्गुण्डीस्वरसेनाथ लाङ्गलीमूलकल्कितम् ॥
तैलं नस्याभिहन्त्याशु गण्डमालां सुदुस्तराम् ॥ ९२ ॥

सुगमम् । निर्गुण्डीतैलम् ॥ ९२ ॥

छुच्छुन्दर्या विपक्वं तु क्षणात्तैलवरं ध्रुवम् ॥
अभ्यङ्गान्नाशयेन्नॄणां गण्डमालां सुदारुणाम् ॥ ९३ ॥

छुच्छुन्दर्या कल्करूपया । तैलप्रकरणानुरोधाद्गण्डमालाहितमपि तैलं तच्चिकित्साप्रस्तावं त्यक्त्वा वृन्देनैव लिखितम् । छुच्छुन्दरीतैलम् ॥ ९३ ॥

चन्दनाद्यतैलमाह—

चन्दनं साभया लाक्षा वचा कटुकरोहिणी ॥
एतैस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ ९४ ॥

साभयेति । अभयासहिता । वाग्भटेऽप्युक्तम् । वचा हरीतकी लाक्षा कटुचन्दनरोहिणीति । चन्दनादिभिः कल्कः । जलं द्रवम् । चन्दनाद्यं तैलम् ॥ ९४ ॥

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ॥
तैलमेभिः शृतं नस्यात्कृच्छ्रामप्यपचीं हरेत् ॥ ९५ ॥

सुगमम् । व्योषाद्यं तैलम् ॥ ९५ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकचत्वारिंशो गलगण्डाद्यधिकारः समाप्तः ॥४१॥

---

## अथ द्विचत्वारिंशः श्लीपदाद्यधिकारः ।

अथ श्लीपदमुत्सेधसाधर्म्यादपच्यर्बुदाभ्यां सह कफयोगाव्यभिचारसामान्याच्च ।

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ॥
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ १ ॥

कफयोगादेवेह लङ्घनस्वेदश्लेष्महृद्द्रव्यैरुपचारः । लङ्घनमुपक्रमो नवे । लेपस्वेदाद्यो नवे पुराणे च ॥ १ ॥

धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ॥
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ २ ॥

सुगमम् ॥ २ ॥

संपिष्टमारनालेन रूयिकामूलवल्कलम् ॥
प्रलेपाच्छ्लीपदं हन्ति बद्धमूलमपि स्थिरम् ॥ ३ ॥

रूयिकामूलवल्कलमिति । रूयिका श्वेतार्कः ॥ ३ ॥

पिण्डारकतरुसंभववन्दाकशिफा जयति सर्पिषा पीता ॥
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम् ॥ ४ ॥

पिण्डारकतरुः स्वनामप्रसिद्धः । बद्धा सूत्रेण जङ्घायामिति । सैव वन्दाकशिफा जङ्घायामपि बन्धनीया ॥ ४ ॥

हितश्चाऽऽलेपने नित्यं चित्रको देवदारु च ॥
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः ॥ ५ ॥

सुगमम् ॥ ५ ॥

स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक् ॥
कृत्वा गुल्फोपरि शिरां विध्येच्च चतुरङ्गुले ॥ ६ ॥

स्नेहस्वेदाविह सिराव्यधाङ्गभूतौ । अन्यदा तु स्नेहो न हितः । कफप्रधानतया विरूक्षणीयत्वात्सर्वश्लीपदानाम् । 'स्नेहस्वेदोपपन्नं तु' इति केचित्पाठं पठन्ति । गुल्फोपरि सिराव्यधः पश्चाद्भागे रक्तदुष्टौ सत्याम् ॥ ६ ॥

गुल्फस्याधःशिरां विध्येच्छ्लीपदे पित्तसंभवे ॥
पित्तघ्नीं च क्रियां कुर्यात्पित्तार्बुदविसर्पवत् ॥ ७ ॥

पित्तघ्नीं च क्रियामिति । चकारात्कफघ्नीं च क्रियां कुर्यादिति ज्ञेयं श्लीपदानां कफप्रधानत्वात् ॥ ७ ॥

मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम् ॥
पिष्ट्वाऽऽरनालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥ ८ ॥

---

१ क. घ. हरम् ।

सुगमम् ॥ ८ ॥

शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे ॥
मधुयुतानि चाभीक्ष्णं कषायाणि पिबेन्नरः ॥ ९ ॥

शिरां सुविदितां विध्येदङ्गुष्ठ इति । पादाङ्गुष्ठसंनिधाने क्षिप्रमर्मण ऊर्ध्वं द्व्यङ्गुले सिराव्यधः । अभीक्ष्णं पुनः पुनरित्यर्थः । कषायाणि पिबेदिति । कफहरारग्वधकृतानि कषायाणि ॥ ९ ॥

पिबेद्वाऽप्यभयाकल्कं मूत्रेणान्यतमेन तु ॥

अष्टमूत्रेष्वेकेनापि मूत्रेण हरीतकीं सेवेत ॥

पिबेदेवं गुडूचीं वा नागरं देवदारु वा ॥ १० ॥

सुगमम् ॥ १० ॥

पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये ॥
पूतीकरञ्जच्छदजं रसं वाऽपि यथाबलम् ॥ ११ ॥

कण्टकिकरञ्जपत्रस्वरसमनल्पपुरुषादिबलानतिक्रमेण पलमर्धपलं पलद्वयं वा कटुतैलप्रक्षेपं पिबेत् । पूतीकरञ्जश्चिरबिल्व इत्यन्ये ॥ ११ ॥

अनेनैव विधानेन पुत्रजीवकजं रसम् ॥
प्रयुञ्जीत भिषक्प्राज्ञः कालसात्म्यविभागवित् ॥ १२ ॥

अनेनैव विधानेनेति । सर्षपतैलप्रक्षेपेण । पुत्रजीवकोऽनेनैव नाम्ना प्रसिद्धः ॥ १२ ॥

पलाशमूलस्वरसं पिबेद्वा तैलेन तुल्यं सितसर्षपाणाम् ॥

सुगमम् ॥

मूत्रेण पथ्यासुरदारुविश्वं सगुग्गुलु श्लीपदिभिर्निषेव्यम् ॥ १३ ॥

पथ्यादीनि मूत्रेण निष्क्वाथ्य गुग्गुलुं प्रक्षिप्य पिबेत् ॥ १३ ॥

काञ्जिकेन पिबेच्चूर्णं वृद्धदारुकसंभवम् ॥

सुगमम् ॥

रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ॥
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥ १४ ॥

सुगमम् ॥ १४ ॥

गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ॥
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ १५ ॥

गन्धर्वतैलभृष्टामिति । गन्धर्व एरण्डः । गोजलेनेति । गोमूत्रेण ॥ १५ ॥

धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ॥
दीपनं चाऽऽमदोषघ्नमेतच्छ्लीपदनाशनम् ॥ १६ ॥

---

१ क. ब । २ क. °बकपूर्व्यः का° ।

धान्याम्लमिति काञ्जिकम् ॥ १६ ॥

वृद्धदारुकचूर्णमाह—

त्रिकटुत्रिफला चव्यं दार्वीवरुणगोक्षुरम् ॥ १७ ॥
अलम्बुषां गुडूचीं च समभागानि चूर्णयेत् ॥
सर्वेषां चूर्णमाहृत्य वृद्धदारु च तत्समम् ॥ १८ ॥
काञ्जिकेन च तत्पेयमक्षमात्रं प्रमाणतः ॥
जीर्णे चापरिहारः स्याद्भोजनं सार्वकामिकम् ॥ १९ ॥
नाशयेच्छ्लीपदं स्थौल्यमामवातं च दारुणम् ॥
कुष्ठगुल्मारुचिहरं वातश्लेष्मरुजापहम् ॥ २० ॥

अलम्बुषा मुण्डितिकाऽलम्बुषो वा । तत्समिति । त्रिकट्वादिसर्वचूर्णसमम् । पेयमक्षमात्रमिति । षडष्टमाषकैः प्रचारः । वृद्धदारुसमं चूर्णम् ॥१७॥१८॥१९॥२०॥

पिप्पल्याद्यं चूर्णमाह—

पिप्पलीत्रिफलादारुनागरं सपुनर्नवम् ॥
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारुकम् ॥ २१ ॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः ॥
जीर्णे चापरिहारः स्याद्भोजनं सार्वकामिकम् ॥ २२ ॥
श्लीपदं वातरोगांश्च हन्यात्प्लीहानमेव च ॥
अग्निं च कुरुते घोरं भस्मकं च नियच्छति ॥ २३ ॥

अग्निं च कुरुते घोरं भस्मकं च नियच्छतीति । योगप्रभावात् । पिप्पल्याद्यं चूर्णम् ॥ २१ ॥ २२ ॥ २३ ॥

कृष्णाचित्रकदन्तीनां कर्षमर्धपलं पलम् ॥
विंशतिश्च हरीतक्यो गुडस्य तु पलद्वयम् ॥
मधुना मोदकं खादेच्छ्लीपदं हन्ति दुस्तरम् ॥ २४ ॥

मधु मोदककरणोचितं देयम् । कृष्णाद्यो मोदकः ॥ २४ ॥

सौरेश्वरघृतमाह—

सुरसाग्रन्थिकव्योषविडङ्गानि वचा शठी ॥ २५ ॥
पाठैलाहपुषाश्यामाचव्यदारुवरापुरैः ॥
सर्वैश्च लवणक्षारैः कार्षिकैर्विपचेद्धविः ॥ २६ ॥
प्रस्थं तदंशैर्धान्याम्लदशमूलाम्बुमस्तुभिः ॥
अक्षं पिबेन्नरो मासं श्लीपदं हन्ति दुस्तरम् ॥ २७ ॥

---

१ क. 'दारस्य त' । २ क. ख. 'ह्याग्निं' । ३ क. घ. 'म्याम्बुद' । ४ क. घ. 'म्यर्ध' ।

वृद्‌ध्यर्शोग्रहणीरोगगलगण्डार्बुदापचीः ॥
घृतं सौरेश्वरं नाम श्लीपदं कृमिरोगनुत् ॥ २८ ॥

सुरसः पर्णासः । तन्त्रान्तरे सुरसपाठात् । श्यामा वृद्धदारुकः । वरा त्रिफला । पुरो गुग्गुलुः । तदंशैरिति । प्रत्येकं प्रस्थमानैः । तन्त्रान्तरेऽप्युक्तम्—

"दशमूलकषायेण धान्ययूषद्रवेण च ।
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक्पृथक्" इति ॥

धान्याम्लं काञ्जिकं न तु धान्यकक्काथः । क्वचिद्धान्याम्लेतिपाठदर्शनात्संप्रदाया-द्वेति । तन्त्रान्तरेऽपि धान्ययूषद्रवशब्देन काञ्जिकमेवोच्यते । सौरेश्वरं घृतम् ॥ २१ ॥ ॥ २६ ॥ २७ ॥ २८ ॥

विडङ्गादितैलमाह—

विडङ्गमरिचार्केषु नागरे चित्रके तथा ॥
भद्रदार्वेलुकाख्ये च सर्वेषु लवणेषु च ॥
तैलं पक्कं पिबेद्वाऽपि श्लीपदानां निवृत्तये ॥ २९ ॥

भद्रदारु देवदारु । एलुकाख्यमेलावालुकं होग्गलो वा । पिडिकेति चक्रः । विड-ङ्गादिकल्कः । द्रवं जलम् । विडङ्गाद्यं तैलम् ॥ २९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
द्विचत्वारिंशः श्लीपदाधिकारः समाप्तः ॥४२॥

---

## अथ त्रिचत्वारिंशो विद्रध्यधिकारः ।

---

शोफाधिकारादेव संप्रति विद्रधिकमुच्यते ।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ ॥
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ १ ॥

मृदुर्विरेक इति । अल्पाल्पविधया बहुधा विरेचनं कार्यं गम्भीरधातुगतदोषकृत-त्वाद्विद्रधेः ॥ १ ॥

वातघ्नमूलकल्कैस्तु वसातैलघृतप्लुतैः ॥
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ ॥ २ ॥

वातघ्नानि भद्रदार्वादीनि । अन्ये तु वातघ्नः सौभाञ्जनकः । अपरे तु वातघ्नमूलक-ल्कैरित्यत्र वातघ्नस्थाने मुरुङ्गी, इति पठन्ति । मुरुङ्गी सौभाञ्जनकः ॥ २ ॥

---

१ क. ख. 'मिन्नोपनु' । २ क. ख. 'लौकःपा' ।

स्वेदोपनाहाः कर्तव्याः शिग्रुमूलसमन्विताः ॥

सुगमम् ॥

यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ॥ ३ ॥

सिद्धपिष्टैरिति । (सुगमम्) ॥ ३ ॥

पुनर्नवादारुविश्वदशमूलाभयाम्भसा ॥
गुग्गुलं रुबुतैलं वा पिबेन्मारुतविद्रधौ ॥ ४ ॥

अम्भसा क्वाथेन ॥ ४ ॥

पैत्तिकं शर्करालाजामधुकैः सारिवायुतैः ॥
प्रदिह्यात्क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ५ ॥

प्रदिह्याल्लिम्पेत् । पयस्या क्षीरकाकोली । जेज्जटाचार्यस्तु, अर्कपुष्पामाह ॥ ५ ॥

पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काज्यसंयुतम् ॥ ६ ॥

सुगमम् ॥ ६ ॥

पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥

सुगमम् ॥

इष्टकासिकतालोहैर्गोशकृत्तुषपांशुभिः ॥
मूत्रपिष्टैश्च सततं स्वेदयेच्छ्लेष्मविद्रधिम् ॥ ७ ॥

लोहं लोहचूर्णम् । गोशकृद्गोमयम् । पांशुर्धूलिः । एभिरेरण्डादिपत्रबद्धैः स्वेदः॥७॥

दशमूलीकषायेण सस्नेहेन रसेन वा ॥
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥ ८ ॥

सस्नेहेनेति पूर्वेण परेण च योज्यम् । रसेन मांसरसेन ॥ ८ ॥

पित्तविद्रधिवत्सर्वा क्रियां निरवशेषतः ॥
विद्रध्योः कुशलः कुर्याद्रक्तागन्तुनिमित्तयोः ॥ ९ ॥

पित्तविद्रधिवत्सर्वां क्रियां निरवशेषत इति । अवच्छेदेऽपि सर्वशब्दस्य दृष्टत्वात्पुनर्निरवशेषत इत्युक्तम् । कृत्स्नानेव लेपादिविधीन्कुर्यादित्यर्थः ॥ ९ ॥

सौभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ॥
अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितः ॥ १० ॥

हिङ्गुसैन्धवसंयुत इति । प्रचाराद्धिङ्गु रक्तीत्रयम् । सैन्धवचूर्णं माषमानं प्रक्षेपः । प्रातः प्रातरिति । वीप्साकरणमभ्यासार्थम् ॥ १० ॥

शिग्रुमूलं जले धौतं जलपिष्टं प्रगालयेत् ॥
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥ ११ ॥

---

१ क. सैन्धवचूर्णेन वा । २ क. ख. रसपिष्टं ।

सुगमम् ॥ ११ ॥

श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ॥
जलेन कथितं पीतमपक्वं विद्रधिं जयेत् ॥ १२ ॥

सुगमम् ॥ १२ ॥

वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ॥
ऊषकादिप्रतीवापं पिबेत्संशमनाय वै ॥ १३ ॥

वरुणादिगणक्वाथ इ(मि)ति । क्वाथोऽयं मेदःकफजविद्रधौ युक्तः । वरुणादिगणस्य कफमेदोविशोषणत्वात् ॥ १३ ॥

अपक्वे चैतदुद्दिष्टं पक्वे तु व्रणवत्क्रिया ॥ १४ ॥

सुगमम् ॥ १४ ॥

शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम् ॥
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥ १५ ॥

सुगमम् ॥ १५ ॥

प्रियंगुधातकीलोध्रकट्फलं तिनिशत्वचम् ॥
एतैस्तैलं विपक्तव्यं विद्रधौ व्रणरोपणम् ॥ १६ ॥

तिनिशस्य त्वक्तिनिशो बुकः । त्वचमिति निर्देशात्त्वचशब्दो नपुंसकोऽकारान्तोऽस्तीति गम्यते । तिनिसैन्धवमितिपाठान्तरे तिनिस्तिनिश एव । एकदेशेनापि समुदायो गम्यते । यथा सत्या सत्यभामा भीमो भीमसेन इति । प्रियंग्वादिभिः कल्कः । द्रवं जलम् । एतच्च तैलं मज्जभवे विद्रधौ सुश्रुतेन पठितम् । प्रियंग्वाद्यं तैलम् ॥ १६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां
त्रिचत्वारिंशो विद्रध्यधिकारः समाप्तः ॥ ४३ ॥

---

## अथ चतुश्चत्वारिंशो व्रणशोथाधिकारः ।

---

प्रायेण क्रियातुल्यतया भाविव्रणयोगसमानतया वाऽथ व्रणशोथः ॥

आदौ विम्लापनं कुर्याद्द्वितीयमवसेचनम् ॥
तृतीयमुपनाहं तु चतुर्थ(र्थी) पाटनक्रियाम् ॥१॥
पञ्चमं शोधनं कुर्यात्षष्ठं रोपणमिष्यते ॥
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ २ ॥

---

१ च. °धी रोपणं परम् । २ प्र. वै क्षता° ।

विम्लापनमिह केवलमङ्गुष्ठादिमर्दने न परिभाषितं ग्राह्यं किंतु विम्लाप्यतेऽनेनेति व्युत्पत्त्या बहिर्मार्जनरूपे शमने शोफविलयनकरे प्रलेपनपरिषेकाभ्यङ्गादावपि वर्तते । अवसेचनमपि शोधनरूपेऽन्तःपरिमार्जने वमनविरेकरक्तमोक्षणादौ । उपनाहोऽपि स्वेदे पाचनपिण्डे च । एवं शेषेऽपि यथासंभवमुपक्रमान्तरमन्तर्भाव्यम् । किंच, अपतर्पणादीनां व्रणोक्तषष्ट्युपक्रमाणां मध्ये सूत्रणार्थं सुश्रुतेन सूत्रस्थाने प्रधानतया विम्लापनादयः सप्तोपक्रमा उक्ताः । शोफोपक्रमा अपि विम्लापनादयो भाविव्रणविघातप्रयोजनतया व्रणस्येत्युक्ताः । अन्ये विम्लापनं शोफे न दद्याल्लेपनं घनमिति पाठः ॥ १ ॥२॥

प्रथमं विम्लापनं क्रमेण वातादिदोषे शोफप्रत्यनीकं दर्शयन्नाह—

मातुलुङ्गाग्निमन्थौ च सुरदारु महौषधम् ॥
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथजित् ॥ ३ ॥

मातुलुङ्गो बीजपूरकस्तस्य मूलम् । अग्निमन्थोऽरणी । देवदारु भद्रदारु । महौषधं शुण्ठी । अहिंस्रा च कलाचकडः । अहिंस्रा बृहदहिंस्रा कन्थारि, इति डल्हणः । रास्ना सुरभी ॥ ३ ॥

कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः ॥
सुपर्ण इव नागानां वातशोथविनाशनः ॥ ४ ॥

स्निग्ध इति । घृतेन योगात् ॥ ४ ॥

दूर्वा च नलमूलं च मधुकं चन्दनं तथा ॥
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा ॥ ५ ॥

दूर्वादीनि द्रव्याणि प्रसिद्धानि । शीतलाश्च गणाः सर्वे इति । न्यग्रोधादिकाकोल्यादयः ॥ ५ ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ॥
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्वापणः परः ॥ ६ ॥

सुगमम् ॥ ६ ॥

अजगन्धाऽश्वगन्धा च काला सरलया सह ॥
एकैषिकाऽजशृङ्गी च प्रलेपः श्लेष्मशोथहा ॥ ७ ॥

अजगन्धा फोंफनी बोथइका इति देशान्तरे प्रसिद्धा । लतौषधीत्येके । अन्ये यवानिकामाहुः । अश्वगन्धाऽस्कन्दः । काला कालावकडः । डल्हणस्तु कालाऽहिंस्रा कन्थारिभेद इत्याह । सरला सरलकाष्ठम् । एकैषिका त्रिवृत् । सरला त्रिवृत्, एकैषिका पाठेत्यन्ये । डल्हणस्तु, एवमाह—सरला रक्तमूला त्रिवृत् । एकैषिका शुक्लमूला त्रिवृदिति । अजशृङ्गी । कर्कटशृङ्गी । अन्ये मेषविषाणिकामाहुः ॥ ७ ॥

---

१ क. ख. °थहा ॥ ३ ॥

पुनर्नवादारुशिग्रुदशमूलमहौषधैः ॥
कफवातकृते शोथे लेपः कोष्णो विधीयते ॥ ८ ॥

सुगमम् ॥ ८ ॥

न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ॥
न च पर्युषितं शुष्यमाणं नैवावधारयेत् ॥ ९ ॥

न रात्रौ लेपनं दद्यादित्यादिना निषेधमुखेन विध्युपदर्शनं रात्रौ प्रलेपस्य सर्वथानिषेधार्थम् । अत्र लेपशब्देन प्रदेहादिविधिरपि सूच्यते । तेन वातश्लेष्मजेऽपाकिशोफे रात्रावपि प्रदेहः । वातपित्तजे च शतधौतघृताभ्यङ्गः क्षीरादिसेकश्च शस्यते । तथा चोक्तम्—

"सर्वगश्च निशां प्राप्य आलेपं तु निवर्तयेत् ।
क्षीरसर्पिःप्रदानं तु मुक्त्वा प्रच्छर्दनं तथा" इति ॥

अन्यत्राप्युक्तम्—क्षीराम्लकाञ्जिकमधुकषायपरिषेकाश्च प्रायः शस्यन्ते सर्वशोफेष्विति। रात्रौ लेपदाने पुनरयं दोषः । रात्रौ तमसाऽपिहितेषु स्रोतस्सु व्रणोष्मा लेपशैत्यादवरुद्धो बहिरनिर्गच्छन्कुम्भकारपचनपङ्कलेपेनेवानलः प्रकामं पाकमारभते । *प्रलेपप्रदेहयोस्तु भेदः सुश्रुतेन दर्शितः । प्रलेपः शीतलस्तनुरविशोषी विशोषी च । अविशोषी, आपीडयितव्ये विशोषी च पीडयितव्ये। प्रदेहस्तूष्णः शीतो वा बहलो बहुरविशोषी चेति । आलेपप्रमाणं त्वार्द्रमहिषचर्मवदुत्सेधमुपदिशन्ति । प्रदेह एतदपेक्षया बहलः ॥ ९ ॥

शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ॥
न चापि मुखमालिम्पेत्तेन दोषः प्रसिच्यते ॥ १० ॥

शोषलेपश्च रोमाभिमुखो देयः । यदुक्तम्—प्रतिलोममालिप्य न चानुलोमं प्रतिलोमे हि सम्यगौषधमवतिष्ठते प्रविशति च रोमकूपैः स्वेदवाहिभिर्वीर्यमिति । दोषः प्रसिच्यत इति । दोष इह पूयः ॥ १० ॥

पारिभाषिकं विम्लापनमाह—

अभ्यज्य स्वेदयित्वा तु वेणुनाड्या ततः शनैः ॥
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा ॥ ११ ॥

वेणुनाड्या वेणुदण्डेन । तलेन हस्तपादतलेन ॥ ११ ॥

---

* घ.पुस्तके—लिप उपदेहे । दिह उपचय इति । यातिगच्छतियदभिभवाच्यावेवैतौ प्रलेपप्रदेहौ । अत एव प्रदेहलक्षणं कैश्चित्प्रलेपस्योक्तम् । प्रलेपलक्षणं कैश्चित्प्रदेहस्येति परे । व्यावहारिकोऽभेदोऽभ्युपेतव्यः । प्रलेपप्रदेहयोस्तनुत्वस्थूलत्वाभ्यां शैत्यौष्ण्याभ्यां च भेद इत्यर्थः । इति सोमटिप्पणात् ॥

---

१ घ. °णमपे° ।

रक्तावसेचनं कुर्यादादावेव विचक्षणः ॥
शोथे महति संरब्धे वेदनावति वा व्रणे ॥ १२ ॥

आदावेवेति । आमशोफावस्थायामेव । संरब्ध इति । सशोफे । एतच्च व्रण इत्यनेन योज्यम् ॥ १२ ॥

यो न याति शमं लेपस्वेदसेकापतर्पणैः ॥
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात् ॥ १३ ॥

सुगमम् ॥ १३ ॥

एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः ॥
रक्तं हि व्यम्लतां याति तच्चेन्नास्ति न चास्ति रुक् ॥ १४ ॥

सुगमम् ॥ १४ ॥

न प्रशाम्यति यः शोथः प्रलेपादिविधानतः ॥
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥ १५ ॥

द्रव्याणि पाचनीयानि शणमूलकशिग्रुबीजादीनि ॥ १५ ॥

सतिला सातसीबीजा दध्यम्ला सक्तुपिण्डिका ॥
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ १६ ॥

सक्तुपिण्डिका संयोगमहिम्ना शोफं पाचयति । किण्वं सुराबीजम् ॥ १६ ॥

पाचनानि निर्दिशन्नाह—

शणशिग्रुमूलफलान्यतसीतिलसर्षपाः ॥
सक्तवः किण्वमुष्णानि द्रव्याण्येतानि पाचनम् ॥ १७ ॥

शणः परिपाके सस्वनफलः । शिग्रुः सौभाञ्जनकः । अतसी, अलसि, इति लोके । किण्वं सुराबीजम् । यद्बहिः प्रक्षिप्यते । अनुक्तपाचनद्रव्यसंग्रहार्थमाह—उष्णानि द्रव्याणीति । उष्णान्युष्णवीर्याणि कुष्ठागुर्वादीनि । पाचनं शोफस्य । शोफं प्रसिद्धम् । एषां व्यस्तानां समस्तानां च पाचनत्वम् । सक्तूनां शीतवीर्यत्वेऽपि प्रभावविशेषात्पाचनत्वं संयोगविशेषाद्वा ।

"शणमूलकशिग्रूणां फलानि तिलसर्षपाः ।
सक्तवः किण्वमतसीद्रव्याण्युष्णानि पाचनम्"

इति पाठान्तरम् । अत्र फलशब्दः शणादिभिः सह संबध्यते ॥ १७ ॥

तैलेन सर्पिषा वाऽपि ताभ्यां वा सक्तुपिण्डिका ॥
सुखोष्णा शोथपाकार्थमुपनाहे प्रशस्यते ॥ १८ ॥

ताभ्यां वेति । तैलसर्पिभ्यां मिश्रिताभ्याम् ॥ १८ ॥

हस्तिदन्तं जले घृष्टं बिन्दुमात्रप्रलेपनात् ॥
अत्यर्थकठिने चापि शोथे पाचनभेदनम् ॥ १९ ॥

सुगमम् ॥ १९ ॥

पीडनं दर्शयन्नाह—

द्रव्याणां पिच्छिलानां तु त्वङ्मूलानि प्रपीडनम् ॥
यवगोधूममाषाणां चूर्णानि च समासतः ॥ २० ॥

द्रव्याणां पिच्छिलानामिति । पिच्छिलद्रव्याणि शेलुशाल्मलीवटादीनि । प्रपीडनं मर्मादिसमीपसूक्ष्ममुखव्रणप्रपीडनम् । समासतः संक्षेपतः । प्रपीडनमित्थं कर्तव्यं व्रणमुखं बहिष्कृत्य लेपयेत् । लिप्त्वा च शोषयेत् । शुष्कं सत्पीडनं भवति ॥ २० ॥

दारणं निर्दिशन्नाह—

चिरबिल्वाग्निकौ दन्ती चित्रको हयमारकः ॥
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ २१ ॥

चिरबिल्वो वृद्धकरञ्जः । चिरिहिलि इति लोके । अग्निको लाङ्गलिकी । अन्ये भल्लातमाहुः । दन्ती दन्तिनी । चित्रकः प्रसिद्धः । हयमारकः करवीरः । पुरीषशब्दः कपोतादिभिः सह प्रत्येकं संबध्यते । कपोतो वनवासी पाण्डुकः । कङ्कः कङ्कमल्लो वक्रचञ्चुः कृष्णवर्णः प्रसिद्धपदः । कांकणहरीति लोके । न पुनः काकः । तस्य लक्षणमाह—

"कङ्कः स्यात्कङ्कमल्लाख्यो बाणपक्षार्हपिच्छकः ।
लौहपृष्ठो दीर्घपादः पक्षाधःपाण्डुवर्णभः" इति ॥

गृध्रो मांसाशी पक्षी । ससलिकेति लोके । दारणं विदारणं पक्वशोफस्य । चिरबिल्वादयश्च व्यस्ताः समस्ताः प्रयोज्याः ॥ २१ ॥

द्रव्ययोगभेदं दर्शयन्नाह—

क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥

क्षारद्रव्याणि वेति । क्षारसाधनद्रव्याणि मुष्कककुटजपलाशाश्वकर्णपारिभद्रादीनि । क्षारो वेति । द्रव्यकृतः प्रतिसारणीयः । दारणं परमिति । दारणं कृच्छ्रदारणमित्यर्थः । बालवृद्धादिष्विदं योजनीयम् । द्विविधं हि पक्वशोफदारणमुक्तं सुकुमारं दारुणं च । तत्र कपोतादिपुरीषं सुकुमारं क्षारो दारुणम् ।

तदुक्तं चरके—"इत्युक्तो भेषजगणः पक्वशोफप्रभेदनः ।
सुकुमारश्च कृच्छ्रश्च शस्त्रं च परमुच्यते" इति ॥

ततः प्रक्षालनं क्वाथः पटोलीनिम्बपत्रजः ॥
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ २२ ॥

१ क. ख. घर्षा दन्तं ।

पटोलीनिम्बपत्रज इति । पटोलपत्रनिम्बपत्रकृतः । अविशुद्ध इति पूर्वेण संबध्यते । विशुद्धे च न्यग्रोधादिकाथः प्रक्षालनार्थम् ॥ २२ ॥

पञ्चमूलीद्वयं वाते न्यग्रोधादिश्च पैत्तिके ॥
आरग्वधादिको योज्यः कफजे सर्वकर्मसु ॥ २३ ॥

सर्वकर्मस्विति । प्रक्षालनप्रक्षेपादिषु ॥ २३ ॥

अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥
कल्कः संरोपणः कार्यस्तिलानां मधुकान्वितः ॥ २४ ॥

रोपणः शोधनरोपणः । मधुकान्वितो यष्टीमधुकयुतः । तिलजो मधुसंयुत इति पाठः सुश्रुते बहुपुस्तकेषु दृश्यते । तेन मधुकं मधु । स्वार्थिकश्च कन्निति शक्यं कल्पयितुम् ॥ २४ ॥

निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ॥ २५ ॥

तिलकल्क एव ॥ २५ ॥

पूर्वाभ्यां सर्पिषा वाऽपि युक्तश्चाप्युपरोपणः ॥ २६ ॥

पूर्वाभ्यां सर्पिषा वाऽपि युक्त इति । तिलकल्क एव निम्बपत्रमधुभ्यां सर्पिषा च युक्तो रोपणः । अप्युपरोपण इति । अपिशब्दाच्छोधनोऽपि स्यात् ॥

"अपेतपूतिमांसानां मांसस्थानामरोहताम् ।
कल्कः संरोपणः कार्यस्तिलजो मधुसंयुतः ॥
निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ।
पूर्वाभ्यां सर्पिषा वाऽपि युक्तश्चाप्युपरोपणः"

इति श्लोकद्वयस्य सुश्रुतोक्तस्य डल्लणोक्ता व्याख्या—अपेतपूतिमांसानां निर्गतशठितमांसानां मांसस्थानां मांसमात्रस्थितानामित्यर्थः । तिलजो मधुसंयुतः । कस्मादविशेषेणोच्यते । सर्वदोषप्रत्यनीकत्वात् । तत्र गुणोपवर्णनशास्त्रे कफपित्तकरस्तिल आम्नातः । *तत्र—

"ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोक्तः ।
तिलो विपाके कटुको बलिष्ठः स्निग्धो व्रणे सर्वज एव पथ्यः" ।

लेप इति वाक्यशेषः कल्कस्याऽऽलेपने तस्य तु प्रस्तुतत्वाल्लेपे च त्रिदोषघ्नः । सर्वज एव पथ्य इत्युक्तं तत्प्रतिपादनाय युक्तिमाह सुश्रुतेऽपेतपूतिमांसानामित्यादिश्लोकस्याग्रे—

"स माधुर्यात्तथौष्ण्याच्च स्नेहाच्चानिलनाशनः ।
कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तहृत् ॥

*तत्रेतिपदमसंगतम् ।

१ च. चापि ।

रौक्ष्यात्कषायभावाच्च तिक्तत्वाच्च कफे हितः ।
शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणैः" इति ॥

अस्यार्थः—स इति तिलकल्को माधुर्यादिभिः कषायादिभी रौक्ष्यादिभिश्च लेपाद्व्रणरोपणो वातपित्तकफनाशन इति । अत्र कश्चिदाह—

"वातं तिक्तकषायत्वादौष्ण्यात्पित्तं कथं व्रणे ।
न कफं स्निग्धमाधुर्यात्तिलकल्कं प्रकोपयेत्" इति ॥

सिद्धान्तमाह—स्वभावादामलकफलवत्प्रकृतिसमसमवेतभूतारब्धं तिलद्रव्यम् । अतो गुणस्वभावाद्द्रव्यस्वभावाद्वा दोषहरमुक्तम् ॥

"तद्द्रव्यमात्मना किंचित्किंचिद्वीर्येण सेवितम् ।
किंचिद्रसविपाकाभ्यां दोषं हन्ति करोति वा" ॥

दृष्टा हि कषाया यवाः कार्श्यकारिणः पुरुषाणाम् । त एव सूपयुक्ताः पुष्टिकारिणः । यथा काञ्जिकादयोऽन्तःप्रयुक्ता दाहकारिणः सेकादिषु विनियुक्ता दाहहारिणः । प्रतिनियता हि शक्तयो द्रव्याणामधिष्ठानविशेषात्कर्मविशेषाच्च । उपयोगात्पित्तकृत आलेपात्तद्धृतस्ते । अस्यैव तिलकल्कस्य योगवाहित्वेन विशेषमाह—शोधयेदित्यादि । योगवाहित्वेनेति वदन्ति बहुविदः । तत्र केचिदेवं समागिरन् । यद्द्रव्यं द्रव्यान्तरेण संयुज्याऽऽत्मनः स्वभावं हित्वा संयुक्तद्रव्यस्वभावमेवानुवर्तते तद्योगवाहीति । न चैतद्युक्तं यतो यद्येवं योगता निश्चीयते तदानीं योगवाहिद्रव्योपयोगो निरर्थकः स्यात् । तथा हि—योगवाहिद्रव्यमन्तरेणापि यत्स्वभावं तद्द्रव्यं प्रागासीत्तत्स्वभावमेव योगवाहिद्रव्ययुक्तमपि । तस्मादसदेतद्योगवाहिलक्षणमिति । केचित्प्रभावं प्रतिजानते यद्द्रव्यं द्रव्यान्तरेण युक्तमन्यस्य द्रव्यस्य शक्त्युत्कर्षमुत्पादयति तद्योगवाहीति । तदप्यसम्यक् । यस्मादेवमभ्युपगमान्न बहूनि द्रव्याणि योगवाहीनि स्युः । तथा च मध्वादेरपि द्रव्यस्य किंचिद्द्रव्यं समानगुणं शक्त्युत्कर्षं कुर्वदेव दृष्टं तत्कथं मध्वादावेव योगवाहित्वमुच्यते नापरस्येति । तदेतदपि लक्षणमश्रुतत्वादलक्षणम् । अपरे त्वेवमाहुः—यद्द्रव्यान्तरेणाननुगुणेनापि युक्तं सत्तद्गुणाननुवर्तते स्वं च कार्यं तदविरुद्धं किंचित्करोति तद्योगवाहि द्रव्यं भृत्यवत् । यथा भृत्यः स्वामिकार्यमत्यजन्स्वकीयमपि शरीरयात्रादिकं स्वाम्यविरुद्धं करोति तथैव मधु मदनफलसंयुक्तं वमनकार्यं करोति न तु वमननिवारणं मधुकार्यम् । एवं मधु हरीतकीसंयोगाद्विरेचनकार्यमेव करोति न मधुकार्यं स्तम्भनरूपमिति । ये त्वत्रैवं प्रतिपन्ना मदनफलादेः शक्त्युत्कर्षस्तथाविधोऽस्ति येन मधुसंबन्धिकार्यमवधूय स्वं कार्यं करोतीति ते चैवं चोदयन्तो वचनीयाः । यतः स्तम्भनद्रव्येणान्येन येन केनचित्संयुक्तस्य सुधाक्षारस्यापि शक्तिः किंचिदपहीयमाना दृष्टा मधुनाऽपि स्तम्भनस्वभावेनाप्यस्य नापहीयते मनागपि । अतो मध्वादेरेव योगवाहित्वं नान्यस्य । अपि च । अन्यदपि

योगवाहि द्रव्यं त्रिवृतादि मदनफलेन युक्तं सद्विरेचनं वमनं चोभयकार्यं कुर्वद्दृष्टं न केवलं वमनमेव न विरेचनमेव तस्मान्मध्वादेरेव योगवाहित्वमिति स्थितमेतत् । यथा मधुनोऽपि योगवाहित्वादूर्ध्वाधोगतीनां द्रव्याणां मध्ये येन येन युज्यते तस्य तस्य कार्यं संपादयत्येवं तिलकल्कोऽप्यशुद्धाञ्शोधयेद्रोपयेच्चेत्ययमर्थश्चकारेण ज्ञेय इति। केन शोधनेन युक्तः शोधयेदित्याह—निम्बपत्रमधुभ्यामित्यादि । मधुसंयुक्त इत्यनेनैव लब्धे पुनरिह मधुग्रहणं केवलस्यैव तिलकल्कस्योक्ता माधुर्यादयोऽवगन्तव्या न मधुयुक्तस्येति ज्ञापयति । केन रोपणेन शोधनेन युक्तः शुध्यतो व्रणाञ्शोधयेद्रोपयेच्चेत्याह—पूर्वाभ्यामित्यादि । पूर्वाभ्यां निम्बपत्रमधुभ्यामित्यर्थः । युक्तश्चाप्युपरोपण इत्यपिशब्दो भिन्नक्रमे । तेन निम्बपत्रमधुघृतयुक्तः शुध्यतो व्रणस्य शोधनोऽपि रोपणोऽपीति तिलकल्कस्य योगवाहित्वादित्यर्थः । अन्ये तु युक्तः संरोपणो भवेदिति पठन्ति । ते तु पूर्वोक्तं शोधयेद्रोपयेच्चापत्त्युक्तं चकारार्थं न मन्यन्ते । किं च निम्बपत्रमधुघृतयुक्तस्य तिलकल्कस्य रोपण(त्व)मेवाङ्गी कुर्वन्ति न शोधनत्वम् । निम्बपत्राणि तिक्तत्वाल्लघुरूक्षत्वाच्च च्छेदनानि मधुरमपि मधुरूक्षत्वाच्छेदनम् । तस्मादेताभ्यां युक्तस्तिलकल्कः संशोधनः कथितः । सर्पिषा शीतस्निग्धमधुरेण युक्तत्वाच्छोधनशक्तितिरस्कारान्मधुनः संघातृत्वाच्च पूर्वाभ्यां निम्बपत्रमधुभ्यां युक्तस्तिलकल्को व्रणरोपणाय संपद्यते ॥ २६ ॥

इदानीमन्यमपि कल्कं सर्वावस्थासु सर्वव्रणयोगित्वेन सविशेषमेकीयमतेन निर्दिशन्नाह—

> तिलवद्यवकल्कं तु केचिदाहुर्मनीषिणः ॥
> शमयेदविदग्धं च विदग्धं वाऽपि पाचयेत् ॥
> पक्वं भिनत्ति भिन्नं च शोधयेद्रोपयेत च ॥ २७ ॥

तिलवात्तिलसदृशं यवकल्कमपि दोषघ्नं प्राहुः । व्रणेषु पथ्यस्तिलवच्च नित्यमित्युक्तत्वादित्येके व्याख्यानयन्ति । जैज्जटगयदासौ त्वन्यथा । यथा तिला विद्यन्तेऽस्मिन्निति तिलवान् । तिलवांश्चासौ यवकल्कश्च तिलवद्यवकल्कः । तं तिलवद्यवकल्कं केचिदाहुरिति । एके व्याख्यानयन्ति । सर्वावस्थासु सर्वशरीरव्रणोपयोगमाह—शमयेदविदग्धमित्यादि । एतेन तिलयुक्तः कल्कः पञ्चानामुपक्रमाणां विम्लापनपाचनपाटनशोधनरोपणानामर्थं करोतीत्युक्तम् । तिलकल्कस्तु रोपणशोधनकरणेनोपक्रमद्वयार्थकरः । तदुभयकरणेनोपक्रमत्रयार्थकरः । अत एवानयोः कल्कयोर्भेदः ॥ २७ ॥

> निम्बपत्रतिलैः कल्को मधुना व्रणशोधनः ॥
> रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः ॥ २८ ॥

सुगमम् ॥ २८ ॥

> निम्बपत्रघृतक्षौद्रदार्वीमधुकसंयुता ॥
> वर्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणम् ॥ २९ ॥

---

१ क. चापि ।

वर्तिस्तिलानां कल्को वेति । वर्तिः पिष्टनिम्बपत्रादिम्रक्षितकर्पटवर्तिः । वर्तिर्गम्भीरे व्रणे कल्क उत्ताने ॥ २९ ॥

निम्बपत्रं तिला दन्ती त्रिवृत्सैन्धवमाक्षिकम् ॥
दुष्टव्रणप्रशमनो लेपः शोधनकेसरी ॥ ३० ॥

सुगमम् ॥ ३० ॥

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्धृतम् ॥
मधुकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः ॥ ३१ ॥

सुगमम् । तिलाष्टकः ॥ ३१ ॥

त्रिफला खदिरो दार्वी न्यग्रोधादिर्बलाकुशाः ॥
निम्बकोलकपत्राणि कषायः शोधने हितः ॥ ३२ ॥

न्यग्रोधादीनि न्यग्रोधादयः पञ्च । निम्बकोलकपत्राणीति । निम्ब एव कोलकः । यथा साल एव सार इति जैज्जटः । कोलकः कलिरिति जिनदासः । कोलकपत्राणि कोमलपत्राणीति नरदन्तः । कूलक इति पाठे कूलकं पटोलम् ॥ ३२ ॥

यष्टी तिलाः सुपिष्टा वा सघृता व्रणरोपणाः ॥

सुगमम् ॥

एकं वा सारिवामूलं सर्वव्रणविशोधनम् ॥ ३३ ॥

सुगमम् ॥ ३३ ॥

सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन ॥

सप्तदलदुग्धकल्क इति । सप्तदलः सप्तपर्णः ॥

मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

व्रणान्विशोधयेद्वर्त्या सूक्ष्मास्यान्संधिमर्मगान्[1] ॥
कृतया त्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ३५ ॥

लाङ्गलीमधुसैन्धवैरिति । मधुसैन्धवमात्रेण वर्तिः प्रचरति । कृतयेत्यस्य स्थानेऽभयेति पाठान्तरम् ॥ ३५ ॥

सुषवीपत्रधत्तूरकर्णमोटकुठारकाः ॥
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः ॥ ३६ ॥

सुषवी कारवेल्लकः । कुठारः कुन्हाडिकाछिन्नः । कुठेरकपाठे पर्णासः ॥ ३६ ॥

पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ॥
धातकीलोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः ॥ ३७ ॥

---

१ क. घ. 'भंजान्'। २ क. 'कुठेर'।

शुक्तिचूर्णसमायुतैरिति । शुक्तिर्विदारी ॥ ३७ ॥

सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः ॥
तेषां तिलानुमां चैव भृष्टान्पयसि निर्वृतान् ॥
तेनैव पयसा पिष्ट्वा कुर्यादालेपनं भिषक् ॥ ३८ ॥

पयसि निर्वृतानिति । निर्वृतान्निर्वापितान् ॥ ३८ ॥

पित्तविद्रधिवीसर्पशमनं लेपनादिकम् ॥
अग्निदग्धे व्रणे सम्यक्प्रयुञ्जीत चिकित्सकः* ॥ ३९ ॥

सुगमम् ॥ ३९ ॥

वाताभिभूतान्सास्रावान्धूपयेदुग्रवेदनान् ॥
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ४० ॥

सास्रावानल्पस्रावान् । मदनः सिह्लकः । श्रीवेष्टकः कुन्दुरुः । सुराह्वयो देवदारुः ॥ ४० ॥

श्रीवासगुग्गुल्वगुरुसालनिर्यासधूपिताः ॥
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्राववेदनाः ॥ ४१ ॥

श्रीवासो नवनीतखोटिः । सालनिर्यासो धूर्पणकम् ॥ ४१ ॥

तिलाः पयः सिता क्षौद्रं तैलं मधुकचन्दनम् ॥
लेपेन शोथरुग्दाहरक्तं निर्वापयेद्व्रणान्† ॥ ४२ ॥

पयः पेषणार्थम् । क्षौद्रतैलाभ्यां च संधाय लेपो देयः ॥ ४२ ॥ ॥

करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणक्रिमीन् ॥ ४३ ॥

सुगमम् ॥ ४३ ॥

कलायविदलीपत्रं कोशाम्रास्थि च पूरणात् ॥

कलायविदलीपत्रमिति । कलायविदली स्वनामख्याता लता । कोशाम्रः कोशंब इति ख्यातः । तस्य फलास्थि, आभ्यां संपिष्टाभ्यां प्रत्येकं पूरणम् ॥

सुरसादिरसैः सेको लेपनं लशुनेन वा ॥ ४४ ॥

सुगमम् ॥ ४४ ॥

---

* ख. पुस्तके—अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम् ॥ क्रियां कुर्याद्भिषग्यश्च शालितण्डुलकण्डनैः ॥ १ ॥ टिण्डुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत् । व्रणं गुडूचीपर्णै वा छादयेदथवोदकैः ॥ २ ॥ क्रियां कुर्याच्च निखिलां भीषति···पचेत् । इत्यधिकमत्र ।

† ख. पुस्तके—प्राग्जीरकेण सहितं परिपाच्य सर्पिस्तत्राऽऽवपेन्मदनसर्जरसं ततोऽनु । अभ्यञ्जनं वपुषि न हुताशदग्धाः कुर्वन्त्रजर्तिमचिरेण जपत्यपतात्(?) ॥ १ ॥ इत्यधिकमत्र ॥

१ घ. 'भावयू' । २ ख. त्र ।

निम्बशम्याकजात्यर्कसप्तपर्णाश्वमारकाः ॥
कृमिघ्ना मूत्रसंयुक्ताः सेकालेपनधावनैः ॥ ४५ ॥

निम्बादयो यथालाभं मूत्रपिष्टाः सेकादौ प्रयोज्याः ॥ ४५ ॥

प्रच्छाद्य मांसपेश्या वा कृमीनपहरेद्व्रणात् ॥

मांसपेश्येति । मांसखण्डेन ॥

लशुनेनाथ वा दद्याल्लेपनं कृमिनाशनम् ॥ ४६ ॥

लशुनालेपविधानं प्रागपि लिखितत्वात्पुनरुक्तं संग्रहकारस्य श्लोकपूर्णतानुरोधाद-पुनरुक्तमिति चेत् । नैतत् । श्लोकार्धेनापि व्यवहारा(र)दर्शनात् ॥ ४६ ॥

अतः परं व्रणभावं गतस्य शोफस्य चिकित्सितम्—

ये क्लेदपाकस्रुतिगन्धयुक्ता व्रणा महान्तः सरुजः सशोथाः ॥
प्रयान्ति ते गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलारसेन ॥ ४७ ॥

गुग्गुलुमिश्रितेनेति । कोष्ठानुरूपं गुग्गुलोः कर्षः समधिको वा प्रक्षेपः । त्रिफला-रसेन त्रिफलाक्वाथेन । त्रिफलागुग्गुलुः ॥ ४७ ॥

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ॥
निर्यन्व्रणो विबन्धघ्नो व्रणशोधनरोपणः ॥ ४८ ॥

त्रिफलाचूर्णसंयुक्त इति । त्रिफलाचूर्णसमेन युक्तो गुग्गुलुर्घृतमनुरूपं दत्त्वा विमृद्य चूर्णं च प्रक्षिप्य वटकीकार्यः । एवं सर्वत्र वटकविधाने । वटिकागुग्गुलुः ॥ ४८ ॥

अमृतागुग्गुलुः शस्तो हितं तैलं च वज्रकम् ॥ ४९ ॥

अमृतागुग्गुलुरिति । वातरक्तोक्तः । वज्रकं तैलं कुष्ठोक्तम् ॥ ४९ ॥

विडङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना सह ॥
सर्पिषा वटिकां कृत्वा खादेद्वा हितभोजनः ॥
दुष्टव्रणापचीमेहकुष्ठनाडीविशोधनः ॥ ५० ॥

सुगमम् । वटिकागुग्गुलुः ॥ ५० ॥

अमृतापटोलमूलवासत्रिफलात्रिकटुकृमिघ्नानाम् ॥
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः ॥ ५१ ॥
प्रतिवासरमेकैकां गुटिकां खादेदथाक्षपरिमाणाम् ॥
जेतुं व्रणवातासृग्गुल्मोदरश्वयथुपाण्डुरोगादीन् ॥ ५२ ॥

सुगमम् । अमृतावटिकागुग्गुलुः ॥ ५१ ॥ ५२ ॥

मनःशिला समञ्जिष्ठा सलाक्षा रजनीद्वयम् ॥
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ५३ ॥

सुगमम् ॥ ५३ ॥

---

१ क. ख. °न्थयन्तो व्र° । २ क. घ. °लाले स° ।

अयोरजः सकासीसं त्रिफलाकुसुमानि च ॥
प्रलेपः कुरुते काष्र्ण्यं सद्य एव नवत्वचि ॥ ५४ ॥

कासीसं धातुकासीसम् । त्रिफलाकुसुमानि हरीतक्यादितरुकुसुमानि । कुसुमाभावे फलेन प्रचरितव्यम् । कुसुमं जातीकुसुममित्येके ॥ ५४ ॥

कालीयकलताम्रास्थिहेमकालारसोत्तमैः ॥
लेपः सगोमयरसः सवर्णकरणः परः* ॥ ५५ ॥

लता प्रियंगुः । हेम नागकेसरचूर्णम् । काला मञ्जिष्ठा कालानुसारिवा वा । रसोत्तमः पारदो घृतं चेति चक्रः । सहकाररसो वेति जिनदासः । गोमयरसः पेषणार्थम् ॥ ५५ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुश्चत्वारिंशो व्रणशोथाधिकारः समाप्तः ॥ ४४ ॥

---

## अथ पञ्चचत्वारिंश आगन्तुव्रणाधिकारः ।

---

शारीरव्रणमभिधाय संप्रत्यागन्तुव्रण उच्यते व्रणत्वसाधर्म्यात् ॥

सद्यःक्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ॥
यष्टीमधुकयुक्तेन किंचिदुष्णेन सर्पिषा ॥ १ ॥

यष्टीमधुकं कल्कीकृत्य जलेन घृतं साधनीयं यदि त्वरया घृतमिदं यथाविधि नोपयोक्तुं शक्यते तदा किंचिज्जलं दत्त्वा वडवडायितव्यम् ॥ १ ॥

बुद्ध्वाऽऽगन्तुव्रणं वैद्यो घृतक्षौद्रसमन्वितम् ॥
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशनीम् ॥ २ ॥

सुगमम् ॥ २ ॥

कान्तक्रामुकमेकं सुश्लक्ष्णं गव्यसर्पिषा पिष्टम् ॥
शमयति नियतं लेपाद्व्रणमागन्तुं न संदेहः ॥ ३ ॥

क्रान्तक्रामकं कपि······आम ॥ ३ ॥

---

* ख. पुस्तके—प्ररुहप्रातुशुक्लानां कृष्णकर्म हितं भवेत् । भल्लातकान्भावयेत्तु क्षीरे प्राङ्मूत्रभावितान् ॥ १ ॥ ततो द्विधा छेदयित्वा लोहकुम्भे निधापयेत् । कुम्भेऽन्यस्मिन्निखाते तु तं कुम्भमथ योजयेत् ॥ २ ॥ मुखं मग्येनसंधाय(?) गोमयैर्दाहयेत्ततः । यः स्नेहः स्रवते तस्माद्ग्राहयेत्तं शनैर्भिषक् ॥ ३ ॥ ग्राम्यानूपजशफान्दग्ध्वा सूक्ष्मचूर्णानि कारयेत् । तैलेनानेन संयोज्य शुक्लमालेपयेद्व्रणम् ॥ ४ ॥ इत्यधिकमत्र ।

---

१ क. ख. क्रान्तक्रामकं ।

क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ॥
कषायाः शीतमधुराः स्निग्धा लेपादयो हिताः ॥ ४ ॥

सुगमम् ॥ ४ ॥

आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥

सुगमम् ॥

पक्वाशयस्थे देयं च विरेचनमसंशयम् ॥ ५ ॥

पक्वाशयस्थ इति । पच्यमानाशयस्थे । पक्वशब्देनेह पाकस्याभिमतत्वात् । तत्रैव हि पित्तस्थानत्वेन विरेचनमौपयिकत्व(क)म् । विरेचनं त्रिवृदादिद्रव्यैरेव कर्तव्यम्॥५॥

क्वाथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदा कृतः ॥
सहिङ्गुलवणः पीतः कोष्ठस्थं स्रावयेदसृक् ॥ ६ ॥

अयं योगः प्रभावाद्रक्तं स्रावयति ॥ ६ ॥

विशुद्धस्य रक्तानुलोमनमन्नं निर्दिशन्नाह—

यवकोलकुलत्थानां निस्नेहेन रसेन च ॥
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ७ ॥

अन्नं यवागूं वेति यवस्य ॥ ७ ॥

अत्यर्थमस्रं स्रवति प्रायशो यत्र वै क्षते ॥
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ ८ ॥
स्नेहपानपरीषेकस्निग्धलेपोपनाहनम् ॥
स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ ९ ॥

स्निग्धलेपोपनाहनमिति । स्निग्धो लेपः । स्निग्धमुपनाहनम् ॥ ८ ॥ ९ ॥

इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः ॥

सुगमम् ॥

सप्ताहात्परतः कार्या शारीरव्रणवत्क्रिया ॥ १० ॥

सुगमम् ॥ १० ॥

गौराद्यं घृतमाह—

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च ॥
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम् ॥ ११ ॥
जातीनिम्बपटोलं च करञ्जः कटुरोहिणी ॥
मधूच्छिष्टं मधूकं च महामेदा तथैव च ॥ १२ ॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ॥
एष गौरो महावीर्यः सर्वव्रणविशोधनः ॥ १३ ॥

१ घ वा । २ घ. 'हुसैन्धवः पी' ।

आगन्तुसहजाश्चैव चिरोत्थाश्चैव ये व्रणाः ॥
विषमामपि नाडीं च शोधयेच्छीघ्रमेव च ॥ १४ ॥

गौरा हरिद्रा प्रियंगुर्वा । हरिद्रया प्रचारः । हरिद्रा दारुहरिद्रा । जातीनिम्बपटोलानां पत्रम् । करञ्जस्य फलम् । मधूकस्य पुष्पम् । मधूकं चेत्यस्य स्थाने मधुकमिति पाठे मधुकस्य भागद्वयं द्विः पाठात् । गौराद्यं घृतम् ॥ ११ ॥ १२ ॥ १३ ॥ १४॥

करञ्जाद्यं घृतमाह—

नक्तमालस्य पत्राणि तरुणानि फलानि च ॥
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥ १५ ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ॥
मञ्जिष्ठा चन्दनोशीरमुत्पलं सारिवे त्रिवृत् ॥ १६ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
दुष्टव्रणप्रशमनं तथा नाडीविशोधनम् ॥
सद्यश्छिन्नव्रणानां च करञ्जाद्यमिदं घृतम् ॥ १७॥

नक्तमालः करञ्जः । तरुणानीति पत्रविशेषणम् । फलानि पुनः परिणतानि ग्राह्याणि । तरुणानि नवानि । सुमना जाती । करञ्जाद्यं घृतम् ॥ १५ ॥ १६ ॥ १७ ॥

जात्यादिघृतमाह—

जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः ॥
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ १८ ॥

पत्रं जात्यादीनां त्रयाणाम् । दार्वी दारुहरिद्रा । निशा हरिद्रा । अभयमुशीरं संप्रदायात् । नक्ताह्वः करञ्जः । सूक्ष्ममुखे वातोत्तरे व्रणे गौराद्यं जातिकाद्यं च तैलमपि साध्यते । चक्रेणाप्युक्तम्—

"गौराद्यं जातिकाद्यं च तैलमेवं प्रसाध्य च ।
तैलं सूक्ष्मानने दुष्टव्रणे गम्भीर एव च" इति ॥

जात्याद्यं घृतम् ॥ १८ ॥

प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः ॥
सहरिद्रैः कृतं सर्पिः सक्षीरं व्रणरोपणम् ॥ १९ ॥

प्रपौण्डरीकं नीलोत्पलम् । प्रपौण्डरीकाद्यं घृतम् ॥ १९ ॥

---

१ क. घ. शुभम् । २ क. श्रुतं ।

मधूच्छिष्टं समधुकं लोध्रं सर्जरसं तथा ॥
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ॥
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥ २० ॥

सुगमम् ॥ मधूच्छिष्टाद्यं घृतम् ॥ २० ॥

अन्तर्दग्धकुठारको दहनजं लेपाभिहन्ति व्रण-
मश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुण्डनात् ॥
अभ्यङ्गादिनिहन्ति तैलमखिलं गण्डूपदैः साधितं
पिष्ट्वा शाल्मलितूलकैर्जलगता लेपात्तथा वालुकाः ॥ २१ ॥

अन्तर्दग्धकुठारक इति । पिठरजठरेऽन्तर्धूमं दग्धव्यः कुठारकः कुल्हाडिच्छिन्नः । गुण्डनादवचूर्णनात् । गण्डूपदैः किंचुलकैः साधितं जलं विना वडवडायितम् । शाल्मलितूलकैरिति सहयोगे तृतीया ॥ २१ ॥

सिद्धं कषायतैलाभ्यां पाटलयाः कटुतैलकम् ॥
दग्धव्रणरुजास्रावदाहविस्फोटनाशनम् ॥ २२ ॥

सुगमम् । पाटलीतैलम् ॥ २२ ॥

चन्दनाद्यं यमकमाह—

चन्दनं वटशुङ्गाश्च मञ्जिष्ठा मधुकं तथा ॥
प्रपौण्डरीकं दूर्वा च पत्त(त्रा)ङ्गं धातकी तथा* ॥ २३ ॥
एतैस्तैलं विपक्तव्यं सर्पिष्क्षीरसमायुतम् ॥
अग्निदग्धव्रणे श्रेष्ठं[3] तत्क्षणाद्रोपणं[4] परम् ॥ २४ ॥

तैलघृताभ्यां समाभ्यां मिलित्वा प्रस्थः पक्तव्यः । तैलं च तिलजमेव सर्वत्र । सविशेषणे तु तैलपदे विशिष्टस्य परिग्रहः । यथा—सिद्धं कल्ककषायाभ्यां पाटल्याः कटुतैलकमित्यादौ । पाकार्थं क्षीरमेव चतुर्गुणम् । चन्दनाद्यं यमकम् ॥ २३ ॥ २४ ॥

कुठारकतैलमाह—

कुठारकात्पलशतं क्वाथयेल्लवणेऽम्भसि ॥ २५ ॥
ततः पादावशेषेण तैलप्रस्थं विपाचयेत् ॥
कल्कैः कुठारापामार्गप्रोष्ठिकामक्षिकासु च ॥ २६ ॥
एतत्तैलं कुठारस्य व्रणशोधनरोपणम् ॥
नाडीषु परमोऽभ्यङ्गो निजास्वागन्तुकीषु च ॥ २७ ॥

---

* चत्वारः प्रयोगा इति प्रतिभाति ।

---

१ क. घ. सक्षीरम् । २ घ. °णमुत्तमम् । सु° । ३ क. घ. शस्तं । ४ क. घ. °ष्ठं क्षणा° ।

प्रोष्ठिका शफरी पाठीनामाख्यातो वा विटपः । मक्षिका प्रसिद्धा । प्रोष्ठिका मक्षिका वा पञ्चापञ्चाक्षि(?) आमत्स्य इत्यन्ये । प्रचारोऽप्येवं प्रायः । कुठारकं तैलम् ॥ २५ ॥ २६ ॥ २७ ॥

दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ॥
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ २८ ॥

दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वेति पाठे दूर्वास्वरसेनाकल्कमेव तैलं साध्यम् । कम्पिल्लकेन दार्वीत्वक्कल्केन वा जलेन द्रवेणापरं तैलद्वयमित्याहुः । दूर्वातैलम् ॥२८॥

येनैव विधिना तैलं घृतं तेनैव साधयेत् ॥
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत् ॥ २९ ॥
आरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ॥
आर्द्रे वा बन्धरहिते गात्रे चाभिहतेऽथ वा ॥ ३० ॥

घृतं तेनैव साधयेदित्येतदनन्तरोक्तदूर्वातैलविषयः । एतदनन्तरं चरकेऽस्य पाठाद्रक्तपित्तोत्तरे घृतस्य दर्शितत्वात् । तैलं वातकफोत्तरे ज्ञेयम् ॥ २९ ॥ ३० ॥

वातोऽस्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ॥
कुर्यात्सदाहं कण्ड्वाढ्यं व्रणग्रन्थिरिति स्मृतः ॥

व्रणग्रन्थिरिति स्मृत इति । व्रणग्रन्थिः सिंचेति लोके ॥

✓ क्षारसूत्रं प्रयुञ्जीत दुष्टव्रणहरं विधिम् ॥ ३१ ॥

दुष्टव्रणहरं विधिमिति । ऊर्ध्वाधःशोणितमोक्षणादिकम् ॥ ३१ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चचत्वारिंश आगन्तुव्रणाधिकारः समाप्तः ॥ ४५ ॥

---

## अथ षट्चत्वारिंशो भग्नाधिकारः ।

---

आगन्तुत्वसामान्यादथ भग्नम् ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतवारिणा ॥
पङ्केनाऽऽलेपनं कार्यं बन्धनं च कुशान्वितम् ॥ १ ॥

कुशान्वितमिति । कुशा भग्नास्थिबन्धनसाधनं पलाशादित्वक् । तदुक्तं सुश्रुतेन—

"पलाशोदुम्बराश्वत्थमधूकककुभत्वचः ।
वंशासर्जवटानां वा कुशार्थमुपसंहरेत्" इति ॥

कुशमोक्षयोरवधिः सुश्रुत एव दर्शितः । यथा—

"सप्ताहादथ सप्ताहात्सौम्येष्वृतुषु बन्धनम् ।
साधारणेषु कर्तव्यं पञ्चमे पञ्चमेऽहनि ॥
आग्नेयेषु त्र्यहात्कुर्याद्भग्ने दोषवशेन वा" इति ॥ १ ॥

इदानीं विविधानामपि संधिमुक्तकाण्डभग्नानां प्रतीकारोपायानाह—

**अवनामितमुन्नह्येदुन्नतं चावपीडयेत् ॥**
**आञ्छेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् ॥ २ ॥**

**अवनामितमिति** । अवनतं कर्कटकं वक्रं च । उन्नह्येदुन्नमयेदूर्ध्वं कुर्यादित्यर्थः । उन्नतमभ्यकर्णादिभिरवपीडयेदधो नयेत् । आञ्छेदाकर्षयेद्दीर्घीकुर्यादित्यर्थः । आछि, आयामे, इति धातो रूपम् । अतिक्षिप्तमध ऊर्ध्वं वा निर्गतम् । यदुक्तम्—आञ्छेदूर्ध्वमधश्चैव कटिभग्नं च मानवमिति । अधोगतं अधःक्षिप्तादि । उपरि वर्तयेदुपरि नयेत् ॥ २ ॥

भग्ने लेपद्रव्याण्याह—

**आलेपनार्थं मञ्जिष्ठा मधुकं चाम्लपेषितम् ॥**

**अम्लपेषितमिति** । काञ्जिकपिष्टम् ॥

**शतधौतघृतोन्मिश्रं शालिपिष्टं च लेपनम् ॥**

शतधौतघृतोन्मिश्रमिति पूर्वेण परेण योज्यम् ॥

तस्य पित्तप्रकृतौ काले चोष्णे परिषेकं निर्दिशन्नाह—

**न्यग्रोधादिकषायं तु सुशीतं परिषेचने ॥ ३ ॥**

**न्यग्रोधादीति** । संधानार्थं पाकादिपरिहारार्थं च ॥ ३ ॥

वातोत्तरे सपित्ते सशूले च परिषेकान्तरमाह—

**पञ्चमूलीविपक्वं तु क्षीरं दद्यात्सवेदने ॥**

**पञ्चमूलीविपक्वमिति** । पञ्चमूल्यल्पा तस्याः शीतवीर्यत्वात् । एतत्पक्वं च क्षीरं वातपित्तोत्तरे भग्ने ॥

**सुखोष्णमवचार्यं वा चक्रतैलं विजानता ॥ ४ ॥**

अवचार्यं परिषेक इति शेषः । **चक्रतैलमिति** । चक्रयन्त्रपीडितं तैलं सद्यःपीडितम् । अणुतैलविधानेन गृहीतं वा तैलं चक्रतैलमिति तु गदाधरः । शीतोपचारोचिते भग्ने सुखोष्णस्यास्य विधानमनिले बलीयसि ज्ञेयम् । अत एव विजानतेति कृतम् ॥ ४ ॥

भग्ने हितमन्नपानमाह—

**मांसं मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ॥**
**बृंहणं चान्नपानं स्याद्देयं भग्नाय जानता ॥ ५ ॥**

क्षीरमिहाग्रणे भग्ने संधानीयतया हितं नवधान्यादि वर्गे पाठात् । क्षीरस्य निषेधो

व्रणविषय एव । क्षीरसर्पिरिति पाठे क्षीरादुद्धृतं सर्पिः क्षीरसर्पिः । सतीनोऽल्पो वर्तुल-कलायः । तत्र कृतो यूषः सतीनयूषः । स वातं न जनयति संदधाति च क्षतम् ॥ ५ ॥

बृंहणद्रव्यलक्षणमाह—

गुरु शीतं मृदु स्निग्धं बहुलं स्थूलपिच्छिलम् ॥
प्रायो मन्दं स्थिरं श्लक्ष्णं बृंहणं द्रव्यमुच्यते ॥ ६ ॥

शीलीमांसरस इति पाठान्तरम् ॥ ६ ॥

भग्न आभ्यन्तरमौषधमाह—

गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ ७ ॥

गृष्टिरेकवारप्रसूता गौः । अस्याः क्षीरं मधुरौषधसाधितं सह सर्पिर्लाक्षां च प्रक्षिप्य प्रातः पिबेन्न तु भुक्तः । मधुरौषधानि जीवनीयानि काकोल्यादीनि । कल्पना चेयम् । काकोल्यादीनां मधुराणां कर्षमात्रा द्रव्यादष्टगुणं चतुर्गुणोदकासिद्धं क्षीरशेषं सर्पिर्लाक्षा-कर्षमात्रप्रक्षेपान्वितम् । तच्च लघौ कोष्ठे देयम् । इयं दिनं प्रति मात्रा ॥ ७ ॥

सघृतेनास्थिसंहारं लाक्षां गोधूममर्जुनम् ॥
संधिमुक्तेऽस्थिभग्ने च पिबेत्क्षीरेण मानवः ॥ ८ ॥

सघृतेन क्षीरेणास्थिसंहारादीन्पृथक्पृथक्पिबेत् ॥ ८ ॥

रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम् ॥
छिन्नभिन्नच्युतास्थीनां संधानमचिराद्भवेत् ॥ ९ ॥

सुगमम् ॥ ९ ॥

क्षीरं सलाक्षामधुकं च सर्पिः स्याज्जीवनीयं च पिबेत्सुखार्थी ॥

जीवनीयमिति प्राणधारणम् ॥

भग्नः पिबेत्त्वक्पयसाऽर्जुनस्य गोधूमचूर्णं सघृतेन वाऽथ ॥ १० ॥

पिबेत्त्वक्पयसेति । अर्जुनस्य त्वचा साधितं पयस्त्वक्पयः । अर्जुनत्वक्पयसा घृतेन गोधूमचूर्णं पिबेदिति योज्यम् ॥ १० ॥

लाक्षास्थिसंहृत्ककुभाश्वगन्धा चूर्णीकृता नागबला पुरश्च ॥
संभग्नमुक्तास्थिरुजं निहन्यादङ्गानि कुर्यात्कुलिशोपमानि ॥ ११ ॥

अस्थिसंहृदस्थिसंहारः । ककुभोऽर्जुनः । पुरो गुग्गुलुः । स च समुदितलाक्षादिचूर्णसमोऽन्यतोदर्शनात् । लाक्षागुग्गुलुः ॥ ११ ॥

आभाफलत्रिकव्योषैः सर्वैरेभिः समांशकैः ॥
तुल्यो गुग्गुलुरायोज्यो भग्नसंधिप्रसाधकः ॥ १२ ॥

सुगमम् ॥ आभागुग्गुलुः ॥ १२ ॥

सव्रणस्य भग्नस्य चिकित्सितमाह—

सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ॥
प्रतिसार्य कषायैश्च शेषं भग्नवदाचरेत् ॥ १३ ॥

सव्रणस्येति । स्रुतरक्तस्य । प्रतिसार्य कषायैरिति । न्यग्रोधादिकल्कैः प्रलिप्य । कषायशब्देन कल्कस्याभिधानात् । कार्तिकस्तु मधुरौषधक्काथैः पारिभाव्येति व्याचष्टे । किंविशिष्टैः कषायैः । सर्पिर्मधूत्तरैर्घृतमधुप्रधानैः । शेषमित्याहारविहारादिकं क्षीरवर्जं व्रणप्रक्लेदभयात् ॥ १३ ॥

वातव्याधिविनिर्दिष्टान्स्नेहानत्रापि योजयेत् ॥ १४ ॥

सुगमम् ॥ १४ ॥

असेव्यानाह—

लवणं कटुकं क्षारमम्लं मैथुनमातपम् ॥
व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च ॥ १५ ॥

लवणादयो वर्ज्या आग्नेयत्वात्पाककारित्वाच्च । मैथुनं वातकोपित्वात् ॥ १५ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां षट्चत्वारिंशो भग्नाधिकारः समाप्तः ॥ ४६ ॥

---

## अथ सप्तचत्वारिंशो नाडीव्रणाधिकारः ।

---

भग्नस्यापि सव्रणस्योपेक्षया नाडीभावप्रादुर्भावान्नाडीव्रणम् ॥

नाडीनां गतिमन्विष्य शस्त्रेणाऽऽपाट्य कर्मवित् ॥
सर्वं व्रणक्रमं कुर्याच्छोधनं रोपणादिकम् ॥ १ ॥

सर्वं व्रणकमं कुर्यादित्यस्यैव व्याकरणं शोधनं रोपणादिकमिति । आदिशब्देनेहोत्सादनावसादनसवर्णकरणानि गृह्यन्ते ॥ १ ॥

नाडीं वातकृतां साधु पाटितां लेपयेद्भिषक् ॥

सुगमम् ॥

प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ २ ॥

प्रत्यक्पुष्प्यपामार्गः ॥ २ ॥

पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशाद्वयैः ॥

सुगमम् ॥

श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥ ३ ॥

निकुम्भो दन्ती ॥ ३ ॥

शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥

सुगमम् ॥

आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ॥
सूत्रवर्तिर्व्रणे योज्या शोधनी गतिनाशनी ॥ ४ ॥

कालाऽहिंस्रा ॥ ४ ॥

घोण्टाफलत्वक्मदनात्फलानि पूगस्य च त्वग्लवणं च मुख्यम् ॥
स्नुह्यर्कदुग्धेन सहैष कल्को वर्तीकृतो हन्त्यचिरेण नाडीम् ॥ ५ ॥

घोण्टा स्वल्पकोलिः । एलावणिकेत्यन्ये । अस्याः फलं त्वक् । घोण्टाफलत्वग्लवणानि लाक्षा, इति पाठे घोण्टा बदरीफलं तस्य त्वक् । लवणानि सैन्धवादीनि । पूगात्फलं चाऽऽलवणं च पत्रमिति । अलवणा ज्योतिष्मती कङ्कुमर्दनिका तस्या इदं पत्रमालवणम् । पूगस्य च त्वग्लवणं च मुख्यमिति पाठे लवणं मुख्यं सैन्धवम् ॥ ५ ॥

वर्तीकृतं माक्षिकसंप्रयुक्तं नाडीघ्नमुक्तं लवणोत्तमं वा ॥

वर्तीकृतमिति पाकात् । अन्यथा बन्धो न स्यात् । एतेन पक्वमधुसैन्धववर्तिरपि नाडीहरा ॥

दुष्टव्रणे यद्विहितं च तैलं तत्सेव्यमानं गतिमाशु हन्ति ॥ ६ ॥

दुष्टव्रणे यद्विहितं च तैलमिति । सुश्रुते सद्योव्रणोक्तद्रवन्त्यादितैलम् । दुष्टव्रणविहितं तैलं राजवृक्षादिसुरसादिकषाये हृतं तैलमिति श्रीब्रह्मदेवः ॥ ६ ॥

जात्यर्कशम्याककरञ्जदन्तीसिन्धूत्थसौवर्चलयावशूकैः ॥
वर्तिः कृता हन्त्यचिरेण नाडीं स्नुक्क्षीरपिष्टा सह चित्रकेण ॥ ७ ॥

सुगमम् ॥ ७ ॥

कृशदुर्बलभीरूणां नाडी मर्माश्रिता च या ॥
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ॥ ८ ॥

क्षारसूत्रेण यवक्षाराक्तसूत्रेण । इदं क्षारसूत्रविधानम् । तच्च मुख्यमुक्तम् । दीर्घां गतिं त्रिचतुरङ्गुले बद्धां क्रमेण च्छिन्द्यान्न पुनरेकदैव गतिप्रमाणेन बद्धच्छेदः कार्यः सूत्रच्छेदभयात्पीडातियोगाच्च ॥ ८ ॥

तत्र सूत्रावचारणप्रकारं निर्दिशन्नाह—

एषिण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ॥ ९ ॥
सूच्यां निदध्याद्यत्नेन तथोन्नम्याऽऽशु निर्हरेत् ॥
सूत्रस्यान्तं समानीय गाढं बन्धं समाचरेत् ॥ १० ॥

---

१ क. घ. पूगात्फलं चाऽऽलवणं च पत्रम् । २ घ. °म्याकैकर° । ३ क. घ. °च्याद्यत्नतो चोन्नम्याऽऽशु च निं° ।

ततः क्षारबलं वीक्ष्य सूत्रमन्यत्प्रवेशयेत् ॥
क्षारार्क्ते मतिमान्वैद्यो यावन्न च्छिद्यते गतिः ॥
भगंदरेऽप्येष विधिः कार्यो वैद्येन जानता ॥ ११ ॥

सुगमम् ॥ ९ ॥ १० ॥ ११ ॥

उपोद्धातादर्बुदादिषु बन्धे विशेषमाह—

अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ॥ १२ ॥

अर्बुदादिषु चलेषूत्क्षिप्यैव मूलेन सूत्रं विधेयम् ॥ १२ ॥

सूचीभिर्यववक्त्राभिराचितं वा समन्ततः ॥
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम् ॥ १३ ॥

विशालमूलेषु तु सूत्रस्थैर्यार्थं मूले समन्ततः सूचीभिराचितं यथा स्यात्तथा बध्नीयात् । सूचीनां यववक्त्रत्वं दार्ढ्यार्थम् । छिन्ने चोपचरेद्व्रणमित्यत्र द्विव्रणीयोक्तत्वेन विधिनेत्युपस्कारः ॥ १३ ॥

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः ॥
नाडीदुष्टव्रणहरो भगंदरविनाशनः ॥ १४ ॥

सुगमम् । सप्ताङ्गो गुग्गुलुः ॥ १४ ॥

स्वर्जिकासिन्धुदन्त्यग्निरूपिकानलनीलिकाः ॥
खरमञ्जरिबीजेषु तैलं गोमूत्रपाचितम् ॥
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम् ॥ १५ ॥

अग्निश्चित्रकः । रूपिका श्वेतार्कः । नलः स्वनामख्यातः । नीलिका नीलीति प्रसिद्धा । नीलबुह्नेत्यन्ये । खरमञ्जरी, अपामार्गः । गोमूत्रं पाकार्थं चतुर्गुणम् ।

अत्र सुश्रुतः—

"सुवर्चिकासैन्धवचित्रकेषु निकुम्भनीलीनलरूपिकासु ॥
फलेष्वपामार्गभवेषु चैवं कुर्यात्समूत्रेषु हिताय तैलम्" ।

स्वर्जिकाद्यं तैलम् ॥ १५ ॥

कुम्भीकखर्जूरकपित्थबिल्ववनस्पतीनां च शलाटुवर्गम् ॥
कृत्वा कषायं विपचेत्तु तैलमावाप्य मुस्तासरलाप्रियंगूः ॥ १६ ॥
सौगन्धिकामोचरसाहिपुष्पचूर्णानि दत्त्वा खलु धातकीं च ॥
एतेन शल्यप्रभवा हि नाडी रोहेद्व्रणो वै सुखमाशु चैव ॥ १७ ॥

कुम्भीकः कुभाण्डुर्दाडिमसमानफलः । वनस्पतयो वटादयः । शलाटुरामफलम् । कुम्भीकानां शलाटूनि कोमलफलानि । सरला त्रिवृत् । सौगन्धिकाऽनन्तमूलमुत्पलसा-

१ घ. 'व्रणाचूलम' । २ घ. चैव । ३ घ. 'प्यक्षोभाणि द' ।

रिवा च । मोचरसः शाल्मलिनिर्यासः । अहिपुष्पचूर्णं नागकेसरचूर्णम् । कुम्भीकाद्यं तैलम् ॥ १६ ॥ १७ ॥

भल्लातकतैलमाह—

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ॥
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥ १८ ॥

मार्कवरसेन भृङ्गराजरसेन । मार्कवस्वरसश्चतुर्गुणः । भल्लातकाद्यं तैलम् ॥ १८ ॥

निर्गुण्डीतैलमाह—

समूलपत्रां निर्गुण्डीं पीडयित्वा रसेन तु ॥
तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम् ॥ १९ ॥
हितं पामापचीनां च पानाभ्यञ्जननावनैः ॥
विविधेषु च स्फोटेषु तथा दुष्टव्रणेषु च ॥ २० ॥

तेन सिद्धं समं तैलमिति । सममिति सहार्थे । तेन निर्गुण्डीस्वरसश्च चतुर्गुणे ग्राह्यः । चक्रः समशब्दं तुल्यार्थे वर्णयति । निर्गुण्डीतैलम् ॥ १९ ॥ २० ॥

या द्विव्रणीये विहितास्तु वर्त्यस्ताः सर्वनाडीषु भिषग्विदध्यात् ॥२१॥

या द्विव्रणीये विहितास्तु वर्त्य इति । द्विव्रणीये पुनरेवमुक्तम्—

'अवेदनानां शुद्धानां गम्भीराणां तथैव च ।
हिताः संरोपणे वर्त्यो वर्त्यङ्गै रोपणैः कृताः' ॥

अत्र वर्त्यङ्गै रोपणैरिति मिश्रकोक्तैरिति व्याख्यातम् । मिश्रकेऽप्येवमुक्तम्—

"सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा ।
क्षीरिप्ररोहेष्वपि च वर्तयो रोपणाः स्मृताः" इति ॥

अत्र सोमं कट्फलमिति गदाधरः । इति सन्तीति(?)जैज्जटः ॥ २१ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तचत्वारिंशो नाडीव्रणाधिकारः समाप्तः ॥ ४७ ॥

---

## अथाष्टाचत्वारिंशो भगंदराधिकारः ।

नाडीविशेषत्वात्संख्यासाम्याद्भगंदरः ।

गुदस्य श्वयथुं दृष्ट्वा विशोष्य शोधयेत्ततः ॥
रक्तावसेचनं कार्यं यथा पाकं न गच्छति ॥ १ ॥

विशोष्येत्युपवासादिना । शोधयेद्विरेचयेत् ॥ १ ॥

वटपत्रेष्टिकाशुण्ठीगुडूच्यः सपुनर्नवाः ॥
सुपिष्टा[1] पिटिकावस्थे लेपः शस्तो भगंदरे ॥ २ ॥

वटस्य पक्वं पत्रम् । इष्टिका पानायस्य ग्राह्या संप्रदायत्वात् ॥ २ ॥

पिडका[2]नामपक्वानामपतर्पणपूर्वकम् ॥
कर्म कुर्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रिया ॥ ३ ॥

अपतर्पणपूर्वकम् । कर्म कुर्याद्विरेकान्तमिति । अपतर्पणादयो विरेचनान्ता उपक्रमा द्विव्रणीयोक्ताः कर्तव्या इत्यर्थः । तद्यथा—अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनमिति ॥ ३ ॥

एषणं पाटनं क्षारवह्निदाहादिकं क्रमम् ॥
विधाय व्रणवत्कार्यं यथादोषं यथाक्रमम् ॥ ४ ॥

लोहादिशलाकया एषणम् ॥ ४ ॥

त्रिवृत्तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा ॥
उत्सादनं भवेदेतत्सैन्धवक्षौद्रसंयुतम् ॥ ५ ॥

नागदन्ती दन्तीभेदः । उत्सादनमिति शोधनं संयोगविशेषादाधीरप्रभवत्वाद्वा निम्नमांसोन्नतिकरमिहोत्सादनव्यपदेशमाह कार्तिकः । योगोऽयं वक्ष्यमाणश्च कल्को वा कफजे भद्रक इत्याहुः । सह सर्पिषेत्यत्र पयसा सहेति क्वचित्पाठः ॥ ५ ॥

रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठा निम्बपल्लवाः ॥
त्रिवृत्तेजोवती दन्ती कल्को नाडीव्रणापहः ॥ ६ ॥

तेजोवती चवी ज्योतिष्मती वा । शोधनरोपणोऽयं कल्कः ॥ ६ ॥

न्यग्रोधादिर्गणो यस्तु हितः शोधनरोपणः ॥
तैलं घृतं वा तत्पक्वं भगंदरविनाशनम् ॥ ७ ॥

न्यग्रोधादिर्गणः कल्कः पित्तजे। तैलं घृतं वा तत्पक्वमिति। तत्पक्वं न्यग्रोधादिगणक्काथकल्कपक्वम् ॥ ७ ॥

---

१ क. घ. सुपिष्टाः । २ क. पिटिका° । घ. पिडिका° ।

कुष्ठं त्रिवृत्तिलादन्तीमागध्यः सैन्धवं मधु ॥
रजनी त्रिफला तुत्थं हितं व्रणविशोधनम् ॥ ८ ॥

कुष्ठादियोगो रोपणः ॥ ८ ॥

स्नुह्यर्कदुग्धदार्वीभिर्वर्तिं कृत्वा विचक्षणः ॥
भगंदरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः ॥
एषा सर्वशरीरस्थां नाडीं हन्यान्न संशयः ॥ ९ ॥

सुगमम् ॥ ९ ॥

तिलाभयाकुष्ठमरिष्टपत्रं निशे वचा लोध्रमगारधूमः ॥
भगंदरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोऽयम् ॥ १० ॥

सुगमम् ॥ १० ॥

त्रिफलारससंयुक्तं बिडालास्थिप्रलेपनम् ॥
भगंदरं निहन्त्याशु दुष्टव्रणहरं परम् ॥ ११ ॥

सुगमम् ॥ ११ ॥

त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता गुटिका ॥
कुष्ठभगंदरनाडीदुष्टव्रणशोधिनी कथिता ॥ १२ ॥

तेन त्रिफलायास्त्रिकर्षाः । गुग्गुलोः पञ्च कर्षाः । कृष्णाया एकः कर्षः । एवं नवकार्षिकत्वम् । नवकार्षिको गुग्गुलुः ॥ १२ ॥

जम्बूकमांसं भक्षेत प्रकारैर्व्यञ्जनादिभिः ॥
अजीर्णवर्जी मासेन मुच्यते तु भगंदरात् ॥ १३ ॥

जम्बूकमांसमिति । जम्बूकः शृगालः ॥ १३ ॥

पञ्चतिक्तं घृतं शस्तं तथा गुग्गुलुपूर्वकम् ॥ १४ ॥

तथा गुग्गुलुपूर्वकमिति । गुग्गुलुपञ्चतिक्तकम् ॥ १४ ॥

विष्यन्दनं तैलमाह—

चित्रकार्कौ त्रिवृत्पाठे मलयूहयमारकौ ॥
सुधां वचां लाङ्गलकीं हरितालं सुवर्चिकाम् ॥ १५ ॥
ज्योतिष्मतीं च संक्षुण्णां तैलं धीरो विपाचयेत् ॥
एतद्विष्यन्दनं नाम तैलं दद्याद्भगंदरे ॥
शोधनं रोपणं चैव सवर्णकरणं परम् ॥ १६ ॥

मलयूः काष्ठो(को)दुम्बरकः (रिका)। अस्य मूलम् । रक्तपित्तादौ फलम् । ज्योतिष्मती कङ्गुमर्दनिका । विशेषेण दोषान्स्यन्दयति स्रावयति शोधयतीति यथार्थनाम

१ क. ख. 'यालोध्रम'। २ क. ख. [illegible]।

विस्यन्दनम् । कल्पनामाह—स्नेहचतुर्थांशो भेषजकल्कः स्नेहचतुर्गुणो द्रवः । द्रवमत्र पानीयम्—अनुक्ते द्रवकार्ये तु सर्वत्र सलिलं मतमिति । विष्यन्दनं तैलम् ॥ १५ ॥ १६ ॥

करवीराद्यं तैलमाह—

करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः ॥
मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगंदरे ॥ १७ ॥

मातुलुङ्गस्य मूलम् । वत्साह्वः कुटजः । एतस्य फलम् । करवीराद्यं तैलम् ॥ १७ ॥

व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च ॥
संवत्सरं परिहरेदुपरूढव्रणो नरः ॥ १८ ॥

सुगमम् ॥ १८ ॥

गद्यम्—अर्शोभगंदरे पूर्वमर्शश्छिन्द्यात्ततो गत्यनुसारेण भगंदरम् ॥१॥

सुगमम् ॥ १ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्याया-मष्टाचत्वारिंशो भगंदराधिकारः समाप्तः ॥४८॥

---

## अथैकोनपञ्चाशत्तम उपदंशाधिकारः ।

---

स्थानसामीप्यादुपदंशनिर्देशः ।

स्निग्धस्विन्नस्य तेष्वादौ ध्वजमध्ये शिराव्यधः ॥
जलौकःपातनं वा स्यादूर्ध्वाधःशोधनं तथा ॥

ध्वजमध्य इति । मेहनोपरि मध्यदेशे सिराव्यधो रक्तदुष्टौ महत्यामल्पायां तु जलौकसः । सिराव्यधो बहुदोषेषु जलौकसां पातनं पित्तरक्तजयोर्मृदुत्वाज्जलौकस इत्यन्ये । जेज्जटस्तु—अनवगाढे जलौकसः । अवगाढे सिराव्यध इति । ऊर्ध्वाधःशोधनमिति । बलवतो विरेच्यस्य वमनविरेचनाभ्यामूर्ध्वमधो वा शोधनं दोषहरणम् ॥

पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ १ ॥

सुगमम् ॥ १ ॥

पटोलनिम्बत्रिफलागुडूचीक्वाथं पिबेद्वा खदिरासनाभ्याम् ॥
सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदंशापहरः प्रयोगः ॥ २ ॥

पिबेद्वा खदिरासनाभ्यामिति । खदिरासनयोः पृथक्पृथक्क्वाथः । असनः पीत-

शालः। सगुग्गुलुमिति गतक्काथद्वयेऽपि योज्यम्। त्रिफलायुतं वेति। त्रिफलाक्काथयुतं गुग्गुलुं स च पिबेत् ॥ २ ॥

प्रपौण्डरीकं मधुकं रास्ना कुष्ठं पुनर्नवा ॥
सरलागुरुभद्राख्यैर्वातजं संप्रलेपयेत् ॥ ३ ॥

सरला त्रिवृत्। भद्राख्यो देवदारुः ॥ ३ ॥

गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः ॥
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलेपयेत् ॥ ४ ॥

अञ्जनं रसाञ्जनम् ॥ ४ ॥

निम्बार्जुनाश्वत्थकदम्बशालजम्बूवटोदुम्बरवेतसेषु ॥
प्रक्षालनालेपघृतानि कुर्याच्चूर्णं च पित्तास्रभवोपदंशे ॥ ५ ॥

सुगमम् ॥ ५ ॥

शालाजकर्णाश्वकर्णधवत्वग्भिः कफोत्थितम् ॥
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥ ६ ॥

शालः शङ्कुः। अजकर्णः सालभेदः। अजकर्णः पूर्वदेशे प्रसिद्धोऽश्वत्थसदृश इति डल्लणः। अश्वकर्णो गर्दभाण्डः। गन्धमुण्ड इति डल्लणः। धवः स्वनामख्यातः ॥६॥

त्रिफलायाः कषायेण भृङ्गराजरसेन वा ॥
व्रणप्रक्षालनं कुर्यादुपदंशप्रशान्तये ॥ ७ ॥

सुगमम् ॥ ७ ॥

दहेत्कटाहे त्रिफलां सा मषी मधुसंयुता ॥
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ८ ॥

सुगमम् ॥ ८ ॥

जपाजात्यश्वमारार्कशम्याकानां दलैः पृथक् ॥
कृतं प्रक्षालने क्काथं मेढ्रपाके प्रयोजयेत् ॥ ९ ॥

सुगमम् ॥ ९ ॥

करञ्जाद्यं घृतमाह—

करञ्जनिम्बार्जुनशाकजम्बूवटादिभिः कल्ककषायसिद्धम् ॥
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥ १० ॥

करञ्जफलम्। निम्बस्य पत्रम्। अर्जुनादीनां त्वचः। वटादिभिरिति पञ्चभिर्घृतस्य भक्षणं म्रक्षणं चानेन कार्यम्। करञ्जाद्यं घृतम् ॥ १० ॥

आगारधूमाद्यं तैलमाह—

---

१ क. ख. 'शालञ्ज'।

आगारधूमो रजनी सुराकिट्टं तु तैस्त्रिभिः ॥ ११ ॥
भागोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम् ॥
शोधनं रोपणं चैव सवर्णकरणं तथा ॥ १२ ॥

भागोत्तरैरिति । तैलप्रस्थे, आगारधूमः पलम् १ कर्षः १ माषाः ९ रतयः ३ हरिद्रा पले २ (कर्षौ २) माषाः १० रतयः ६ किण्वं पलानि ३ कर्षाः ३ माषाः १९ रतयः ९ एवं स्नेहपादः कल्कः । आगारधूमाद्यं तैलम् ॥ ११ ॥ १२ ॥

अर्शसां छिन्नदग्धानां क्रिया कार्योपदंशवत् ॥ १३ ॥

अर्शसामिति । लिङ्गजानाम् । एतच्च लिङ्गरोगप्रकरणादुक्तम् ॥ १३ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्री-
कण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामूनपञ्चाशत्तम
उपदंशाधिकारः समाप्तः ॥ ४९ ॥

---

## अथ पञ्चाशत्तमः शूकाधिकारः ।

---

उपदंशानन्तरं शूकदोषः समानस्थानत्वात् । शूको जलशूकः सविषजन्तुर्जलमण्डूकस्तत्कृतो दोषः शूकदोषः । दोषशब्द इह रोगे वर्तते कारणे कार्योपचारात् ॥

हितं च सर्पिषः पानं पथ्यं चापि विरेचनम् ॥
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम् ॥ १ ॥

सर्पिषः पानमिति । यथादोषं संस्कृतस्य घृतस्य पानम् ॥ १ ॥

सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत् ॥
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम् ॥ २ ॥

कषायैरवचूर्णयेदिति । मिश्रकोक्तकषायरोपणद्रव्यैः ।
सुश्रुते—"संलिख्य सर्षपीं सम्यक्कषायैरवचूर्णयेत् ।
कषायेष्वेव कुर्वीत तैलं च व्रणरोपणम्" ॥
इत्यत्र टीकाकृद्भिरेवं व्याख्यातत्वात् । तानि च किंशुकादीनि ।
यदुक्तम्—"किंशुकत्रिफलालोध्रं कासीसं श्रवणाह्वया ।
धवाश्वकर्णयोस्त्वक्च चूर्णं रोपणमिष्यते" इति ॥
श्रवणाह्वया मुण्डितिका । कषायद्रव्याणि वक्ष्यमाणतिन्दुकत्रिफलालोध्राणीत्यन्ये । तैरेव रोपणकषायसाधनद्रव्यैः पादिकैर्जलं चतुर्गुणं दत्त्वा रोपणतैलं कुर्यात् ॥ २ ॥

क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः ॥

---

१ क. ख. किण्वं

सुगमम् ॥

अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥ ३ ॥

अष्ठीलायां हृते रक्त इति । अष्ठीला यद्यपि वातजोक्ता तथाऽपीह शूकदूषितरक्तमावरकं निर्हर्तुं जलौकोभिः शोणितमोक्षणोपदेशः । श्लेष्मग्रन्थिविहितं प्रलेपविम्लापनदारणादिविधानमाचरेत् ॥ ३ ॥

कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ॥
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलं च रोपणम् ॥ ४ ॥

तैलं च रोपणमिति । उक्ततिन्दुकादिकल्कसिद्धम् ॥ ४ ॥

अलज्यां(?) हृतरक्तायामयमेव क्रियाक्रमः ॥

सुगमम् ॥

स्वेदयेद्ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान् ॥
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ५ ॥

शश्वत्प्रतिदिनम् । सुखोष्णैरुपनाहैरिति । कफहरद्रव्यकृतैः । ग्रथितस्य कफजत्वात् । सुस्निग्धैरित्युपनाहविशेषणम् । स्निग्धत्वमिह तैलयोगाज्ज्ञेयम् ॥ ५ ॥

उत्तमाख्यां तु पिडिकां संछेद्य[2] बडिशोद्धृताम् ॥
कल्कचूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ॥ ६ ॥

कषायाणामिति । मिश्रकोक्तरोपणकषायद्रव्याणां तिन्दुकादीनां वा । डल्ह्णस्त्वेवं व्याख्याति—शोधनकाले शोधनद्रव्याणां कषायाणां रोपणकाले रोपणानां कल्कचूर्णैर्यथायोग्यमुपाचरेत् ॥ ६ ॥

क्रमः पित्तविसर्पोक्तः पुष्करीमूढयोर्हितः ॥ ७ ॥
त्वक्पाके स्पर्शहान्यां च सेचयेन्मृदितं[3] पुनः ॥
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ ८ ॥

पुष्करीमूढयोरिति । पुष्करिकासंमूढपिटिकयोः । संमूढपिटिका वातजा यद्यप्युक्ता तथाऽप्यत्र शूकदूषितप्रवृद्धरक्तसंबन्धाद्व्याधिप्रत्यनीकाद्वा पित्तविसर्पोक्तक्रमो हितः । त्वक्पाके स्पर्शहान्यां चेति पूर्वेण योज्यम् । तेनैव तयोरपि पित्तवीसर्पोक्त एव क्रमः । बलातैलेनेति । संग्रहे वातव्याध्युक्तेन । मधुरैरिति । काकोल्यादिभिः ॥ ७ ॥ ८ ॥

रसक्रिया विधातव्या लिखिते शतपोतके[4] ॥
पृथक्पर्ण्यादिसिद्धं च तैलं देयमनन्तरम् ॥ ९ ॥

रसक्रिया विधातव्येति । रसक्रिया मिश्रकोक्ता छिन्नणीयोक्ता वा ।
मिश्रकोक्ता यथा—

---

१ घ. °ल्प्यां ह°। २ क. घ. संछाय । ३ घ. सेचये° । ४ क. °पोनके ।

"त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ।
रसक्रियां रोपणार्थे विदधीत यथाक्रमम्" इति ॥

द्विव्रणीयोक्ता यथा—

"अबन्ध्यानां चलस्थानां *शुद्धानामप्ररोहताम् ।
द्विहरिद्रायुतां कुर्याद्रोपणार्थां रसक्रियाम्" इति ॥

पृथक्पर्ण्यादि मिश्रकोक्तरोपणघृतसाधनद्रव्यं काकोल्यादिवर्गितम् ।
तद्यथा—"पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिताः (ता) ।
काकोल्यादिश्च योज्यः स्याद्भिषजा रोपणे घृते" इति ॥

देयमनन्तरमिति । रसक्रियां कृत्वेत्यर्थः ॥ ९ ॥

रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे ॥

शोणितजेऽर्बुदे लिङ्गजेऽर्बुदे ॥

कषायकल्कसर्पींषि तैलचूर्णरसक्रियाः ॥
शोधने रोपणे चैव वीक्ष्य वीक्ष्यावचारयेत् ॥ १० ॥

कषायादीनि शोधने रोपणे द्विव्रणीयोक्तामवस्थां निरूप्य प्रयुञ्जीत ॥ १० ॥

अर्बुदं मांसपाकं च विद्रधिं तिलकालकम् ॥
प्रत्याख्याय प्रकुर्वीत भिषक्तेषां प्रतिक्रियाम् ॥ ११ ॥

अर्बुदमित्यादिनाऽर्बुदादिष्वसाध्यत्वेनोक्तेष्वपि साध्यताऽप्यसंपूर्णलिङ्गत्वाद्यवस्थायां संभवति तां च निसर्गामवस्थामजानन्नसर्वविदुरो वैद्यः प्रतिक्रियानिवृत्तिं मा करोत्विति कारुणिकतया मुनिः प्रत्याख्याय क्रियाकरणमुपदिशति । एवं हि संशयं ब्रुवन्दुर्यशो न लभते । यस्तु मुनिप्रख्यः प्रज्ञावान्सूक्ष्मामपि साध्यासाध्यावस्थां विनिश्चित्यैव प्रवर्तते निवर्तते च न वं प्रति प्रत्याख्याय प्रतिकरणं युक्तं यापनार्थं प्रत्याख्याय क्रियार्थिभिरित्यन्ये । प्रतिक्रियामिति । सामान्योक्तां कषायकल्कादिरूपाम् ॥ ११ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चाशत्तमः शूकदोषाधिकारः समाप्तः ॥ ५० ॥

---

## अथैकपञ्चाशत्तमः कुष्ठाधिकारः ।

---

शूकदोषानन्तरं कुष्ठमष्टादशसंख्यायोगस्य साम्यात् ॥

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ॥
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रे ॥ १ ॥

---

* शुद्धानां च प्रदुष्यतामिति सौश्रुतः पाठः ।

वातोत्तरेषु सर्पिरिति। सर्पिरिह शोधनं शमनं च। अग्र इति प्रथमं सर्पिरादि पथमं कार्यमित्यर्थः। अग्र्यमिति पाठे श्रेष्ठम् ॥ १ ॥

प्रच्छनमल्पकुष्ठे महति च शस्तं शिराव्यधनम् ॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ॥ २ ॥

बहुश इति। स्तोकस्तोकदोषहरणेन बहुधा। एकदा भूरिदोषहरणे हि बलक्षयो महात्ययः स्यात् ॥ २ ॥

अत एवाऽऽह—

दोषे ह्यतिमात्रहृते वायुर्हन्याच्च बलमाशु ॥

सुगमम् ॥

आवस्थिकं वमनमाह—

दोषोत्क्लिष्टे हृदये वमनं कुष्ठेषु चोर्ध्वभागेषु ॥ ३ ॥

पूर्वं वमनं दोषमधिकृत्योक्तमिदं त्वावस्थिकमिति न पौनरुक्त्यम् ॥ ३ ॥

वचावासापटोलानां निम्बस्य फलिनीत्वचः ॥
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ॥

फलिनीत्वच इति। फलिनी प्रियंगुः। वमनार्थं क्वाथविधौ परिभाषा—

"क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके।
चतुर्भागावशिष्टं तु वमनेष्ववचारयेत्" इति ॥

पञ्चकषायः ॥

विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ ४ ॥

सुगमम् ॥ ४ ॥

मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः ॥

अलं हरितालम्। तैलं सार्षपं कुष्ठहरत्वात्। आर्कं पयोऽर्कक्षीरम् ॥

करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टं च परः प्रदेहः ॥ ५ ॥

सुगमम् ॥ ५ ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ॥
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्तयेदश्वहनच्छदैश्च ॥ ६ ॥

चतुरङ्गुलः सुवर्णालुः। अश्वहनः करवीरः। चतुरङ्गुलकाकमाच्यश्वहनपत्रैरेक एव मिलित्वा योगः। योगत्रित्वे हि चरके द्वात्रिंशत्प्रदेहसंख्याहानिः स्यात् ॥ ६ ॥

एडगजकुष्ठसैन्धवसौवीरकसर्षपैः कृमिघ्नैश्च ॥
कृमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः ॥ ७ ॥

---

१ ब. 'मस्ते कु' । २ क. 'पिष्ट च' ।

एडगजश्चक्रमर्दः । सौवीरकं सौवीराञ्जनम् । कृमिघ्नं विडङ्गम् । लेपोऽयं गोमूत्रेण पिष्ट्वा कार्यः । लेपाश्च कुष्ठे रक्तमोक्षणसंशोधनानन्तरं प्रयुज्यमानाः सद्यःसिद्धिदायका भवन्ति । यदुक्तं चरके—

"ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्" इति ॥ ७ ॥

कोठाभिहितं कुष्ठादिलेपमत्रापि कारयेत् ॥ ८ ॥

कोठाभिहितं कुष्ठादिलेपमिति । शीतपित्ताद्यधिकारोक्तं कुष्ठहरिद्रेत्यादिलेपं कारयेत् ॥ ८ ॥

आरग्वधस्य पत्राणि आरनालेन पेषयेत् ॥
दद्रुकिटिभकुष्ठानि हन्ति सिध्मानमेव च ॥ ९ ॥

सुगमम् ॥ ९ ॥

स्थौणेयरुङ्निशादूर्वासप्ततालाः प्रलेपतः ॥
धत्तूररसपिष्टास्तु कण्डूकच्छ्वादिनाशनाः ॥ १० ॥

स्थौणेयं ग्रन्थिपर्णम् । रुक् कुष्ठम् । सप्तताला तालमूली । सप्ततालास्थाने सप्तचारा-निति पाठान्तरम् ॥ १० ॥

कासमर्दकमूलं तु सौवीरेण च पेषितम् ॥
दद्रुकिटिभकुष्ठानि जयेदेतत्प्रलेपनात् ॥ ११ ॥

सौवीरेणेति । सौवीरं निस्तुषयवकृतं संधानं तदभावे काञ्जिकम् ॥ ११ ॥

बीजानि वा मूलकसर्षपाणां लाक्षारजन्यौ प्रपुनाडबीजम् ॥
श्रीवेष्टकव्योषविडङ्गकुष्ठं पिष्ट्वा तु मूत्रेण विलेपनं स्यात् ॥
दद्रूणि सिध्मं किटिभं च पामां कपालकुष्ठं विषमं च हन्यात् ॥ १२ ॥

सुगमम् ॥ १२ ॥

विडङ्गैडगजाकुष्ठनिशासिन्धूत्थसर्षपैः ॥
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठविनाशनः ॥ १३ ॥

सुगमम् ॥ १३ ॥

दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः ॥
त्रिभिः प्रलेपैरपि बद्धमूलां दद्रुं च कण्डूं च विनाशयन्ति ॥ १४ ॥

चक्रमर्द एडगजः । कुठेरकः पर्णासः । त्रिभिः प्रलेपैरित्यनेन शीघ्रं प्रशमकारित्वं दर्शयति न तु नियमोऽयम् ॥ १४ ॥

तुल्यो रसः शालतरोस्तुषेण सचक्रमर्दोऽप्यभयाविमिश्रः ॥
पानीयभक्तेन तदम्बुपिष्टो लेपः कृतो दद्रुगजेन्द्रसिंहः ॥ १५ ॥

---

१ क. 'सचारान्मले'।

रसः शालतरोरिति । धूणकम् । तुषेणेति । धान्यत्वचः । सालतरुरसादीनां पानीयभक्तान्तानां समो भागः । तदम्बुपिष्ट इति । पानीयभक्ताम्बुपिष्टः ॥ १५ ॥

यद्वरेन्द्रीसमुद्भूतं तृणाख्यं च महौषधम् ॥
घर्षणाद्भक्षणात्तस्य कुष्ठं क्षिप्रं प्रशाम्यति ॥ १६ ॥

सुगमम् ॥ १६ ॥

शिखरिरसेन सुपिष्टं मूलकबीजं प्रलेपतः सिध्मम् ॥
क्षारेण कदल्या वा रजनीमिश्रेण नाशयति ॥ १७ ॥

शिखरिरसेनेति । अपामार्गक्षारोदकेन तद्रसेन वा । क्षारेण कदल्या वेति । क्षारेण क्षारोदकेन पेषणं प्रति विकल्पेनास्य प्रणयनात् ॥ १७ ॥

गन्धपाषाणमिश्रेण यवक्षारेण लेपितम् ॥
सिध्म नाशमुपैत्याशु कटुतैलयुतेन तु ॥ १८ ॥

गन्धपाषाणमिश्रेणेति । गन्धपाषाणो गन्धकः ॥ १८ ॥

कासमर्दकबीजानि मूलकानां तथैव च ॥
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ १९ ॥

सुगमम् ॥ १९ ॥

धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तदासुतश्च ॥
भवन्ति सिध्मानि यथा न भूयस्तथेदमुद्वर्तनकं करोति ॥ २० ॥

धात्रीरस इति । आमलकीक्काथः । रसो रसाञ्जनमित्यन्ये । संप्रदायस्तु नैतादृशः । सर्जरसो धूणकम् । सपाक्य इति । पाक्यो यवक्षारो विडलवणं वा । यवक्षारेण प्रचारः । तदासुत इति । सौवीरेण संधितः । संधानं च दिनत्रयम् । पूतीकृतं दिवसत्रयमेतदितिप्रयोगान्तरदर्शनात् ॥ २० ॥

पत्रकोषणकासीसतैलताप्यमनःशिलाः ॥
सप्ताहमुषिताः कांस्ये सिध्मश्वित्रविनाशनाः ॥ २१ ॥

ताप्यं सुवर्णमाक्षिकं रसाञ्जनं वा ॥ २१ ॥

धात्र्यक्षपथ्याक्रिमिशत्रुवह्निभल्लातकावल्गुजलोहभृङ्गैः ॥
भागाभिवृद्धैस्तिलतैलमिश्रैः सर्वाणि कुष्ठानि निहन्ति लेहः ॥ २२ ॥

लोहं लोहचूर्णम् । भृङ्गं गुडत्वक् । लेह इत्यस्य स्थाने लेप इति पाठो न युक्तो वैद्यप्रसारके भक्ष्यचूर्णप्रस्तावेऽस्य पाठात् ॥ २२ ॥

शशाङ्कलेखा सविडङ्गकुष्ठा सपिप्पलीका सकुताशमूला ॥
सायोमला सामलका सतैला सर्वाणि कुष्ठानि निहन्ति लीढा ॥ २३ ॥

---

१ क. घ. 'त्यं महदीय' । २ क. घ. वहु । ३ क. घ. 'हुतारा स' ।

शशाङ्कलेखेति । अवल्गुजः । सहुताशमूलेति । हुताशश्चित्रकः ॥ २३ ॥

आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे ॥
श्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकं च ॥ २४ ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सालोमशो गुग्गुलुकृष्णगन्धे ॥
फणिज्जको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥ २५ ॥
वचा हरेणुस्त्रिवृता निकुम्भा भल्लातको गैरिकमञ्जनं च ॥
मनःशिलाले गृहधूम एला कासीसलोध्रार्जुनमुस्तसर्जाः ॥ २६ ॥
इत्यर्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः ॥
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥ २७ ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिभं सदद्रु ॥
भगंदरार्शांस्यपचीं सपामां हन्युः प्रयुक्ता न चिरान्नराणाम् ॥ २८ ॥

आरग्वधस्य पत्रं कुष्ठे बहिष्परिमार्जनरूपत्वाद्यौगिकम् । श्याह्वो नवनीतखोटिः । सुराह्वो देवदारुः । ग्रन्थिश्च भौर्ज इति । भूर्जपत्रग्रन्थिः । सालोमश इति । आलोमशास्तमालपत्रमिति बाष्पचन्द्रः । धातुकासीसमिति चक्रः । सलोमश इति पाठो न युक्तः । योगो ह्ययं चरकस्य तत्र टीकाकृता न केनाप्ययं पाठो व्याख्यातः । कृष्णगन्धः सौभाञ्जनः । सुमनःप्रवाला जातीपल्लवाः । अर्धरूपैरिति । अर्धश्लोकैः । गोपित्तपीता इति । पीतगोपित्ताः । आहिताग्न्यादित्वेन पूर्वनिपातानियमः । गोपित्तभाविता इत्यर्थः । किंवा गोपित्तभावनया पीतवर्णा गोपित्तपीताः । सिद्धाः परमिति । अत्यर्थं सिद्धफलाः । सिद्धफलत्वं चैषां दुर्जयबहुकुष्ठादिदोषाणामाशुहरणात् । चूर्णप्रदेहा इति । चूर्णानि प्रदेहाश्चेति वृन्दः । किं वा चूर्णरूपाणामेषां प्रदेहाः । प्रदेहार्थं चेह द्रवं कुष्ठहरतैलगोमूत्रादिकं गृह्णीते । सुरेन्द्रलुप्तमिन्द्रलुप्तकम् । कुष्ठग्रहणेन लब्धानामपि किटिभदद्रूपामानां पुनरभिधानं विशेषार्थम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

क्षारे सुदग्धे गजलिण्डजे च गजस्य मूत्रेण बहुस्रुते च ॥
द्रोणप्रमाणे दशभागयुक्तं दत्त्वा पचेद्बीजमवल्गुजस्य ॥ २९ ॥
एतद्यदा चिक्कणतामुपैति तदा सुसिद्धां गुटिकां प्रकुर्यात् ॥
श्वित्रं प्रलिम्पेदथ तेन घृष्टं तदा व्रजेदाशु सवर्णभावम् ॥ ३० ॥

गजलिण्डं गजपुरीषम् । जलगण्डजे चेति पाठाज्जलगण्डः समठः । जलगण्डो जलपिप्पलीत्यपरे । जलगण्डीरक इत्यन्ये । क्षारस्य द्रोणमेकम् । तच्च पलस्य(लानि)२५६ अस्य पाकार्थं द्रवद्विगुणितं मूत्रद्रोणत्रयम् । तच्च द्विगुणगणनया षड्द्रोणानि स्युः । तैश्च मूत्रशरावाः १८२ तृतीयभागावशिष्टं द्रवद्विगुणद्रोणमेकं ग्राह्यम् । तच्च शरावाः ६४ गजस्य मूत्रेणेत्यतः परं पक्व इति शेषः । बहुस्रुत इत्येकविंशतिवारान् । दशभा-

गयुक्तमिति । क्षारतो दशभागेन युक्तम् । तेनावल्गुजबीजस्य पलानि २१ कर्षौ २ रतयः ४ यदा चिक्कणतामुपैति वर्तितं सदिति शेषः ॥ २९ ॥ ३० ॥

वायस्येडगजाकुष्ठकृष्णाभिर्गुटिका कृता ॥
बस्तमूत्रेण संपिष्टा प्रलेपाच्छ्वित्रनाशनी ॥ ३१ ॥

वायसीति काकमाची ॥ ३१ ॥

पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ॥
लेपाच्छ्वित्रं घ्नन्ति दद्रुव्रणांश्च कुष्ठान्यर्शोदुष्टनाडीव्रणांश्च ॥ ३२ ॥

पूतीकश्चिरबिल्वः । नरेन्द्रद्रुमः सुवर्णालुः । राजवृक्षद्रुमोत्थानिति पाठे द्रुमः कुटजः। पाठस्त्वेष सुश्रुते बहुपुस्तकेषु नास्ति । छन्दोभङ्गश्च । पल्लवाः पत्राण्यपेक्षितानि । सुमना जाती तदुद्भवाः सौमनाः । एभिर्व्यस्तसमस्तैर्लेपः ॥ ३२ ॥

कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ॥
मूत्रेण गवां पिष्टः सवर्णकरणः परः श्वित्रे ॥ ३३ ॥

सुगमम् ॥ ३३ ॥

धात्रीखदिरयोः क्वाथं पीत्वाऽवल्गुजसंयुतम् ॥
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

चक्रांङ्कबीजं स्नुक्क्षीरभावितं मूत्रसंयुतम् ॥
रवितप्तं सकिण्वं च लेपनं किटिभापहम् ॥ ३५ ॥

चक्राङ्क एडगजः । चक्राङ्कबीजं किण्वं च चूर्णीकृत्य स्नुहीक्षीरे सप्तधा भाव्यं ततो मूत्रलौहित्यमातप्तं प्रलेपनम् ॥ ३५ ॥

उन्मत्तकस्य बीजेन माणकक्षारवारिणा ॥
कटुतैलं विपक्तव्यं शीघ्रं हन्याद्विपादिकाम् ॥ ३६ ॥

उन्मत्तकस्येति । धत्तूरकस्य ॥ ३६ ॥

नालिकेरोदरे न्यस्तस्तण्डुलः पूतितां गतः ॥
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥ ३७ ॥

नालिकेरोदर इति । सतोय एव । विपादिकामिति । पादस्फुटनम् ॥ ३७ ॥

आवल्गुजं कासमर्दं चक्रमर्दं निशायुतम् ॥ ३८ ॥
माणिमन्थेन तुल्यांशं मधुकाञ्जिकपेषितम् ॥
कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट् ॥ ३९ ॥

अवल्गुजादीनां त्रयाणां बीजम् ॥ ३८ ॥ ३९ ॥

---

१ क. 'सुमनजवल्गु' । २ ख. ग. 'न्युर्जासुमना' । ३ क. 'काञ्जी' ।

कोमलसिंहास्यदलं सनिशं सुरभीजलेन संपिष्टम् ॥
दिवसत्रयेण नियतं क्षपयति कच्छूं विलेपनतः ॥ ४० ॥

कोमलसिंहास्यदलमिति । सिंहास्यो वासा । सुरभीजलेन गोमूत्रेण ॥ ४० ॥

हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम् ॥
पिबेन्नरः कामचारी कच्छूपामाविनाशनम् ॥ ४१ ॥

हरिद्राकल्कसंयुक्तमिति । गोमूत्रपलद्वये हरिद्राकल्कस्य कर्षप्रक्षेपः शास्त्रयुक्त्या । तदुक्तम्—मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवदिति । स्नेहक्वाथग्रहणं चात्रोपलक्षणम् । प्रचारात्तु तस्य त्रिचतुरमाषकमानस्य प्रक्षेपः ॥ ४१ ॥

शोथपाण्ड्वामयहरी गुल्ममेहकफापहा ॥
कच्छूपामाहरी चैव पथ्या गोमूत्रसाधिता ॥ ४२ ॥

गोमूत्रसाधितेति । गोमूत्रोत्स्विन्ना ॥ ४२ ॥

पिबति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तं पामनो यः पलार्धम् ॥
त्रिदिनतदनुषिक्तः क्षीरभोजी च शीघ्रं
भवति कनकदीप्त्या कामयुक्तो मनुष्यः ॥ ४३ ॥

पलार्धमिति । उत्तमबलानलं प्रति प्रात्यहिकी मात्रा । किंच पलार्धं दिनत्रयं विभज्योपयोज्यम् । व्यवहारः पुनः प्रत्यहं माषचतुष्टयेन कटुतैलं तस्योचितं देयम् । त्रिदिनं तदनुषिक्तस्त्रिदिनतदनुषिक्तः । तदनुषिक्तः। तेन सतैलगन्धकचूर्णेनाभ्यक्तगात्रः। किंच त्रिदिनं सतैलं गन्धकचूर्णं पिबेत् । छन्दोनुरोधादनुस्वारलोपः । क्षीरासहत्वे त्वन्नमण्डेन भोजनम् । वातातपादिपरिहारेण चास्य विधानम् ॥ ४३ ॥

निशासुधारग्वधकाकमाची-
पत्रैः सदार्वीप्रपुनाटबीजैः ॥
सौवीरपिष्टैः कटुतैलमिश्रैः
पामादिषूद्वर्तनमेतदिष्टम् ॥ ४४ ॥

सुधा स्नुहा । स्नुहारग्वधयोरपि पत्रम् । सुधायाः काण्डो वा ॥ ४४ ॥

मांसीचन्दनशम्याककरञ्जारिष्टसर्षपम् ॥
शटीकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः ॥ ४५ ॥

शम्याकः सुवर्णालुः । तस्य पत्रम् । करञ्जस्य कुटजस्य च फलम् । अरिष्टस्थाने कुष्ठमिति पाठान्तरम् । गणोऽयं यथालाभं लेपोद्वर्तने योज्यः ॥ ४५ ॥

घर्मसेवी कटुष्णेन वारिणा वाकुचीं पिबेत् ॥
क्षीरभोजी त्रिसप्ताहात्कुष्ठरोगात्प्रमुच्यते ॥ ४६ ॥

---

१ क. ख. 'कफाम्रितः का' । २ क ख. तभेन विके ।

घर्मसेवीति । आतपसेवी । बाकुचीमवल्गुजबीजम् । अस्य माषकचतुष्टयमुष्णाम्बुना पेयम् ॥ ४६ ॥

एडगजातिलसर्षपकुष्ठं मागधिकालवणद्वयमस्तुपूतिकृतम् ॥
दिवसत्रयमेतद्धन्ति सदद्रु विचर्चिककुष्ठम्* ॥ ४७ ॥

एडगजादीनां मस्तुना पेषणं संधानं च ॥ ४७ ॥

भल्लातकद्वीपिसुधार्कमूलगुञ्जाफलत्र्यूषणशङ्खचूर्णम् ॥
तुत्थं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकां च पक्त्वा॥४८॥
स्नुह्यर्कदुग्धे घनमायसस्थं शलाकया तद्विदधीत लेपम् ॥
कुष्ठे किलासे तिलकालकेषु अशेषदुर्नामसु चर्मकीले ॥ ४९ ॥

द्वीपी चित्रकः । पक्त्वेति । वडवडायित्वा । स्नुह्यर्कक्षीरमिह पाकानुरूपं चतुर्गुणं वा देयम् । आयसस्थमिति । लोहपात्रस्थम् ॥ ४८ ॥ ४९ ॥

विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्वाः क्षीरमर्कस्नुहीभ्याम् ॥
दहति पतितमात्रात्कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ ५० ॥

विषं मारकद्रव्यम् । अनलो भल्लातकं ज्योतिष्मती वा । इदमप्यर्कस्नुहाक्षीरेण लोहपात्रे वडवडायितव्यमित्याहुः ॥ ५० ॥

त्रिफलापटोलरजनीमञ्जिष्ठारोहिणीवचानिम्बैः ॥
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥ ५१ ॥

सुगमम् । नवककषायः ॥ ५१ ॥

छिन्नायाः स्वरसं वाऽपि सेवमानो यथाबलम् ॥
जीर्णे घृतेन भुञ्जीत स्वल्पयूषोदकेन तु ॥
अतिपूतिशरीरोऽपि दिव्यमूर्तिर्भवेन्नरः ॥ ५२ ॥

सुगमम् ॥ ५२ ॥

पटोलखदिरारिष्टत्रिफलाकृष्णवेत्रकम् ॥
तिक्ताशनः पिबेत्क्वाथं कुष्ठं कुष्ठी व्यपोहति ॥ ५३ ॥

कृष्णवेत्रकमिति कालवेत इति ख्यातम् । तिक्ताशनस्तिक्तरसभोजी ॥ ५३ ॥

तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ॥
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः ॥ ५४ ॥

त्रिफला मिलिता तिलाद्येकभागसमा । एवं व्योषमपि । अतः सप्तसमो योगः॥५४॥

---

* ख. पुस्तके—बिभीतकप्रयोगो वा जात्यारससमाक्षिकः प्रवरः । सप्तदशकुष्ठं घातीमाक्षिकधातोश्च मूत्रेण ॥ १ ॥ इत्यधिकमत्र ।

विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ॥
हन्ति कुष्ठकृमीन्मेहान्नाडीव्रणभगंदरान् ॥ ५५ ॥

सुगमम् ॥ ९९ ॥

इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम् ॥ ५६ ॥
तच्चूर्णं मधुसर्पिर्भ्यां लिहेत्क्षीरघृताशनः ॥
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतत्रयम् ॥ ५७ ॥

इन्द्राशनं स्वनामख्यातं तस्य चूर्णं त्रिचतुर्माषकमानं ग्राह्यम् ॥ ९६ ॥ ९७ ॥

यः खादेदभयारिष्टमरिष्टामलकानि च ॥
स जयेत्सर्वकुष्ठानि मासादूर्ध्वं न संशयः ॥ ५८ ॥

अभयारिष्टमिति । हरीतकीनिम्बकल्कम् ॥ ९८ ॥

दशमानावधुतः कुम्भे मूलगे खदिराद्रसः ॥
साज्यधात्रीरसक्षौद्रो हन्यात्कुष्ठं रसायनम् ॥ ५९ ॥

साज्यधात्रीरसक्षौद्र इति । खदिररसेन समो धात्रीरसः । अक्षाज्यक्षौद्रे प्रक्षेप-न्यायात् ॥ ९९ ॥

पञ्चनिम्बचूर्णमाह—

पुष्पकाले तु पुष्पाणि फलकाले फलानि च ॥
संगृह्य पिचुमन्दस्य त्वङ्मूलानि दलानि च ॥ ६० ॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ॥
त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्करामिकाः ॥ ६१ ॥
विडङ्गसारवाराहीलोहचूर्णामृताः समाः ॥
निशाद्वयावल्गुजकव्याधिघाताः सशर्कराः ॥ ६२ ॥
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम् ॥
खदिरासननिम्बानां घनक्वाथेन भावयेत् ॥ ६३ ॥
सप्तधा पञ्चनिम्बं तु मार्कवस्वरसेन तु ॥
स्निग्धशुद्धतनुर्धीमान्योजयेच्च शुभे दिने ॥ ६४ ॥
मधुना तिक्तहविषा खदिरासनवारिणा ॥
लेह्यमुष्णाम्बुना वाऽपि कोलवृद्ध्या पलं पिबेत् ॥
जीर्णे तु भोजनं कार्यं स्निग्धं लघु हितं च यत् ॥ ६५ ॥
विचर्चिकोदुम्बरपुण्डरीककपालदद्रूकिटिभालसादि ॥

१ च. संपूर्य । २ क. घ. भवेत् ।

शतारुविस्फोटविसर्पमालाः कफप्रकोपं त्रिविधं किलासम् ॥
भगंदरश्लीपदवातरक्तं जहाति नाडीव्रणशीर्षरोगान् ॥ ६६ ॥
सर्वप्रमेहान्प्रदरांश्च सर्वान्दंष्ट्राविषं मूलविषं निहन्ति ॥
स्थूलोदरः सिंहकृशोदरश्च सुश्लिष्टसंधिर्मधुनोपयोगात् ॥ ६७ ॥
समोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ॥
जीवेच्चिरं व्याधिजराविमुक्तः शुभे रतश्चन्द्रसमानकान्तिः ॥ ६८ ॥

द्विरंशानि प्रत्येकं द्विभागानि । त्रिफलादीनां प्रत्येकमेकभागता । त्रिफलात्र्यूषणयोः प्रत्येकं भागः । अग्निश्चित्रकः । वाराही वाराहीकन्दः । व्याधिघातः सुवर्णालुः । खदिरासननिम्बानां घनक्काथेन भावयेदिति । प्रत्येकं खदिरादीनामष्टभागशिष्टेन क्काथेन भावना । असनः पीतशालः । स्वनामख्यात इत्यन्ये । पञ्चनिम्बमिति । पञ्चनिम्बोपलक्षितं चूर्णम् । तेन सर्वमेव चूर्णं शर्करां विना भाव्यं पश्चाच्छर्करायोगः । एवं प्रचारः । केचिन्निम्बपञ्चचूर्णस्यैकभावनमाहुः । शुद्धतनुर्वमनविरेकादिना । तिक्तहविषा तिक्तघृतेन । खदिरासनवारिणेति । खदिरवारिणाऽसनवारिणा वा । कोलवृद्ध्येति । कोलः कर्षार्धः समोपयोगात् । पञ्चनिम्बाद्यं चूर्णम् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

चित्रकत्रिफला व्योषमजाजी कारवी वचा ॥
सैन्धवातिविषाकुष्ठं चव्यैलायावशूकजम् ॥ ६९ ॥
विडङ्गान्यजमोदा च मुस्तान्यमरदारु च ॥
यावन्त्येतानि सर्वाणि तावन्मात्रं तु गुग्गुलुम् ॥ ७० ॥
संक्षुद्य सर्पिषा सार्धं गुटिकां कारयेद्भिषक् ॥
प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ॥ ७१ ॥
हन्त्यष्टादश कुष्ठानि क्रमीन्दुष्टव्रणानि च ॥
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥ ७२ ॥
गृध्रसीमस्थिभग्नं च गुल्मं चापि नियच्छति ॥
व्याधीन्कोष्ठगतांश्चान्याञ्जयेद्विष्णुरिवासुरान् ॥ ७३ ॥

सुगमम् । एकविंशतिको गुग्गुलुः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

प्रलेपोद्वर्तनस्नानपानभोजनकर्मणा ॥
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥ ७४ ॥

खादिरं वारीति । खदिरं दग्ध्वा गृहीतं वारि क्काथो वा ॥ ७४ ॥

---

१ क. °र्मणि । शी° २ क. शीतलं ।

संप्रति घृतान्याह—

निम्बं पटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ॥
कुर्यादर्धपलांशान्पर्पटकं त्रायमाणां च ॥ ७५ ॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत्पूते ॥
चन्दनकिराततिक्तकमागधिकास्त्रायमाणां च ॥ ७६ ॥
मुस्तं वत्सकबीजं कल्कीकृत्यार्धकार्षिकान्भागान् ॥
नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥ ७७ ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथुहन्तृ ॥
पामाविसर्पपिटिकाकण्डूमदगण्डनुत्सिद्धम् ॥ ७८ ॥

नवसर्पिषश्च षट्पलमिति । नूतनघृतस्य षट्पलानि । नवत्वमिह सर्पिश्चाप्यनवं हितमिति वचनस्य योगमहिम्ना बाधकम् । अनेन षट्पलाभिधानेन कुष्ठे ज्येष्ठा षट्पली स्नेहमात्रैकाहोपयोज्या दर्शितेत्याहुः केचित् । द्वितीयमिह सिद्धमिति पदं सिद्धफलतां ब्रूते । तिक्तषट्पलकं घृतम् ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

पञ्चतिक्तकघृतमाह—

निम्बं पटोलं व्याघ्रीं च गुडूचीं वासकं तथा ॥
कुर्याद्दशपलान्भागानेकैकस्य सुकुट्टितान् ॥ ७९ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ॥
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥ ८० ॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम् ॥
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ ८१ ॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति ॥
दुष्टव्रणकृमीनर्शः पञ्च कासांश्च नाशयेत् ॥ ८२ ॥

चत्वारिंशच्च पैत्तिकानिति । चत्वारिंशच्च ये रोगास्तान्हन्ति । कांस्तानित्याकाङ्क्षायामुक्तं पैत्तिकानिति । एवं भेदयित्वा योजना कार्या । अन्यथा चत्वारिंशतमिति द्वितीयया प्रयोगः स्याच्चत्वारिंशच्छब्दस्य स्त्रीलिङ्गत्वात् । पञ्चतिक्तकघृतम् ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥

तिक्तकघृतमाह—

त्रिफलाद्विनिशावत्सयासपर्पटकुलकान् ॥
त्रायन्तीकटुकानिम्बान्प्रत्येकं द्विपलोन्मितान् ॥ ८३ ॥

१ क. घ. °मिति स्या° । २ क. घ. °शावासाया° ।

क्राथयित्वा जलद्रोणे पादशेषेण तेन तु ॥
घृतप्रस्थं पचेद्युक्तैः पिप्पलीघनचन्दनैः ॥ ८४ ॥
त्रायन्तीशक्रभूनिम्बैस्तत्पीतं तिक्तकं घृतम् ॥
हन्ति कुष्ठज्वरार्शांसि श्वयथुं ग्रहणीगदम् ॥
पाण्डुरोगं विसर्पं च क्लीबानामपि शस्यते ॥ ८५ ॥

कुलकं पटोलपत्रम् । शक्रः कुटजस्तस्य फलम् । तिक्तकं घृतम् ॥ ८३ ॥ ८४ ॥ ॥ ८५ ॥

महातिक्तकघृतमाह—

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ॥ ८६ ॥
मुस्तमुशीरं त्रिफलां पटोलपिचुमन्दपर्पटकम् ॥
धन्वयवासं चन्दनमुपकुल्ये पद्मकं रजन्यौ च ॥ ८७ ॥
षड्ग्रन्थां सविशालां शतावरीं सारिवे चोभे ॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्तं च ॥ ८८ ॥
कल्कान्कुर्यान्मतिमान्यष्ट्याह्वं त्रायमाणां च ॥
कल्कस्तु चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम् ॥ ८९ ॥
द्विगुणो घृतात्प्रदेयस्तत्सर्पिः पाययेत्सिद्धम् ॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि ॥ ९० ॥
विसर्पमम्लपित्तं वातासृक्पाण्डुरोगं च ॥
विस्फोटकान्सपामानुन्मादं कामलां ज्वरं कण्डूम् ॥ ९१ ॥
हृद्रोगगुल्मपिडकानसृग्दरं गण्डमालां च ॥
हन्यादेतत्सद्यः पीतं काले यथाबलं सर्पिः ॥
योगशतैरप्यजितान्महाविकारान्महातिक्तम् ॥ ९२ ॥

प्रतिविषाऽतिविषा । उपकुल्ये इति । पिप्पली हस्तिपिप्पली । षड्ग्रन्था वचा । रसोऽमृतफलानामिति । अमृतफलमामलकम् । तथाच पाठान्तरे तेजीट(जले त्व)ष्ट-पले सर्पिर्द्विगुणामलकीरस इति । इह तृतीयसर्पिःपदं महातिक्तत्वसंज्ञार्थम् । महाति-क्तकं घृतम् ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले ॥
तुलार्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥ ९३ ॥
पर्पटः कुटजश्चैव वृषः कृमिहरस्तथा ॥
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥ ९४ ॥

सप्तपर्णश्च संकुट्य दशद्रोणेन वारिणा ॥
अष्टभागावशेषं तु कषायमवतारयेत् ॥ ९५ ॥
धात्रीरसं च तुल्यांशं सर्पिषश्चाऽऽढकं पचेत् ॥
महातिक्तककल्कैश्च यथोक्तैः पलसंमितैः ॥ ९६ ॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ॥
महाखादिरमित्येतत्परं कुष्ठविकारजित् ॥ ९७ ॥

शिंशपासनयोस्तुले इति । शिंशपा शिसवीति ख्याता । असनः स्वनामख्यातो न तु पीतशाल इत्याहुः । तुलार्धा इति प्रत्येकम् । तुल्यांशामित्याढकं मानम् । महाखादिरं घृतम् ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

गुग्गुलुपञ्चतिक्तकघृतमाह—

निम्बामृतावृषपटोलनिदिग्धिकानां
भागान्पृथग्दशपलान्विपचेद्धटेऽपाम् ॥
अष्टांशशेषितरसेन सुनिस्रुतेन
प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥ ९८ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः ॥
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ९९ ॥
मञ्जिष्ठयाऽतिविषया वरया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ॥
तत्सेवितं विधमति प्रबलं समीरं
संध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ १०० ॥
नाडीव्रणार्बुदभगंदरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ॥
यक्ष्मारुचिश्वसनपीनसकासशोफ-
हृत्पाण्डुरोगगलविद्रधिवातरक्तम् ॥ १०१ ॥

घटेऽपामिति । जलद्रोणे । पिचुभागकल्कैरिति । प्रत्येकम् । पिचुः कर्षः । मिशिः शतपुष्पा न तु मधुरिका संप्रदायात् । तेजोवती ज्योतिष्मती । दीप्यकं जीरकम् । वत्सकं कुटजफलम् । अग्निश्चित्रकः । रोहिणी कटुरोहिणी । कणामूलं पिप्पलीमूलम् । वरा त्रिफला । गुग्गुलुपञ्चतिक्तकं घृतम् ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥

---

१ क. घ. संक्षुण्णाद्दश° । २ क. घ. °विनाशनम् । °शि° ।

वज्रकघृतमाह—

वासागुडूचीत्रिफलापटोलकरञ्जनीम्बासनकृष्णवेत्रम् ॥
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रकं कुष्ठहरं प्रदिष्टम् ॥ १०२ ॥
विशीर्णकर्णाङ्गुलिहस्तपादः कृम्यर्दितो भिन्नगलोऽपि मर्त्यः ॥
पौराणिकीं कान्तिमवाप्य जीवेदव्याहतं वर्षशतं च कुष्ठी ॥ १०३ ॥

असनः पीतशालः । कृष्णवेत्रं स्वनामख्यातम् । भिन्नगलोऽपीति । निरुद्धकण्ठोऽपि । वज्रकं घृतम् ॥ १०२ ॥ १०३ ॥

मञ्जिष्ठारग्निशाचक्रमर्दारग्वधपल्लवैः ॥
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु ॥ १०४ ॥

सुगमम् ॥ १०४ ॥

तृणतैलम्—

चतुर्गुणे तृणरसे कटुतैलं विपाचयेत् ॥
हरिद्राकुष्ठमञ्जिष्ठाशम्याकसर्षपायुतैः ॥ १०५ ॥
कासमर्दारिष्टपत्रैश्चक्रमर्दैः समैर्भिषक् ॥
अष्टादशानां कुष्ठानां तैलमेतद्विनाशनम् ॥ १०६ ॥

सुगमम् । महातृणतैलम् ॥ १०५ ॥ १०६ ॥

वज्रकतैलमाह—

सप्तपर्णकरञ्जार्कमालतीकरवीरजम् ॥ १०७ ॥
मूलं स्नुहाशिरीषाभ्यां चित्रकास्फोतयोरपि ॥
विषलाङ्गलवज्राख्यकासीसालं मनःशिलाम् ॥ १०८ ॥
करञ्जबीजं त्रिकटु त्रिफलां रजनीद्वयम् ॥
सिद्धार्थकं विडङ्गं च प्रपुन्नाटं च संहरेत् ॥ १०९ ॥
मूत्रपिष्टैः पचेत्तैलमेभिः कुष्ठविनाशनम् ॥
अभ्यङ्गाद्वज्रकं नाम नाडीदुष्टव्रणापहम् ॥ ११० ॥

मालती जाती । स्नुहा सेहुण्डः । चित्रकास्फोतयोरिति । अस्फोता अप्युरमाह्लिका । सारिवा इति डल्लणः । वैद्यप्रसारके तु श्वेतार्कमूलमिति विवृतम् । विषं प्रसिद्धम् । लाङ्गलशब्देन कलिकारिकोच्यते । वज्राख्यो द्वितीयः स्नुहा सेहुण्डः । अलं हरितालम् । शेषं प्रसिद्धम् । स्नेहचतुर्थांशो भेषजकल्कः । स्नेहाच्चतुर्गुणो द्रवः । अनेन न्यायेन पक्तव्यमिति । मूत्रपिष्टैः पचेत्तैलमिति । पाको मूत्रेण । केचिदिह कुष्ठविनाशनमिति पदं तैलविशेषणं वर्णयित्वा कुष्ठहरकरञ्जसर्षपादितैलमेव पक्तव्यं न तु तिलतैलमित्याहुः । एतस्मान्न्यायादन्यत्रापि कुष्ठहरमेव तैलं विशेषानिर्देशे पक्तव्यमित्याहुः । वृद्धवैद्यैरना-

१. क. 'रकम् ।

हतः पन्थाः । ते हि सामान्यश्रुतौ तिलतैलमेव पचन्ति । यत्तु(त्र) विशेषस्तत्र विशिष्टं कटुतैलादिकमिति । वज्रकं तैलम् ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥

मरिचाद्यं तैलमाह—

मरिचालशिलाहार्कपयोऽश्वारिजटात्रिवृत् ॥
शकृद्रसविशालारुक्निशायुग्दारुचन्दनैः ॥ १११ ॥
कटुतैलं पचेत्प्रस्थं द्व्यक्षैर्विषपलान्वितैः ॥
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रशस्यते ॥ ११२ ॥

अलं हरितालम् । शिला मनःशिला । अर्कपयोऽर्कक्षीरम् । अश्वारिजटा करवीरमूलम् । जटामांसीत्यन्ये । मूलेन प्रचारः । शकृद्रसो गोमयरसः । अयमपि कल्कः । विशाला गोरक्षकर्कटी । रुक्कुष्ठम् । सगोमूत्रमिति । पाकार्थं गोमूत्रं चतुर्गुणम् । मरिचाद्यं तैलम् ॥ १११ ॥ ११२ ॥

बृहन्मरिचाद्यं तैलमाह—

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः ॥ ११३ ॥
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरं च हरितालं मनःशिला ॥ ११४ ॥
चित्रकोलाङ्गलाख्यां च विडङ्गं चक्रमर्दकम् ॥
शिरीषः कुटजो निम्बः सप्तपर्णः स्नुहाऽमृता ॥ ११५ ॥
शम्याको नक्तमालाब्दखदिरं पिप्पली वचा ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत् ॥ ११६ ॥
आढकं कटुतैलस्य गोमूत्रं तु चतुर्गुणम् ॥
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥ ११७ ॥
पक्त्वा तैलवरं ह्येतन्म्रक्षयेत्कौष्ठिकान्व्रणान् ॥
पामाविचर्चिकादद्रुकण्डूविस्फोटकानि च ॥ ११८ ॥
वलयः पलितं छाया नीली व्यङ्गं तथैव च ॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्यं च जायते ॥ ११९ ॥
प्रथमे वयसि स्त्रीणां नस्यं यासां तु दीयते ॥
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम् ॥ १२० ॥
बलीवर्दस्तुरङ्गो वा गजो वा वायुपीडितः ॥
त्रिभिरभ्यञ्जनैर्बाढं भवेन्मारुतविक्रमः ॥ १२१ ॥

शकृद्रसो गव्यः । कुटजस्य फलम् । बृहन्मरिचाद्यं तैलम् ॥ ११३ ॥ ११४ ॥ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥

विषतैलमाह—

नक्तमालं हरिद्रे द्वे अर्कस्तगरमेव च ॥
करवीरं वचा कुष्ठमास्फोता रक्तचन्दनम् ॥ १२२ ॥
मालती सप्तपर्णं च मञ्जिष्ठा सिन्दुवारिका ॥
एषामर्धपला भागा विषस्यापि पलं भवेत् ॥ १२३ ॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत् ॥
श्वित्रविस्फोटकिटिभकीटलूताविचर्चिकाः ॥ १२४ ॥
कण्डूकच्छूविकाराश्च ये व्रणा विषदूषिताः ॥
विषतैलमिदं नाम सर्वव्रणविशोधनम् ॥ १२५ ॥

नक्तमालं करञ्जबीजम् । तगरं तगरपादिका । सिन्दुवारिका सिन्दुवार एव । विष तैलम् ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥

श्वेतकरवीररसो गोमूत्रं चित्रको विडङ्गं च ॥
कुष्ठेषु तैलयोगः सिद्धोऽयं संमतो भिषजाम् ॥ १२६ ॥

सुगमम् । करवीराद्यं तैलम् ॥ १२६ ॥

श्वेतकरवीरादितैलमाह—

श्वेतकरवीरमूलं विषांशं साधितं गवां मूत्रे ॥
चर्मदलसिध्मपामास्फोटकृमिकिटिभजित्तैलम् ॥ १२७ ॥

श्वेतकरवीरमूलमिति । श्वेतकरवीरस्य मूलं यत्रेति विग्रहात्तैलविशेषणं ज्ञेयम् । एवं विषांशमित्यत्रापि विग्रह इति । विषतैले विषस्य पलाभिधानात्तदपेक्षया केचिदंशं कर्षमाहुः । अन्ये पुनरंशो भागस्तेन विषकरवीरमूलयोः समभागयोरेव कल्कत्वम् । श्वेतकरवीराद्यं तैलम् ॥ १२७ ॥

सिन्दूरार्धपलं पिष्ट्वा जीरकस्य पलं तथा ॥
कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम् ॥
वृद्धवैद्योपदेशेन पचेत्तैलं पलाष्टकम् ॥ १२८ ॥

सुगमम् ॥ सिन्दूराद्यं तैलम् ॥ १२८ ॥

---

१ क. ख. 'न सर्वं तैलम्' ।

बृहत्सिन्दूराद्यं तैलमाह—

सिन्दूरं चन्दनं मांसी विडङ्गं रजनीद्वयम् ॥
प्रियंगुपद्मकं कुष्ठं मञ्जिष्ठाखदिरं वचा ॥ १२९ ॥
जात्यर्कत्रिवृतानिम्बकरञ्जं विषमेव च ॥
कृष्णवेत्रकलोध्रं च प्रपुन्नाटं च संहरेत् ॥ १३० ॥
श्लक्ष्णपिष्टानि सर्वाणि योजयेत्तैलमात्रया ॥
अभ्यङ्गेन प्रयुञ्जीत सर्वकुष्ठविनाशनम् ॥ १३१ ॥
पामाविचर्चिकाकच्छूविसर्पादिहितं मतम् ॥
रक्तपित्तोत्थितान्हन्ति रोगानेवंविधान्बहून् ॥ १३२ ॥

जात्याः पत्रम् । करञ्जस्य बीजम् । तैलमात्रया प्रस्थरूपया । बृहत्सिन्दूराद्यं तैलम् ॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥ ॥

सिन्दूरगुग्गुलुरसाञ्जनसिक्थतुल्यैः
कल्कीकृतैश्च कटुतैलमिदं विपक्वम् ॥
कण्डूं स्रवत्पिटकिकामथ वा विशुष्का-
मभ्यञ्जनेन सकृदुद्धरति प्रसह्य ॥ १३३ ॥

सुगमम् । सिन्दूराद्यं तैलम् ॥ १३३ ॥

आदित्यपाकतैलमाह—

मञ्जिष्ठात्रिफलालाक्षानिशागन्धशिलालकैः ॥
चूर्णितैस्तैलमादित्यपक्वं[1] पामाहरं परम् ॥ १३४ ॥

जलं तैलसमं चतुर्गुणं वा देयम् । आदित्यपाकतैलम् ॥ १३४ ॥

दूर्वातैलमाह—

स्वरसेन हि दूर्वायाः पचेत्तैलं चतुर्गुणम् ॥
कच्छूविचर्चिकापामा अभ्यङ्गादेव नाशयेत् ॥ १३५ ॥

चतुर्गुणं यथा स्यात्तथा दूर्वास्वरसेन यावत् । तेन दूर्वास्वरसेन चतुर्गुणेन पाकः । दूर्वातैलम् ॥ १३५ ॥

अर्कपत्ररसे पक्वं रजनीकल्कसंयुतम् ॥
कटुतैलं[2] निहन्त्येतत्कच्छूपामाविचर्चिकाः ॥ १३६ ॥

सुगमम् । अर्कतैलम् ॥ १३६ ॥

१ क. ख. 'त्यपाकं प°' । २ क. 'कं हरेत्पूर्णं कण्डूं' ।

कार्यं तैलमाह—

गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वग्लवणैः समूत्रैः ॥
तैलं पचेन्मण्डलदद्रुकुष्ठदुष्टव्रणारुःकिटिभापहारि* ॥ १३७ ॥

गण्डीरिका मञ्जिष्ठा समङ्गा वा । द्रुमत्वक्कुटजत्वक् ॥ १३७ ॥

संप्रति कुष्ठस्य दीर्घकालानुषङ्गित्वात्तत्र कालावधिपूर्वकं संशोधनविधेरभ्यासमाह—

पक्षात्पक्षाद्वामनान्यभ्युपेयान्मासान्मासात्स्रंसनं चाप्यधस्तात् ॥
त्र्यहात्त्र्यहान्नस्ततश्चावपीडान्मासेष्वसृञ्चोक्षयेत्षट्सु षट्सु ॥ १३८ ॥

ननु नस्यभेद एव चेदवपीडस्तत्किमुच्यते नस्तत इति । नैवमवपीडशब्दस्य सर्पिषोष्णेनावपीडनेऽपि वृत्तिदर्शनात् । उक्तं हि—मूत्रे प्रतिहते कुर्यात्सर्पिषश्चावपीडनमिति ॥ १३८ ॥

शालिषष्टिकगोधूमयवमुद्गादयो[1] हिताः ॥
पुराणाः कुष्ठिने तिक्तशाकजाङ्गलसंयुताः ॥ १३९ ॥

सुगमम् ॥ १३९ ॥

इदानीं प्रतिषेधविधिमाह—

नीचरोमनखोऽश्रान्तो नित्यमौषधतत्परः ॥
योषिन्मांससुरावर्जी[2] कुष्ठी कुष्ठमपोहति ॥ १४० ॥

सुगमम् ॥ १४० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकपञ्चाशत्तमः कुष्ठाधिकारः समाप्तः ॥ ५१ ॥

---

## अथ द्विपञ्चाशत्तमः शीतपित्ताद्यधिकारः ।

---

त्वग्दुष्टित्रिदोषजत्वसामान्यादथ शीतपित्तोदर्दकोठाधिकारः ।

अभ्यज्य कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः ॥
तत्राऽऽशु वमनं कार्यं पटोलारिष्टवारिणा ॥ १ ॥

---

* ख. पुस्तके—भूनिम्बनिम्बखदिरासनराजवृक्षयष्टीपटोलकटुरोहिणीकुष्ठपाठाः । वासागुडूचीघनयोजनवल्ल्यनन्तात्रायन्तिकाद्विरजनीत्रिफलाजगन्धाः ॥ १ ॥ कृष्णेन्द्रवृक्षसुखवारुणिसोमराजीवेल्लाग्निभल्लातकामलकसुरदारुविश्वाः ॥ पत्त(त्रा)ङ्गपद्मकशतावरिसप्तपर्णैरेभिः कृतो विधिवदेष महाकषायः ॥ २ ॥ पीतो जयत्यखिलधातुगतानि कुष्ठान्येतत्प्रशाम्यति सशोणितमामवातम् । पाण्डुप्रमेहपिटिकाक्रिमिशोथदुष्टनाडीभगंदरव्रणार्बुदगण्डमालाः ॥ ३ ॥ चिकित्सान्ते सप्त महाकषायाः । इत्यधिकमत्र ।

---

1 क. घ. °लिकोद्रवगो° । 2 क. घ. °र्जी नित्यं नि° ।

सुगमम् ॥ १ ॥

त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ॥

त्रिफलापुरकृष्णाभिरिति । त्रिफलायाः कषायः । गुग्गुलुपिप्पल्यौ प्रक्षेपौ व्यवहारात् । विरेकार्थं गुग्गुलुकर्षः पिप्पलीचूर्णं द्विमाषिकम् ॥

त्रिफलां क्षौद्रसहितां पिबेद्वा नवकार्षिकम् ॥ २ ॥

नवकार्षिकमिति । वातरक्तोक्तम् ॥ २ ॥

विसर्पोक्तामृतादिं तु भिषगत्रापि योजयेत् ॥

अमृतादिमिति । अमृतवृषपटोलं मुस्तकमित्यादिनोक्तम् । अत्र शीतपित्तज्वरं चेति फलश्रुतिर्न पुनरमृतवृषपटोलं निम्बकल्कैरित्यादि ॥

पिप्पलीवर्धमानं वा लशुनं वा प्रयोजयेत् ॥
सितां मधुकसंयुक्तां गुडमामलकैः सह ॥ ३ ॥

लशुनं वेति । कल्कीकृतम् । सितां वा मधुसंयुक्तामित्यस्य स्थाने सितां मधुकसंयुक्तामिति क्वचित्पाठः ॥ ३ ॥

सगुडं दीप्यकं यस्तु खादेत्पथ्याशभुङ्नरः ॥
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः ॥ ४ ॥

दीप्यकमिति । यवानिकाम् ॥ ४ ॥

सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सह ॥
कटुतैलेन संमिश्रमेतदुद्वर्तनं हितम् ॥ ५ ॥

सुगमम् ॥ ५ ॥

दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः ॥
कृमिदद्रुहरश्चैव शीतपित्तहरः स्मृतः ॥ ६ ॥

सुगमम् ॥ ६ ॥

कुष्ठोक्तं च क्रमं कुर्यादम्लपित्तघ्नमेव च ॥

कुष्ठोक्तं च क्रममिति । शोधनं शमनम् ॥

उदर्दोक्तां क्रियां वाऽपि कोठरोगे समासतः ॥
सर्पिः पीत्वा महातिक्तं कार्यं शोणितमोक्षणम् ॥ ७ ॥

सुगमम् ॥ ७ ॥

निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथ वोपयुञ्ज्यात् ॥
विस्फोटकोठं क्षतशीतपित्तकण्डूस्रपित्तं रकसां च जह्यात् ॥ ८ ॥

---

१ क. य. °तां वा मधुसं° ।

रकसां चेति । रकसा क्षुद्रकुष्ठभेदः ॥ ८ ॥

क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत् ॥ ९ ॥

सुगमम् ॥ ९ ॥

कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारुशिग्रू ॥
ससर्षपं तुम्बरुधान्यवन्यं चण्डां च चूर्णानि समानि कुर्यात् ॥ १० ॥
तैस्तक्रयुक्तैः प्रथमं शरीरं तैलाक्तमुद्वर्तयितुं यतेत ॥
ततोऽस्य कण्डूपिटकाः सकोठाः कुष्ठानि शोफाश्च शमं व्रजन्ति॥ ११ ॥

सुरसपत्रं समूलम् । तुम्बरु स्वनामख्यातम् । वन्यं कैवर्तमुस्तकम् । चण्डा चोरपुष्पिका । चूर्णानीत्यत्र दूर्वा चेति पाठान्तरं न युक्तं चरकेऽस्या अपाठात् । कश्चित्प्रथममिति तैलाक्तमित्यनेन योज्यम् । तैलमिह सर्षपतैलं तेन प्राक्तैलेनाक्तं शरीरं तैस्तक्रयुक्तैस्तकालोडितैरुद्वर्तयेत् ॥ १० ॥ ११ ॥

तैलोद्वर्तनयोगेन योज्य एलादिको गणः ॥ १२ ॥
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ॥
भोजनं सर्वदा कार्यं लावतित्तिरिजेन वा ॥ १३ ॥
शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक् ॥
उष्णानि वा यथादोषं शीतपित्ते प्रयोजयेत् ॥ १४ ॥

तैलोद्वर्तनयोगेनेति । तैलयोगेनोद्वर्तनयोगेन च ॥ १२ ॥ १३ ॥ १४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां द्विपञ्चाशत्तमः शीतपित्ताद्यधिकारः समाप्तः ॥ ५२ ॥

---

## अथ त्रिपञ्चाशत्तमोऽम्लपित्ताधिकारः ।

अम्लपित्तेऽपि कोठसंभवात्कुर्यादम्लपित्तघ्नमेव वेत्यनेन पूर्वाध्यायेऽम्लपित्तसंकीर्तनाद्वाऽनन्तरमम्लपित्तम् ॥

वमनानन्तरं तत्र विरेकं मृदु कारयेत् ॥
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम् ॥
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ॥ १ ॥

सुगमम् ॥ १ ॥

क्रियाशुद्धस्य शमनी अनुबन्धाद्यपेक्षया ॥
दोषसंसर्गजा कार्या भेषजाहारकल्पना ॥ २ ॥

सुगमम् ॥ २ ॥

ऊर्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥
तिक्तभूयिष्ठमाहारं पानं चापि प्रकल्पयेत् ॥ ३ ॥

ऊर्ध्वगे बहुकफे वमनम् । अधोगे त्वम्लपित्ते सविबन्धे विरेचनम् ॥ ३ ॥

यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः ॥

यवगोधूमविकृतीरिति । यवगोधूमयोः पेयादिरूपान्विकारान् । यवगोधूमौ हि सरत्वमधुरशीतत्वादिनाऽम्लपित्ते हितौ । तीक्ष्णसंस्कारवर्जिताः कट्वम्ललवणादिसंयोगरहिताः ॥

यथास्वं लाजसक्तून्वा सितामधुयुतान्पिबेत् ॥ ४ ॥

यथास्वमिति । पिबेदित्यनेन योज्यम् । तेन दोषसंसर्गापेक्षया हितेन द्रवेण पिबेदित्यर्थः ॥ ४ ॥

निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धमधुयुतः पीतः ॥
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ५ ॥

त्रिसुगन्धमधुयुत इति । त्रिसुगन्धः(न्धं) सुगन्धितामात्रकारकं देयम् । मधु तु प्रक्षेपन्यायेन ॥ ५ ॥

कफपित्तवमीकण्डूज्वरविस्फोटदाहहा ॥
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥ ६ ॥

सुगमम् ॥ ६ ॥

पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत् ॥
कण्डूपामातिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥ ७ ॥

सुगमम् ॥ ७ ॥

पटोलनिम्बामृतरोहिणीकृतं जलं पिबेत्पित्तकफोच्छ्रये वा ॥
शूलभ्रमारोचकवह्निमान्द्यदाहज्वरच्छर्दिनिवारणं हि तत् ॥ ८ ॥

सुगमम् ॥ ८ ॥

यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत् ॥
नाशयेदम्लपित्तं च अरुचिं च वमिं तथा ॥ ९ ॥

सुगमम् ॥ ९ ॥

वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः ॥
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ १० ॥

---

१ क. ख. [illegible] ।

सुगमम् । दशाङ्गः ॥ १० ॥

फलत्रिकं पटोलं च तिक्तकाथः सितायुतः ॥
पीतः क्षौद्रकमध्वक्तो ज्वरच्छर्द्यम्लपित्तहा ॥ ११ ॥

फलत्रिकं पटोलं च तिक्तकाथ इत्यत्रार्थसंगत्यनुरोधात्तिक्तेत्यतः परमेषामिति द्रष्टव्यम् । तेन फलत्रिकादीनि यान्येतान्येषां क्राथ इत्यर्थः फलति । क्षौद्रकमध्वक्त इति । क्षौद्रकमधुनोरिह प्रक्षेपः ॥ ११ ॥

वासादिगुग्गुलुमाह—

वासानिम्बपटोलत्रिफलासनयासयोजितो जयति ॥
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ १२ ॥

असनः पीतशालः । यासो दुरालभा । वासादीनां चूर्णं गुग्गुलुसममन्यतो दर्शनात् । क्रमश इत्यभ्यासात् । वासादिगुग्गुलुः ॥ १२ ॥

छिन्नाखदिरयष्ट्याह्वदार्व्यम्भो वा मधुद्रवम् ॥ १३ ॥

मधुद्रवमिति । मधु द्रवरूपं यत्रेति विग्रहादम्भोविशेषणं ज्ञेयम् ॥ १३ ॥

सद्राक्षामभयां खादेत्सक्षौद्रां सगुडां च ताम् ॥

द्राक्षादिभिस्त्रिभिः प्रत्येकमभयेति योगत्रयम् ॥

कटुकासिताऽवलेहा पटोलविश्वं च क्षौद्रसंयुक्तम् ॥
रक्तस्रुतौ च युक्त्या खण्डं कूष्माण्डकं श्रेष्ठम् ॥ १४ ॥

पटोलविश्वं चेति । काथीकृतमित्याहुः ॥ १४ ॥

पटोलत्रिफलारिष्टशृतं मधुयुतं पिबेत् ॥
पित्तश्लेष्मज्वरच्छर्दिदाहत्वग्दोषशान्तये ॥ १५ ॥

सुगमम् ॥ १५ ॥

सिंहास्यामृतभण्टाकीकाथं पीत्वा समाक्षिकम् ॥
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥ १६ ॥

सुगमम् ॥ १६ ॥

वासाघृतं तिक्तघृतं च युक्त्या मधूत्कटां मागधिकां लिहेद्वा ॥
अन्यद्यदेवं गुणवच्च सर्पिस्तदम्लपित्तं शमयत्युदीर्णम् ॥ १७ ॥

वासाघृतं रक्तपित्तोक्तम् । तिक्तघृतं कुष्ठोक्तं महातिक्तकम् । अत्राम्लपित्तहरत्वश्रुतेः । अन्यद्यदेवं गुणवदिति । रक्तपित्तोक्तशतावरीघृतादि ॥ १७ ॥

---

१ क. ख. °सनुत । फ° । २ क. ख. °हस्त्रोपधा° ।

पञ्चनिम्बाद्यचूर्णमाह—

एकोंऽशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः ॥
सक्तुर्दशगुणो देयः शर्करामधुरीकृतः ॥ १८ ॥
शीतेन वारिणा पीतं शूलं पित्तकफोद्भवम् ॥
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदुस्तरम्* ॥ १९ ॥

एकोंऽशः पञ्चनिम्बानामिति । निम्बस्य त्वङ्मूलदलकुसुमफलानां पञ्चानां मिलितानामेको भागः । सक्तुर्दशगुणो निम्बभागापेक्षया । मात्राऽस्य पलार्धं पलं वाऽऽहारद्रव्यसक्तुबाहुल्यात् । पञ्चनिम्बाद्यं चूर्णम् ॥ १८ ॥ १९ ॥

पिष्ट्वाऽजाजीं सधान्याकां घृतप्रस्थं विपाचयेत् ॥
कफपित्तारुचिहरं मन्दानलवमिं जयेत् ॥ २० ॥

सुगमम् । जीरकाद्यं घृतम् ॥ २० ॥

पटोलशुण्ठीकल्काभ्यां केवलं कुलकेन वा ॥
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम् ॥ २१ ॥

सुगमम् । पटोलशुण्ठीपटोलघृते ॥ २१ ॥

पिप्पलीघृतमाह—

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम् ॥
पिबेत्प्रातरुत्थाय अम्लपित्तनिवृत्तये ॥ २२ ॥

मधुप्लुतमिति । सिद्धे घृते पादिकमधुयुक्तम् । पिप्पलीघृतम् ॥ २२ ॥

द्राक्षाद्यं घृतमाह—

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ॥ २३ ॥
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत्सर्पिरुपेतमेभिः ॥
युञ्जीत मात्रां सह भोजनेन सर्वर्तुपाने तु भिषग्विदध्यात् ॥२४॥
वातस्थपित्तं[1] ग्रहणीं प्रवृद्धां कासाग्निसादं ज्वरमम्लपित्तम्[2] ॥
सर्वं निहन्याद्घृतमेतदाशु सम्यक्प्रयुक्तं ह्यमृतोपमं च ॥ २५ ॥

शक्रः कुटजस्तस्य फलम् । पद्मं पद्मकेसरं पद्मकाष्ठमित्यन्ये । द्राक्षाद्यं घृतम् ॥ २३ ॥ २४ ॥ २५ ॥

---

* ख. पुस्तके 'सवाते सविबन्धेऽस्मिन्हिता कंसहरीतकी' इत्यधिकमत्र ।

---

१ क. घ. सुदारुणम् । २ क. घ. बलासपित्तं ।

शतावरीघृतमाह—

शतावरीमूलकल्कं घृतप्रस्थं पयः समम् ॥
पचेन्मृद्वग्निना सम्यक्क्षीरं दत्त्वा चतुर्गुणम् ॥ २६ ॥
नाशयेदम्लपित्तं च वातपित्तोद्भवान्गदान् ॥
रक्तपित्तं तृषां मूर्छां श्वासं संतापमेव च ॥ २७ ॥

पयः सममिति । पयःशब्देन पयःसाधर्म्याच्छतावर्या एव रसो ग्राह्यो न तु क्षीरं तस्य पृथगुपात्तत्वात् । समं तुल्यम् । शतावरीघृतम् ॥२६॥ २७ ॥

अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः ॥
गुडकूष्माण्डकं चैव तथा खण्डामलक्यपि ॥ २८ ॥

सुगमम् ॥ २८ ॥

गुडक्षीरकणासिद्धं सर्पिरत्रापि योजयेत् ॥

गुडक्षीरकणासिद्धं सर्पिरित्यनेन परिणामशूलोक्तपिप्पलीघृतमिति दर्शयति ।

गुडपिप्पलीपथ्याभिस्तुल्याभिर्मोदकः कृतः ॥
पित्तश्लेष्मापहः प्रोक्तो मन्दमग्निं च दीपयेत् ॥ २९ ॥

न च तुल्याभिरिति विरुद्धं चूर्णे चूर्णसमो देय इति परिभाषाविरोधात् । तुल्यशब्दः सहार्थे न तु तुल्यार्थे । यथा देवदत्तेन सह गन्तव्यम् । गुडाद्यो मोदकः ॥ २९ ॥

ज्वलन्तमिव चाऽऽत्मानं मन्यते योऽम्लपित्तवान् ॥
तस्य संशोधनं पथ्यं न शान्तिः शोधनं विना ॥ ३० ॥

सुगमम् ॥ ३० ॥

अचिरोत्थे चिरोत्थे च वमनं तत्र कारयेत् ॥ ३१ ॥

सुगमम् ॥ ३१ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्री-
कण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां त्रिपञ्चाशत्तमोऽ-
म्लपित्ताधिकारः समाप्तः ॥ ५३ ॥

---

अथ चतुष्पञ्चाशत्तमो विसर्पाधिकारः ।

अम्लपित्ते संभवच्छर्देर्वेगाविघाताद्रक्तदुष्टौ सत्यां विसर्पविस्फोटयोरुत्पादात्प्रायः समाननिदानत्वादतः परं विसर्पविस्फोटाधिकारः । छर्देर्वेगविघातस्य च रक्तदूषकत्वे वचनम्—

---

१ तृ. 'पित्तं' ।

"छर्देर्वेगप्रतीघातात्काले वाऽनवसेचनात् ।
शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति" इति ॥

रुग्विनिश्चये पृथगधिकारेणोक्तयोरपि विसर्पविस्फोटयोः प्रायश्चिकित्सासामान्यादेकत्वेनाभिधानम् ।

विरेकवमनालेपसेचनासृग्विमोक्षणैः ॥
उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥ १ ॥

अविदाहिभिरिति । अन्नपानैरिति शेषः ॥ १ ॥

पटोलपिचुमन्दाभ्यां पिप्पल्या मदनेन च ॥
विसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह ॥ २ ॥

पटोलनिम्बयोः क्वाथः । पिप्पल्यादित्रयं प्रक्षेपः ॥ २ ॥

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ॥
प्रयोक्तव्यं विरेकार्थे विसर्पज्वरशान्तये ॥

त्रिफलाक्वाथे सर्पिस्त्रिवृत्प्रक्षेपः ॥

रसमामलकानां वा घृतमिश्रं प्रदापयेत् ॥ ३ ॥

सुगमम् ॥ ३ ॥

तृणवर्ज्यं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ॥
प्रदेहसेकसर्पिर्भिर्विसर्पे वातसंभवे ॥ ४ ॥

तृणवर्ज्यं प्रयोक्तव्यं पञ्चमूलचतुष्टयमिति । तस्य च वर्जनमिह पित्तहरत्वेन वातेऽयौगिकत्वात् । यद्यप्याद्ये परं वातहरे उक्ते तथाऽपि वल्लिकण्टकपञ्चमूलद्वयमपि वातजे विसर्पे व्याधिप्रत्यनीकतया हितमिति कार्तिकः ॥ ४ ॥

कुष्ठं शताह्वा सुरदारु मुस्ता वाराहिकुस्तुम्बुरुकृष्णगन्धाः ॥
वातेऽर्कवंशार्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु ॥ ५ ॥

वाराही वाराहीकन्दः । कृष्णगन्धा सौभाञ्जनकः शमीत्यपरे । वंशो वंशनली । आर्तगलोऽर्जुन आगाडको वा । आर्तगल उष्ट्रकण्टकः । अथवा नीलः सहचर इति डल्लणः ॥ ५ ॥

प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः ॥
सयष्टीन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपनम् ॥ ६ ॥

सयष्टीन्दीवरैरिति । इन्दीवरं नीलोत्पलम् ॥ ६ ॥

---

१ क. प. च.

कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ॥
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥ ७ ॥

शृङ्गाटको जलमध्ये त्रिकण्टकः । गुन्द्रा पटेरकभेदो घुलुञ्चः । सशैवलाः सहशेवाला इत्यर्थः । सोत्पलकर्दमा इति । कर्दमः पङ्कः । अथ चोत्पलकर्दमश्चोत्पलस्थानस्य कर्दमस्तदन्विताः । वस्त्रान्तरा वस्त्रान्तरायाः । एवं सति मिथोः विसर्पेऽतिमृदौ त्वगाद्युपघातो न स्यात् । लेपस्फोटनं च सुकरम् । लेपा इति बहुवचननिर्देशाद्व्यस्ता अप्येते योज्या इत्याहुः ॥ ७ ॥

प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः ॥
पद्मकोशीरमधुकचन्दनैर्वा प्रशस्यते ॥ ८ ॥

सुगमम् ॥ ८ ॥

पैत्ते तु पद्मिनीपङ्कपिष्टं वा शङ्खशैवलम् ॥
गुन्द्रामूलं तु शुक्तिर्वा गैरिकं वा घृतान्वितम् ॥ ९ ॥

शुक्तिर्मुक्तास्फोटः । घृतान्वितमिति पूर्वयोगेष्वपि योज्यम् ॥ ९ ॥

न्यग्रोधपादा गुन्द्रा च कदलीगर्भ एव च ॥
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृतप्लुतः ॥ १० ॥

न्यग्रोधपादा इति । वटारोहाः । कदलीगर्भ इति । कदल्या गर्भस्थानमञ्जरी ॥ १० ॥

हरेणवो मसूराश्च मुद्गाश्चैव सशालयः ॥
पृथक्पृथक्प्रदेहाः स्युः सर्वे वा सर्पिषा सह ॥ ११ ॥

सुगमम् ॥ ११ ॥

द्राक्षारग्वधकाश्मर्यत्रिफलामण्डपीलुभिः ॥
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥ १२ ॥

आरग्वधस्य फलम् । आमण्ड एरण्डस्य बीजम् । व्यस्तसमस्तानामेषां कल्केन क्वाथेन वा विरेचनम् । त्रिफला पुनरिह मिलितैव ग्राह्या हरीतक्याः पुनः पाठात् ॥ १२ ॥

गायत्रीसप्तपर्णाब्दवासारग्वधदारुभिः ॥
कुटजटैर्भवेल्लेपो विसर्पे श्लेष्मसंभवे ॥ १३ ॥

सुगमम् ॥ १३ ॥

अजाऽश्वगन्धा सरलाऽथ काला सैकेषिका चाप्यथ वाऽजशृङ्गी ॥
गोमूत्रपिष्टो विहितः प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥ १४ ॥

अजाऽजगन्धा फोफावती बोबइकेति लोके । अश्वगन्धाऽश्वकन्दः । सरला त्रिवृत् ।

---

१ क. घ. 'कोशिशीर्षस' ।

काला वडहिंना । एकेषिका पाठा । अन्य एकेषिकाऽम्बष्ठकी । सा कुरण्ड इति लोके । अन्ये त्रिवृद्भेदमाहुः । अजशृङ्गी मेषशृङ्गी वा । विहिमः कोष्णः ॥ १४ ॥

मदनं मधुकं निम्बं वत्सकस्य फलानि च ॥
वमनं च विधातव्यं विसर्पे कफसंभवे ॥ १५ ॥

सुगमम् ॥ १५ ॥

त्रिफलापद्मकोशीरसमङ्गाकरवीरजम् ॥
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥ १६ ॥

करवीरकमित्यस्य स्थाने करवीरजमिति पाठे मूलं द्रष्टव्यम् ॥ १६ ॥

आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः ॥
शिरीषपुष्पं कामाची हिता लेपावचूर्णितैः ॥ १७ ॥

त्वचः श्लेष्मातकोद्भवा इति । श्लेष्मातको बहुवारः । कामाची काकमाची ॥ ॥ १७ ॥

मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत् ॥
धात्रीपटोलमुद्गानामथवा घृतसंयुतः ॥ १८ ॥

सर्वविसर्पनुदिति । प्रत्येकदोषजवीसर्पनुत्संनिपातविसर्पस्यासाध्यत्वात् ॥ १८ ॥

अमृतवृषपटोलं निम्बकल्कैरुपेतं त्रिफलखदिरसारं व्याधिघातं च तुल्यम् ॥
कथितमिदमशेषं गुग्गुलोर्भागयुक्तं जयति विषविसर्पं कुष्ठमष्टादशाख्यम् ॥१९॥

त्रिफलं त्रिफला । व्याधिघातः सुवर्णालुः । गुग्गुलोर्भागयुक्तमिति । प्रत्यहोपयोगे गुग्गुलोर्माषचतुष्टयप्रक्षेपणं विरेचनार्थं तु कर्ष इति प्रचारः ॥ १९ ॥

अमृतवृषपटोलं मुस्तकं सप्तपर्णं खदिरमसितवेत्रं निम्बपत्रं हरिद्रे ॥
विविधविषविसर्पान्कुष्ठविस्फोटकण्डूरपनयति मसूरीं शीतपित्तं ज्वरं च ॥२०॥

सुगमम् ॥ २० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुष्पञ्चाशत्तमो विसर्पाधिकारः समाप्तः ॥ ५४ ॥

---

## अथ पञ्चपञ्चाशत्तमो विस्फोटाधिकारः ।

पटोलामृतभूनिम्बवासकारिष्टपर्पटैः ॥
खदिराब्दयुतैः क्वाथो विस्फोटार्तिज्वरापहः ॥ १ ॥

---

१ क. घ. °रकम् । २ क. घ. °स्फोटज्वरशान्तये । मु° ।

सुगमम् ॥ १ ॥

पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः ॥
समूर्वा रोहिणी पाठा रजनी सदुरालभा ॥ २ ॥
कषायं पाययेदेतच्छ्लेष्मपित्तज्वरापहम् ॥
कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥ ३ ॥

सदुरालभेत्यतः परमेभिरिति द्रष्टव्यः । तेनैभिः कषायं कृतं पाययेदिति संगतोऽर्थो भवति ॥ २ ॥ ३ ॥

भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः ॥
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत्कषायः ॥ ४ ॥

सुगमम् ॥ ४ ॥

सकफे पित्तयुक्ते तु त्रिफलां योजयेत्पुरैः ॥

त्रिफलां योजयेत्पुरैरिति । त्रिफलायाः क्वाथः । गुग्गुलुप्रक्षेपः ॥

दुरालभां पर्पटकं पटोलं कटुकां तथा ॥
सोष्णं गुग्गुलुसंमिश्रं पिबेद्वा खदिराष्टकम् ॥ ५ ॥

अत्रापि दुरालभादिभिः क्वाथः । गुग्गुलुप्रक्षेपः । सोष्णं किंचिदुष्णम् । सशब्द ईषदर्थे । खदिराष्टकं मसूर्यां वक्ष्यमाणम् । इदमपि गुग्गुलुयुतमेव पिबेत् ॥ ५ ॥

कुण्डलीपिचुमन्दाम्बु खदिरेन्द्रयवाम्बु वा ॥
विस्फोटान्नाशयत्याशु वायुर्जलधरानिव ॥ ६ ॥

कुण्डलीपिचुमन्दाम्ब्विति । कुण्डली गुडूची ॥ ६ ॥

चन्दनं नागपुष्पं च तण्डुलीयकसारिवा ॥
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥ ७ ॥

सुगमम् ॥ ७ ॥

शुकतरुनतमांसीरजनीपद्मं च तुल्यानि ॥
पिष्टानि शीततोयेन स्याल्लेपः सर्वविस्फोटे ॥ ८ ॥

शुकतरुः शिरीषः । नतं तगरपादिका । पद्माऽवस्फोटी ॥ ८ ॥

शिरीषमूलमञ्जिष्ठाचव्यामलकयष्टिकाः ॥
सजातीपल्लवक्षौद्रा विस्फोटे कवलग्रहाः ॥ ९ ॥

अत्र योगोक्तद्रव्यं प्रत्येकमपि कवले योज्यं बहुवचननिर्देशादित्याहुः । जातीपत्रक्षौद्रयोगश्च सर्वत्र देयः । यष्टिका यष्टीमधु ॥ ९ ॥

शिरीषोदुम्बरौ जम्बूः सेकालेपनयोर्हिताः ॥

सुगमम् ॥

श्लेष्मातकत्वचो वाऽपि प्रलेपाश्चोतने हिताः ॥ १० ॥

सुगमम् ॥ १० ॥

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठवालैः ॥
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकुष्ठग्रहशोषहारी ॥ ११ ॥

शिरीषः शिरीषवल्कलम् ॥ ११ ॥

चतुःसममाह—

शिरीषोशीरनागाङ्कहिंस्राभिर्लेपनाद्द्रुतम् ॥
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ १२ ॥

नागाङ्कं नागकेसरचूर्णम् । हिंस्रा कलावकटुः ॥ १२ ॥

वृषाद्यं घृतमाह—

वृषखदिरपटोलपत्रनिम्बत्वगमृतामलकीकषायकल्कैः ॥
घृतमभिनवमेतदाशु पक्वं जयति विसर्पमदास्रकुष्ठगुल्मान् ॥ १३ ॥

निम्बत्वगमृतामलकीकषायकल्कैरित्यस्य स्थाने छन्दःपूरणार्थं निम्बत्वगमृतधात्रीकषायकल्कयुक्तमिति पाठो युक्तः । वृषाद्यं घृतम् ॥ १३ ॥

पञ्चतिक्तकघृतमाह—

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम् ॥
तत्पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥ १४ ॥

त्रिफलायाः कल्कः । शेषाणां कषायः ॥ १४ ॥

संप्रति स्नायुकरोगस्य तन्तुनामाख्यातस्य प्रायः पाश्चात्यपुरुषविषयस्योत्पत्तिपूर्वकं चिकित्सितमाह—

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ॥
भित्त्वैव तं क्षते तत्र सोष्मा मांसं विशोष्य च ॥ १५ ॥
कुर्यात्तन्तुनिभं सूत्रं तत्पिण्डैस्तक्रसक्तुजैः ॥
शनैः शनैः क्षताद्याति च्छेदात्कोपं समावहेत् ॥ १६ ॥
तत्पाताच्छोफशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ॥
स स्नायुक इति ख्यातः क्रियोक्ता तु विसर्पवत् ॥ १७ ॥

---

१ क. ख. °पंकण्डूज्वरशो° । २ क. घ. °शोफहा° ।

शाखासु अङ्गुल्यादिषु । सोष्मा ऽप्रचुरोष्मा । तत्सूत्रं पिण्डैस्तकसकुमैर्लिप्तं क्षताद्याति निःसरति ॥ १५ ॥ १६ ॥ १७ ॥

गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥
पीत्वा स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ १८ ॥

सुगमम् ॥ १८ ॥

सौभाञ्जनमूलदलैः काञ्जिकपिष्टैर्लवणयुतैर्लेपः ॥
हन्ति स्नायुकरोगं यद्वा मोचत्वचो लेपः ॥ १९ ॥

यद्वा मोचत्वचो लेप इति । मोचं कोठं कदलकं वा । क्रान्तक्रामकमे(मित्ये)-के ॥ १९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्री-कण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चपञ्चाश-त्तमो विस्फोटाधिकारः समाप्तः ॥ ५५ ॥

---

## अथ षट्पञ्चाशत्तमो मसूरिकाधिकारः ।

---

विस्फोटप्रकारत्वात्प्रायस्तुल्यानिदानत्वाच्चाथ मसूरिकाः ।

सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः ॥
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥ १ ॥

पटोलारिष्टवासकैः कषायैरिति समानाधिकरणेन निर्देशः कार्यकारणयोरभेदोपचारात् । चकारादत्र पटोलादीनां कल्केनाप्युष्णोदकाप्लुतेन वचावियुतेन वमनं कार्यमित्याहुः । वचावत्सयष्ट्याह्वफलकल्कितैरिति । वत्सः कुटजस्तस्य फलमिह वमने यौगिकत्वात् । फलं मदनफलम् ॥ १ ॥

सक्षौद्रं पाययेद्ब्राह्म्या रसं वा हैलमोचिकम् ॥

सक्षौद्रमिति हिलमोचकरसेऽपि योज्यम् । हिलमोचा हिलमोची ख्याता तद्भवं हैलमोचिकं रसम् । अयं चोभयतोभागहारः ॥

वान्तस्य रेचनं देयं शमनं चाबले नरे ॥ २ ॥

सुगमम् ॥ २ ॥

सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम् ॥
रोमान्ती ज्वरविस्फोटमसूरी शान्तये पिबेत् ॥ ३ ॥

---

१ क. घ. पटंय ।

सुषवीपत्रनिर्यासमिति । सुषवी कारवपत्रकम् । अस्यापि रस उभयतोभागहारः । अत्र हरिद्राचूर्णं त्रिचतुरमाषकमानं प्रक्षेपः ॥ ३ ॥

उभाभ्यां हृतदोषस्य विशुध्यन्ति मसूरिकाः ॥
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ ४ ॥

सुगमम् ॥ ४ ॥

कण्टाकुस्वादुमूलं क्वथनविधिकृतं हिङ्गुमाषैकयुक्तं
पीतं बीजं जयायाः सघृतमुषितवाः पीतमङ्घ्रिः शकट्याः ॥
म(प)थ्यामूलं शिफा वा दमनकुसुमजा सोषणा वाऽथ पूति-
र्योगा वाशाम्बुनैते प्रथममघगदे दृश्यमाने प्रयोज्याः* ॥ ५ ॥

कण्टाकुर्वाद्व(?) स्वनामख्याता लता । उषितवाः पीतं पर्युषितवारि पीतम् । अङ्घ्रिर्मूलम् । शकटी स्वनामख्याता । म[प]थ्याऽपि तथा । सोषणा समरीचा । पूतिरपि सोषण एव । पूतिः पूतीकः स च लाटकस्तस्य मूलं फलं वा । अघगदे पापरोगे ॥ ५ ॥

उग्राज्यवंशनीलीयववंविषकार्पासिकीकसब्राह्मी—
सुरसमयूरकलाक्षाधूपो रोमान्तिकादिहरः ॥ ६ ॥
आदावेव प्रयुक्तस्य प्रशाम्यन्ति मसूरिकाः ॥
न गृह्णन्ति विषं केचिद्यथालाभश्रुतेरिह ॥ ७ ॥

उग्रा वचा । कार्पासिकीकसं कर्पासास्थि । सुरसः पर्णासः । मयूरकोऽपामार्गः । आदावेव प्रयुक्तस्य प्रशाम्यन्ति मसूरिका इत्यत्र प्रयुक्तस्येति कर्तरि क्तः । तेनाऽऽदौ धूमं प्रयुक्तवत इत्यर्थः । न गृह्णन्ति विषं केचिद्यथालाभश्रुतेरिति । अस्यार्थः— तन्त्रान्तरे यथालाभमित्युक्तेरिह विषस्य त्वग्दोषादिकरत्वशङ्कया त्यागः कार्य इति । वृषेण तु प्रचारो दृश्यते ॥ ६ ॥ ७ ॥

चैत्रासितभूतदिने रक्तपताकान्विता कुटी भवने ॥
धवलितकलशन्यस्ता पापरुजं दूरतो धत्ते ॥ ८ ॥

चैत्रासितभूतदिन इति । चैत्रमासीयकृष्णचतुर्दश्याम् ॥ ८ ॥

तर्पणं वातजायां प्राग्लाजचूर्णैः सशर्करैः ॥
भोजनं तिक्तयूषैस्तु प्रतुदानां रसेन वा ॥ ९ ॥

लाजचूर्णैस्तर्पणं तोयप्लुतैर्देयम् । प्रतुदानां रसेनेति । प्रतुदाः कपोतपारावतप्रभृतयः ॥ ९ ॥

---

*ख. पुस्तके—उद्धृत्य मुष्टिनाऽऽच्छाद्य भेषजं यत्प्रदीयते । तन्मुष्टियोगमित्याहुरुपदेशपरायणाः ॥ १ ॥ इत्यधिकमत्र ।

---

१ क. 'वंशघ' । २ क. पाराशरे यथालाभमित्याक्षेपो विषस्य तु । ३ क. घ. 'वां तु लाज' । ४ घ. 'च' ।

द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा ॥
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम् ॥ १० ॥

अस्य योगस्य क्वाथः कार्यः ॥ १० ॥

द्राक्षाकाश्मर्यखर्जूरपटोलारिष्टवासकैः ॥
लाजामलकदुस्पर्शैः सितायुक्तस्तु पैत्तिके ॥ ११ ॥

सितायुक्तस्त्वित्यतः परं कषाय इति शेषः ॥ ११ ॥

शिरीषोदुम्बराश्वत्थशेलुन्यग्रोधवत्सकैः ॥
प्रलेपः सघृतः शीघ्रं व्रणवीसर्पदाहहा ॥ १२ ॥

सुगमम् ॥ १२ ॥

दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम् ॥
श्लैष्मिक्यां पित्तजायां वा पाने निष्क्वाथ्य दापयेत्* ॥ १३ ॥

सुगमम् ॥ १३ ॥

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम् ॥
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥ १४ ॥
एष निम्बादिकः क्वाथः पीतः शर्करयाऽन्वितः ॥
त्रिदोषां मसूरीं हन्ति ज्वरवीसर्पसंभवाम् ॥
उत्थिता प्रविशेद्या तु पुनस्तां बाह्यतो नयेत् ॥ १५ ॥

अस्य योगस्य क्वाथः । चन्दनद्वयं श्वेतचन्दनं रक्तचन्दनं च । निम्बादिः ॥ १४ ॥ ॥ १५ ॥

पटोलकुण्डलीमुस्तवृषधन्वयवासकैः ॥
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥ १६ ॥
मसूरीं शमयेदामां पक्वां चैव विशोधयेत् ॥
नातः परतरं किंचिद्विस्फोटज्वरशान्तये ॥ १७ ॥

सुगमम् ॥ १६ ॥ १७ ॥

पटोलमूलारुणतण्डुलीयकं पिबेद्धरिद्रामलकल्कसंयुतम् ॥
मसूरिविस्फोटविदाहशान्तये तथैव रोमान्तिवमिज्वरापहम् ॥ १८ ॥

पटोलेत्यादिकः क्वाथो हरिद्रामलकचूर्णं प्रक्षिप्याऽऽनुलोम्यार्थं पेयः ॥ १८ ॥

---

* ख. पुस्तके—रोमकूपेषु ये श्लक्ष्णाः स्फोटाः सर्षपसंनिभाः । कण्डूदाहज्वरोपेता ज्ञेया रोमान्तिकास्तु ते ॥ १ ॥ बहूपद्रवपापिष्ठमसारं च प्रयत्नतः । जयेत्तज्ज्ञादिभिर्योगैः सोऽत्रास्मिन्योगे सुदुर्जयम् ॥ २ ॥ इत्यधिकमत्र ।

---

१ क. घ. °मुशीराम् । २ क. घ. °[illegible] । प्र° ।

पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम् ॥
पिबेज्जलं सुकथितं सुशीतलं मसूरिकारोगविनाशनं परम् ॥ १९ ॥

धात्रीखदिरावपि पटोलमूलारुणतण्डुलीयकाभ्यां सह कथनीयौ ॥ १९ ॥

खदिरत्रिफलारिष्टपटोलामृतवासकैः ॥ २० ॥
काथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ॥
कुष्ठवीसर्पविस्फोटकण्ड्वादीनपि पानतः ॥ २१ ॥

अष्टकाख्य इत्यष्टाङ्गः । अयं च काथो भग्नायां मसूरिकायां प्रायः प्रयुज्यते । अत्र शोधनेऽपेक्षिते गुग्गुलुमपि प्रक्षिपन्ति । इति खदिराष्टकः ॥ २० ॥ २१ ॥

अमृतादिकषायस्तु जयेत्पित्तकफात्मिकाम् ॥ २२ ॥

अमृतादिकषायस्त्विति । विसर्पोक्तो दशद्रव्यस्तत्र मसूरीहरत्वश्रुतेः ॥ २२ ॥

सौवीरेण तु संपिष्टं मातुलुङ्गस्य केसरम् ॥
प्रलेपात्पाचयत्याशु दाहं चापि नियच्छति ॥ २३ ॥

सुगमम् ॥ २३ ॥

पाददाहं च कुरुते पिटिका पादसंभवा[1] ॥
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना ॥ २४ ॥

सुगमम् ॥ २४ ॥

पाककाले तु सर्वास्ता विशोषयति मारुतः ॥
तस्मात्संबृंहणं कार्यं न तु पथ्यं विशोषणम् ॥ २५ ॥

सुगमम् ॥ २५ ॥

गुडूची मधुकं द्राक्षा मोरटं दाडिमैः सह ॥
पाककाले प्रदातव्यं भैषज्यं गुडसंयुतम् ॥
तेन पाकं व्रजन्त्याशु न तु वायुः प्रकुप्यति ॥ २६ ॥

गुडूचीत्यादियोगस्य काथः । अत्र गुडः प्रक्षेपः ॥ २६ ॥

लिह्याद्वा बादरं चूर्णं पाचनार्थं गुडेन वा ॥
अनेनाऽऽशु विपच्यन्ते वातपित्तकफात्मिकाः ॥ २७ ॥

सुगमम् ॥ २७ ॥

शूलाध्मानपरीतस्य कम्पमानस्य वायुना ॥
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ॥ २८ ॥

धन्वमांसरसा इति । जाङ्गलमृगपक्षिमांसरसाः ॥ २८ ॥

---

[1] क. 'पादजा' ।

दाडिमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः ॥
विसर्पन्ती सविस्फोटा क्लिन्ना स्रावयती तथा ॥
दशाङ्गलेपचूर्णेन चूर्णिता शममेति च ॥ २९ ॥

सुगमम् ॥ २९ ॥

पिबेदम्भस्तप्तशीतं भावितं खदिरासनैः ॥

तप्तशीतमित्यर्धशृतशीतम् । भावितं खदिरासनैरिति । खदिरासनसाधितम् । असनः पीतशालः ॥

शौचे वारि प्रयुञ्जीत गायत्रीबहुवारजम् ॥ ३० ॥

सुगमम् ॥ ३० ॥

जातीपत्रं समञ्जिष्ठं दार्वी पूगफलं शमी ॥ ३१ ॥
धात्रीफलं समधुकं कथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ॥ ३२ ॥

सुगमम् ॥ ३१ ॥ ३२ ॥

अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥

गवेधुमधुकाम्बुनेति । गवेधुर्धुंडुवः । अनयोः कल्कं कर्पटे बद्ध्वाऽक्ष्णि सेकः ॥

मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ॥ ३३ ॥
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्चोतने हिताः ॥
नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च ॥ ३४ ॥

प्रलेपाश्चोतने हिता इति बहुवचननिर्देशाद्व्यस्तसमस्तैर्मधुकादिभिः प्रलेपः । अर्धशृतीकृतैराश्चोतनमित्याहुः । आश्चोतनं परिषेकः ॥ ३३ ॥ ३४ ॥

पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत् ॥
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥ ३५ ॥

भस्मनेति । शुष्कगोमयभस्मना ॥ ३५ ॥

कृमिपातभयाच्चापि धूपयेत्सरलादिभिः ॥

सरलादिभिरिति । सरलागुरुगुग्गुलुप्रभृतिभिः ॥

वेदनादाहशान्त्यर्थं स्रुतानां च विशुद्धये ॥
सगुग्गुलुं वरक्कार्थं युञ्ज्याद्वा खदिराष्टकम् ॥ ३६ ॥

खदिराष्टकोऽपि सगुग्गुलुः ॥ ३६ ॥

कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ॥
तथाऽष्टाङ्गावलेहो वा कवलश्चाऽऽर्द्रकादिभिः ॥ ३७ ॥

अष्टाङ्गावलेहार्द्रकादिकवलश्च ज्वराधिकारोक्तः ॥ ३७ ॥

पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ॥

सुगमम् ॥

कुर्याद्व्रणविधानं च तैलादीन्वर्जयेच्चिरम्* ॥ ३८ ॥

सुगमम् । 'बिम्बातिमुक्तकाशोकप्लक्षवेतसपल्लवैः ॥

निशापर्युषितः क्वाथो मसूरीभयनाशनः' ॥ १ ॥

इत्यधिकः क्वचिद्योगः पठ्यते । अत्र बिम्बी डिम्बिरिति ख्याता । निशापर्युषितः शृतशीतः । योगोऽयमनागतमसूरिनिवारणार्थं चैत्रे मासि पेयः ॥ ३८ ॥

निम्बातिमुक्तकास्फोतबिम्बीवेतसवल्कलम् ॥

शृतशीतं प्रयोक्तव्यं स्रावप्रक्षालने सदा ॥ ३९ ॥

आस्फोताऽस्फुरमल्लिका । शृतशीतमर्धशृतशीतं शीतकषायो वा । स्रावः प्रक्षालन इत्युपलक्षणम् । तेन पानमप्यस्य कार्यमित्याहुः ॥ ३९ ॥

निशाद्वयोशीरशिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेसरैः ॥

संस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥ ४० ॥

पानं च दातव्यम् ॥ ४० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां षट्पञ्चाशत्तमो मसूरिकाधिकारः समाप्तः ॥ ५६ ॥

## अथ सप्तपञ्चाशत्तमः क्षुद्ररोगाधिकारः ।

अथाक्षुद्रलक्षणहेतुचिकित्सितानां कुष्ठादीनामभिधानेन क्षुद्रहेत्वादीनां रोगाणां पारिशेष्यात्क्षुद्ररोगाधिकारः । इह रोहिणीवल्मीकादीनां भूरिहेत्वादियोगेऽपि क्षुद्रत्वव्यपदेशो बाहुल्यात् ।

तथाऽजगल्लिकामामां जलौकोभिरुपाचरेत् ॥

अजगल्लिकामामामिति । अजगल्लिकाऽचिल्लीति लोके ॥

शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चाऽऽलेपयेन्मुहुः ॥ १ ॥

शुक्तिर्मुक्तास्फोटः । सौराष्ट्रिका सौराष्ट्री मृत् । सुश्रुते सौराष्ट्रिकास्थाने औद्भिक-

*ख. पुस्तके-विषघ्नैर्वमनैश्चापि प्रपिष्टं च पुनः पुनः । तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ १ ॥ काश्चिद्विनाऽपि क्रियया सिध्यन्त्याशु मसूरिकाः । काश्चित्क्रियाकलापेऽपि न सिध्यन्ति मसूरिकाः ॥ २ ॥ सूक्ष्माः कृष्णतराः काश्चिद्घनाः सिध्यन्ति वा न वा । काश्चिन्नैव तु सिध्यन्ति साध्यमानाः प्रयत्नतः ॥ ३ ॥ इत्यधिकमत्र ।

१ क. घ. तन्नाज ।

पाठादत्र स्वर्जिकाक्षारो व्याख्यातः । तद्यथा—यवक्षारशुक्तिकाश्रौ[illegible]ककल्केनाऽऽलेपयेदिति । क्षारो यवक्षारः । डल्लणस्तु शुक्तिशृङ्गीयवक्षारकल्कैरिति पाठं पठित्वा व्याख्याति । शुक्तिर्जलशुक्तिः । शृङ्गी स्वर्जिका । यवाः प्रसिद्धाः । क्षारशब्दः प्रत्येकं संबध्यते । गयी तु—अजगल्लिकामपक्वां यवक्षारशुक्तिसौराष्ट्रिकल्केनाऽऽलेपयेत् । ततो जलौकोभिरपक्वा ग्राहयेत् । आलेप आद्य उपक्रमः सर्वशोफानामित्युक्त इति ॥ १ ॥

श्लेष्मविद्रधिकल्पेन जयेच्चानुशयीं भिषक् ॥

सुगमम् ॥

विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभाम् ॥
इरिवेल्लीं गन्धनामीं जयेत्पित्तविसर्पवत् ॥ २ ॥

विवृतादीनां पृथग्दोषजनितानां कथमेकचिकित्सितमिति चेत् । एका शान्तिरनेकस्य बहूनां बह्वय एव चेत्युक्तत्वात् । यथा गुडूचीक्वाथेनैकेनाप्यनेकज्वरच्छर्दिवातरक्तादिव्याधीनुपचरन्ति तद्वदेतानपि व्याधीन्पित्तविसर्पविधानेनोपचरेत् । तत्र पित्तस्य विसर्पस्य च विधानेनोपचरेदिति ज्ञेयं चिकित्सितत्रैविध्यात् । त्रिविधं हि चिकित्सितं दोषप्रत्यनीकं व्याधिप्रत्यनीकमुभयप्रत्यनीकमिति । यत्र दोषा व्याधिमुत्पाद्य दीप इव स्वयमेवावतिष्ठन्ते तत्र दोषप्रत्यनीकम् । यत्र मारुत इव मेघवर्षणे सति मस्तका(व्याधी)नुत्पाद्य दोषः स्वयमुपशाम्यति तत्र व्याधिप्रत्यनीकम् । यत्र पुनस्तन्तुपटन्यायेन व्याधिरूपेणैव दोषः स्वयमुपतिष्ठतेतत्रोभयप्रत्यनीकम् । तदत्र विवृतादिरोगेषु यथायथमनुभूय प्रयोज्यमिति ॥ २ ॥

मधुरौषधसिद्धेन सर्पिषा शमयेद्व्रणम् ॥ ३ ॥

मधुरौषधानि काकोल्यादीनि ॥ ३ ॥

रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥ ४ ॥

विदारिकायाः सर्वजत्वेऽपि वातकफप्राबल्याद्वातकफहरस्वेदादिविधानं रक्तावसेकश्च शोफसमुत्थितत्वादस्यामुचितः । सुश्रुतेन पक्वाया विदार्या विशेषचिकित्सोक्ता—

"पक्वां विदार्य शस्त्रेण पटोलपिचुमन्दयोः ।
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ॥
बद्ध्वा च क्षीरवृक्षस्य कषायैः खदिरस्य च ।
व्रणं प्रक्षालयेच्छुद्धां ततस्तां रोपयेत्पुनः" इति ॥

क्षीरवृक्षा वटोदुम्बरप्लक्षपिप्पलगर्दमाण्डाः ॥ ४ ॥

पनसिकां कच्छपिकामनेन विधिना भिषक् ॥
साधयेत्कठिनानन्याञ्छोफान्दोषसमुद्भवान् ॥ ५ ॥

---

१ च. अपेत ।

शोफान्दोषसमुद्भवानिति । योग्यतया कफवातमाञ्शोयान् ॥ ५ ॥

अन्धालजीं कच्छपिकां तथा पाषाणगर्दभम् ॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत् ॥ ६ ॥

पाषाणगर्दभमिति । गल्लदुमेति ख्यातम् । एषां सुश्रुतेऽधिकचिकित्सोक्ता । तथाच—परिपाकगतान्भित्त्वा व्रणवत्समुपाचरेदिति ॥ ६ ॥

कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥
लेपनं पाण्डुरङ्गेण शोणितस्य च मोक्षणम् ॥ ७ ॥

सुगमम् ॥ ७ ॥

शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ॥

ततः शोधनेनेति शेषः ॥

मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ॥ ८ ॥
जातीपल्लववक्रैश्च निम्बतैलं विपाचयेत् ॥
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुस्रवम् ॥ ९ ॥

सुगमम् । सुश्रुते वल्मीकचिकित्सायां विशेष उक्तः ।
तद्यथा—"वल्मीकं तु भवेद्यस्य नातिवृद्धं न मर्मजम् ॥
तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ॥ १ ॥
कुलत्थिकाया मूलैश्च गुडूच्या लवणेन च ॥
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ॥ २ ॥
श्यामामूलैः सपत्रैः सक्तुमिश्रैः प्रलेपयेत् ॥
सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत् ॥ ३ ॥
पक्वं वा तद्धि विज्ञाय गतीः सर्वा यथाक्रमम् ॥
अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान्भिषक् ॥ ४ ॥
संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ॥
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान्भिषक् ॥ ५ ॥
पाणिपादोपरिष्टात्तु च्छिद्रैर्बहुभिरावृतम् ॥
वल्मीकं यत्सशोफं स्याद्वर्ज्यं तत्तु विजानता" ॥ ६ ॥ इति ।

वृन्देन यवप्रख्याकक्षानिरुद्धप्रकशाग्निरोहिणीसंनिरुद्धगुदानां चिकित्सा नोक्ता सा सुश्रुतात्संदर्श्यते—

"अन्धालजीं यवप्रख्यां पनसीं कच्छपीं तथा ॥
पाषाणगर्दभीं चैव पूर्वं स्वेदेन योजयेत् ॥ १ ॥
मनःशिलातालकुष्ठदारुकल्कैः प्रलेपयेत् ।
परिपाकगतान्भित्त्वा व्रणवत्समुपाचरेत्" ॥

इत्यनेन यवप्रख्याचिकित्सोक्ता ।

तथा—"विवृतामिन्द्रवृद्धां च गर्दभां जालगर्दभाम् ।
इरिवेल्लां गन्धनामां कक्षां विस्फोटकां तथा ॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक् ।
रोपयेत्सर्पिषा पक्वान्सिद्धेन मधुरौषधैः" ॥

इत्यनेन च कक्षाचिकित्सोक्ता ।

तथा—"निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम् ।
दारवीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत् ।

दारवीं काष्ठमयीम् । जतुमयी(कृता) लाक्षाविरचिता ॥

"परिषेके वसा मज्जा शिशुमारवराहयोः ।
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंस्कृतम् ॥
त्र्यहात्र्यहात्स्थूलतरां सम्यङ्नाडीं प्रवेशयेत् ।
स्रोतो विवर्धयेदेवं स्निग्धमन्नं च भोजयेत् ॥
भित्त्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत् ।

अस्यार्थः—सेवनीं त्यक्त्वा शस्त्रेण वा मूत्रस्रोतःसंकोचकारणं चर्म विदारयेत् । तस्यापि द्वारस्याविपाटे मणिद्वारमप्येवं दारयेदिति ।

तथा—"संनिरुद्धगुदं रोगं वल्मीकं वह्निरोहिणीम् ।
प्रत्याख्याय यथायोगं चिकित्सितमथाऽऽचरेत्" इति ॥

असाध्येष्वपि वल्मीकाग्निरोहिणीप्रभृतिषु चिकित्सितं कार्यमेव—

"यावदुच्छ्वसिति प्राणी तावत्कुर्यात्प्रतिक्रियाम् ।
कदाचिद्दैवयोगेन दृष्टारिष्टोऽपि जीवति" ॥

इत्युक्तत्वादिति ।

तथा—"विसर्पोक्तेन विधिना साधयेदग्निरोहिणीम्" ।

तथा—"संनिरुद्धगुदे योज्या निरुद्धप्रकशे क्रिया" इति ॥ ८ ॥ ९ ॥

पाददारीषु तु शिरां व्यधयेत्तलशोधनीम् ॥

तलशोधनीमिति । पादोपरितलगामिनीं शिरां विध्येत् । अत्र शिराव्यधाङ्गभूतस्नेहस्वेदौ कृत्वेति मन्तव्यमेतावन्तरेण शिराव्यधस्याप्रवृत्तेः ॥

स्नेहस्वेदोपपन्नौ तु पादौ चाऽऽलेपयेन्मुहुः ॥
मधूच्छिष्टवसामज्जघृतक्षीरैर्विमिश्रितैः ॥ १० ॥

स्नेहस्वेदोपपन्नावित्यादिना पाश्चात्यातिदेशो दोषशेषक्षयार्थं रक्ताकृष्टिजनितवातजयार्थं वा ॥ १० ॥

सर्जाहसिन्धूद्भवयोश्चूर्णं मधुघृतान्वितम् ॥
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥ ११ ॥

सुगमम् ॥ ११ ॥

उपोदकासर्षपनिम्बमोचाकर्कारुकैर्वारुकभस्मतोये ॥
तैलं विपक्वं लवणांशयुक्तं तत्पाददारीं विनिहन्ति लेपात् ॥१२॥

उपोदकाया नालम् । सर्षपस्य काण्डकम् । मोचा कदल्याः काण्डत्वक् । कर्कारुः कूष्माण्डभेदः । लवणांशयुक्तमिति । पादिकसैन्धवयुक्तम् ॥ १२ ॥

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत् ॥
पटोलारिष्टकासीसत्रिफलाभिर्मुहुर्मुहुः ॥ १३ ॥

अलस इति । पकार्यीति ख्याते । अम्लैः काञ्जिकैः ॥ १३ ॥

करञ्जबीजं रजनी कासीसं मधुकं मधु ॥
रोचना हरितालं च लेपोऽयमलसे हितः ॥ १४ ॥

सुगमम् ॥ १४ ॥

लाक्षाभयारसालेपः कार्यं वा रक्तमोक्षणम् ॥ १५ ॥

रसो गन्धरसो स तु क्वाथो लेपं प्रत्यनौपयोगिकत्वात् ॥ १५ ॥

बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान् ॥
शिलारोचनकासीसचूर्णैर्वा प्रतिसारयेत् ॥ १६ ॥

बृहतीरससिद्धेन तैलेनेति । बृहती कण्टकारिका । तैलं च कटुतैलम् । यदाह सुश्रुतः—निदिग्धिकास्वरससिद्धेन सर्षपतैलेनाभ्यञ्ज्यात् । शिला मनःशिला । प्रतिसारयेद्घर्षयेत् ॥ १६ ॥

दहेत्कदरमुत्कृत्य तैलेन दहनेन वा ॥

कदरं कोलदीति ख्यातम् । तैलेनेति । सूक्ष्ममार्गानुसारित्वात्तैलस्य । दहनेनेत्यस्य स्थाने मदनेनेति पाठे मदनः सित्थकः । तेनापि तथैव दाहः ॥

चिप्यमुष्णाम्बुना स्विन्नमुद्धृत्याभ्यञ्जनं व्रणे ॥
दत्त्वा सार्जरसं चूर्णं बद्ध्वा व्रणवदाचरेत् ॥ १७ ॥

चिप्यमिति । चिप्यं कुनखमभिप्रेतं न त्वङ्गुलिवेष्टक उक्तचिकित्सायास्तत्रानर्हत्वात् । उद्धृत्योत्कृत्य दुष्टमांसं पक्वम् । उष्णाम्बुना स्वेदनमिह मार्दवजननार्थम् । व्रणवदाचरेदिति । आहाराचारादिना ।

---

१ क. घ. ॰ताप्लुत॰ । २ क. घ. ॰भ्यज्य तद्व्रणम् । द॰ ।

"चिप्यं शोणितसेकेन शोधनैश्चाप्युपाचरेत् ।
गतोष्माणं तथा चैनमुष्णाम्बुपरिषेचितम् ॥
शस्त्रेण च यथायोगमुत्कृत्याऽऽस्रावयेद्व्रणम् ।
शिल्पा तेजोवती चैव रोचना च रसाञ्जनम् ॥
कल्कैरेतैरम्लपिष्टैः शोधयित्वा व्रणं ततः ।
हरिद्रागुरुकालेयकल्कैश्च सरसाञ्जनैः ॥
सिद्धेन तिलतैलेन तत्र कुर्वीत रोपणम् ॥

इति क्वचित्पाठः। सुश्रुतेन कुनखे चिप्यातिदेश उक्तः—कुनखे विधिरप्येष कार्यो वै भिषजा भवेदिति ॥ १७ ॥

स्वरसेन हरिद्रायाः पात्रे कृष्णायसेऽभयाम् ॥
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्यं पुनः पुनः ॥ १८ ॥

सुगमम् ॥ १८ ॥

निम्बोदकेन वमनं पद्मिनीकण्टके हितम् ॥ १९ ॥

निम्बोदकेन वमनमिति । अत्र वामनीयमदनफलादियोगमिच्छन्ति ॥ १९ ॥

निम्बोदककृतं सर्पिः सक्षौद्रं पानमिष्यते ॥

सुगमम् ॥

निम्बारग्वधकल्कैर्वा मुहुरुद्वर्तनं हितम् ॥ २० ॥

सुगमम् ॥ २० ॥

अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत् ॥

अहिपूतनक इति । बालानां गुदपाके । स्तन्यं विशोधयेदिति । स्तनरोगोक्तविधिना ॥

त्रिफलाखदिरक्वाथैर्व्रणानां धावनं हितम् ॥ २१ ॥

सुगमम् ॥ २१ ॥

करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम् ॥

तिक्तं पटोलपत्रम् । करञ्जादिभिः कल्कः । द्रवं जलम् ॥

रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ २२ ॥

सुगमम् ॥ २२ ॥

गुदभ्रंशे गुदं स्नेहैरभ्यज्याऽनु प्रवेशयेत् ॥
प्रविष्टं स्वेदयेच्चापि [illegible] ॥ २३ ॥

गोःफणयेति । गोःफणा बन्धविशेषः । उक्तं हि—
उच्चारनिर्गमार्थं सच्छिद्रेण चर्मणा चास्य गोःफणाबन्धः कार्य इति ॥ २३ ॥

कोमलं पद्मिनीपत्रं यः खादेच्छर्करायुतम् ॥
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ २४ ॥

सुगमम् ॥ २४ ॥

वृक्षाम्लानलचाङ्गेरीविश्वपाठायवाग्रजम् ॥
तक्रेण शीलयेत्पायुभ्रंशार्तोऽनलदीपनम् ॥ २५ ॥

वृक्षाम्लेत्यादियोगः । वृक्षाम्लं महार्द्रकम् । अनलश्चित्रकः ॥ २५ ॥

गुदं च गव्यवसया म्रक्षयेदविशङ्कितः ॥
दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः ॥ २६ ॥

सुगमम् ॥ २६ ॥

मूषिकाणां वसाभिर्वा गुदे सम्यक्प्रलेपनम् ॥

सुगमम् ॥

सुस्विन्नमूषिकामांसेनाथवा स्वेदयेद्गुदम् ॥ २७ ॥

सुस्विन्नमूषिकामांसेनेति । काञ्जिकेन मूषिकामांसोत्स्वेदनं ज्ञेयम् ॥ २७ ॥

चाङ्गेरीघृतमाह—

चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् ॥
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥ २८ ॥

चाङ्गेर्याः स्वरसः । कोलस्य क्वाथः । अम्लं दधि दध्यम्लम् । एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम् । किंच चाङ्गेरीस्वरसः स्नेहसमः । स्वरसे क्षीरवद्विधिरिति पाठात् । दधिकोलरसौ मिलित्वा त्रिगुणौ । प्रथमव्याख्यानेन प्रचारः । क्षारनागराभ्यां कल्कः । तथा च चक्रः—शुण्ठीक्षारावत्र कल्कौ *शेषं तद्द्रवमिष्यत इति । चाङ्गेरीघृतम् ॥ २८ ॥

मूषिकाद्यं तैलमाह—

क्षीरे महत्पञ्चमूलं मूषिकामन्त्रवर्जिताम् ॥
पक्त्वा तस्मिन्पचेत्तैलं वातघ्नौषधसंयुतम् ॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात्प्रसाधयेत् ॥ २९ ॥

मूषिकागुडकमेकं ग्राह्यमन्त्रवर्जितामिति विशेषणाच्छशकाद्ये शशकवत् । बृहत्पञ्चमूलस्य मिलित्वा प्रस्थः । क्षीरस्यापि प्रस्थः । तोयस्य प्रस्थत्रयम् । निष्क्वाथशेषः क्षीर-

---

* शिष्टं तु द्रवमिष्यत इति पाठश्चक्रस्य ।

१ क. 'ल्पपक्व ग' ।

प्रस्थः स्थाप्यः । अनेन तैलकुडवः साध्यः । तेन क्वाथपरिभाषयैव पाक इति गदाधरः । मूषिकामांसस्य पलद्वयम् । पञ्चमूलस्य पलद्वयम् । क्षीरप्रस्थः । तोयप्रस्थचतुष्टयम् । क्षीरशेषः पाकः । एवं क्षीरपरिभाषान्यायात्क्षीरं साधयित्वा तैलकुडवो विपाच्य इति कार्तिकः । चक्रस्त्वाह—अम्बवर्जितामिति ग्रहणयोग्यतोपदर्शनार्थम् । तेन मूषिकामांसस्य पलान्यष्टौ । मिलितपञ्चमूलस्य पलान्यष्टौ । क्षीरप्रस्थः । तोयप्रस्थत्रयम् । शेषः क्षीरप्रस्थः । तेन तैलकुडवः साध्य इति । एवं क्षीरेण पक्केन स्नेहसाधने व्याख्या प्रथमैवोपचारायोचिता चरकेऽपीशानादिप्रामाणिकैर्दर्शितत्वात् । वातघ्नो भद्रदार्वादिगणः । एष कल्कः । मूषिकातैलम् ॥ २९ ॥

स्वेदोपनाहौ परिवर्तिकायां कृत्वा समभ्यज्य घृतेन पश्चात् ॥
प्रवेशयेच्चर्म शनैः प्रविष्टे मांसैः सुखोष्णैरुपनाहयेच्च ॥ ३० ॥

स्वेदोपनाहाविति । वातहरमांसादिना स्वेदो ज्ञेयो वातप्रधानत्वात्परिवर्तिकायाः । प्रवेशयेच्चर्मेति । परिवर्तितचर्म यथोक्तस्वेदादिना मृदूकृत्य सम्यगाकर्षेत् ॥ ३० ॥

स्नेहस्वेदैस्तथैवैनां चिकित्सेदवपाटिकाम् ॥ ३१ ॥

अवपाटिकायां तथैवेत्यनेनोपनाहनं चर्माकर्षणं चातिदिशति ॥ ३१ ॥

चर्मकीलाञ्जतुमणीन्मशकांस्तिलकालकान् ॥
उत्कृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ॥ ३२ ॥

क्षाराग्निभ्यामिति । क्षारेणाग्निना वा । अनवगाढे क्षारः । अवगाढेऽग्निः ॥ ३२ ॥

यौवनपिटकान्यच्छनीलिकान्यङ्गशर्कराः ॥
शिरावेधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥ ३३ ॥

शिरावेधैरिति । यथान्यायं यथाभ्यासं ललाटादिशिराव्यधः । अभ्यञ्जनैरित्यभ्यङ्गैः ॥ ३३ ॥

लोध्रधान्यवचालेपस्तारुण्यपिटिकापहः ॥
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ॥
वमनं च निहन्त्याशु पिटकान्यौवनोद्भवान्* ॥ ३५ ॥

सुगमम् ॥ ३५ ॥

* ख. पुस्तके—लाक्षाकरञ्जपलाशचक्रमर्दफलक्लेपः । शिरसि कृतो बहुदृष्टो दारुणकशान्तिकरः परमः ॥ १ ॥ फलवल्कललेपेन नस्याभ्यासेन नरात् । तस्य दारुणकस्यामानिवतमाश्वेव नुदस्यते ॥ २ ॥ तत्त्वसारात् । भूतकेशीवटारोही मूलं चैवातिमुक्तकात् । मासमात्रं स्थितास्तैले केशवृद्धिकराः पराः ॥ ३ ॥ बिन्दुसारात् । इत्यधिकमत्र ।

व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ॥
लेपः सनवनीतो वा श्वेताश्वखुरजा मषी ॥ ३६ ॥

श्वेताश्वखुरजा मषीति । श्वेताऽपराजिता । अश्वस्य खुरस्तस्य मषी धवलघोटकखुरस्य मषीत्यन्ये ॥ ३६ ॥

रक्तचन्दनमञ्जिष्ठाकुष्ठलोध्रप्रियंगवः ॥
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ ३७ ॥

वटाङ्कुरा वटस्याभिनवाः पत्रमुकुलाः ॥ ३७ ॥

व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य वा ॥

सुगमम् ॥

केवलान्पयसा पिष्ट्वा तीक्ष्णाञ्शाल्मलिकण्टकान् ॥
आलिप्तं त्र्यहमेतेन भवेत्पद्मोपमं मुखम् ॥ ३८ ॥

पयसेत्यस्य स्थाने सर्पिषेति पाठान्तरम् । तीक्ष्णानभिनवान् ॥ ३८ ॥

मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोन्वितैः ॥
सप्तरात्रेण भवति पुण्डरीकदलप्रभम् ॥ ३९ ॥

सुगमम् ॥ ३९ ॥

मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः ॥
मुखकान्तिकरो लेपः पिटिकातिलकालजित् ॥ ४० ॥

सुगमम् ॥ ४० ॥

कालीयकोत्पलामयदधिसरबदरास्थिमध्यफलिनीभिः ॥
लिप्तं भवति हि वदनं शशिप्रभं सप्तरात्रेण ॥ ४१ ॥

दधिसरस्थाने दधिरसेति पाठान्तरम् । दधिरसः कपित्थरस इत्याहुः ॥ ४१ ॥

रक्षोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाज्यबस्तपयः ॥
सिद्धेन लिप्तमाननमुद्यच्छरदिन्दुबिम्बवद्भाति ॥ ४२ ॥

रक्षोघ्नः श्वेतसर्षपः । आज्यं घृतम् । बस्तपयश्छागक्षीरम् । सिद्धेन सिद्धफलेन । अत्रानेनेति शेषः ॥ ४२ ॥

परिणतदधिशरपुङ्खैः कुवलयदलकुष्ठचन्दनोशीरैः ॥
मुखकमलकान्तिकरैर्भृकुटीतिलकालकाञ्जयति ॥ ४३ ॥

परिणतदधीत्यादियोगस्य लेपः । भृकुटी ललाटे वलिरूपा ॥ ४३ ॥

हरिद्राद्वययष्ट्याह्वकालीयककुचन्दनैः ॥
प्रपौण्डरीकमञ्जिष्ठापद्मपद्मककुङ्कुमैः ॥ ४४ ॥

१ ह. 'चिरसव' । २ क. ख. 'न्तिकारी भृकु' ।

कपित्थतिन्दुकप्लक्षवटपत्रैः पयोन्वितैः ॥
लेपयेत्कल्कितैरेभिस्तैलं वाऽभ्यञ्जनं पचेत् ॥ ४५ ॥
पिप्लवं नीलिकां व्यङ्गं तिलकान्मुखदूषकान् ॥
नित्यसेवी जयेत्क्षिप्रं मुखं कुर्यान्मनोहरम् ॥ ४६ ॥

कपित्थादीनां सर्वेषां पत्रम् । कल्कितैरेभिस्तैलमिति । हरिद्रादिभिः कल्कः । पयसा द्रवकार्यम् । पिप्लवं जटुलम् ॥ ४४ ॥ ४५ ॥ ४६ ॥

कनकतैलमाह—

मधुकस्य कषायेण तैलस्य कुडवं पचेत् ॥
कल्कैः प्रियंगुमञ्जिष्ठाचन्दनोत्पलकेसरैः ॥ ४७ ॥
कनकं नामतस्तैलं मुखकान्तिकरं परम् ॥
अभीलुनीलिकाव्यङ्गशोधनं परमार्चितम् ॥ ४८ ॥

केसरं नागकेसरम् । अभीलुर्जटुलः । कनकतैलम् ॥ ४७ ॥ ४८ ॥

मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम् ॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा ॥ ४९ ॥
आजं पयस्तु द्विगुणं शनैर्मृद्वग्निना पचेत् ॥
नीलिकापिटिकाव्यङ्गानभ्यङ्गादेव नाशयेत् ॥ ५० ॥
मुखं प्रसन्नोपचितं नीलीकर्कशवर्जितम् ॥
सप्तरात्रप्रयोगेण भवेत्कनकसंनिभम् ॥ ५१ ॥

मातुलुङ्गस्य फलं मूलं वा । सयष्टिकं यष्टीमधुयुक्तम् । नीलीकर्कशवर्जितमिति । नीलिकाकृतकर्कशत्वरहितं मुखम् । मञ्जिष्ठादितैलम् ॥ ४९ ॥ ५० ॥ ५१ ॥

कुङ्कुमाद्यं तैलमाह—

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका ॥
कालीयकमुशीरं च पद्मकं नीलमुत्पलम् ॥ ५२ ॥
न्यग्रोधपादाः प्लक्षस्य शुङ्गाः पद्मस्य केसरम् ॥
द्विपञ्चमूलसहितैः कषायैः पालिकैः पृथक् ॥ ५३ ॥
जलाढकं विपक्तव्यं पादशेषमथोद्धरेत् ॥
मञ्जिष्ठा मधुकं लाक्षा पत्त(त्रा)ङ्गं मधुयष्टिका ॥ ५४ ॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत् ॥
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ॥ ५५ ॥
सम्यक्पक्वं परं ह्येतन्मुखवर्णप्रसादनम् ॥

---

१ क. ख. साधकम् ।

नीलिकापिडिकाव्यङ्गानभ्यङ्गादेव नाशयेत् ॥ ५६ ॥
सप्तरात्रेण वदनं भवेत्कमलसंनिभम् ॥
कुङ्कुमाद्यमिदं तैलं श्रेष्ठं वैदेहनिर्मितम्* ॥ ५७ ॥

कषायैरिति । कषायसाधनैरुक्तकुङ्कुमादिभिः । मञ्जिष्ठादिभिः पत्रकल्कैरित्यर्थः कुङ्कुमाद्यं तैलम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

अरूंषिकायां रुधिरेऽवसिक्ते शिराव्यधेनाथ जलौकसा वा ॥
निम्बाम्बुसिक्ते शिरसि प्रलेपो देयोऽश्ववर्चोरससैन्धवाभ्याम् ॥ ५८ ॥

निम्बाम्बुसिक्त इति । निम्बाम्बु, अर्धशृतम् । अरूंषिकां तु पुनर्जलौकोभिः शिराव्यधेन वा रक्तमवसिच्य निम्बोदकेन परितः सिक्त्वाऽश्वविष्ठारसेन प्रक्षिप्तबहुसैन्धवचूर्णेन लेपयेत् ॥ ५८ ॥

पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च ॥
मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरूंषिकाम् ॥ ५९ ॥

पिण्याकस्तिलखलिः ॥ ५९ ॥

हरिद्राद्वयभूनिम्बत्रिफलारिष्टचन्दनैः ॥
एतत्तैलमरूंषीणां सिद्धमभ्यञ्जने हितम् ॥ ६० ॥

सुगमम् । हरिद्राद्यं तैलम् ॥ ६० ॥

दारुणे तु शिरां विध्येत्स्निग्धस्विन्नां ललाटजाम् ॥
अवपीडशिरोबस्तीनभ्यङ्गांश्चावचारयेत् ॥ ६१ ॥

दारुणेति दारुणपुष्पका(?) । अवपीडशिरोबस्तीनिति । अवपीड्य नस्ये दीयत इत्यवपीडोऽवपीडकः । शिरोबस्तिश्चात्र हरिद्राद्यतैलेन देयः ॥ ६१ ॥

कोद्रवाणां तृणक्षारपानीयं परिधावने ॥ ६२ ॥

सुगमम् ॥ ६२ ॥

प्रियालबीजमधुककुष्ठमिश्रैः ससैन्धवैः ॥
कार्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ॥ ६३ ॥

प्रियालबीजमधुककुष्ठमिश्रैः ससैन्धवैरेति । प्रियालबीजादीनि च तानि मिश्राणि चेति विग्रहं कृत्वा समाधेयं विशेष्यपदस्याभावात् । मिश्रैरित्यस्य स्थाने माषैरिति पाठान्तरम् ॥ ६३ ॥

---

* ख. पुस्तके—कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका । कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत् ॥ १ ॥ अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत् । सम्यक्पक्वं परं ह्येतन्मुखवर्णप्रसादनम् ॥ २ ॥ नीलिकापिडिकाव्यङ्गानभ्यङ्गादेव नाशयेत् । सप्तरात्रप्रयोगेण भवेत्कनकसंनिभम् ॥ ३ ॥ कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा । द्वितीयं कुङ्कुमाद्यं तैलम् ॥ इत्यधिकमत्र ।

---

१ घ. °णकस्तत्रा । २ क. °भ्यां तिलका° ।

मालतीकरवीराग्निनक्तमालैर्विपाचितम् ॥
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥
इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम् ॥ ६४ ॥

अग्निश्चित्रकः । मालत्यादिभिः कल्कः । द्रवमिह गोमूत्रं संप्रदायात् । स्नेहपाककल्कपरिभाषया जात्यादिसिद्धेन कटुतैलेन गोमूत्रचतुर्गुणेन शिरोऽभ्यज्यात् । इदं तैलं वातानुबन्धे देयमित्याहुः ॥ ६४ ॥

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम् ॥
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी[२] ॥ ६५ ॥
सिद्धार्थतीक्ष्णतैलं च गर्भे दत्त्वा विपाचयेत् ॥
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥ ६६ ॥
कूर्मपृष्ठसमानाऽपि रूहा या रोमतस्करी ॥
दिग्धा साऽनेन जायेत ऋक्षशावीव लोमशा ॥ ६७ ॥

मार्कवो भृङ्गराजः । लाङ्गलाख्यं विषं किं वा लाङ्गली च विषं चेति द्रव्यद्वयम् । रक्तिका गुञ्जा । तीक्ष्णगन्धा ज्योतिष्मतीफलं मूलं च । सिद्धार्थतीक्ष्णतैलमिति पाठे सिद्धार्थस्य भर्जितस्य तीक्ष्णतैलम् । मूत्रमाजं गव्यं मिलित्वा द्रवः शेषः कल्कः । रूहा, इन्द्रलुप्तम् । रोमतस्करी रोमहरणे तस्करीव तस्करी । दारुणचिकित्साप्रस्तावेऽपाठादनुक्तमपि दारुणहरत्वमस्येति वृन्दाभिप्रायः ॥ ६५ ॥ ६६ ॥ ६७ ॥

त्रिफलायोरजोमांसीमार्कवोत्पलसारिवैः ॥
ससैन्धवैः पचेत्तैलमभ्यङ्गोऽरूंषिकां जयेत् ॥ ६८ ॥

उत्पलसारिवाऽनन्तमूलं छन्दोनुरोधाद्ध्रस्वत्वम् । त्रिफलाद्यं तैलम् ॥ ६८ ॥

चित्रकं दन्तिमूलं च कोशातकिसमन्वितम् ॥
कल्कं पिष्ट्वा पचेत्तैलं केशशत्रुविनाशनम् ॥ ६९ ॥

केशशत्रुविनाशनमिति । केशशत्रु उंष्कि(?) । चित्रकाद्यं तैलम् ॥ ६९ ॥

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ॥
कण्डूदारुणहृत्कष्टकपालव्याधिनाशनम् ॥ ७० ॥

भृङ्गवद्राजते शोभते भृङ्गवद्रजति कृष्णी करोति वा भृङ्गराजस्तद्रसेन । भृङ्गराजतैलम् ॥ ७० ॥

भृङ्गरजस्त्रिफलोत्पलसारिलोहपुरीषसमन्वितकारि ॥
तैलमिदं पच दारुणहारि कुञ्चितकेशघनस्थिरकारि ॥ ७१ ॥

---

१ क. घ. °क्ष्णगन्धा च । २ क. घ. विपचिता । ३ क. रूहा । ४ घ. उष्फिका ।

भृङ्गरजाः स्वनामख्यातः। अस्य रसश्चतुर्गुणः पाकार्थम्। उत्पलसारि, उत्पलकोटीसारिवाऽनन्तमूलम्। समन्वितकारः सहकारः समन्वितशब्दस्य सहार्थत्वात्। तस्य च फलमध्यं ग्राह्यं केश्यत्वात्कृष्णीकरणत्वाच्च। भृङ्गराजादिसमन्वितकारान्तं द्रव्यमस्मिन्नस्तीति मत्वर्थीय इति तैलविशेषणमिदमिति नरदन्तव्याख्यासंप्रदायः। मच्चारोऽपीत्थम्। अन्यस्त्वाह—भृङ्गरजआदि द्रव्यं सर्वकल्कः। द्रवं जलम्। उत्पलसारि, अनन्तमूलम्। भृङ्गरजःप्रभृतिभिः सह समन्वितं समन्वयं कर्तुं शीलमस्येति तैलविशेषणमिति। भृङ्गरजःशब्दः सकारान्तोऽयं सविसर्गपाठात्। तथाऽन्यत्रापि दृश्यते—ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थमिति। कुञ्चितं कुटिलम्। भृङ्गराजतैलम् ॥ ७१ ॥

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ॥
कार्षिकैस्तैलकुडवैस्तद्द्विरामलकीरसः ॥ ७२ ॥
साध्यः स प्रतिमर्शः स्यात्सर्वशीर्षगदापहः ॥ ७३ ॥

द्वि(तद्द्वि)रामलकीरस इति। तैलकुडवापेक्षया द्विगुणामलकीरसः। अनेन द्विगुणेनैव पाकः। प्रतिमर्शो नस्यभेदः। प्रपौण्डरीकाद्यं तैलम् ॥ ७२ ॥ ७३ ॥

इन्द्रलुप्ते शिरां विद्ध्वा शिलाकासीसतुत्थकैः ॥
लेपयेत्परितः कल्कैस्तैलं चाभ्यञ्जने हितम् ॥
कुटन्नटशिखीजातीकरञ्जकरवीरकैः ॥ ७४ ॥

शिरां विद्ध्वा मूर्ध्नीति शेषः। तैलं चाभ्यञ्जने हितमिति। कुटन्नटादिभिः। कुटन्नटस्तगरः। शिखी, अपामार्गश्चित्रको वा ॥ ७४ ॥

अवगाढपदं वाऽपि प्रस्थयित्वा पुनः पुनः ॥
गुञ्जामूलैश्चिरं लिम्पेत्केशभूमिं समन्ततः ॥ ७५ ॥

सुगमम् ॥ ७५ ॥

इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः ॥ ७६ ॥

बृहतीरस इति। पक्वबृहतीफलरसः ॥ ७६ ॥

बृहतीफलरसपिष्टं गुञ्जाफलमूलमिन्द्रलुप्तस्य ॥
कनकविघृष्टस्य सतो दातव्यं प्रस्थितस्य सदा ॥ ७७ ॥

गुञ्जाफलमूलमिति। गुञ्जायाः फलं मूलं वा। कनकविघृष्टस्येति। कनकं सुवर्णं धत्तूरफलं वा ॥ ७७ ॥

मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन ॥
अचिराद्भवन्ति केशा घनदृढमूलायता ऋजवः ॥ ७८ ॥

---

१ ख. 'प्रवस्तौर्दूरं'। २ क. ख. 'प्रच्छयि'।

इन्दीवरं नीलोत्पलम् । भृङ्गो भृङ्गराजः ॥ ७८ ॥

वटावरोहकेशिन्योश्चूर्णेनाऽऽदित्यपाचितम् ॥
गुडूचीस्वरसे तैलमभ्यङ्गात्केशरोहणम्* ॥ ७९ ॥

वटावरोहकेशिन्योरिति । केशिनी भूतकेशो वा । गुडूचीस्वरसस्तैलसम इत्याहुः ॥ ७९ ॥

चन्दनाद्यं तैलमाह—

चन्दनं मधुकं मूर्वा त्रिफला नीलमुत्पलम् ॥
कान्ता वटावरोहश्च गुडूची विसमेव च ॥ ८० ॥
लोहचूर्णं तथा केशी सारिवे द्वे तथैव च ॥
मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत् ॥ ८१ ॥
शिरस्युत्पतिताः केशा जायन्ते घनकुञ्चिताः ॥
दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसंनिभाः ॥
नस्येनाकालपलितं निहन्यात्तैलमुत्तमम् ॥ ८२ ॥

कान्ता प्रियंगुः । बिसं मृणालं शीतलत्वेन पलितहरत्वान्न तु विषं मारकद्रव्यम् । मार्कवस्वरसश्चतुर्गुणः पाकार्थम् ॥ ८० ॥ ८१ ॥ ८२ ॥

तैलं सयष्टीमधुकैः क्षीरे धात्रीफलैः शृतम् ॥
नस्ये दत्तं जनयति केशाञ्श्मश्रूणि वाऽप्यथ ॥ ८३ ॥

क्षीरे धात्रीफलैः शृतमिति । क्षीरमेव चतुर्गुणं द्रवान्तराभावात् ॥ ८३ ॥

हस्तिदन्तमषीं कृत्वा मुख्यं चैव रसाञ्जनम् ॥
रोमाण्यनेन जायन्ते लेपात्पाणितलेष्वपि+ ॥ ८४ ॥

मुख्यमिति श्रेष्ठम् । हस्तिदन्तमषीरसाञ्जनाभ्यां लेपः । तैलेन वाग्भटे । छागक्षी-

---

* ख. पुस्तके—आदाय तिलपुष्पाणि सर्पिरश्वखुरं तथा । मधुना सह संयुक्तं शिरोलेपं तु कारयेत् ॥ १ ॥ तैलेनानेन जायन्ते केशा हस्ततलेष्वपि । आनूपदेशजं पुष्पं गृहीत्वा मार्कवं शुभम् ॥ २ ॥ सुधौतं जर्जरीकृत्य रसं तस्य समाहरेत् । चतुर्गुणेन तैलेन तैलप्रस्थं विपाचयेत् ॥ ३ ॥ क्षीरपिष्टैरिमैर्द्रव्यैः संयोज्य मतिमान्भिषक् । माञ्जिष्ठा पद्मकं रोध्रं चन्दनं गैरिकं बला ॥ ४ ॥ रजन्यौ केसरं चैव प्रियंगुमधुयष्टिकैः । प्रपौण्डरीकं मांसी च पालिकान्यत्र दापयेत् ॥ ५ ॥ सम्यक्पक्वं ततो ज्ञात्वा शुभे भाण्डे निधापयेत । केशशाते शिरोदुःखे मन्यास्तम्भे हनुग्रहे ॥ ६ ॥ दन्तकर्णशिरोगेषु नस्यमेतत्प्रयोजयेत् । सुकुञ्चितान्सुस्निग्धान्केशान्कुर्याद्दृढांस्तथा ॥७॥ लिप्तं चेन्द्रलुप्तं च तैलमेतद्यथाऽमृतम्(?)॥ इन्द्रलुप्तम्।

+ ख. पुस्तके—" द्विपदशनः पुटदग्धः साजक्षीरो रसाञ्जनोपेतः । विनिहन्त्यक्रमलेपात्पाणितलेष्वपि केशसंचयं कुरुते ॥ १ ॥ चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिजा मषी । तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः ॥ २ ॥ कासीसं [illegible] ॥ ३ ॥ इत्यधिकमत्र ।

रेण सह हरमेखले दर्शितः । पुटपाकेन च हस्तिदन्तमषी कार्या । तथाच वाग्भटः—

"दग्धो वारणदन्तोऽन्तर्धूमस्तैलं रसाञ्जनम् ।
रोमसंजननो लेपो हस्तपादतलेष्वपि" ।

चक्रसंग्रहे हरमेखलसमानः श्लोकः पठितः ।

तथाहि—"छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमषीलिप्ताः ।
जायन्ते सप्तरात्रात्खल्लाश्चाऽऽकुञ्चिताश्चिकुराः" ॥ ८४ ॥

त्रिफला नीलिनीपत्रं लोहभृङ्गरजः समम् ॥
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ ८५ ॥

नीलिनीपत्रमिति । नीलिनी लता नेलीतिख्याता तदभावे शरपुङ्खा सदृशविटपा ग्राह्या । शिरोलेपोऽयं प्रहरौ द्वौ त्रीनवधार्यः । एवमन्यत्रापि शिरोलेपे धारणम् ॥ ८५ ॥

त्रिफलाचूर्णसंयुक्तं लोहचूर्णं विनिक्षिपेत् ॥ ८६ ॥
ईषत्पक्वे नालिकेरे भृङ्गराजरसान्विते ॥
मासमेकं विनिक्षिप्य सम्यग्गर्भात्समुद्धरेत् ॥ ८७ ॥
ततः शिरो मुण्डयित्वा लेपं दत्त्वा भिषग्वरः ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत्सप्तमे दिने ॥ ८८ ॥
क्षालयेत्त्रिफलाक्वाथैः क्षीरमांसरसाशिनः ॥
कपालरञ्जनं चैतत्कृष्णीकरणमुत्तमम्* ॥ ८९ ॥

गर्भादिति । नालिकेरोदरात् ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥

उत्पलं पयसा सार्धं मासं भूमौ निधापयेत् ॥
केशानां कृष्णकरणं स्नेहनं च विधीयते ॥ ९० ॥

सुगमम् ॥ ९० ॥

लोहमलामलकल्कैः सजपापुष्पैर्नरः सदास्नायी ॥
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥ ९१ ॥

सजपापुष्पैरिति । जपापुष्पं दूहल इति ॥ ९१ ॥

निम्बस्य बीजानि विभावितानि भृङ्गस्य तोयेन तथाऽसनस्य ॥
तैलं तु तेषां विनिहन्ति नस्यं दुग्धान्नभोक्तुः पलितं समूलम् ॥ ९२ ॥

तथाऽसनस्येति । असनः पीतशालः ॥ ९२ ॥

---

* ख. पुस्तके ग्रन्थान्तरात्—'इक्षुरसो गिरिकर्णिकमूलं भृङ्गरसामलपथ्यानिकन्दम् । आयसभाजनमासनिषिक्तं रञ्जति केशकपालसवर्णा' ॥ १ ॥ इत्यधिकमत्र ।

निम्बस्य तैलं प्रकृतिस्थमेव नस्यं विधेयं विधिना यथावत् ॥
मासेन तु क्षीरभुजो नरस्य जराप्रवृत्तं पलितं निहन्ति ॥ ९३ ॥

निम्बस्येति । निम्बबीजस्य । प्रकृतिस्थमेवेति । भृङ्गराजरसादिभावनारहितम् । विधिनेति । नस्योक्तविधिना ॥ ९३ ॥

क्षीरात्समार्कवरसाद्वे प्रस्थे मधुकात्पले ॥
तैलस्य कुडवं पक्वं तन्नस्यं पलितापहम् ॥ ९४ ॥

द्वे प्रस्थे इति । मिलित्वा ॥ ९४ ॥

कासीसरोचनातुत्थहरितालरसाञ्जनैः ॥
अम्लपिष्टैः प्रलेपोऽयं मुष्ककच्छ्वहिपूतयोः ॥ ९५ ॥

मुष्ककच्छ्वहिपूतयोरिति । मुष्ककच्छूर्वृषणकच्छूः । अहिपूतोऽहिपूतनम् ॥ ९५ ॥

पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥
पीतं घृतं नाशयति कृच्छ्रामप्यहिपूतनाम् ॥ ९६ ॥

सुगमम् ॥ ९६ ॥

रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम् ॥
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम् ॥ ९७ ॥

सुगमम् ॥ ९७ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तपञ्चाशत्तमः क्षुद्ररोगाधिकारः समाप्तः ॥ ५७ ॥

---

## अथाष्टपञ्चाशत्तमो मुखरोगाधिकारः ।

रोगगणनत्वसाधर्म्यादथ मुखरोगाधिकारः । मुखरोगाः पञ्चषष्टिः क्षुद्ररोगाश्चतुश्चत्वारिंशदिति रोगगणनत्वसाधर्म्यम् । यद्यपि ललाटाक्षिश्रवणगण्डौष्ठचिबुकसमुदायो बाह्यम् । ओष्ठदन्तमूलदन्तजिह्वातालुकण्ठसमुदायश्चाभ्यन्तरमिति द्विविधं मुखम् । बाह्याभ्यन्तरभेदेन ततो वक्त्रं द्विधा भवेदित्युक्तत्वात् । तथाऽप्यत्र बाह्यमुखावयवानां नयनश्रवणादीनां पृथक्चिकित्सितोक्तेरभ्यन्तरमेव मुखं विवक्षितमिति ज्ञेयम् । तत्रौष्ठादिमुखावयवरोगचिकित्सितेऽप्यवयवावयविनोरभेदान्मुखरोगचिकित्सितमित्युक्तम् ॥

ओष्ठप्रकोपे वातोत्थे साल्वणेनोपनाहनम् ॥ १ ॥

---

१ क. ख. 'म ओष्ठौ' ।

उष्येते तीक्ष्णद्रव्यैरित्योष्ठौ तयोः प्रकोपे । ओष्ठप्रकोपो दोषाणां कर्मेति प्रकोपशब्दादोष्ठ * ते स्वरूपावस्थितेर्दोषाणां यथानिर्दिष्टप्रकोपेष्वेव चिकित्सितं कार्यं न तु मांसादिगतानां तेषामसाध्यत्वात् ॥ १ ॥

मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम् ॥
स्वेदोऽभ्यङ्गः स्नेहपानं रसपानमपीष्यते ॥ २ ॥

मस्तिष्क इति । शिरोबस्तौ स्नेहाक्तपिचुधारणे वा । स्वेद इति । नाडीस्वेदः । अभ्यङ्ग इति । चतुर्विधेन चतुष्प्रकारेण स्नेहेन दोषाद्यपेक्षया समस्तव्यस्तेन स्नेहपाकपरिभाषया वातहरकषायमधूच्छिष्टकल्कशृतेनाभ्यङ्गः । रसपानमित्यस्य स्थाने रसायनमिति तु पाठे च्यवनप्राशादि ॥ २ ॥

श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च ॥
यष्टीमधुकचूर्णं च विदध्यात्प्रतिसारणे ॥ ३ ॥

श्रीवेष्टकः सरलनिर्यासः । प्रतिसारण इति । अवचूर्णे ॥ ३ ॥

वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनं च ॥
शीताम्ललेपान्परिषेचनं च पित्तोपसृष्टेष्वधरेषु कुर्यात् ॥ ४ ॥

वेधं शिराणामिति । ओष्ठे जिह्वायां वा शिराव्यधः । तिक्तस्येत्यतः परं घृतस्येति शेषः ॥ ४ ॥

पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत् ॥
पित्तविद्रधिवच्चापि क्रियां कुर्यादशेषतः ॥ ५ ॥

पित्तरक्ताभिघातोत्थमिति । पित्तोत्थं रक्तोत्थमभिघातोत्थं च । ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजा इत्यनेन रक्तजोष्ठप्रकोपो यद्यप्यसाध्य उक्तस्तथाऽप्यनतिवृद्धे तत्र चिकित्सेयं ज्ञेयेत्याहुः । क्रियामशेषत इति संशोधनसंशमनरूपां बाह्यामाभ्यन्तरीं च ॥ ५ ॥

शिरोविरेचनं धूमः स्वेदः कवलधारणम् ॥
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ ६ ॥

धूमो वैरेचनिकः कफे यौगिकत्वात् । कवलधारणं कटुरसद्रव्यकृतम् ॥ ६ ॥

त्रिकटु स्वर्जिकाक्षारः क्षारश्च यवशूकजः ॥
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ७ ॥

सुगमम् ॥ ७ ॥

मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ॥

---

* '[illegible]' इति [illegible] ।

शोधित इति । मेदोहरणेन च । ज्वलनोऽग्निः । इदमुक्तं भवति मेदोजे पुनरस्नेह-पूर्वं स्वेदिते भित्त्वा मेदसोऽपकर्षणम् । शोधिते चाग्नेरवचारणं पथ्यम् ॥

प्रियंगुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥
हितं च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ॥ ८ ॥

सुगमम् ॥ ८ ॥

अथ दन्तमूलगतानां चिकित्सा—

शीतादे हृतरक्ते तु तोये नागरसर्षपान् ॥
निष्क्वाथ्य त्रिफलां चापि कुर्याद्गण्डूषधारणम् ॥
प्रियंगवश्च मुस्तं च त्रिफला च प्रलेपनम् ॥ ९ ॥

निष्क्वाथ्य त्रिफलां मुस्तं गण्डूषः सरसाञ्जन इति पाठान्तरम् ॥ ९ ॥

कुष्ठं दार्वी लोध्रमब्दं समङ्गा पाठा तिक्ता तेजिनी पीतिका च ॥
चूर्णं शस्तं घर्षणेन द्विजानां रक्तास्रावं हन्ति कण्डूरुजं च ॥ १० ॥

तेजिनी चविका मूर्वा वा । पीतिका हरिद्रा ॥ १० ॥

चलदन्तस्थिरतिकरं कार्यं बकुलचर्वणम् ॥ ११ ॥

बकुलचर्वणमिति । बकुलफलास्थिचर्वणम् ॥ ११ ॥

दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् ॥
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम् ॥ १२ ॥

तरुण इति । उत्पन्नमात्रे । क्षारो यवक्षारः ॥ १२ ॥

दन्तानां तोदहर्षौ च जायेते वाततस्तयोः ॥
उष्णतैलाज्यवातघ्ननिर्यूहाः कवलग्रहाः ॥ १३ ॥

तयोरिति । शीताददन्तपुप्पुटयोरेतयोश्च रक्तहरणादिजातवातानुबन्धेन तोदहर्षो-द्भवे कोष्णतैलादिभिः कवलग्रहा हिताः ॥ १३ ॥

माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे ॥
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम् ॥ १४ ॥

सुगमम् ॥ १४ ॥

विस्राविते दन्तवेष्टे व्रणं तु प्रतिसारयेत् ॥
लोध्रपत्त(त्रा)ङ्गमधुकलाक्षाचूर्णैर्मधूत्तरैः ॥ १५ ॥

विस्रावित इति । जलौकःप्रच्छन्नादिना हृतरक्ते । व्रणं जलौकःप्रच्छन्नादिजम् । पत्त(त्रा)ङ्गं रक्तचन्दनम् । मधूत्तरैर्मधुप्रधानैः ॥ १५ ॥

---

१ क. ख. 'स्थिरकं'।

गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥

गण्डूषे क्षीरिण इति। क्षीरिणो वटादयः। ते च कथिता ज्ञेयाः॥

सौषिरे हृतरक्ते तु लोध्रमुस्तरसाञ्जनैः ॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥ १६ ॥

सुगमम् ॥ १६ ॥

क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः ॥ १७ ॥

शीतादोक्तामित्यनेन परिदरे पित्तासृक्कफजे कफरक्तजशीतादक्रियातिदेशः पित्तस्यापि रक्तप्रशमक्रियोपशयात् ॥ १७ ॥

संशोध्योभयतः कायं शिरश्चोपकुशे ततः ॥
काकोदुम्बरिकागोजीपत्रैर्विस्रावयेद्भिषक् ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ॥ १८ ॥

संशोध्योभयतः कायं शिरश्चेति ग्रन्थः परिदर उपकुशे च योजयन्ति। तत्र परिदरे कफहितं वमनं विरेचनं च रक्तपित्तहितं शिरोविरेचनं च तत्स्थानस्थकफजयार्थम्। एवमुपकुशेऽपि। उपकुशः पित्तासृजो यद्यप्युक्तस्तथाऽपि कफोऽत्र तन्त्रान्तरप्रत्ययादवगन्तव्यः।

तथा च—"वेष्टे हि दाहपाकौ चलनं दन्तेषु नासिकापतनम्।
कुर्यात्पित्तं रक्तं कफश्च कुपितस्तथोपकुशे" इति ॥

शिरश्च संशोध्येति संबन्धः। कायमित्यस्य स्थाने कार्यमिति पाठान्तरे कार्यं शीतादोक्तं कर्म परिदरे। उपकुशे तु रक्तविस्रावणं वक्ष्यमाणं कार्यमिति प्रत्येतव्यम्। काष्ठो(को)दुम्बरिका गोष्ठोदुम्बरिका। गोजी गोजिह्वा ॥ १८ ॥

पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम् ॥
सुखोदकेन संसृज्य कवलं तस्य योजयेत् ॥ १९ ॥

नैचुलं फलमिति। निचुलो हिज्जलो जलवेतसस्तस्य फलं नैचुलम् ॥ १९ ॥

शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ॥
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥ २० ॥

अभिघातजेऽपि दन्तवैदर्भे शस्त्रेण दन्तमूलमांसच्छेदनमप्यभिघातजदुष्टशोणितकृतपाकशीर्णमांसापनयनार्थम्। क्षारप्रयोगोऽपीह शोधितशेषपूतिमांसापनोदार्थं ततः शीतक्रिया पित्तनिर्वापणार्थम् ॥ २० ॥

उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत् ॥
कृमिदन्तकवच्चात्र विधिः कार्यो विजानता ॥ २१ ॥

१ क. ख काष्ठोदु॰।

उद्धृत्याग्निदाहो रक्तादिस्रुतिनिर्वापणार्थम् । कृमिदन्तकविधिरत्रोद्धार्यकृमिदन्तविधिर्ज्ञेयः । अचलत्वादनुद्धार्यकृमिदन्तकविधिस्त्वसमानत्वान्नोचितः । कृमिदन्तके चल उद्धरणदाहावुक्तौ । अधिदन्ते पुनरचलेऽपि तद्विधानार्थं कृमिदन्तकविधेरतिदेशलब्धयोरप्युद्धरणदाहयोरभिधानम् ॥ २१ ॥

छित्त्वाऽधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ॥
पाठावचातेजवतीस्वर्जिकायावशूकजैः ॥ २२ ॥

तेजवती चविका मूर्वा वा । यावशूको यवक्षारः ॥ २२ ॥

क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्तितः ॥

सक्षौद्रः सपिप्पलीकश्च सुखोदके कवलग्रहः ॥

पटोलनिम्बत्रिफलाकषायश्चात्र धावने ॥ २३ ॥

सुगमम् ॥ २३ ॥

शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥

सुगमम् ॥

नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ॥ २४ ॥

यदेव वातादिनाडीनां कर्मोक्तं तदेव दन्तनाडीनां कार्यम् ॥ २४ ॥

यं दन्तमभि जायेत नाडी दन्तं तमुद्धरेत् ॥
छित्त्वा मांसं तु शस्त्रेण यदि नोपरिजो भवेत् ॥ २५ ॥

यं दन्तमभि नाडी स्याद्यस्य दन्तस्य समीपे नाडी स्यात्तं दन्तं चलमचलं वा शस्त्रेण दन्तधारणमांसं छित्त्वोत्पाटयेत् । यदि नोपरिजो भवेदिति । ऊर्ध्वगतदन्तपङ्क्तिगतश्चेन्न भवति । उद्धरणस्यापवादः ॥ २५ ॥

शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥ २६ ॥

ततः क्षाराग्निदाहो रक्तातियोगनिवारणाय ॥ २६ ॥

अधोगदन्ते गत्युपेक्षायां दोषमाह—

गतिर्हि हिनस्ति हन्वस्थि दशने समुपेक्षिते ॥
तस्मात्समूलं दशनमुद्धरेद्भग्नमस्थि च ॥ २७ ॥

हिनस्ति मारयति । दशने समुपेक्षितेऽनुद्धरणेन । समूलं दशनमुद्धरेदिति । स्थिरदन्तमूलमपि समुद्धरेत् । भग्नमस्थि चेति । दन्तोद्धरणे भग्नशेषमस्थि । किं च गतिविशोषितं हन्वस्थि भग्नमस्थीत्युच्यते । आगन्तुजनाख्या यद्भग्नमस्थि भवेत्तदुद्धरेदित्युच्यते विधिरिति कार्तिकः । 'भिनत्त्युपेक्षिते दन्ते हनुकास्थि गतिर्ध्रुवम्' इति सुश्रुते पाठः ॥ २७ ॥

उपरिमदन्तानुद्धारे हेतुमाह—

उद्धृते तूत्तरे दन्ते शोणितं संप्रसिच्यते ॥
रक्तातियोगात्पूर्वोक्ता घोरा रोगा भवन्ति च ॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ॥ २८ ॥

उत्तर उपरिजे। उत्तम इति पाठे राजदन्तद्वये। शोणितं संप्रसिच्यत इत्यत्र केचित्संमूलेऽस्थिरबन्धन इति पठन्ति तत्रास्थिरबन्धनेऽदृढतरदन्तवेष्ट इति। पूर्वोक्ता रोगा इति शोणितवर्णनीयोक्ता रक्तातियोगनिमित्ताः शिरोऽभितापाक्षेपकादयः। चकारात्काणार्दितौ सुश्रुतोक्तौ लभ्येते ॥ २८ ॥

कषायं जातिमदनकटुकस्वादुकण्टकैः ॥ २९ ॥
लोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि यत्कृतम् ॥
तैलं संशोधनं तद्धि हन्ति दन्तगतां गतिम् ॥ ३० ॥
कषायं परतः कृत्वा दृष्ट्वा लोध्रादि कल्कितम् ॥
कण्टकी मदनो योज्यः स्वादुकण्टा विकङ्कतः ॥ ३१ ॥

जात्यादिभिः स्वादुकण्टकान्तैः कषायं मुखधावनं कार्यम्। लोध्रादिभिस्तु यष्ट्याह्वान्तैः कल्करूपैस्तैलं विपाच्यम्। किं वा कषायमित्यस्मात्परतः कृत्वेति पदं द्रष्टव्यम्। तेन जात्यादिभिः कषायं कृत्वा लोध्रादिकल्केन तैलं विपक्तव्यम्। इमां च व्याख्यां वृन्द एव व्याकरिष्यति। अनयैव व्याख्यया प्रचारः। केचित्कषायशब्दं समासेन निर्विभक्तिकं पठन्ति तेषां मते कषायमामं पूगफलम्। मिश्रकोक्तशङ्खिन्यादिशोधनकषायद्रव्यजात्यादिलोध्रादीनां कल्केन तैलपाकः। कषायद्रव्याणां तद्गतत्वेऽपि जात्याः पृथगभिधानं यथालाभप्रयोगनिषेधार्थं भागद्वयग्रहणार्थं वेति कार्तिकव्याख्या। जैज्जटस्तु सुश्रुते धावनं जातिमदनस्वादुकण्ठकखादिरमित्यधिकं पठित्वा कषायमिति पदं धावनमित्यनेन सह योजयति। तेन जात्यादिकषायेण मुखधावनं परेण तु जातिमदनादिना कल्केन तैलसाधनमिति फलति। कटुकं त्रिकटुकं रोहिणी वा। एषैवोचिता सुश्रुते क्वापि कटुकापाठात्। स्वादुकण्टको गोक्षुरक इति डल्लणः। कषायं परतः कृत्वा दृष्ट्वेति। कषायमित्यस्मात्परतः कृत्वेति पदं वाक्यशेषतत्प्रयुक्त्या दृष्ट्वेत्यर्थः। शङ्खिन्यङ्कोटेत्यादिग्रन्थः क्वापि पठ्यते स तु कषायशब्दसमासनिर्देशपक्षे कार्तिकव्याख्यातमिश्रकोक्तशोधनकषायद्रव्याकारः ॥ २९ ॥ ३० ॥ ३१ ॥

इति दन्तमूलरोगाधिकारः ॥

---

संप्रति दन्तरोगचिकित्सितम्। दन्तरोगचिकित्सायां च दालनमादिपठितमसाध्यत्वात्परित्यज्य निदानसंग्रहोक्तक्रमेण दन्तचिकित्सायां वक्तव्यायां प्रथमं दन्तहर्षचि-

कित्साभिधानं शर्कराकपालिकयोरपि दन्तहर्षक्रियासाध्यत्वेन प्राधान्यादिति चक्रपाणिः । दालनं वातिके प्रत्याख्याय दन्तहर्षक्रियाभिधानार्थमिति कार्तिककुण्डः ।

सुखोष्णाः स्नेहकवलाः सर्पिषस्त्रैवृतस्य वा ॥
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ॥ ३२ ॥

स्नेहकवला इति । स्नेहाः सर्पिस्तैलवसामज्जानस्तेषां व्यस्तसमस्तानां कवलाः । सर्पिषस्त्रैवृतस्य वेति । त्रैवृतं सर्पिः सुश्रुतेऽपतानकचिकित्सितोक्तम् । निर्यूहाः काथाः । स्नेहकवलवातहरनिर्यूहधूमनस्यानि यथायोग्यावस्थायामूह्यानि ॥ ३२ ॥

अहिंसन्दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥
लाक्षाचूर्णैर्मधुयुतैस्ततस्तं प्रतिसारयेत् ॥ ३३ ॥

दन्तमूलहिंसयाऽभिघातदन्तनाडी दन्तपातो वा स्यात् । अतस्तत्परिहारार्थमुक्तमहिंसन्दन्तमूलानीति । प्रतिसारयेद्धर्षयेत् ॥ ३३ ॥

दन्तहर्षक्रियां चापि कुर्यान्निरवशेषतः ॥

सुगमम् ॥

कपालिका कृच्छ्रसाध्या तत्राप्येषा क्रिया हिता ॥ ३४ ॥

कपालिका कृच्छ्रसाध्येत्यनेनाऽऽदावेव कपालिका प्रतिकर्तव्येति शिक्षयति । एषा क्रियेति । दन्तहर्षोक्ता । कपालिकाया वातजत्वाच्छर्करोक्तेत्यन्ये ॥ ३४ ॥

जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम् ॥ ३५ ॥
तथाऽवपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ॥ ३६ ॥

विस्रावणैरिति । कृमिदूषितशोणितनिर्हरणैः । अवपीडैर्वातघ्नैरिति । वातहरद्रव्यकृतत्वाद्वातघ्नोऽवपीडः । भद्रदार्वादिर्वातहरो गणः ॥ ३५ ॥ ३६ ॥

हिङ्गु सोष्णं तु मतिमान्कृमिदन्ते प्रदापयेत् ॥ ३७ ॥

सोष्णं किंचिदुष्णम् ॥ ३७ ॥

बृहतीभूमिकदम्बकपञ्चाङ्गुलकण्टकारिकाक्काथः ॥
गण्डूषस्तैलयुतः कृमिदन्तकवेदनोपशमः ॥ ३८ ॥

भूकदम्बोऽलम्बुषः । पञ्चाङ्गुल एरण्डः ॥ ३८ ॥

चलमुद्धृत्य वा स्थानं दहेत्सुषिरस्य वा ॥ ३९ ॥

चलमुद्धृत्य वेति । वाशब्दोऽवधारणे । चलमुद्धृत्यैवेत्यन्ये । स्थानमिति । उद्धृतदन्तस्य समग्रं स्थानम् । दहेच्छुद्ध्यर्थं शोणितस्रावनिषेधार्थम् । सुषिरस्य वेति । कृतच्छिद्रस्य यावन्मात्रं स्थानं तावदेव वा दहेत् । अत्र स्थानशब्द आवर्तनीयः । भूरिदेशदुष्टौ सत्यां समग्रस्थानदाह एकदेशस्थानदुष्टौ तु सुषिरस्थानमात्रदाह इति व्यवस्था ॥ ३९ ॥

ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुभिः ॥
तैलं दशगुणक्षीरं सिद्धं नस्ये तु पूजितम् ॥ ४० ॥

सुगमम् ॥ ४० ॥

हनुमोक्षे समुद्दिष्टां कुर्यादर्दितवत्क्रियाम् ॥

अर्दितवत्समुद्दिष्टामित्यर्दित इव समुद्दिष्टां क्रियां कुर्यात् । समुद्दिष्टग्रहणेनैतज्ज्ञापयत्यर्दितोक्तामातिदेशिकीं वातव्याधिविधानेनोपचरेदित्येवंरूपां वैशेषिकीं वातार्दितोक्तां मस्तिष्कशिरोबस्तिनस्यधूमोपनाहादिकां विविधामपि क्रियां कुर्यादिति । हनुमोक्षो दन्तसामीप्याद्दन्तरोगमध्ये पठितः ॥

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥
तथाऽतिकठिनान्भक्ष्यान्दन्तरोगी विवर्जयेत् ॥ ४१ ॥

सुगमम् । साध्यानां दन्तरोगाणां चिकित्सितमुक्तं श्यावदालनभञ्जनानामसाध्यत्वान्नोदाहृतम् ॥ ४१ ॥

इति दन्तरोगाधिकारः ।

---

अथ जिह्वागतरोगचिकित्सितम्—

ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक्चिकित्सितम् ॥
कण्टकेष्वनिलोत्थेषु तत्कार्यं भिषजा खलु ॥ ४२ ॥

कण्टकेष्विति । कण्टको जाडीति लोके ॥ ४२ ॥

पित्तजेषु निघृष्टेषु निःसृते दुष्टशोणिते ॥
प्रतिसारणगण्डूषनस्यं च मधुरं हितम् ॥ ४३ ॥

निघृष्टेष्विति । कर्कशशाखोटकादिपत्रेण । मधुरगणकृतत्वान्मधुरं प्रतिसारणादित्रयम् । डल्लणस्तु प्रतिसारणं मधुरैर्द्रव्यैः काकोल्यादिभिः । गण्डूषोऽपि तैरेव कथितैः । नस्यमपि दशगुणक्षीरं तत्कल्कसाधितमिति व्याख्याति ॥ ४३ ॥

कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥
पिप्पल्यादिर्मधुयुतः कार्यं तु प्रतिसारणम् ॥ ४४ ॥

लिखितेष्विति । मण्डलाग्रादिना । असृजः क्षयेऽवसाने विराम इत्यर्थः । पिप्पल्यादिर्गणः ॥ ४४ ॥

गृह्णीयात्कवलं वाऽपि गौरसर्षपसैन्धवैः ॥

गौरसर्षपसैन्धवैरिति । गौरसर्षपः श्वेतसर्षपः । कवलोऽयमुष्णाम्बुयोगात् ॥

पटोलनिम्बवार्ताकक्षारयूषैश्च भोजयेत् ॥ ४५ ॥

पटोलादिभिः क्षारयूषेण वा भोजयेत्। क्षारप्रधानो यूषः क्षारयूषः । क्षारो यवक्षारः। वैकारणेऽप्युक्तम्—

"शुष्कमूलकुलत्थादियूषाः क्षारोत्तरा हिताः ।
कुलकं निम्बपत्रं च वार्ताकं चाशने हितम्" इति ॥ ४९ ॥

उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत् ॥
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥ ४६ ॥

क्षारेणेति । प्रतिसारणीयेन। गण्डूष इह कफद्रव्यहरकृतो ज्ञेयः। डल्लणस्तु गण्डूषः कफव्रणहरद्रव्येण कफकण्टकहरणद्रव्येण वेति व्याख्याति । धूमैश्च वैरेचनिकधूमैः॥ ४६ ॥

व्योषक्षाराभयावह्निचूर्णमेतत्प्रघर्षणम् ॥

सुगमम् ॥

उपजिह्वोपशान्त्यर्थमेभिस्तैलं विपाचयेत् ॥ ४७ ॥

सुगमम् । अलासः पुनरत्र कफरक्तकृत आशुकारित्वात्प्रत्याख्यायैव विरेचनशोणितमोक्षणकवलशिरोविरेचनधूमवमनादिभिरुपचर्यः । जिह्वागतानां साध्यानां चिकित्सा ॥ ४७ ॥

अथ तालव्यानां चिकित्सा—

तालुमूले कफासृग्भ्यां जायते गलशुण्डिका॥
छित्त्वा तां व्योषसिन्धूत्थोग्राक्षौद्रैः प्रतिसारयेत् ॥ ४८ ॥

गलशुण्डिकाछेदो यथा सुश्रुते दर्शितस्तथा कार्यः ।

तद्यथा—"अङ्गुष्ठाङ्गुलिसंदंशेनाऽऽकृष्य गलशुण्डिकाम् ।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥
नोत्कृष्टां नैव हीनां च त्रिभागं छेदयेद्भिषक् ।
अत्यादानात्स्रवेद्रक्तं तन्निमित्तं जहात्यसून् ॥
हीनच्छेदाद्भवेच्छोफो लालास्रावो भ्रमस्तमः ॥

---

१ क. चापि ।

तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ।
गलशुण्डीं तु संछिद्य कुर्यात्प्राप्तमिमं क्रमम्" इति ॥ ४८ ॥

गलशुण्डी क्षयं याति वज्रीक्षीरेण लेपनात् ॥

वज्रीक्षीरेणेति । वज्री स्नुहीभेदो वाजरा इति लोके ॥

कुष्ठारुणावचासिन्धुकृष्णापाठाप्लवैरपि ॥
सक्षौद्रैर्भिषजा कार्यं गलशुण्ड्यां प्रघर्षणम् ॥ ४९ ॥

अरुणाऽतिविषा । प्लवं कैवर्तकमुस्तकम् ॥ ४९ ॥

वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ॥
निष्क्वाथ्य पिचुमन्दं च केवलं तत्र योजयेत् ॥ ५० ॥

सुगमम् ॥ ५० ॥

क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ॥

क्षारसिद्धेष्विति । क्षाराम्बुसिद्धेषु । क्षारश्च कफहरद्रव्यकृतो ज्ञेयः । क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हित इति । मुद्गेन कृतो यूषो यवक्षारेण लवणीकृतो भोजने पथ्य इति डल्लणः ॥

तुण्डिकेर्यत्भुषे(?) कूर्मे संघाते तालुपुप्पुटे ॥
एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ॥ ५१ ॥

कूर्मे कच्छपरोगे । संघाते मांससंहते । विशेषः शस्त्रकर्मणीति । तुण्डिकेरीतालुपुप्पुटौ भेद्यावपरे छेद्या इति शस्त्रकर्मणि विशेषः ॥ ५१ ॥

तालुपाके तु कर्तव्यं विधानं पित्तनाशनम् ॥

पित्तनाशनमिति । पित्तव्रणनाशनम् ॥

स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ ५२ ॥

तालुशोषस्य निदानसंग्रहे तालुपाकादग्रे पठितस्यापि तालुपाकानन्तरमिह चिकित्सोक्तिः पित्तनाशनविध्यर्थं पित्तेनापि तालुशोषजननत्वात् । तालुजानां चिकित्सोक्ता । अत्र रक्तार्बुदस्यासाध्यत्वात्कर्म नोदाहृतम् ॥ ५२ ॥

अथ कण्ठ्यानां चिकित्सा ।

साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम् ॥
छर्दनं धूमपानं च गण्डूषा नस्यकर्म च ॥ ५३ ॥

साध्यानां रोहिणीनामिति । वातपित्तकफरक्तजानां चतसृणाम् । त्रिदोषजा पुनरसाध्या तस्याश्चिकित्सितमिह न वक्तव्यम् । शोणितमोक्षणादिकर्मपञ्चकमत्र व्याधिप्रत्यनीकतया सर्वरोहिणीसाधारणम् । यथादोषं दोषप्रत्यनीकमेवेत्यन्ये ॥ ५३ ॥

वातिकीं तु गते रक्ते लवणैः प्रतिसारयेत् ॥ ५४ ॥

गते रक्त इति । लेखनेन रोहिण्या लेख्यत्वेनोक्तत्वात् । गते रक्त इति पदं पित्त-जादिरोहिणीत्रयेऽप्यनुवर्तनीयम् । लवणैरिति बहुवचननिर्देशाद्यथालाभं सर्वलवणैः । लावणैरिति पाठे चूर्णैरिति शेषः ॥ ५४ ॥

सुखोष्णांस्तैलकवलान्धारयेच्चाप्यभीक्ष्णशः ॥

अभीक्ष्णशः पुनः पुनः ॥

पत्त(त्रा)ङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत् ॥ ५५ ॥

पैत्तिकीं पत्त(त्रा)ङ्गादिभिः प्रतिसारयेत् । पत्त(त्रा)ङ्गं रक्तचन्दनम् ॥ ५५ ॥

द्राक्षापरूषकक्काथो हितश्च कवलग्रहः ॥

द्राक्षापरूषकक्काथ इति । परूषकस्य मधुरं फलम् । अनयोः पृथगपि क्काथः कवले हितः ॥

आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥ ५६ ॥

आगारधूमकटुकैरिति । कटुकं त्रिकटु ॥ ५६ ॥

श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ॥
नस्यकर्मणि दातव्यं कवलश्च कफोच्छ्रये ॥ ५७ ॥

श्वेतेति । कटभाऽपराजिता वा । कवलश्चेति । श्वेतादिसिद्धतैलमेव कवलः ॥५७॥

पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसंभवाम् ॥

पित्तवदिति । पित्तजरोहिणीवत् ॥

विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥ ५८ ॥

विस्राव्य कण्ठशालूकमिति । विस्रावणमिह दुष्टशोणितापगमार्थम् । तुण्डिके-रिवदिति । अनेन तुण्डिकेर्यामपि गलशुण्डिकविध्यतिदेशाद्गलशुण्डिवदित्यभिधानम् । तुण्डिकेरीविध्यतिदेशो निःशेषोच्छेदनार्थं न तु गलशुण्डिकावत्त्रिभागश्छेदः कार्य इति दर्शयति ॥ ५८ ॥

एककालं यवान्नं च भुञ्जीत स्निग्धमल्पशः ॥
उपजिह्वकवच्चापि साधयेदधिजिह्विकाम् ॥ ५९ ॥

सुगमम् ॥ ५९ ॥

उन्नम्य जिह्वामाकृष्य बडिशेनाधिजिह्विकाम् ॥
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः ॥

तीक्ष्णोष्णैर्घर्षणादिभिरित्यतः परमुपचरेदिति शेषः । आदिशब्दादिह कवलादिपरि-ग्रहः ॥

**एकवृन्दं तु विस्राव्य विधिशोधनमाचरेत् ॥ ६० ॥**

**एकवृन्दं तु विस्राव्येति** । विस्राव्यं जलौकादिभिः । **विधिशोधनमिति** । प्रतिसारणशिरोविरेचनकवलग्रहादीनामन्यतमं दोषशोधनमाचरेत् । अन्ये तु सामान्येन शोधनाद्वमनविरेचने अपीच्छन्ति । तदुभयं हि शरीरशोधनद्वारा गलादिगतदोषमपहरति । डल्लणस्त्वेवं व्याख्याति—शिरोविरेचनधूमलेपक्षारादिभिः शोधनम् । एकवृन्दस्य व्याधिमहिम्ना शिरोविरेचनधूमकवलप्रतिसारणादिभिः कफहरणैः शोधनविधिर्न तु वमनविरेचनादिक इति ज्ञेयम् ॥ ६० ॥

**गिलायुश्चापि यो व्याधिस्तं च शस्त्रेण साधयेत् ॥**

**तं च शस्त्रेण साधयेदिति** । कठिनमल्पवेदनमपक्वं गिलायुं छेदयेत् । अतिपक्वं तु पूयनिर्गमार्थं भेदयेदिति । ततो द्विव्रणीयोक्तो विधिः शोधनादिरत्रार्थतो लभ्यते ॥

**अमर्मस्थं सुपक्वं च भेदयेद्गलविद्रधिम् ॥ ६१ ॥**

अमर्मस्थं साध्यमपि गलविद्रधिं प्रत्याख्याय भेदयेत् । गलविद्रधिस्त्रिदोषजविद्रधितुल्यतया कथितोऽपि चिकित्सोपदेशात्तद्वन्नावश्यमसाध्यः । अयं च सर्वं गलं व्याप्य समुत्थित इत्यभिधानेन मर्मव्यापकोऽपि गलगतमर्मणि मूलास्पदविरहादमर्मज इत्युच्यते। किं वाऽमर्मस्थमिति क्रियाविशेषणं ज्ञेयम् ॥ ६१ ॥

**कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णं[1] नस्यादिकर्म च ॥**
**क्वाथपानं तु दार्वीत्वङ्निम्बतार्क्ष्यकलिङ्गजम् ॥ ६२ ॥**

**तार्क्ष्यकलिङ्गजमिति** । तार्क्ष्यं रसाञ्जनम् । कलिङ्ग इन्द्रयवः ॥ ६२ ॥

**हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ६३ ॥**

सुगमम् ॥ ६३ ॥

**कटुकातिविषापाठादारुमुस्तकलिङ्गकाः ॥**
**गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥ ६४ ॥**

सुगमम् ॥ ६४ ॥

कालकचूर्णमाह—

**गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम् ॥**
**तेजोह्वा त्रिफला लोहं चित्रकश्चेति चूर्णितम् ॥ ६५ ॥**
**सक्षौद्रं धारयेदेतद्गलरोगविनाशनम् ॥**
**कालकं नाम चूर्णं तु *दन्तास्यगलरोगनुत् ॥ ६६ ॥**

तेजोह्वा[2] वेधा । लोहं कृष्णलोहचूर्णम् । जातुकर्णे शस्त्रपाठात् ।

---

* दन्तजिह्वास्यरोगनुदिति चक्रपाठः ।

---

१ ख. 'स्तीक्ष्णैर्नस्या' । २ घ. चवा ।

यथा—"पाठारसाञ्जनव्योषतेजोह्वात्रिफलाग्निकम् ।
गृहधूमयवक्षारशस्त्रं शस्तं च कालकम्" इति ।

वाग्भटेऽप्ययःशब्दः पठितः ।

तथा हि—"गृहधूमतार्क्ष्यपाठाव्योषक्षाराग्न्ययोवरातेजोह्वैः ।
उपदन्तगलविकारे सक्षौद्रैः कालको धार्यः" इति ॥

चक्रव्याख्या—एतेनैव लोध्रपाठो व्युदस्तः । वैद्यप्रसारकेऽपि लोहमगुरु विवृतम् । युक्तं चैतच्छस्त्रशब्दस्याप्यगुरुविवृतदर्शनात् । तथा च धूमवर्तिप्रयोगे गन्धशास्त्रम्—

"राज्ञा शस्त्रेण दर्पेण दलितार्जुनकेतुना ।
चतुर्भुजगदालेन शरैर्भित्त्वा निवर्त्यते" इति ।

अत्र राजा कर्पूरम् । शस्त्रमगुरु । दर्पः कस्तूरी । अर्जुनकेतुः सिह्लकमिति । अयः-शब्देनाप्यगुरु वक्तुं शक्येत लोहपर्यायस्याप्यगुरुपर्यायत्वात् । प्रचारोऽपि प्रायेणागुरुणा । चूर्णमिदं सर्वत्र मुखरोगे क्रियते । वैद्यानां हस्तदण्डकोऽयम् ॥ ६१ ॥ ६६ ॥

मनःशिला यवक्षारो हरितालं ससैन्धवम् ॥
दार्वीत्वक्चेति तच्चूर्णं माक्षिकेण समायुतम् ॥ ६७ ॥
मूर्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ॥
मुखरोगेषु च श्रेष्ठं [1]पीतिकं नाम कीर्तितम् ॥ ६८ ॥

सुगमम् । पीतिकं चूर्णम् ॥ ६७ ॥ ६८ ॥

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां [2]सकुष्ठाम् ॥
क्षौद्रेण कुर्याद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥ ६९ ॥

तेजवतीमिति । चवी ॥ ६९ ॥

दशमूलं पिबेदुष्णं यूषं मुद्गकुलत्थयोः* ॥

सुगमम् ॥

सर्वेष्वेव मुखरोगेष्वत्र दोषादिविभागेन कवलान्निर्दिशन्नाह—

[3]क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः ॥
विदध्यात्कवलान्वीक्ष्य दोषं[4] तैलघृतैरपि ॥ ७० ॥

* ख. पुस्तके—पटोलदार्वीमधुकं प्रियंग्वतिविषाघनम् ॥ सनागपुष्पं त्रायन्ती भूनिम्बास्तिक्तरोहिणी ॥ १ ॥ बिभीतकं दाडिमत्वग्घरितालं मनःशिला । समांशानि त्रिभागं च सशैलेयरसाञ्जनम् ॥ २ ॥ पीतकं चूर्णमेतद्धि मध्वक्तं प्रतिसारणम् । दन्तमूलगलापृष्टजिह्वाताल्लुविकारिणाम् ॥ ३ ॥ चक्षुष्येणाद्गलरोगे पीतकं चूर्णम् । इत्याधिकमत्र ।

१ ङ. पीतकं । २ क. घ. सकृष्णाम् । ३ घ. क्षारे' । ४ क. घ. 'षं तिल' ।

क्षीरादिभिः प्रत्येकं यथादोषं कवलः । वीक्ष्य दोषं दोषकार्यमपि रोगम् ॥ ७० ॥

**पञ्चकोलकतालीसपत्रैलामरिचत्वचः ॥ ७१ ॥**
**पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः ॥**
**गुडे पुराणे क्वथिते द्विगुणे गुटिकाः कृताः ॥ ७२ ॥**
**कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥**
**कण्ठरोगेषु सर्वेषु धार्याः स्युरमृतोपमाः ॥ ७३ ॥**

त्वग्गुडत्वक् । सर्वचूर्णाद्विगुणो गुडः । कर्कन्धुमात्राः कर्षमानाः ॥७१॥७२॥७३॥

मुखावयवगतान्निर्दिश्य सकलवदनगतान्निर्दिशन्नाह—

**वातात्सर्वसरं चूर्णैर्लावणैः प्रतिसारयेत् ॥**

सर्वसरो मुखपाकः । लवणा ज्योतिष्मती लवणं वा तद्भवं लावणं तेन लावणैश्चूर्णैः पञ्चलवणकृतैः ॥

**तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ७४ ॥**

**वातहरैः सिद्धमिति** । वातहरो भद्रदार्वादिगणः । भद्रदार्वादिकल्ककषायसिद्धं तैलं कवले नस्ये च हितमित्यर्थः ॥ ७४ ॥

**पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ॥**
**सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ ७५ ॥**

**शुद्धकायस्येति** । वमनेन विरेचनेन वा । कफस्थानगतस्यापि पित्तस्य वमनहार्यत्वात् । **सर्वः पित्तहर इति** । गण्डूषादिविधिः । पित्तहरग्रहणलब्धस्य मधुरशीतलस्य विशेषार्थमभिधानम् ॥ ७५ ॥

**प्रतिसारणगण्डूषान्धूमं संशोधनानि च ॥**
**कफात्मके सर्वसरे क्रियां कुर्यात्कफापहाम् ॥ ७६ ॥**

प्रतिसारणेत्यादिविधानं कफात्मके ज्ञेयं धूमस्य पित्तानर्हत्वात्संशोधनस्य पुनरुक्तत्वाच्च । क्रियां कुर्यात्कफापहामित्यस्याशेषकफहरविध्युपसंग्रहार्थं कथनम् । संशोधनमिह वमनं शिरोविरेचनं च ॥ ७६ ॥

अतः परं मुखपाके सामान्यचिकित्सितम्—

**मुखपाके शिरावेधः शिरःकायविरेचनम् ॥**
**कार्यं च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ ७७ ॥**

**शिरावेध इति** । शिराव्यधस्तालुन्यधोजिह्वायां वा ॥ ७७ ॥

**जातीपत्रामृताद्राक्षायासादार्वीफलत्रिकैः ॥**
**क्वाथः क्षौद्रयुतः पीतो गण्डूषो मुखपाकनुत् ॥ ७८ ॥**

---

१ घ. क्षारां । २ क. घ. क्षापाठादा ।

सुगमम् ॥ ७८ ॥

पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवाः ॥
पंञ्चपल्लवकः श्रेष्ठः कषायो मुखधावने ॥ ७९ ॥

सुगमम् ॥ ७९ ॥

पञ्चवल्ककषायो वा त्रिफलाक्काथ एव वा ॥
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥ ८० ॥

सुगमम् ॥ ८० ॥

स्वरसः क्कथितो दार्व्या घनीभूतो रसक्रिया ॥
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा ॥ ८१ ॥

रसक्रिया लेहो लेपो वा ॥ ८१ ॥

सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ॥
यष्ट्याह्वराजद्रुमचन्दनैश्च क्काथं पिबेत्पाकहरं मुखस्य ॥ ८२ ॥

सुगमम् ॥ ८२ ॥

पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्ताद्विनिशामृतानाम् ॥
पीतः कषायो मधुना निहन्ति
मुखे स्थितश्चाऽऽस्यगदानशेषान् ॥ ८३ ॥

सुगमम् ॥ ८३ ॥

क्कथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ॥
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥ ८४ ॥

निषेव्या इति पूर्वेण योज्यम् । निषेवणं पानगण्डूषाभ्याम् ॥ ८४ ॥

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ॥
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकनुत् ॥ ८५ ॥

दग्धवक्त्रस्येति । चूर्णादिना ॥ ८५ ॥

सहचराद्यं तैलमाह—

तुलां धृतां नीलसहाचरस्य द्रोणेऽम्भसः संश्रपयेद्यथावत् ॥
पूत्वा चतुर्भागरसे तु तैलं पचेच्छनैरर्धपलप्रयुक्तैः ॥ ८६ ॥
कल्कैरनन्ताखदिरेरिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम् ॥
तत्तैलमाश्वेव धृतं मुखेन स्थैर्यं द्विजानां विदधाति सद्यः ॥ ८७ ॥

---

१ क. पञ्चवल्कलकः । २ क. मुखस्थितांश्चास्य ।

नीलसहचरस्येति । नीलझिण्ट्याः । संश्रपयेद्विपाचयेत् । खादिरेरिमेदेति । इरिमेदो विट्खदिरः । तदभावे खदिर एव द्विगुणो ग्राह्यः ॥ ८६ ॥ ८७ ॥

इरिमेदाद्यं तैलमाह—

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा ॥
तोयाढकैश्चतुर्भिर्निष्काथ्य चतुर्थशेषेण ॥ ८८ ॥
क्काथेन तेन मतिमांस्तैलस्यार्धाढकं शनैर्विपचेत् ॥
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥ ८९ ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला—
कर्पूरागरुपद्मकलवङ्गकङ्कोलजातीनाम् ॥ ९० ॥
फलपत्त(त्रा)ङ्गगैरिकवराङ्गगजकुसुमधातकीनां च ॥
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥ ९१ ॥
परिशीर्णदन्तविद्रधिसौषिरशीताददन्तहर्षेषु ॥
कृमिदन्तदरणचलितप्रकृष्टमांसावशीर्णेषु ॥
मुखदौर्गन्ध्ये कार्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥ ९२ ॥

जाती जातीकोषः । फलं जातीफलम् । गजकुसुमं नागकेसरचूर्णम् । प्रकृष्टमांसावशीर्णेष्विति । प्रकृष्टदन्तमांसेऽवशीर्णे मांसे च। इरिमेदाद्यं तैलम् ॥ ८८ ॥ ८९ ॥ ॥ ९० ॥ ९१ ॥ ९२ ॥

तैलं लाक्षारसं क्षीरं पृथक्प्रस्थसमं पचेत् ॥ ९३ ॥
चतुर्गुणेरिमक्काथे द्रव्यैश्च पलसंमितैः ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः ॥ ९४ ॥
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणम् ॥
दालनं दन्तचालं च दन्तमोक्षं कपालिकाम् ॥ ९५ ॥
शीतादं पूतिवक्त्रं च अरुचिं विरसास्यताम् ॥
हन्यादास्यगतानेतान्कुर्याद्दन्तानपि स्थिरान् ॥ ९६ ॥

सुगमम् । लाक्षातैलम् ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

बकुलाद्यं तैलमाह—

बकुलस्य फलं लोध्रं वज्रिवल्लीकुरण्टकम् ॥
चतुरङ्गुलबब्बूलवाजिकर्णेरिमासनम् ॥ ९७ ॥
एषां कल्ककषायाभ्यां तैलं पक्वं मुखे धृतम् ॥
स्थैर्यं करोति चलतां दन्तानां नावनेन तु ॥ ९८ ॥

वह्निवल्ली, अस्थिसंहारः। कुरण्टको नीलाझिण्टी। वाजिकर्णः सालभेदो गर्दभाण्डो वा। असनः पीतशालः। बकुलाद्यं तैलम्॥ ९७॥ ९८॥

स्वल्पखदिरवटिकामाह—

खदिरस्य तुलां सम्यग्जलद्रोणे विपाचयेत्॥
शेषाष्टभागे तत्रैव प्रतिवापं प्रदापयेत्॥ ९९॥
जातीकर्पूरपूगानि कङ्कोलस्य फलानि च॥
इत्येषा गुटिका कार्या मुखसौभाग्यवर्धिनी॥
दन्तोष्ठमुखरोगेषु जिह्वातात्वामयेषु च॥ १००॥

जाती जातीकोषः। पूगं गूवाकफलम्। फलं जातीफलम्। एषां चूर्णस्य प्रत्येकं पलम्। खदिरवटिकान्तरेऽपि हि जातीफलकङ्कोलजातीकोशानां पृथक्पलमानतोक्ता। यथा—लवङ्गजातीकङ्कोलजातीकोषान्पलोन्मितानिति। किंच। भाविखदिरवटिकायां तुलात्रयक्वाथे यावच्चूर्णं तावतो मिलितस्य तृतीयभागेन मिलितानामेषां चूर्णम्। क्वाथाः चतुर्थांशेनेत्यन्ये। स्वल्पखदिरगुटिका॥ ९९॥ १००॥

बृहत्खदिरवटिकामाह—

गायत्रीसारतुलया(ये) रिमवल्कलानां
सार्धं तुलायुगुलमम्बु घटैश्चतुर्भिः॥
निष्काथ्य पादमवशेष्य सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन॥ १०१॥
तस्मिन्घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवलग्रहभागिकानाम्॥ १०२॥
एलामृणालसितचन्दनचन्दनाम्बु-
श्यामातमालविकसाघनलोहयष्टी—
लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटंकटिकट्फलानाम्॥ १०३॥
पद्माकलोध्रवटरोहयवासकानां
मांसीनिशासुरभिवल्कलसंयुतानाम्॥
कङ्कोलजातिफलकोशलवङ्गकानि
चूर्णीकृतानि विदधीत पलांशकानि॥ १०४॥
शीतेऽवतार्य घनसारचतुष्पलं तु
क्षिप्त्वा कलायसदृशीर्गुटिकाः प्रकुर्यात्॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान्गलोष्ठरसनाद्विजतालुजातान्॥ १०५॥

कुर्युर्मुखे सुरभितां पटुतां रुचिं च
स्थैर्यं परं दशनगं रसनालघुत्वम् ॥ १०६ ॥

गायत्री खदिरः । घटैर्द्रोणैः । कवलग्रहभागिकानामिति । प्रत्येकं कर्षमानानाम् । अत्र मृणालमुशीरम् । सितचन्दनं श्वेतचन्दनं रक्तपीतसारम् । चन्दनं पत्त(त्रा)ङ्गः । अम्बु वालकम् । श्यामा प्रियंगुः । तमालं तमालपत्रम् । विकसा मञ्जिष्ठा । लोहमगुरु । लज्जा वराहक्रान्ता समङ्गा वा । इभो नागकेसरचूर्णम् । श्रीपुष्पः पुण्डरीकं नवनीतखोटिर्वा । कटंकटिर्दारुहरिद्रा । पद्माकं पद्मकाष्ठम् । सुरभिः शल्लकीवेष्टकं मुरेति ख्यातं रास्ना वा । वल्कलं गुडत्वक् । जातिफलकोशेति । जातीफलं जातिकोशश्च । घनसारः कर्पूरः । बृहत्खदिरवटिका ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टपञ्चाशत्तमो मुखरोगाधिकारः समाप्तः ॥ ५८ ॥

---

## अथैकोनषष्टितमः कर्णरोगाधिकारः ।

---

कर्णशूलचिकित्सामाह—

कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः ॥
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये ॥ १ ॥

कपित्थस्य मूलम् । मातुलुङ्गाम्लं मातुलुङ्गकेसरम् । कपित्थादीनां प्रत्येकं रसैः कर्णपूरणम् ॥ १ ॥

शृङ्गवेररसः क्षौद्रं सैन्धवं तैलमेव च ॥
कवुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ २ ॥

सुगमम् ॥ २ ॥

लशुनार्द्रकशिग्रूणां मुरङ्ग्या मूलकस्य च ॥
कदल्याः स्वरसः श्रेष्ठः कवुष्णः कर्णपूरणे ॥

एषां षण्णां लशुनादीनामपि स्वरसैः प्रत्येकमथ वा समस्तैः कर्णपूरणम् । शिग्रुर्मधुशिग्रुः । मुरङ्गी रक्तसौभाञ्जनकः । कदुष्ण ईषदुष्णः ॥

समुद्रफेनचूर्णेन युक्त्या वाऽप्यवचूर्णयेत् ॥ ३ ॥

समुद्रफेनचूर्णेन युक्त्या वेति । युक्त्या तैलेन कर्णं म्रक्षयित्वा ॥ ३ ॥

आर्द्रकसूर्यावर्तकसौभाञ्जनमूलमूलकस्वरसाः ॥
मधुसैन्धवतैलयुताः पृथगुष्णाः कर्णशूलहराः ॥ ४ ॥

सुगमम् ॥ ४ ॥

सौभाञ्जनस्य निर्यासस्तिलतैलेन संयुतः ॥
व्यक्तोष्णः पूरणः कर्णे कर्णशूलोपशान्तये ॥ ५ ॥

सुगमम् ॥ ५ ॥

अष्टानामपि मूत्राणां मूत्रेणान्यतमेन वा ॥
कोष्णेन पूरयेत्कर्णं कर्णशूलोपशान्तये ॥ ६ ॥

गवादीनामष्टानां मूत्राणाम् ।
उक्तं च—"गोमहिष्यऽयजाश्वानां रासभोष्ट्रमतङ्गजात् ।
मूत्राष्टकमिति ख्यातं भिषग्भिः शास्त्रचिन्तकैः" इति ।
अन्यतमेनैकतमेन ॥ ६ ॥

अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम् ॥
तैलाक्तमङ्गारैश्चितं निदध्याच्छ्रवणोपरि ॥ ७ ॥
यत्तैलं च्यवते तस्मात्खल्लादङ्गारतापितात् ॥
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥ ८ ॥

अश्वत्थपत्रखल्लमिति । अश्वत्थपत्रैर्बहुभिस्तैलाक्तैर्द्विकर्णिकाकारा खल्ली कार्या । विदेहे त्वत्र घृताक्तत्वमपि दर्शितम् । तद्यथा—विधायाश्वत्थपत्रैर्वा खल्लमभ्यज्य सर्पिषेति । श्रवणस्रोत इति । कर्णविवरम् ॥ ७ ॥ ८ ॥

दीपिकातैलमाह—

महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ॥
क्षौमेणाऽऽवेष्ट्य संसिच्य तैलेनाऽऽदीपयेत्ततः ॥ ९ ॥
यत्तैलं च्यवते तेभ्यः सुखोष्णं तत्प्रयोजयेत् ॥
ज्ञेयं तद्दीपिकातैलं कर्णशूलनिवारणम्* ॥ १० ॥

काण्डानि खण्डानि । क्षौमेणातसीवस्त्रेण । आवेष्ट्य त्रिभागमिति शेषः । तेभ्योऽधोमुखमिति शेषः । दीपिकातैलम् ॥ ९ ॥ १० ॥

अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखिनाऽभितप्तम् ॥
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनां च ॥ ११ ॥

---

* ख. पुस्तके—एवं कुर्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारले। मतिमान्दीपिकातैलं कर्णशूलनिवारणम् ॥१॥ इत्यधिकमत्र ।

---

१ क. घ. °गुष्णाः क° । २ क. °रपूर्ण लि° ।

अर्कस्य पत्रं परिणामपीतमिति । परिणामपीतं पाकात्पीतवर्णम् ॥ ११ ॥

तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ॥
बस्तमूत्रं क्षिपेत्कोष्णं सैन्धवेन समन्वितम् ॥ १२ ॥

सुगमम् ॥ १२ ॥

वंशावलेखसंयुक्तं मूत्रे वाऽऽजाविके भिषक् ॥
तैलं पचेत्तेन कर्णं पूरयेत्कर्णशूलिनः ॥ १३ ॥
धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ॥
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥ १४ ॥

वंशावलेखो वंशनीली वंशावलेखः कल्कः । आजेन वाऽऽविकेन वा मूत्रेण पाकः । करालेऽप्युक्तम्—

"वंशावलेखकल्केन मूत्र आजेऽथ वाऽऽविके ॥
पचेत्तैलं रुजः शान्त्यै कर्णयोः पूरणं भिषक्" इति ।

विदेहे तु योगेऽस्मिन्पठितं घृतम् । गदाधरस्तु विदेहदर्शनाद्व्याचष्टे—आजमूत्रविपक्केन तैलेन वा पूरयित्वा कर्णमाविकमूत्रविपक्केन पूरयेदेवमसकृदिति ।

तथा च विदेहः—

"अजाविमूत्रे पक्त्वा तु आर्द्रवंशावलेखने ।
व्यत्यासात्सर्पिषा कार्यं कर्णशूले तु पूरणम्" इति ॥ १३ ॥ १४ ॥

हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलं तु सार्षपम् ॥
कर्णशूले प्रणादे तु पूरणं हितमुच्यते ॥ १५ ॥

सुगमम् ॥ १५ ॥

क्षारतैलमाह—

बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् ॥
शतपुष्पा वचा कुष्ठं दारुशिग्रुरसाञ्जनम् ॥ १६ ॥
सौवर्चलं यवक्षारः स्वर्जिकोद्भिदसैन्धवम् ॥
भूर्जग्रन्थिर्विडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥ १७ ॥
मातुलुङ्गरसश्चैव कदल्या रस एव च ॥
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम् ॥ १८ ॥
बाधिर्यं कर्णनादश्च पूयास्रावश्च दारुणः ॥
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः ॥ १९ ॥

क्षिप्रं[1] विनाशमायान्ति कृष्णात्रेयस्य शासनात् ॥
क्षारतैलमिदं श्रेष्ठं मुखपाकामयापहम्[2] ॥ २० ॥
छेदं मध्विति कृत्वैव शुक्तकादि चतुर्गुणम् ॥
तैलात्प्रत्येकमन्ये तु मधुशुक्तं लिखन्ति च ॥ २१ ॥
यवाम्भोमधुसंयुक्तं शृङ्गवेरगुडान्वितम् ॥
धान्यराशौ त्रिरात्रस्थं मधुशुक्तमुदाहृतम् ॥ २२ ॥

उद्भिदं शाकंभरीलवणम् । मध्वन्तं द्रव्यं कल्कः । शुक्तादिद्रव्यं प्रत्येकं चतुर्गुणम् । प्रचारोऽपीत्थम् । मातुलुङ्गकदलीरसौ तु जातूकर्णदर्शनात्तैलसमौ युक्तौ । मधुप्रधानं शुक्तं मधुशुक्तमित्यन्ये । तच्च जम्बीरस्य फलरसमित्यादिना दर्शयितव्यम् । जातूकर्णेऽपि मधु न द्रवे नापि कल्के पठितम् ।

तद्यथा—"मूलकभस्मशताङ्काद्विक्षारवचाचतुर्लवणकुष्ठैः ।
दारुरसाञ्जननागरसौभाञ्जनहिङ्गुघनभूर्जैः ॥
पक्वफलं पूर्णकदलीरसैः समांशैश्चतुर्गुणशुक्ते(?) ।
तैलं विपक्वमश्रुतिनादश्रवणशूलजन्तुघ्नम्" इति ।

मधुशुक्तमाह—

"जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् ।
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ।
मासमेतज्जातरसं मधुशुक्तमुदाहृतम्" ॥

जम्बीरफलरसपलं पिप्पलीमूलपलं मधुपलमिति संप्रदायान्मानक्रमः । क्षारतैलम् ॥ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

कर्णनादे कर्णक्ष्वेडे कटुतैलेन पूरणम् ॥
नादबाधिर्ययोः कुर्याद्वातशूलोक्तमौषधम् ॥ २३ ॥

सुगमम् ॥ २३ ॥

मार्गक्षारजलेन तत्कृतकल्केन साधितं तिलजम् ॥
अपहरति कर्णनादं बाधिर्यं चापि पूरणतः ॥ २४ ॥

मार्गक्षारजलेनेति । मार्गोऽपामार्गः । तत्कृतकल्केनेति । अपामार्गक्षारकृतकल्केन । क्षारस्य तैलोपक्षयभयादम्भसा मोदयित्वा कल्कः कार्यः । अत्र च तैलं दत्त्वा पाकज्ञानार्थमण्टनकं ग्राह्यम् । कल्कोऽयं न गालनीय इत्यन्ये । अन्ये तु क्षारकल्कत्वे तैलं दुर्वहं मन्यमानाः समासान्तर्गतमप्यपामार्गशब्दमाकृष्यापामार्गमूलं कल्कमाहुः । प्रथमव्याख्यया प्रचारितव्यम् । अपामार्गतैलम् ॥ २४ ॥

---

१ क. 'प्रं नाशं तु गच्छन्ति । २ क. ख. 'वहन्ताम्' ।

दशमूलीकषायेण तैलमस्यं विपाचयेत् ॥
एतत्कर्णे प्रदातव्यं बाधिर्ये परमौषधम् ॥ २५ ॥

दशमूलीतैलम् ॥ २५ ॥

बिल्वतैलमाह—

फलं बिल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत् ॥
सक्षीरं तत्र वितरेद्बाधिर्ये कर्णपूरणम् * ॥ २६ ॥

तन्त्रान्तरदर्शनात्पाकार्थे गोमूत्रमपि देयं क्षीरं चाऽऽजं ग्राह्यम् ।

तद्यथा—"बिल्वगर्भे पचेत्तैलं गोमूत्राजापयोन्वितम् ।
बाधिर्ये पूरयेत्तेन कर्णौ सकफवातजे" इति ॥

सक्षीरं तत्र वितरेदित्यत्र सजलं च सदुग्धं चेति पाठं पठति डल्लणः । पञ्जिकाकारस्तु पादिकं जलदुग्धाभ्यामिति पठति । बिल्वतैलम् ॥ २६ ॥

एवमेव विधिः कार्यः प्रणादे नस्यपूर्वकः ॥
गुडनागरतोयेन नस्यं स्यादुभयोरपि ॥ २७ ॥

उभयोरिति । बाधिर्यप्रणादयोः ॥ २७ ॥

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम् ॥
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ २८ ॥

पञ्चकषायाणामिति । पञ्चकषायाणि सुश्रुते कर्णास्रावचिकित्सितोक्तानि तिन्दुकादीनि ।

तद्यथा—"तिन्दुकान्यभया लोध्रं समङ्गाऽऽमलकं तथा ।
पूरणं चात्र पथ्यं स्यात्कपित्थरसयोजितम्" इति ॥

अन्ये तु, आरग्वधशिरीषजम्बूसर्जाश्वकर्णान्पञ्चकषायशब्देनाऽऽहुः ॥ २८ ॥

तिन्दुकान्यभया लोध्रं समङ्गा चाऽऽमलक्यपि ॥
पञ्चकषायशब्देन ग्राह्यमेतद्भवेदिह ॥ २९ ॥

समङ्गाऽञ्जलिकारिका वराहक्रान्तेत्यपरे । इदं पञ्चकषायचूर्णम् ॥ २९ ॥

सर्जत्वक्चूर्णसंयुक्तः कर्पासीफलजो रसः ॥
मधुना संयुतः साधुः कर्णस्रावे प्रशस्यते ॥ ३० ॥

सर्जत्वक्सर्जः शालः । कर्पासी वनकर्पासी । ग्रामजकर्पासस्यापि फलरसो ग्राह्यः ।
तथा च विदेहः—

---

* ख. पुस्तके—क्षीरमाजं बिल्वतैलं मन्दपावकपाचितम् । इत्यधिकमत्र ।

---

१ क. ख. °त्कल्कं प्र° । २ क. ख. एव एव ।

"कर्पासीतुण्डिकेरीणां स्वरसो मधुसंयुतः ।
युक्तः सर्जकषायेण कर्णस्रावस्य भेषजम्" इति ॥

अत्र कर्पासीफलरसस्यार्धं मधु मधुनोऽर्धं सर्जत्वक्चूर्णं वृद्धवैद्यसंप्रदायादिति कार्तिककुण्डः ॥ ३० ॥

**जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलं च सार्द्रम् ॥ ३१ ॥**
**क्षुण्त्वा रसं तं मधुना विमिश्रं स्रावापहं तं प्रवदन्ति तज्ज्ञाः ॥**
**एभिः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ ३२ ॥**

सार्द्रमिति । अत्यर्थमार्द्रम् । एभिरिति । जम्ब्वादिभिः कल्कः । पाकोत्तरकालं मधुप्रक्षेपः । निम्बादीनां तैलं मिलित्वा पक्तव्यम् । जम्ब्वाद्यं तैलम् ॥ ३१ ॥ ३२ ॥

**पुटपाकविधिस्विन्नहस्तिविड्जातकौटजः ॥**
**रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥ ३३ ॥**

हस्तिविड्जातकौटजरसः कोष्णः कार्यः ॥ ३३ ॥

**शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ॥**
**तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥ ३४ ॥**

सुगमम् ॥ ३४ ॥

**चूर्णेन गन्धकशिलारजनीभवेन**
**मुष्ट्यंशकेन कटुतैलपलाष्टकं यत् ॥**
**धत्तूरपत्ररसतुल्यमिदं विपक्वं**
**नाडीं जयेच्चिरभवामपि कर्णजाताम् ॥ ३५ ॥**

मुष्ट्यंशकेनेति । मिलितानां पलेन त्विति । गन्धकशिलारजनीभवेनेति । गन्धकशिला गन्धको न तु शिला मनःशिला तन्त्रान्तरप्रत्ययात् । तथा च तन्त्रान्तरम्—

"शिलागन्धपलं पक्वं कटुतैलपलाष्टकम् ।
धत्तूरपत्रजरसे कर्णनाडीजिदुत्तमम्" इति ॥

अतो मिलितानां पलेन त्विति वृन्दटिप्पणिकायां बहुवचनमसंगतमेव प्रतिभाति । मुष्ट्यंशकेनेति । मिलित्वा पलेन ॥ ३५ ॥

कर्णप्रतीनाहविधिमाह—

**अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ॥**
**ततो विरिक्तशिरसः क्रियां मार्गां समाचरेत् ॥ ३६ ॥**

---

१ घ. 'र्णशूलजि' ।

क्रियां मार्गां समाचरेदिति । स्नेहस्वेदादिविधिं कृत्वा दोषोचितां क्रियां कुर्यादित्यर्थः ॥ ३६ ॥

कर्णपाके चिकित्सामाह—

कर्णपाकस्य भैषज्यं कुर्यात्क्षतविसर्पवत् ॥

शीतालेपपरीषेकादींस्तच्चिकित्सितोक्तान्कुर्यात् ॥

कर्णकण्डूचिकित्सामाह—

नाडीस्वेदोऽथ वमनं धूमो मूर्धविरेचनम् ॥
विधिश्च कफहृत्सर्वः कर्णकण्डूमपोहति ॥ ३७ ॥

स्नेहस्वेदोऽथेति पाठं पठति डल्लणः । वमनं सस्वेदवमनम् । धूमोऽत्र वैरेचनिकः ॥ ३७ ॥

कर्णगूथचिकित्सामाह—

क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ॥
शोधयेत्कर्णगूथं तु भिषक्सम्यक्शलाकया ॥ ३८ ॥

सुगमम् ॥ ३८ ॥

पूतिकर्णचिकित्सामाह—

निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः ॥
पूरणात्पूतिकर्णस्य शमनो मधुसंयुतः ॥ ३९ ॥

निर्गुण्डीस्वरसस्तैलमिति । निर्गुण्डीस्वरसस्तैलसमः । धूमरजोऽगारधूमचूर्णम् ॥ ३९ ॥

जातीपत्ररसे तैलं विपक्कं पूतिकर्णजित् ॥ ४० ॥

सुगमम् ॥ ४० ॥

वरुणार्ककपित्थाम्रजम्बूपल्लवसाधितम् ॥
पूतिकर्णापहं तैलं जातीपत्ररसोऽथ वा ॥ ४१ ॥

सुगमम् ॥ ४१ ॥

कृमिकर्णचिकित्सामाह—

सूर्यावर्तकस्वरसं सिन्दुवाररसं तथा ॥
लाङ्गलीमूलकरसं त्र्यूषणेनावचूर्णितम् ॥
पूरयेत्कृमिकर्णं तु जन्तूनां नाशनं परम् ॥ ४२ ॥

सूर्यावर्तकादीनां प्रत्येकं स्वरसो व्योषयोगात्कार्यः ॥ ४२ ॥

कृमिकर्णविनाशार्थं कृमिघ्नं योजयेद्विधिम् ॥ ४३ ॥

कृमिघ्नो विधिः कृमिचिकित्सितोक्तः ॥ ४३ ॥

अपरामपि विशेषचिकित्सामाह—

**वार्ताकधूपश्च हितः सार्षपस्नेह एव च ॥ ४४ ॥**

**वार्ताकधूप इति ।** वार्ताकफलचूर्णं साङ्गारशरावसंपुटे दत्त्वा नलिकया कर्णधूपो ग्राह्यः । डल्लणस्तु वार्ताकधूमश्चेति पाठं पठित्वा परिणतशुष्कवार्ताकधूमस्य पानं कर्णधूपनं चेति व्याख्याति । सार्षपस्नेहेन कर्णपूरणं तन्त्रान्तरोक्तत्वात् ॥ ४४ ॥

कृमिकृतदौर्गन्ध्यचिकित्सामाह—

**पूरणं हरितालेन गवां मूत्रयुतेन च ॥**
**धूपनं कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥**
**कृमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥ ४५ ॥**

गुग्गुलोः कर्णदौर्गन्ध्ये धूपनं श्रेष्ठमुच्यत इति पाठं पठित्वा डल्लणो व्याख्याति । कृमिघ्नं विडङ्गसारचूर्णं तच्च हरितालचूर्णेन संयुतं गोमूत्रेण पूरणं गुग्गुलुना धूपनम् ॥ ४५ ॥

कर्णस्रावपूतिकर्णपूरणं कृमिकर्णकानां समानं कर्माऽऽह—

**राजवृक्षादितोयेन सुरसादिजलेन वा ॥**
**कर्णप्रक्षालनं कुर्याच्चूर्णैरेतैस्तु पूरणम् ॥**

राजवृक्षादिरारग्वधमदनगोपघोटेत्यादिकः । सुरसा श्वेतसुरसा फणिज्जकेत्यादिः सुरसादिः ॥

**विद्रधौ चापि कुर्वीत विद्रध्युक्तं च भेषजम् ॥ ४६ ॥**

**भेषजमिति ।** अन्तर्विद्रध्युक्तं भेषजम् । डल्लणस्त्वेवं व्याख्याति । **विद्रधौ चापीति ।** चकारात्सुश्रुतोक्तं कर्णक्ष्वेडे यत्सार्षपं तैलं पूरण उक्तं तद्विद्रधावपि कुर्वीत न केवलं तदेव कुर्वीत विद्रध्युक्तं भेषजमपि कुर्वीतेत्यर्थः । वातज आमे सवेदने विद्रधौ तिलतैलेनाऽऽसेकः कफजे पुनः सार्षपतैलेनेति ॥ ४६ ॥

पूतिकर्णस्य विशेषचिकित्सामाह—

**घृष्टं रसाञ्जनं नार्याः क्षीरेण क्षौद्रसंयुतम् ॥**
**प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ॥ ४७ ॥**

सुगमम् ॥ ४७ ॥

**कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः ॥**
**पूतिकर्णापहं तैलं बस्तमूत्रेण साधितम् ॥ ४८ ॥**

सुगमम् । कुष्ठाद्यं तैलम् ॥ ४८ ॥

---

१ क. °धूमश्च ।

शतावरीवाजिगन्धापयस्यैरण्डबीजकैः ॥
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम् ॥ ४९ ॥

पयस्यैरण्डबीजकैरिति । पयस्या क्षीरकाकोली । एरण्डबीजकमेरण्डबीजं न तु बीजकं पीतशालः ॥ ४९ ॥

कल्केन जीवनीयेन तैलं पयसि पाचितम् ॥
आनूपमांसक्वाथेन पालिपोषणवर्धनम् ॥ ५० ॥

सुगमम् ॥ ५० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकोनषष्टितमः कर्णरोगाधिकारः समाप्तः ॥ ५९ ॥

---

## अथ षष्टितमो नासारोगाधिकारः ।

---

अथेन्द्रियाधिष्ठानगतविकारान्नासारोगारम्भः—

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ॥
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये ॥ १ ॥

पञ्चमूलीशृतक्षीरादयः पक्वपीनसे । पञ्चमूली महती स्वल्पा वा । चित्रकहरीतक्यत्रैवाधिकारे वक्तव्या । सर्पिर्गुडः षडङ्गश्च यूषो यक्ष्माधिकारोक्तः ॥ १ ॥

व्योषचित्रकतालीसतिन्तिडीकाम्लवेतसम् ॥
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥ २ ॥
व्योषादिकमिदं चूर्णं पुराणगुडसंयुतम् ॥
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ ३ ॥

एलात्वक्पत्रपादिकमिति । एलादिकं समुदितभागापेक्षया मिलित्वा पादिकम् । गुडः सर्वचूर्णसमः । व्योषाद्यं चूर्णम् ॥ २ ॥ ३ ॥

पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः ॥
दन्त्या च तैलं संसिद्धं नस्यं पीनसशान्तये ॥ ४ ॥

सुगमम् । पाठाद्यं तैलम् ॥ ४ ॥

---

१ ङ. 'ष्टिदं पर' २ क. घ. 'स्यं संपक्वपीनसे । सु' ।

व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः ॥
पाचितं नावनं तैलं पूतिनासागदं हरेत् ॥ ५ ॥

सुरसः सिन्दुवारः । एवं वक्ष्यमाणेऽपि योगे । व्याघ्रीतैलम् ॥ ५ ॥

त्रिकटुकविडङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः ॥
तैलं गोजलसिद्धं नस्यं स्यात्पूतिनासस्य ॥ ६ ॥

सुगमम् । त्रिकटुतैलम् ॥ ६ ॥

कलिङ्गहिङ्गुमरिचं लाक्षासुरसकट्फलम् ॥
कुष्ठोग्राशिग्रु जन्तुघ्नमवपीडः प्रशस्यते ॥ ७ ॥

सुगमम् ॥ ७ ॥

तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत् ॥
अपीनसे पूतिनासे शमनं कीर्तितं परम् ॥ ८ ॥

सुगमम् ॥ ८ ॥

नासापाके भेषजमाह—

नासापाके पित्तहृत्संविधानं कार्यं सर्वं बाह्यमाभ्यन्तरं च ॥
हृत्वा रक्तं क्षीरवृक्षत्वचश्च सोज्याः सेके[3] योजनीयाश्च लेपे ॥ ९ ॥

बाह्यमाभ्यन्तरं चेति । बाह्यं लेपाभ्यङ्गपरिषेकादि । आभ्यन्तरं पुनरिहोर्ध्वस्नेहपानविरेचनादि । क्षीरवृक्षत्वचश्चेत्यस्य पित्तहरविधानमित्यनेनैव लब्धस्य पुनरभिधानं विशेषेण हितत्वप्रतिपादनार्थम् । साज्यः(ज्याः) सघृतः(ताः) ॥ ९ ॥

पूयास्त्ररक्तपित्तघ्नाः कषाया नावनानि च ॥

सुगमम् ॥

शुण्ठीकुष्ठकणाबिल्वद्राक्षाकल्ककषायवत् ॥
साधितं तैलमाज्यं वा नस्यं क्षवथुरोगनुत् ॥ १० ॥

बिल्वस्य मूलम् । शुण्ठीतैलम् ॥ १० ॥

दीप्तरोगस्य चिकित्सामाह—

दीप्ते रोगे पैत्तिकं संविधानं कुर्यात्सर्वं स्वादु यच्छीतलं च ॥

संविधानं कर्मेत्यर्थः । सर्वं बाह्यमाभ्यन्तरं च ॥

नासानाहचिकित्सामाह—

नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्धबस्तिश्च नित्यम् ॥ ११ ॥

स्नेहपानमन्तरभक्तकम् । मूर्धबस्तिश्चेति । चकारात्साल्वणोपनाहादयो गृह्यन्ते ॥ ११ ॥

---

१ क. हरेद्रक्तं । २ क. योज्याः । ३ क. 'के सघृताश्च प्रदेहाः । बा' ।

वातिकप्रतिश्यायस्य चिकित्सामाह—

**वातिके तु प्रतिश्याये पिबेत्सर्पिर्यथाक्रमम् ॥ १२ ॥**
**पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन वा ॥**
**नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ॥ १३ ॥**

**पिबेत्सर्पिर्यथाक्रममिति।** यथाक्रमं पाचनशिरोविरेचने कृत्वेत्यर्थः। किंवा स्वेदोपयोगिकाध्यायोक्तक्रमेण। **प्रथमेन गणेन वेति।** नस्यादिष्वित्यनेन योज्यम्। तेनायमर्थः। प्रथमेन गणेन विदारिगन्धादिना सिद्धं सर्पिर्नस्यादिषु प्रयोक्तव्यमिति। न चैवं कल्पनीयं यत्प्रथमेन गणेन कल्करूपेण पञ्चलवणेन च कल्केन सिद्धं सर्पिः पिबेन्नस्यादिष्वर्दितेरितं विधिं कुर्यादिति। कराले केवलपञ्चलवणेनैव घृतसाधनस्योक्तत्वात्।

तद्यथा—"सर्पिर्वातापहैः सिद्धं लवणैर्वाऽपि पञ्चभिः ॥
प्रतिश्याये प्रशंसन्ति संपाद्य(द्यं) मारुतोद्भवे" इति ॥

किंवाऽर्दिते सामान्येन नस्यादिकमुक्तं न तु विशिष्टैर्द्रव्यैर्नस्यादिविधिः। तेन नस्यादिष्वित्यस्य परेण योजनोचिता ॥ १२ ॥ १३ ॥

पित्तरक्तकृतयोः प्रतिश्याययोश्चिकित्सामाह—

**पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥**

**मधुरकैरिति।** काकोल्यादिभिः। केचित्पित्तरक्तोत्थयोस्तिक्तैः कषायमधुरैर्भृतमिति पठन्ति व्याख्यानयन्ति च तिक्तैः कषायमधुरैर्भृतं सिद्धमिति शेषः। तत्र तिक्तानि पटोलादिगणपठितानि। कषायाण्युत्पलादिगणोक्तानि। मधुराणि काकोल्यादीनि॥

**परिषेकान्प्रदेहांश्च कुर्यादपि च शीतलान् ॥ १४ ॥**

**प्रदेहाः** प्रलेपाः। परिषेकादीनि शीतलानीति शीतलानि न्यग्रोधाद्युत्पलादिशीतलगणकृतानि ॥ १४ ॥

कफजप्रतिश्यायचिकित्सामाह—

**कफजे सर्पिषा स्निग्धं तिलमाषविपक्कया ॥**
**यवाग्वा वामयित्वा वा श्लेष्मघ्नं क्रममाचरेत् ॥ १५ ॥**

तिलमाषविपक्कया यवाग्वा कृशरया वामयेत्। तिलमाषसिद्धविपक्कयेति वामनीयद्रव्ययुक्तयेति ज्ञेयम्। तथा सति वमनस्य सुकरत्वात्। वान्तश्च कफघ्नं क्रममिति, अत्र संसर्गमाचरेत् ॥ १५ ॥

**दार्वीङ्गुदनिकुम्भैश्च किणिह्या सुरसेन च ॥**
**वर्तयोऽथ पृथग्योज्या धूम्रपाने यथाविधि ॥ १६ ॥**

---

१ क. घ. °मयेद्वान्ते श्लें°। २ क. घ. वा कफघ्नं।

निकुम्भो दन्ती । किणिही कटभी । सुरसा निर्गुण्डी पर्णाशो वा । सुरसेनेत्यस्य स्थाने सरलेनेति पाठान्तरम् । यथाविधि धूमपानोक्तविधिना ॥ १६ ॥

घृततैलेन संयुक्तं सक्तुधूमं पिबेन्नरः ॥
प्रतिश्यायहरं प्रोक्तं कासहिक्कानिवारणम् ॥ १७ ॥

सुगमम् ॥ १७ ॥

अथवा सघृतान्सक्तून्कृत्वा मल्लकसंपुटे ॥
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ १८ ॥

सुगमम् ॥ १८ ॥

पुटपक्वं जयापत्रं सिन्धुतैलसमन्वितम् ॥
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ १९ ॥

सुगमम् ॥ १९ ॥

शिरसोऽभ्यञ्जनस्वेदनस्यकट्वम्लभोजनैः ॥
वमनैर्घृतपानैश्च तान्यथास्वमुपाचरेत् ॥ २० ॥

तानिति । प्रतिश्यायान् । यथास्वमिति । यथायोग्यम् । तेन शिरोभ्यञ्जनस्य- घृतपानानि पक्वे परिशिष्टविधानमपक्वे ॥ २० ॥

ऊषणं गुडसंयुक्तं स्निग्धदध्यम्लभोजनम् ॥
नवप्रतिश्यायहरं विशेषात्कफपाचनम् ॥ २१ ॥

ऊषणमित्यादियोगो मिलितः ॥ २१ ॥

ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥

सुगमम् ॥

पिप्पल्यः शिग्रुबीजानि विडङ्गमरिचानि च ॥
अवपीडः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ २२ ॥

पिष्ट्वाऽवपीड्य दीयत इत्यवपीडः ॥ २२ ॥

समूत्रपिष्टाश्चोद्दिष्टाः क्रियाः कृमिषु योजयेत् ॥
धावनानि कृमिघ्नानि भेषजानि च बुद्धिमान् ॥ २३ ॥

समूत्रपिष्टा इति । समूत्राः पिष्टाः । प्रतिश्याये कृमिसंभवेऽवपीडादीन्गोमूत्रपि- ष्टान्प्रयुञ्ज्यात् ।

"समूत्रपित्ताश्चोद्दिष्टाः क्रियाः कृमिषु योजयेत् ।
यापनार्थं कृमिघ्नानि भेषजानि च बुद्धिमान्" ।

इति पाठान्तरं सुश्रुत ईदृशं व्याख्यानयन्ति । समूत्रपित्ता इति । सह गोमूत्रेण गोपि-

स्तेन चेति । समूत्रपित्ताः क्रिया गोशब्दस्य लुप्तत्वात्तन्त्रान्तरदर्शनाद्वा । कृमिघ्ना याः क्रिया उद्दिष्टास्ता गोमूत्रपित्तयुक्ता यापनार्थं कर्तव्याः । तथा कृमिजशिरोरोगपठितानि कृमिघ्नानि भेषजानि सुरसादीनि कर्तव्यानि । बुद्धिमान्भिषगूहापोहवित् । ये तु सर्वेषामेव प्रतिश्यायानां कृमिसंभवं मन्यन्ते तेऽमुं श्लोकमीदृशं व्याख्यानयन्ति प्रत्येकं वातादिप्रतिश्यायेषु याः क्रिया उद्दिष्टास्ता एव गोमूत्रपित्तयुक्ता यथास्वं कृमिषु योजयेदिति ॥ २३ ॥

शेषाणां तु विकाराणां स्वं स्वं कार्यं चिकित्सितम् ॥ २४ ॥

शेषाणां तु विकाराणामिति । नासागतानामर्बुदशोफार्शोरक्तपित्तानां स्वं स्वमिति ॥ २४ ॥

करवीराद्यं तैलमाह—

रक्तकरवीरपुष्पं जात्याऽसनमल्लिकायाश्च ॥
एतैः समं तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥ २५ ॥

जात्यादिपुष्पम् । जात्याऽसनेति संहितया निर्देशोऽसिद्धविधेरनित्यत्वात् । असनं मल्लिकाऽप्फरमाल्लिका । सममिति सहार्थे सह पक्वमित्यर्थः । करवीराद्यं तैलम् ॥२५॥

चित्रकहरीतकीमाह—

चित्रकस्याऽऽमलक्याश्च गुडूच्या दशमूलजम् ॥
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात् ॥ २६ ॥
शतं पचेद्घनीभूते पलद्वादशकं क्षिपेत् ॥
व्योषत्रिजातयोः क्षारात्पलार्धमपरेऽहनि ॥ २७ ॥
प्रस्थार्धं मधुनो दत्त्वा यथाग्नि प्राशयेदथ ॥
वृद्धयेऽग्नेः क्षयं कासं पीनसं दुस्तरं कृमीन् ॥
गुल्मोदावर्तदुर्नामश्वासान्हन्ति रसायनम् ॥ २८ ॥

चित्रकमूलस्य पलानि पञ्चाशत् । तोयं तस्माच्चतुर्गुणम् । चत्वारि पलशतानि साध्यानि । शेषः सपादद्व्यद्वादश शरावाः । एवं चित्रकरसस्य पलशतं भवति । आमलक्याः स्वरसः । तस्याभावे चित्रकवद्विधिः । एवं गुडूच्या अपि । दशमूलस्य च मिलितस्य क्वाथः । पलद्वादशकं व्योषत्रिजातयोर्मिलित्वा । चित्रकहरीतकी ॥२६॥२७॥२८॥

शिखरितैलमाह—

गृहधूमकणादारुक्षारनक्ताहसैन्धवैः ॥
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम् ॥ २९ ॥

---

१ क. घ. दद्यम् । २ क. घ. 'थाग्न्यद्यादयन्नणः । वृ' ।

नक्ताह्वयस्य बीजम् । शिखरिबीजमपामार्गस्य बीजम् । शिखरितैलम् ॥ २९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
कण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां षष्टितमो
नासारोगाधिकारः समाप्तः ॥ ६० ॥

## अथैकषष्टितमो नेत्ररोगाधिकारः ।

इन्द्रियाधिष्ठानगतरोगपारिशेष्याच्चक्षूरोगः । 'प्रायेण सर्वे नयनामयास्तु भवन्त्यभिष्यन्दनिमित्तमूलाः' इति वचनात्प्रथममभिष्यन्दस्य प्रतीकारमाह—

लङ्घनालेपनस्वेदशिराव्यधविरेचनैः ॥
उपाचरेदभिष्यन्दानञ्जनाश्चोतनादिभिः ॥ १ ॥

लङ्घनमुपवासो लघ्वन्नं वा । यदाह विदेहः—

"प्रागेवाक्ष्यामये भक्तं त्रिरात्रमगुरु स्मृतम् ।
उपवासस्त्र्यहं वा स्यात्तिक्तं वाऽप्यशनं हितम्" इति ॥

स्वेदः पित्तजं विहाय स च नयनोपान्ते मृदुः । यदुक्तम्—हृदयं वृषणौ दृष्टी स्वेदयेन्मृदु वा न वेति । शिराव्यधो रक्तोत्क्लेशे सति । शिराव्यधेति । अत्र शिरोपनासिका ललाट्याऽपाङ्ग्या वा । जीर्णेऽभिष्यन्दे विरेचनम् । जीर्णेऽञ्जनाश्चोतनादिकं च । आश्चोतनमक्षिपूरणम् ॥ १ ॥

अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ॥
पञ्चैते पञ्चरात्रेण रोगा नश्यन्ति लङ्घनात् ॥ २ ॥
*स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ॥
लङ्घनं चाक्षिरोगाणामामानां पाचनानि षट् ॥ ३ ॥

कुक्षिभवा रोगा अतीसारादयः । नन्वत्र पञ्चरात्रेण(णेति) विरुद्धं यतो विदेहे, उपवासस्त्र्यहं वा स्यादित्यनेन त्र्यहं लङ्घनमुपदिष्टम् । तथा तन्त्रान्तरे चतुरहम् । तद्यथा—"स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ।
लङ्घनं चाक्षिरोगाणामामानां पाचनानि षट्" इति ॥

उच्यते । यथाक्रमं वातपित्तकफापेक्षया त्रिचतुष्पञ्चाहव्यवस्थितेर्न दोष इति । त्र्यहादिलङ्घनविधानं चेह सामतासद्भावात् ॥ २ ॥ ३ ॥

श्रीवासातिविषालोध्रैर्मुस्ताणतेरल्पसैन्धवैः ॥
अव्यक्तेऽक्षिगदे कार्यं श्रोतस्यैर्गुम्फनं बहिः ॥ ४ ॥

---

* अयं श्लोको बहुषु पुस्तकेषूपलभ्यते क. ख. पुस्तकयोर्नास्ति

च्योतस्थैरिति । कर्पटबद्धैः । गुण्ठनमवचूर्णनं तच्च मुकुलितनेत्रे न तु विस्तृते ॥ ४ ॥
वर्ज्यमाह—

अञ्जनं पूरणं क्वाथपानमामे न शस्यते ॥

तथा च तन्त्रान्तरम्—

"अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम् ।
नेत्ररोगेषु सामेषु स्नानं च परिवर्जयेत्" ॥

यद्यक्षिरोगं मन्येत सरुजं व्यक्तलक्षणम् ॥
वेदनानिग्रहार्थं तु कुर्यादाश्चोतनं सदा ॥ ५ ॥

व्यक्तलक्षणमिति । सामतालिङ्गव्यपगमात्केवलदोषलक्षणं निराममिति यावत् । सामतानिरामतालक्षणे च तन्त्रान्तरम्—

"उदीर्णवेदनं नेत्रं रागदोषसमन्वितम् ।
घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥
मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता ।
प्रसन्नवर्त्मता चाक्ष्णोः संपक्वं दोषमादिशेत्" इति ॥

आश्चोतनमक्षिसेकः । एतच्च निरामे । आश्चोतनविधानं वातजे पित्तजे च ज्ञेयम् । कफजे पुनरादावेवाऽऽश्चोतनम् । विदेहविहितं यथा—

"अभिष्यन्देऽधिमन्थे च नेत्रयोः कफसंभवे ॥
उत्पत्तावेव कर्तव्यं नेत्रयोः कफनाशनम् ॥
तीक्ष्णश्चाक्ष्णोः परीषेकस्तीक्ष्णं चाऽऽश्चोतनादिकम्" इति ॥ ५ ॥

आश्चोतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ॥
कोष्णः सैरण्डबृहतीतर्कारीमधुशिग्रुभिः ॥ ६ ॥

बिल्वादिभिरिति । बिल्वादि महत्पञ्चमूलम् । सैरण्डेत्यादि बिल्वादिभिरित्यस्य विशेषणं तेनैक एवायं योगः । तथा च जातूकर्णः—महापञ्चमूलोरुबूकशिग्रुतर्कारीसिंहीक्वाथ इति । बृहती कण्टकारी ॥ ६ ॥

एरण्डपल्लवे मूले त्वचि चाऽऽजं पयः शृतम् ॥
कण्टकार्याश्च मूलेषु सुखोष्णं सेचनं हितम् ॥ ७ ॥

एरण्डेत्यादियोगे क्षीरसाधनं क्वाथ्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणमित्यादिक्षीरपरिभाषयैव । गदाधरःस्त्वाह, एतद्योगान्तरोक्ते—

"सैन्धवोदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः ॥
हितमर्धोदकं सेके तथाऽऽश्चोतन एव च" ॥

१ क. घ. तदा ।

इत्यन्तयोगेऽर्धोदकमित्येतत्सर्वाश्चोतनक्षीरसाधनार्थं परिभाषास्थानीयमित्याचक्षाणोऽप्यर्धोदकक्षीरसाधनमाह। युक्तं तु विशेषनिर्देशाभावादत्र क्षीरपरिभाषयैव साधनम्।

एरण्डपल्लवादिकण्टकारीमूलान्त एको योगः।

तथा च विदेहः—"कण्टकारीशिफैरण्डमूलत्वक्पत्रसाधितम्।
क्षीरमाजं हितं सेके रुक्षु स्यन्दाधिमन्थयोः" इति॥

सेक इत्यत्र चकारो लुप्तो द्रष्टव्यः। तेन न केवलं सेक आश्चोतने चेत्यर्थः। तत्र सेके सुखोष्णमाश्चोतने च शीतमेव॥ ७॥

इदानीमञ्जनस्याऽऽवस्थिकं कालमुद्दिशन्नाह—

ततः संपक्वदोषस्य प्राप्तमञ्जनमाचरेत्॥ ८॥

प्राप्तमञ्जनं युक्तमञ्जनं लेखनादिभेदेन त्रिप्रकारम्। तथा च सुश्रुतः—'लेखनं रोपणं चापि प्रसादनमथापि वा' इति। अत्र सूक्ष्ममूलाभिष्यन्दनयनामयहरत्वात्प्रागेव लेखनाञ्जननिर्देशः। तल्लेखनाञ्जनं मधुररसवर्जिताम्लादिरसपञ्चकेनैव पञ्चप्रकारम्।

तथा च सुश्रुतः—"तत्र पञ्चरसान्व्यस्तानाद्यैकरसवर्जितान्।
पञ्चधा लेखनं युञ्ज्याद्यथादोषमतन्द्रितः"॥

अस्यार्थः। पञ्चरसान्पञ्चरसवद्द्रव्याणीत्यर्थः। आद्यैकरसवर्जितान्मधुररसवर्जितान्। पञ्चधेति। वातपित्तकफरक्तसंनिपातभेदेन। यथादोषं दोषानतिक्रमेण। तत्र वातेऽम्ललवणौ। पित्ते तिक्तकषायौ। कफे कटुतिक्तकषायाः। रक्ते पित्तवत्। संनिपाते रसद्वयं त्रयं वा। संनिपातेनैव संसर्गोऽवरुद्धः। अतः पृथङ्नोक्तः। तत्र मधुररसमपि क्षौद्रं लेखनं स्यात्कषायरसत्वाद्रौक्ष्यात्प्रभावाद्वेति। लेखनं दोषस्रावणान्नयनस्य रिक्तीकरणम्। लेखनस्य दोषस्रावणे प्रकारः सुश्रुत उक्तः।

तथा च—"नेत्रवर्त्मशिराकोशस्रोतःशृङ्गाटकाश्रितम्।
मुखनासाक्षिभिर्दोषमोजसा स्रावयेत्तु तत्"॥

अस्यार्थः। नेत्रवर्त्मनो याः शिरा यश्च कोशो यानि च स्रोतांसि तत्र स्थितं दोषं तथा शृङ्गाटकमर्माश्रितं सदोषं तल्लेखनाञ्जनं मुखादिभिरोजसा शक्त्या स्रावयेदिति पिण्डार्थः। रोपणाञ्जनं कषायतिक्तरसम्।

तथा च सुश्रुतः—"कषायं तिक्तकं चापि सस्नेहं रोपणं मतम्।
तत्स्नेहशैत्याद्वृष्यं स्याद्दृष्टेश्च बलवर्धनम्" इति॥

प्रसादनाञ्जनं मधुररसम्। तथा च सुश्रुतः—

"मधुरं स्नेहसंपन्नमञ्जनं तु प्रसादनम्॥
दृष्टिदोषप्रसादार्थं स्नेहनार्थं च तद्धितम्" इति।

तत्र पूर्वाह्णे श्लेष्माश्रयाणां कफात्मकानां रोगाणां प्रतीकाराय लेखनाञ्जनप्रयोगः। सायाह्णे वातात्मकानां रात्रौ पित्तात्मकानाम्। अथ वा शोधनस्याञ्जनस्याऽऽदौ ततो रोपणस्यान्ते प्रसादनस्येति।

तथा च सुश्रुतः—"यथादोषं प्रयोज्यानि तानि रोगविशारदैः।
अञ्जनानि यथोक्तानि प्राह्णसायाह्णरात्रिषु" ॥ ८ ॥

ऋतुभेदात्पूर्वाह्णादिष्वञ्जनोपयोगमाह—

हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ॥
पूर्वाह्णे वाऽपराह्णे च ग्रीष्मे शरदि चेष्यते ॥
वर्षास्वनभ्रे नात्युष्णे वसन्ते च सदैव हि ॥ ९ ॥

आह च सात्यकिः—

"वसन्ते नातिशीतोष्णे प्रातर्ग्रीष्मे घनात्यये।
वर्षास्वनभ्रे मध्याह्ने हेमन्ते शिशिरे तथा ॥
पित्तोपचयशान्त्यर्थं पूर्वरात्रे च शस्यते" इति।

माधवोऽत्राऽऽह—

"आदित्येऽनुदिते नृणामञ्जनं न हितं मतम् ॥
तिमिराक्षिविकारोगकृच्छ्रोन्मीलनवेदनाः।
निस्तोदतोदशोफार्थं तेषां कुर्यात्तदञ्जनम्" इति ॥

लेखनार्थेवैकमञ्जनं गुटिकारसक्रियाचूर्णभेदेन त्रिप्रकारं तत्र महाबलानां रोगाणां गुटिकाञ्जनम्। मध्यानां रसक्रियाञ्जनम्। हीनानां चूर्णाञ्जनम्।

तथा च सुश्रुतः—"गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि तु।
यथापूर्वं बलं तेषां श्रेष्ठमाहुर्मनीषिणः" ॥ ९ ॥

तेषां प्रमाणमाह—

हरेणुमात्रां कुर्वीत वर्तिं तीक्ष्णाञ्जने भिषक् ॥
प्रमाणं मध्यमेऽध्यर्धं द्विगुणं च मृदौ भवेत् ॥ १० ॥

हरेणुमात्रा *वर्तिरेकवारोपणयोज्या। हरेणुस्त्रिपुटः कलायः। तीक्ष्णाञ्जने लेखनाञ्जने। मध्यमे रसाञ्जने प्रसादनेऽध्यर्धप्रमाणं सार्धकलायप्रमाणम्। मृदौ रोपणाञ्जने द्विगुणं प्रमाणं द्विकलायं प्रमाणमित्यर्थः ॥ १० ॥

गुटिकाञ्जनप्रमाणमभिधाय रसक्रियाञ्जनप्रमाणमाह—

---

* 'वर्तिरेकैव रोपणे' इति भाति।

विडङ्गमात्रं त्ववरं मध्यं द्वावुत्तमं त्रयम् ॥
रसक्रियायां वर्तीनां प्रमाणं परिकीर्तितम् ॥ ११ ॥

परमतेन रसक्रियाप्रमाणमाह—रसक्रियायां वर्तीनामित्यादि ।

"गृहीत्वा क्वाथकल्पेन क्वाथं पूतं पुनः पुनः ।
क्वाथयेत्फाणिताकारमेषा प्रोक्ता रसक्रिया ॥

वर्तीनां प्रमाणं वर्तिमितं रसक्रियायां प्रकीर्तितम् । यथास्ववर्तिप्रमाणमात्रेत्यर्थः । तत्र लेखनरसक्रियाञ्जनस्य लेखनवर्तिप्रमाणं रोपणस्य रोपणवर्तिवत्प्रसादनस्य प्रसादनवर्तिवत् ॥ ११ ॥

चूर्णाञ्जनप्रमाणमाह—

वैरेचनिकचूर्णं तु द्विशलाकं विधीयते ॥
मृदौ तु त्रिशलाकं स्याच्चतस्रः स्नैहिकेऽञ्जने ॥ १२ ॥

वैरेचनिकचूर्णं लेखनचूर्णं शलाकाद्वयम् । मृदौ रोपणे चूर्णे त्रिशलाकं शलाकात्रयं प्रमाणम् । स्नैहिकेऽञ्जने प्रसादने चतस्रः शलाकाः ॥ १२ ॥

इदानीं तान्यञ्जनानि किंमयशलाकानीत्याह—

सुवर्णरूप्यताम्रायःकांस्याश्मास्थिमयाः कृताः ॥ १३ ॥
शलाका अञ्जने शस्ता अष्टाङ्गुलमिताः शुभाः ॥
वक्त्रयोर्मुकुलाकाराः कलायपरिमण्डलाः ॥ १४ ॥

सुवर्णादिमयाः शलाका अञ्जने शस्ताः । अयो लोहम् । अश्म वैडूर्यादि तन्मयाः । अस्थिमया दान्ता शार्ङ्गी च । तत्र मधुरे कटुके वैडूर्याद्यश्ममयी । लवणेऽस्थिमयी शलाका शस्ता । एवं सुवर्णादिमयानि भाजनान्येषां कार्याणि । मधुरेऽञ्जने हैमं भाजनं हितम् । अम्ले राजतमित्यादि ।

तथा च सुश्रुतः—"तेषां तुल्यगुणान्येव विदध्याद्भाजनान्यपि ।
सौवर्णं राजतं शार्ङ्गं ताम्रं वैडूर्यकांस्यजम् ॥
आयसानि तु योज्यानि शलाकाश्च यथाक्रमम्" ॥

सुवर्णादिमयानां शलाकानां मध्ये ताम्रजाऽश्मजा शारीरी च हिता । तथा च सुश्रुतः—औदुम्बर्यश्मजा वाऽपि शारीरी वा हिता भवेत् । औदुम्बरी ताम्रमयी । अश्मजा वैडूर्यादिपाषाणजा । अपिशब्दात्सुवर्णजाऽपि हितेत्यर्थः ।

तथा च निमिः—"आयसी रोपणे ताम्री लेख्ये हैमी प्रसादने ।
शेषा अपि यथादोषं प्रयोज्या रसकोविदैः" ॥

शारीरी शृङ्गास्थिजा । केचिच्छारीरीशब्देनाङ्गुलिमाचक्षते । तन्नेच्छति गयी ।

तासां शलाकानामाकारमुद्दिशन्नाह—अष्टाङ्गुलमिता इत्यादि । शुभाः कर्कशादिदोषरहिताः । मुकुलाकारा मल्लिकादिमुकुलस्येव निर्गच्छतो यद्वन्मुलं तदाकाराः । कलायपरिमण्डलत्वेन तीक्ष्णाग्रत्वनिषेधः ॥ १३ ॥ १४ ॥

वामे करतले कृत्वा सजलं निकषोपलम् ॥
दक्षिणेनाञ्जनं गृह्य करेण निकषेच्छनैः ॥ १५ ॥
तेन कल्केन मतिमाञ्शलाकाग्रं प्रलिप्य च ॥
उत्थाप्य चोत्तरं वर्त्म वामेनाङ्गुष्ठपर्वणा ॥ १६ ॥
वर्त्मशुक्लान्तरे चाल्पं(ल्पां) शलाकां सुप्रवर्तयेत् ॥
प्रथमं सव्यमक्ष्याक्तु पश्चादक्ष्याक्तु दक्षिणम् ॥
शलाकाङ्गुष्ठदेशिन्या न चान्तर्नयनं स्पृशेत् ॥ १७ ॥

सुगमम् ॥ १५ ॥ १६ ॥ १७ ॥

बृहत्येरण्डमूलत्वक्शिग्रुमूलं ससैन्धवम् ॥
अजाक्षीरेण पिष्टं स्याद्वर्तिर्वाताक्षिरोगनुत् ॥ १८ ॥

सुगमम् ॥ १८ ॥

हरिद्रे मधुकं द्राक्षा देवदारु च पेषयेत् ॥
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥ १९ ॥

सुगमम् ॥ १९ ॥

प्रपौण्डरीकयष्ट्याह्वनिशामलकपद्मकैः ॥
शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगनुत् ॥ २० ॥

प्रपौण्डरीकादीनां क्काथेन सेकः ॥ २० ॥

द्राक्षामधुकमञ्जिष्ठाजीवनीयैः शृतं पयः ॥
प्रातराश्चोतनं पथ्यं शोथशूलाक्षिरोगिणाम् ॥ २१ ॥

सुगमम् ॥ २१ ॥

कफजे लङ्घनं स्वेदो नस्यं तिक्तादिभोजनम् ॥
तीक्ष्णैः प्रधमनं कुर्यात्तीक्ष्णैश्चैवोपनाहनम् ॥ २२ ॥

सुगमम् ॥ २२ ॥

कफाभिष्यन्दे स्वेदद्रव्याण्याह—

फणिज्जकास्फोतकपित्थबिल्वपत्तूरपीलुसुरसार्जभङ्गैः ॥
स्वेदं विदध्यादथवाऽनुलेपं बर्हिष्ठशुण्ठीसुरदारुकुष्ठैः ॥ २३ ॥

---

१ क. घ. 'रपिष्टैः । फ' ।

फणिज्जकः पर्णासभेदः । डल्लुणस्तु फणिज्जकस्तीक्ष्णगन्धः स्वनाम्नैव प्रसिद्ध इत्याह । अन्ये निर्गुण्डीमाहुः । आस्फोता, अफरमल्लिका । पत्तूरः शिखालिका । पीलुरौत्तरापथेकस्तरुः । छन्दोनुरोधादिह पीलूपाठो युक्तः । सुरसोऽपि पर्णासभेदः । अर्जोऽर्जकः । स च पर्णासभेदः । अर्जस्थानेऽर्कपाठो युक्तः । तन्त्रान्तरे रूयिकापाठात् ।

तद्यथा—"कपित्थसुरसास्फोतापीलुपत्तूररूयिकाः ।
फणिज्जाबिल्वच्छदनैः स्वेदः स्यन्दाधिमन्थयोः ॥
कफोत्थयोः प्रलेपस्तु दारुरुग्विश्ववालकैः" इति ।

भङ्गाः पल्लवाः । अन्ये भङ्गशब्देन पत्रभङ्गानाहुः । अनुलेपद्रव्याण्याह—**अथ वाऽनुलेपं बर्हिष्ठशुण्ठीसुरकाष्ठ(दारु) कुष्ठैरि**ति । बर्हिष्ठं वालकम् ॥ २३ ॥

**शुण्ठीनिम्बदलैः पिण्डः सुखोष्णैः स्वल्पसैन्धवैः ॥**
**धार्यश्चक्षुषि संक्षेपाच्छोफकण्डूव्यथापहः ॥ २४ ॥**

शुण्ठीनिम्बदलैरिति । शुण्ठी निम्बदलापेक्षया स्वल्पा ॥ २४ ॥

**वल्कलं पारिजातस्य तैलकाञ्जिकसैन्धवैः ॥**
**कफजाताक्षिशूलघ्नं तरुघ्नं कुलिशं यथा ॥ २५ ॥**

वल्कलं पारिजातस्येत्यादिनाऽञ्जनं ताम्रपात्रे घृष्ट्वा कार्यम् । एवं प्रचरति । लेपोऽयमित्येके ॥ २५ ॥

**ससैन्धवं लोध्रमथाऽऽज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम् ॥**
**आश्चोतनं तन्नयनस्य कुर्याद्दाहं च कण्डूं च रुजं च हन्यात् ॥ २६ ॥**

आश्चोतनसेकयो रोगहरणे विशेषं सुश्रुतो वक्ति ।

तथा च—"यथादोषोपयुक्तं तु नातिप्रबलमोजसा ।
रोगमाश्चोतनं हन्ति सेकस्तु बलवत्तरम्" ॥

अस्यार्थः । यथादोषोपयुक्तमिति । वातादिजे नेत्ररोगे वातादिहरद्रव्यसिद्धमाश्चोतनमित्यर्थः । नातिप्रबलं नात्युत्कटं रोगम् । ओजसा शक्त्या रोगं हन्तीति संबन्धः । सेकस्तु बलवत्तरमिति । यथादोषोपयुक्तः परिषेकः पुनर्बलवत्तरमतिप्रबलं रोगं हन्ति । तौ चाऽऽश्चोतनसेकौ चतुर्थेऽहनि गते वेगेऽक्षिण प्रयोक्तव्यौ ।

तथा च विदेहः—

*"प्राणवाक्ष्यामये कार्यं त्रिरात्रं लुप्तभोजनम् ।
उपवासस्त्र्यहं वा स्यान्नक्तं वाऽप्यशनं त्र्यहम् ॥

* प्रायेणाक्ष्यामय इति भाति ।

१ क. 'न्यूपिनाप' ।

ततश्चतुर्थे दिवसे व्याधिं संजातलक्षणम् ।
समीक्ष्याऽऽश्चोतनैः सेकैर्यथास्वमुपपादयेत्" ॥

आश्चोतनसेकावपि स्नेहलेखनरोपणभेदेन त्रिप्रकारौ । तौ तु यथासंख्यं चत्वारि द्वे पञ्च षड्वाक्शतान्यवचार्यौ ॥ २६ ॥

लोध्रं सर्पिषि संपक्वं खदिराजाजिसर्षपैः ॥
नागरारिष्टसिन्धूत्थैर्युक्तं दृषदि चूर्णितम् ॥ २७ ॥
सिते वाससि तद्बद्धं न्यसेत्स्वच्छाम्लकाञ्जिकैः ॥
तेनाक्ष्णोः पूरणं कार्यं कण्डूरोगाश्रुघर्षजित् ॥ २८ ॥

सुगमम् ॥ २७ ॥ २८ ॥

निम्बस्य पत्रैः परिलिप्य लोध्रं स्वेदाग्निना चूर्णमथापि कल्कम् ॥
आश्चोतनं मानुषदुग्धयुक्तं पित्तास्रवातापहमग्र्यमुक्तम् ॥ २९ ॥

सुगमम् ॥ २९ ॥

स्निग्धोष्णैर्वातजः पित्तरक्तजो मृदुशीतलैः ॥
तीक्ष्णरूक्षोष्णविशदैः प्रणश्यति कफात्मकः ॥ ३० ॥

सुगमम् ॥ ३० ॥

तीक्ष्णोष्णमृदुशीतानां व्यत्यासात्सांनिपातिकः ॥
तस्य कालो दिवा सर्वो यामश्च प्रथमो निशि ॥ ३१ ॥

सुगमम् । आश्चोतनप्रमाणं क्वापि पठ्यते—

"प्रकुञ्चः श्लैष्मिके व्याधौ पाणिशुक्तिश्च वातजे ॥
आश्चोतने प्रमाणं स्याद्द्वे शुक्ती चास्रपैत्तिके" ।

प्रकुञ्चो मुष्ट्याङ्गुलिचतुष्टयपरिमितः । द्वे शुक्ती पाणिशुक्तिः । शुक्तिश्चत्वारिंशद्बिन्दवः ॥ ३१ ॥

अथ वाऽऽश्चोतनं यावद्दीयमानं सहेन्नरः ॥
अहोरात्रे तच्च सकृद्द्विस्त्रिर्वा देयमुच्यते ॥ ३२ ॥

सुगमम् ॥ ३२ ॥

लेखनादीनामाश्चोतनानां बिन्दुसंख्यामाह—

लेखने सप्त चाष्टौ वा बिन्दवः स्नैहिके दश ॥
आश्चोतने प्रयोक्तव्या द्वादशैव तु रोपणे ॥ ३३ ॥

लेखने लेखमाश्चोतने सप्ताष्टौ वा बिन्दवः ॥ ३३ ॥

सम्यगाश्चोतने युक्ते वैमल्यं नेत्रयोर्भवेत् ॥
वेदनोपशमो व्याधिनिवृत्तिर्नेत्रलाघवम् ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

मिथ्याकृते व्याधिवृद्धिर्गौरवाविलनेत्रता ॥
अतीवाऽऽश्चोतिते नेत्रे रागदोषपरिस्रवाः* ॥ ३५ ॥

सुगमम् ॥ ३५ ॥

तिरीटत्रिफलायष्टीशर्कराभद्रमुस्तकैः ॥
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ ३६ ॥

सुगमम् ॥ ३६ ॥

कसेरुमधुकाभ्यां च चूर्णमम्बरसंवृतम् ॥
न्यस्तमप्स्वान्तरिक्षासु हितमाश्चोतनं भवेत् ॥ ३७ ॥

अम्बरसंवृतमिति । वस्त्रबद्धम् । न्यस्तं क्षिप्तम् । अप्स्वान्तरिक्षास्विति । अन्तरिक्षजलाभावे दिवार्ककिरणैर्जुष्टमित्यादिना कथितं तद्गुणं जलं ग्राह्यम् । डल्हणस्त्वेवं व्याख्याति—आन्तरिक्षोदकालाभ आकाशगुणभूयिष्ठं भूमिस्थमुदकं गृह्यते ।

आह च चरकाचार्यः—

"किंचित्तुवरानुरसं तनु लघुशीतं सुगन्धि सुरसं च ।
अनभिष्यन्दि च यत्तत्क्षितिस्थमप्यैन्द्रवज्ज्ञेयम्" इति ॥

केचित्परिषेकमप्यनेनैवेच्छन्ति ॥ ३७ ॥

रक्ताभिष्यन्दे सर्पिष्पानादिक्रियाकलापमाह—

तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम् ॥ ३८ ॥
अक्ष्णोरपि समन्ताच्च पातनं च जलौकसाम् ।
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ ३९ ॥

वातावृताद्रक्ताज्जातायां रुजायां सर्पिष्पानं महत्या मात्रया। पित्तदुष्टरक्तजायां विरेकः। बहुशोणितजायां रुजायां जलौकःपातनम् । अल्पशोणितजायां पित्ताभिष्यन्दशमनो विधिः ॥ ३८ ॥ ३९ ॥

शिग्रुपत्ररसैः सेकः सर्वनेत्ररुजापहः ॥
शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसंपुटे ॥
घृतेन धूपितो हन्ति शोथघर्षाश्रुवेदनाः ॥ ४० ॥

सुगमम् ॥ ४० ॥

* ख. पुस्तके—कोष्णमाश्चोतनं मिश्रैर्भैषजैः सांनिपातिके । इत्यधिकमत्र ।

पथ्यागैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः ॥
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ॥ ४१ ॥

सुगमम् ॥ ४१ ॥

पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रै-
रन्तर्गर्भं दधाना पटुतरगुटिका पिष्टलोध्रेण भृष्टा ॥
तूलैः सौवीरसान्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्ता-
च्चक्षुष्कोपोपशान्तिं चिरमुपरिदृशो भ्राम्यमाणा करोति ॥४२॥

जातिसिन्धूत्थमिश्रैरिति । जातिसिन्धूत्थं सारसैन्धवम् । जातिर्जातिकलिका वा । अन्तर्गर्भं दधानेति । निम्बपत्रकल्कमध्ये लोध्रकल्कं दत्त्वा गुडकां कृत्वेत्यर्थः । भृष्टा घृते ॥ ४२ ॥

यथास्वमौषधं चूर्णं मात्रां बदरसंमिताम् ॥ ४३ ॥
विशुद्धे मृदुनि क्षौमे बद्ध्वा चाक्षि स्पृशेत्पुनः ॥
तेन दाहाश्रुपाकाश्च रागः शोफश्च शाम्यति ॥ ४४ ॥

सुगमम् ॥ ४३ ॥ ४४ ॥

बिल्वाञ्जनमाह—

बिल्वपत्ररसः पूतः साज्यसिन्धुकणान्वितः ॥
शुल्बे वराटिकाघृष्टो धूपितो गोमयाग्निना ॥ ४५ ॥
पयसाऽऽलोडितश्चाक्ष्णोः पूरणाच्छोफशूलनुत् ॥
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते ॥ ४६ ॥

शुल्बे ताम्रे । पयसा स्त्रीस्तन्येन ॥ ४५ ॥ ४६ ॥

सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घनमुपलसुघृष्टं धूपितं गोमयाग्नौ ॥
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोफं सरागम् ॥ ४७ ॥

उपलसुघृष्टमिति । उपलः प्रस्तरः । वराटिकाप्रघर्षणं प्रचरति ॥ ४७ ॥

अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते ॥

अयमेव विधिरिति । वाताद्यभिष्यन्दोक्तः ॥

अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ ४८ ॥

सुगमम् ॥ ४८ ॥

१ क. ख. पाठाग° । २ क. ख. °तः सैन्धवाज्यलवान्वितः ।

जलौकःपातनं संभौ नेत्रपाके विरेचनम् ॥
शिराव्यधं वा कुर्वीत सेकालेपांश्च शुक्रवत् ॥ ४९ ॥

सुगमम् ॥ ४९ ॥

विभीतकशिवाधात्रीपटोलारिष्टवासकैः ॥
क्वाथो गुग्गुलुना पेयः शोफशूलाक्षिपाकहा ॥ ५० ॥
पिल्लं च सव्रणं शुक्रं रागादींश्चापि नाशयेत् ॥
एतैरपि घृतं पक्कं रोगांस्तान्नाशयेद्बहून् ॥ ५१ ॥

एतैरपि घृतं पक्कमिति । गुग्गुलुः कल्कः । विभीतकादिक्काथो द्रवम् । कल्को गुग्गुलुः ॥ ५० ॥ ५१ ॥

आटरूषाभयानिम्बधात्रीमुस्ताक्षेकूलकैः ॥
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ ५२ ॥

आटरूषेत्यादिना योगः क्वाथः । अक्षमिह बेहडकम् ॥ ५२ ॥

पथ्यास्तिस्रो विभीतक्यः षड्धात्र्यो द्वादशेति च ॥
प्रस्थार्धसलिले क्वाथमष्टभागावशेषितम् ॥ ५३ ॥
पीत्वाऽभिष्यन्दमास्रावं रागं च तिमिरं जयेत् ॥
संरम्भरागशूलाश्रुनाशनं दृक्प्रसादनम् ॥ ५४ ॥

पीत्वेति सायमित्याहुः ॥ ५३ ॥ ५४ ॥

नेत्राभिघातो मूर्तेन दण्डादिनाऽमूर्तेन स्वेदाग्न्यादिना भवति तत्र मूर्तदण्डादिजाभिघातजायां रुजायां चिकित्सामाह—

नेत्रे त्वभिहते कुर्याच्छीतमाश्चोतनादिकम् ॥
दृष्टिप्रसादजननं विधिमाशु कुर्या-
त्स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ॥ ५५ ॥

आश्चोतनादिकमिति । आदिशब्दान्नस्यास्यलेपपरिषेचनतर्पणानि गृह्यन्ते ॥

दृष्टिप्रसादजननमिति । नयनावरकदोषनाशनं विधिमाशु कुर्यादिति पिण्डार्थः । कैर्दृष्टिप्रसादनमित्यत उक्तम् । स्निग्धैरित्यादि ॥ ५५ ॥

नेत्रे त्वभिहत इत्यादिना मूर्तानां दण्डादीनामभिघाते यच्चिकित्सितमुक्तं तदेव चिकित्सितममूर्तानामपि स्वेदादीनामभिघातेऽतिदिशन्नाह—

स्वेदाग्निधूमभयशोकरुजोपतापै-
रभ्याहतामपि तथैव भिषक्चिकित्सेत् ॥ ५६ ॥

१ क. घ. कसं । २ क. घ. °गांस्तांस्तान्हरेद्घृतम् ।

स्वेदादिकृता रुजा एवोपतापा रोगा रोगकारकत्वादुच्यन्ते। अभ्याहतामित्यतः परं दृष्टिमिति द्रष्टव्यम्। तथैवेत्यनन्तरोक्तविधिना ॥ ५६ ॥

आगन्तुदोषं प्रसमीक्ष्य कार्यं वक्त्रोष्मणा स्वेदितमादितस्तु ॥
आश्च्योतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात् ॥ ५७ ॥

आगन्तुदोषमिति। धूमाद्युपप्लवम्। वक्त्रोष्मणा वस्त्रपुटगृहीतेन। यच्चापि पित्तक्षतजापहमिति। पित्तजे रक्तजे चाभिष्यन्दे यदुक्तं भेषजं तदपि हितमित्यर्थः ॥ ५७ ॥

सूर्योपरागानलविद्युतादिविलोकनेनोपहतेक्षणस्य ॥
संतर्पणं स्निग्धहिमादि कार्यं सायं निषेव्यास्त्रिफलामयोगाः ॥ ५८ ॥

सुगमम् ॥ ५८ ॥

निशाब्दत्रिफलादार्वीसितामधुकसंयुतम् ॥
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ॥

सुगमम् ॥

इत्कटाङ्कुरजस्तद्वत्स्वरसो नेत्रपूरणम् ॥ ५९ ॥

सुगमम् ॥ ५९ ॥

आजं घृतं क्षीरपात्रं मधुकं चोत्पलानि च ॥
जीवकर्षभकौ चैव पिष्ट्वा सर्पिर्विपाचयेत् ॥
सर्वनेत्राभिघातेषु सर्पिरेतत्प्रशस्यते ॥ ६० ॥

आजं घृतं प्रस्थमानं पाकार्थं क्षीरपात्रश्रुतेः। द्विरुच्चारणमिह घृतस्य नस्ये तर्पणे च हितत्वप्रतिपादनार्थम्। क्षीरं गव्यमविशेषणत्वात्। जेज्जटस्त्वाजं घृतं कल्कमेवाऽऽह ॥ ६० ॥

इदानीं पटलावगाहनविशेषेणाभिघातस्य साध्ययाप्यासाध्यविशेषमाह—

प्रथमे पटले दोषः साध्यः स्यादभिघातजः ॥
द्वितीये पटले याप्यस्तृतीये च न सिध्यति ॥ ६१ ॥

सुगमम् ॥ ६१ ॥

सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम् ॥
स्तन्योदकार्धे कर्तव्यं शुष्कपाके तदञ्जनम् ॥ ६२ ॥

स्तन्योदकार्धमिति। स्त्रीक्षीरजलयोर्मिलितयोः समुदायतोऽर्धमानम्। सैन्धवादीनां घृतान्तानां समो भागः। सैन्धवदारुनागराणां कल्कं मातुलुङ्गरसादिद्रव्यचतुष्टयेनाऽऽम्राभ्याञ्जनं कार्यं रसक्रिया वा। स्तन्योदकाभ्यामिति पाठान्तरं सुगमम् ॥ ६२ ॥

---

१ क. च. स्रोतसां।

वाताभिष्यन्दक्रियामन्यस्मिन्नपि वातजेऽक्षिरोगेऽतिदिशन्नाह—

वाताभिष्यन्दवच्चान्यवाते मारुतपर्यये ॥

सुगमम् ॥

अन्यतोवातमारुतपर्यययोः सामान्यां चिकित्सामभिधाय विशेषचिकित्सामाह—

पूर्वभक्तहितं सर्पिः क्षीरं वाऽप्यथ भोजने ॥ ६३ ॥

पूर्वभक्तमिति । भक्तात्पूर्वम् । अन्यतोवाते वातपर्यये वा क्षीरं भोजने पित्तरक्तान्वयादुक्तम् ॥ ६३ ॥

वृक्षादन्यामित्यादिना तदेव घृतमाह—

वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि ॥
सक्षीरं कर्कटरसे सिद्धं चात्र घृतं पिबेत् ॥ ६४ ॥

वृक्षादनी वन्दाकः । वृक्षकलम्बुकेत्यन्ये । वृक्षादन्यादिभिः कल्कः । क्षीरं स्नेहसमम् । कर्कटरसस्त्रिगुणः । एवं घृतं साध्यम् । अन्ये त्वेवं व्याख्यानयन्ति । वृक्षादन्यादीनां सप्तद्रव्याणामत्र कषायः । अगर्तघृतमिदम् ॥ ६४ ॥

अम्लाध्युषितशान्त्यर्थं कुर्याल्लेपांश्च शीतलान् ॥ ६५ ॥

सुगमम् ॥ ६५ ॥

तैल्वकं त्रैफलं सर्पिर्जीर्णं वा केवलं पिबेत् ॥
शिराव्यधं विना कार्यः पित्तस्यन्दहरो विधिः ॥ ६६ ॥

तैल्वकघृतं वातव्याधिचिकित्सितोक्तम् । त्रैफलं त्रिफलाक्वाथकल्कसाधितम् । केवलमसंस्कृतम् । शिराव्यधं विनेति । शिराव्यधवर्जनं च व्याधिस्वाभाव्यात् ॥ ६६ ॥

शिरोत्पातचिकित्सामाह—

सर्पिः क्षौद्रं चाञ्जनं स्याच्छिरोत्पातस्य भेषजम् ॥

सर्पिर्गव्यं घृतम् । अञ्जनं सौवीराञ्जनम् । रसाञ्जनमित्यन्ये । भेषजमञ्जनरूपम् ॥

तद्वत्सैन्धवकासीसं स्तन्यघृष्टं च पूजितम् ॥ ६७ ॥

तद्वदिति । शिरोत्पाते भेषजम् । कासीसं धातुकासीसम् ॥ ६७ ॥

शिराहर्षेऽञ्जनं कुर्यात्फाणितं मधुसंयुतम् ॥
मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ॥
वेतसाम्लं स्तन्ययुक्तं फाणितं तु ससैन्धवम् ॥ ६८ ॥

फाणितं द्रवगुडः । तार्क्ष्यशैलं रसाञ्जनम् । ससैन्धवमित्यस्य स्थाने समाक्षिकमिति पाठान्तरम् । ससैन्धवमिति पाठेऽपि मधुनैवाञ्जनम् । वेतसाम्लं स्तन्ययुक्तमित्यस्य स्थाने

१ क. रावेषं । २ क. घ. ससैन्धवम् ।

वेत्राम्लं स्तन्यसंयुक्तमिति पाठान्तरम् । वेत्राम्लमम्लवेतसम् । अन्ये वेत्रं वेत्रकरीरम् । अम्लमम्लवेतसं धान्याम्लं वा । अम्ल्रीका वेति व्याख्यानयन्ति । तत्तु जैज्जटाचार्येण दूषितम् । फाणितं मधुयुक्तमेकमञ्जनं मधुयुक्तं तार्क्ष्यशैलं द्वितीयमञ्जनं कासीसं ससैन्धवं मधुयुक्तं तृतीयमञ्जनं वेतसाम्लं स्तन्ययुक्तं ससैन्धवं फाणितं चतुर्थमञ्जनम् ॥ ६८ ॥

गव्यक्षीरोत्थितं सर्पिस्तर्पणार्थं विधीयते ॥
दृष्टिप्रसादनं श्रेष्ठं तिमिरस्यापकर्षणम् ॥ ६९ ॥
अभिष्यन्दाधिमन्थाभ्यां कर्षतेऽक्ष्णि बलावहम् ॥
दोषानुत्सादयत्याशु तथैवाशु नियच्छति ॥ ७० ॥

सुश्रुतेन तर्पणविधौ घृतमण्ड उक्तः । घृतस्योपर्यच्छो भागो घृतमण्डस्तं च घृतमण्डं स्वभावतो विलीनमपि श्लक्ष्णघृतशर्करापगमार्थं विलीनं पाकातिक्रमस्य परिहारार्थमुष्णोदकेन कृत्वा नाग्नौ तथा यथा स्वदोषौषधसंस्कृतमसंस्कृतं वा दोषावस्थापेक्षया शीतमुष्णं वा प्रयोजयेदित्याचार्यः ॥ ६९ ॥ ७० ॥

तर्पणं कथं कार्यमित्याह—

उत्तानशायिनः कार्यं निश्चलस्य यथासुखम् ॥ ७१ ॥
प्रतिसूर्याभिरहिते नीरजोधूममारुते ॥
गृहे सुखे निराबाधे वीतक्रोधभयस्य च ॥ ७२ ॥
माषपिष्टमयाधारं दृढीकृत्यापरिस्रवम् ॥
अर्धाङ्गुलोर्ध्वविस्तारं मूले द्व्यङ्गुलमेव च ॥ ७३ ॥
प्रमाणेनाक्षिकोशस्य यथा स्यान्नाक्षिरोधकृत् ॥
पक्ष्माणि यावन्मज्जन्ति रोमान्तादाभ्रुवस्तथा ॥ ७४ ॥
ततो वस्त्रेण पीतेन नीलेन हरितेन वा ॥
पत्रैर्वाऽऽच्छाद्य नयने ततः पश्येद्यथासुखम् ॥ ७५ ॥

माषपिष्टमयाधारं माषपिष्टमयपालिम् । अपरिस्रवं छिद्ररहितम् । प्रमाणेनाक्षिकोशस्येति । अनेन तिर्यक्पूरणे स्नेहस्य मात्रोक्ता । पक्ष्माणि यावदित्यादिनोर्ध्वपूरणस्नेहस्य मात्रोक्ता भवति ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

तर्पणं कियत्कालं स्थाप्यमिति दर्शयन्नाह—

वाचां सहस्रमात्रं वा धारयेन्मारुतामये ॥
पित्तजे रक्तजे चाष्टौ कफजे षट्शतानि च ॥
संनिपातात्मके सप्त पञ्च स्वस्थविधौ तथा ॥ ७६ ॥

वाक्शब्देनात्र मात्रा प्रोच्यते । एतच्चोत्तमं प्रमाणम् । दोषबलापेक्षया ह्रासोऽपि कर्तव्यः । केचित्संध्यादिरोगस्थानविशेषेण कालविशेषमाहुः । तद्यथा—त्रीणि वाक्श-

तानि संधिरोगेषु। एकं शतं वर्त्मरोगेषु। पञ्च शतानि शुक्लरोगेषु। सप्त शतानि कृष्णजेषु। दश शतानि सर्वजेषु। दृष्टावपि दशाष्टौ वेति ॥ ७६ ॥

ततश्चापाङ्गतः स्नेहं स्रावयित्वाऽक्षि शोधयेत् ॥
प्रायोगिकेण धूमेन कफमस्य विशोधयेत् ॥ ७७ ॥

अपाङ्गतोऽपाङ्गाद्भ्रूपुच्छान्तप्रदेशादित्यर्थः। स्नेहं स्रावयित्वा शलाकाकृतद्वारेण ॥७७ ॥

कति दिनानि तर्पणप्रयोगस्तमाह—

स्वस्थवृत्ते विधातव्यं त्र्यन्तरं तर्पणं भवेत् ॥
अहन्यहनि वातोत्थे पित्तरक्ते दिनान्तरम् ॥ ७८ ॥
तर्पणं संनिपातोत्थे त्र्यन्तरं त्र्यन्तरं कफे ॥
कवुष्णं कफवाय्वोस्तु शीतलं पित्तशोणिते ॥ ७९ ॥

सुगमम् ॥ ७८ ॥ ७९ ॥

सुखस्वप्नावबोधत्वं वैशद्यं वर्णपाटवम् ॥ ८० ॥
निर्वृतिर्व्याधिसंशान्तिः क्रियालाघवमेव च ॥
तर्पणे तृप्तिलिङ्गानि सम्यगेतानि लक्षयेत् ॥ ८१ ॥

वैशद्यं मलाभावः। वर्णपाटवं श्वेतपीतादेर्वर्णस्य यथार्थग्रहणम्। अन्ये तु नेत्रगतस्यैव शुक्लकृष्णादेर्वर्णस्य नैर्मल्यमाहुः। निर्वृतिः सुखम्। व्याधिशान्तिर्व्याधेरभावः। क्रियालाघवमिति। क्रियाणां निमेषोन्मेषादीनां लाघवं शीघ्रता। अन्ये तु क्रिया निमेषोन्मेषणादिकाः। लाघवं नेत्रयोरेव लघुतेति। निर्वृतिस्तात्कालिकं सुखमात्रम्। व्याधिशान्तिस्तात्कालिकोर्दत्वाचि(?)। इति सर्वजेषु ॥ ८० ॥ ८१ ॥

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत् ॥

सुगमम् ॥

इदानीं रक्तविस्रावणविरेचनशिरोविरेचनप्रदेहपरिषेचननस्यधूमाश्चोतनाभ्यञ्जनतर्पणपुटपाकैर्यथास्वं संपादितस्य पुंसः शुक्रघ्नान्यञ्जनान्याह—

कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च ॥
कांस्ये निघृष्टं स्तन्येन क्षतशुक्रार्तिरोगजित् ॥ ८२ ॥

तिन्दुकं तिन्दुकस्य फलम्। रूप्यं रूप्यचूर्णम्। स्तन्यं यद्यपि सर्वक्षीरवाचकं तथाऽपि स्तन्यमत्र नेत्ररोगहितं नार्या एव ग्राह्यम् ॥ ८२ ॥

चन्दनं गैरिकं लाक्षा मालतीकलिकान्विता ॥
व्रणशुक्रहरा वर्तिः शोणितस्य प्रसादनी ॥ ८३ ॥

---

१ घ. °दक्षाचित्। इ° । २ क. °तिराग° ।

इयं वर्तिर्गगनाम्बुना शीताम्बुना वा पिष्ट्वा कार्या । एवमन्यत्रापि द्रवविशेषानुक्तौ । छायाविशोषणं च सर्ववर्तियोगे ॥ ८३ ॥

शिरया वा हरेद्रक्तं जलौकाभिश्च लोचनात् ॥ ८४ ॥

सुगमम् ॥ ८४ ॥

एकं वा पुण्डरीकं च च्छागक्षीरेण सेवितम् ॥
रागाश्रुवेदना हन्यात्क्षतपाकात्ययाजकाः ॥ ८५ ॥

सुगमम् ॥ ८५ ॥

धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वलोध्रं खदिरस्तिलाश्च ॥
क्वाथः सुशीतो नयने निषिक्तः सर्वप्रकारं विनिहन्ति शुक्रम् ॥ ८६ ॥

सर्वप्रकारमिति । सव्रणमव्रणं च ॥ ८६ ॥

तुत्थकं वारिणा युक्तं शुक्रं हन्त्याक्षिपूरणात् ॥

सुगमम् ॥

समुद्रफेनदक्षाण्डत्वक्सिन्धूत्थैः समाक्षिकैः ॥
शिग्रुबीजयुतैर्वर्तिः शुक्रघ्नी शिग्रुवारिणा ॥ ८७ ॥

दक्षाण्डत्वगिति । दक्षाण्डः कुक्कुटः । समाक्षिकैरिति । माक्षिकं धातुमाक्षिकम् । शिग्रुवारिणा शिग्रुस्वरसेन । दक्षाण्डत्वगित्यादियोगचूर्णं मध्वक्तशलाकया च गृहीत्वाऽञ्जनं कार्यम् । एवं सर्वत्र चूर्णाञ्जने ॥ ८७ ॥

दक्षाण्डत्वक्शिलाशङ्खकाचचन्दनगैरिकैः ॥
तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः ॥ ८८ ॥

सुगमम् ॥ ८८ ॥

अव्रणे तथैकपटलगते द्वित्रादिपटलगते वा कर्कशे वा सव्रणे शुक्रे घर्षणमाह—

शिरीषबीजमरिचपिप्पलीसैन्धवैरपि ॥
शुक्रस्य घर्षणं कार्यमथवा सैन्धवेन च ॥ ८९ ॥

सैन्धवेनेति । श्लक्ष्णखण्डेन ॥ ८९ ॥

गृहीत्वा नक्तमालस्य फलचूर्णं सुभावितम् ॥ ९० ॥
रसेन हि पलाशस्य कुसुमोत्थेन धीमता ॥
वर्तिर्नेत्राञ्जने योज्या अशेषकुसुमापहा ॥ ९१ ॥

सुगमम् ॥ ९० ॥ ९१ ॥

सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभयः ॥
सताम्ररजसो वर्तिः पिष्टा शुक्रविनाशनी ॥ ९२ ॥

सुगमम् ॥ ९२ ॥

क्षुण्णपुंनागपत्रेण परिभावितवारिणा ॥
श्यामाकाथाम्बुना वाऽथ सेचनं कुसुमापहम् ॥ ९३ ॥

श्यामाकाथाम्बुनेति । श्यामाक्काथ एवाम्बु तेन । श्यामा श्यामलता । अत्र मध्वपि प्रक्षेपम् । कुसुमापहमिति । कुसुमं शङ्खेन्दुकुन्दकुसुमसमवर्णशुक्लं तन्नाशनम् ॥ ९३ ॥

शङ्खस्य भागाश्चत्वारस्ततोऽर्धेन मनःशिला ॥
मनःशिलार्धं मरिचं मरिचार्धेन सैन्धवम् ॥ ९४ ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रलेखनमुत्तमम् ॥
पिच्चटे मधुना योज्यमर्बुदे मस्तुना तथा ॥ ९५ ॥

शङ्खस्येति । शङ्खनाभिः(भेः) । एवं सर्वत्र ग्राह्या एकोत्तरमात्रया द्विगुणमात्रया वा न्यूनाधिकमात्रया वा । योगानां काचिद्विशिष्टा शक्तिः संपद्यते । ऋषय एव जानन्ति पुरुषोत्प्रेक्षाणामगम्यत्वात् ॥ ९४ ॥ ९५ ॥

ताप्यं मधुकसारो वा बीजं चाक्षस्य सैन्धवम् ॥
मधुनाऽञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये ॥ ९६ ॥

ताप्यं स्वर्णमाक्षिकम् । बीजं चाक्षस्येति । विभीतकस्य फलमध्यम् ॥ ९६ ॥

वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः ॥
क्षिप्रमञ्जनतो हन्ति शुक्रं चापि घनोन्नतम् ॥ ९७ ॥

सुगमम् ॥ ९७ ॥

तालस्य नारिकेलस्य तथैवारुष्करस्य च ॥
करीरस्य च वंशानां कृत्वा क्षारं परिस्रुतम् ॥ ९८ ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम् ॥
सप्तकृत्वोऽष्टकृत्वो वा सूक्ष्मचूर्णं तु कारयेत् ॥ ९९ ॥
एतच्छुक्रेष्वसाध्येषु कृष्णीकरणमुत्तमम् ॥
यानि शुक्राणि साध्यानि तेषां परममञ्जनम् ॥ १०० ॥

तालवृक्षस्य च्छटा । नारिकेलस्य फलास्थि । अरुष्करफलम् । वंशकरीरस्य प्राक्स्युण्डकम् । एतत्सर्वं दग्ध्वा भस्म ग्राह्यम् । तच्च भाव्यद्रव्यसमं गृहीत्वा चतुर्गुणेन मस्तुणेन वाऽम्बुना निष्काथ्यार्धशेषे पुनरेकविंशतिवारान्परिस्राव्य स्वच्छेन तेनाम्बुना सप्ताष्टौ वा वारान्करभास्थिचूर्णं भाव्यम् । एतच्चूर्णं मध्वक्तशलाकया संगृह्य शुक्रदेशं घर्षयेत् । ततस्त्रिफलाकाथेनाक्षिप्रक्षालनमिति कर्ममार्गः । क्षारेणेति । क्षाराम्बुना । शुक्रेष्वसाध्येषु कृष्णीकरणमित्यनेनासाध्यशुक्रस्य विवर्णनाशनं परमेतन्न पुनः शुक्रनाशनमिति दर्शयति । अत्र शुक्राणि साध्यानीति पाठ एव युक्तो न तु शुक्राण्यसाध्यानीति तेषां परममञ्जनमित्यभिधानात् । अञ्जनस्य हि परमत्वं साध्यशुक्रस्य साधनेन संगतम् । ॥ ९८ ॥ ९९ ॥ १०० ॥

पटोलाद्यं घृतमाह—

पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ॥
दुरालभां पर्पटकं त्रायन्तीं च पलोन्मिताम् ॥ १०१ ॥
प्रस्थमामलकानां च क्वाथयेन्नल्वणेऽम्भसि ॥
पादशेषे रसे तस्मिन्घृतप्रस्थं विपाचयेत् ॥ १०२ ॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ॥
सपिप्पलीकैस्तत्सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥ १०३ ॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम् ॥
कामलाज्वरवीसर्पगण्डमालाहरं परम् ॥ १०४ ॥

कुटजस्य फलम् । शुक्रयोरिति । सव्रणाव्रणयोः ॥ १०१ ॥१०२॥१०३॥१०४॥

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः ॥
तैलं नृणां तिमिरशुक्रशिरोक्षिशूल-
पाकात्ययाञ्जयति नस्यविधौ प्रयुक्तम् ॥ १०५ ॥

सुगमम् । कृष्णाद्यं तैलम् ॥ १०५ ॥

सैन्धवं वाजिपादं च गोरोचनसमन्वितम् ॥
सेलुत्वग्रससंयुक्तं पूरणं चाजकापहम् ॥ १०६ ॥

वाजिपादमपराजिताऽश्वखुरो वा । अनेन प्रचारः । सेलुर्बहुवारः ॥ १०६ ॥

शशकस्य शिरःकल्के शेषाङ्गक्वथिते जले ॥
घृतस्य कुडवं पक्वं पूरणं चाजकापहम् ॥ १०७ ॥

शेषाङ्गक्वथिते जल इति । शेषाङ्गपाकार्थं पानीयशरावाः षोडश । शेषशरावाश्चत्वारः । शशकाद्यं घृतम् ॥ १०७ ॥

शशकस्य कषायेण सर्पिषः कुडवं पचेत् ॥
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥ १०८ ॥
छागल्याः पूरणाच्छुक्रक्षतपाकात्ययाजकाः ॥
हन्ति भ्रूशङ्खशूलं च दाहरागौ विशेषतः ॥ १०९ ॥

शशकस्य कषायेणेति । आकृतिमानाच्छशकस्य गुडकमेकम् । अत्र क्वाथार्थं जलस्य शरावा द्वादश शेषशरावास्त्रयः किंवा शरावाः षोडश शेषाश्चत्वारः । अनेन प्रचारः ॥ १०८ ॥ १०९ ॥

---

१ घ. 'वर्णत्व' । १ क. ख. 'पाके तु स' ।

न विना शोणितं शुक्रक्षतपाकात्ययाजकाः ॥
भवन्ति रुधिरं तेषु जलौकोभिरतो हरेत् ॥ ११० ॥

सुगमम् । कृष्णजेषु ॥ ११० ॥

अतः परं दृष्टिजानां रोगाणां चिकित्सितम्—

मूलं दृष्टिविनाशस्य तिमिरं समुदाहृतम् ॥
ऋषिभिस्त्वरितं तस्मात्तस्य कुर्याच्चिकित्सितम् ॥ १११ ॥

सुगमम् ॥ १११ ॥

एकदेशे तु यो दोषो दृष्ट्यां तिष्ठति पिण्डितः ॥
यत्संस्थानः स भवति तादृशं तेन पश्यति ॥
तृतीये पटले काचश्चतुर्थे नीलिकाद्वयम् ॥ ११२ ॥

सुगमम् ॥ ११२ ॥

इदानीं मन्दधियां सुखस्मरणाय साध्यादिभेदमाह[1]—

साध्यमप्राप्तरागं स्यात्तिमिरं च क्रियावतः ॥
याप्यं संप्राप्तरागं स्याद्वर्ज्यं पटलतां गतम् ॥ ११३ ॥

आद्यं पटलमाश्रितं तिमिरमरागि साध्यं द्वितीये रागिकृतं तृतीये संप्राप्तरागं याप्यम् ॥ ११३ ॥

त्रिफलाघृतं मधु यवाः पादाभ्यङ्गः शतावरीमुद्गाः ॥
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयम् ॥ ११४ ॥

त्रिफलाघृतमिति । त्रिफलाचूर्णकाथादिना घृतं पक्वम् । अथवा त्रिफला चक्षुष्या तथा घृतं चक्षुष्यं तच्च पुराणं ग्राह्यमिति भिन्ना पदद्वयी ।

तथा च सुश्रुतः—

"घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकान्यवानपि ।
निषेवमाणस्य नरस्य यत्नतो भयं सुघोरात्तिमिरान्न विद्यते" इति ॥११४॥

आहारोपयोगिचक्षुष्यशाकान्याह—

जीवन्तिशाकं सुनिषण्णकं च सतण्डुलीयं वरवास्तुकं च ॥
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलं च ॥ ११५ ॥

जीवन्तिशाकं कर्णाटदेशे प्रसिद्धं डोडीका, इति लोके । सुनिषण्णकं चतुष्पत्राः । अन्ये शिखिलिकामाहुः । वरवास्तुकं ट(प)कवास्तुकम् । चिल्ली चिल्लाशाकम् । चिल्ली गौडवास्तुकम् । मूलकपोतिका चेति । चातिका । शाकुनिकं च जाङ्गलं शकुनिमांसम् ।

---

1 क. घ. साध्यं चिकित्सरा ।

श(शा)कुनजाङ्गलमिति पाठान्तरे मांसमिति शेषः । शाकुनं लावादिकम् । जाङ्गला एणहरिणादयः । तद्भवं जाङ्गलम् ॥ ११९ ॥

पटोलकर्कोटककारवेल्लवार्ताकतर्कारिकरीरजानि ॥
शाकानि शिग्रुवार्तगलानि चैव हितानि दृष्टेर्घृतसाधितानि ॥ ११६ ॥

तर्कारी, अरणिका । करीरो गूढपत्रो मरुजस्तरुः । शिग्रुः सौभाञ्जनकः । आर्तगलो नीलसहचरः ॥ ११६ ॥

तिमिरं रागतां याति रागात्काचत्वमेति च ॥
काचात्संजायते नीली तदाऽन्धो जायते नरः ॥ ११७ ॥

सुगमम् ॥ ११७ ॥

सशमनमाह—

लिह्यात्सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढां तिमिरेऽथ पित्तजे ॥
समीरजे तैलयुतां कफात्मके
मधुप्रगाढां विदधीत युक्तितः ॥ ११८ ॥

सदेति नित्यग आवस्थिके च काल इत्यर्थः । घृतप्रगाढामिति । लेहोक्तमानाधिकं घृतं युक्तम् । पित्तज इत्यत्रानुक्तमपि रक्तजतिमिरे बोद्धव्यम् । तत्रापि घृतेन त्रिफलाप्रयोगः ।

केचित्—"सदाऽवलिह्यात्त्रिफलां सुचूर्णितां घृतप्रगाढां तिमिरार्दितो नरः ।
कफाभिभूतः खलु तैलसंयुतां मधुप्रगाढामपि वा प्रयोजयेत्" ॥

इतीदृशं पाठं पठन्ति । स च जेज्जटाचार्येण दूषितः । तस्मात्पूर्वपाठ एव न्याय्यः । युक्तित इति । मात्रया मात्रया त्रिफलाचूर्णं गृहीत्वा लिह्यादित्यर्थः ॥ ११८ ॥

कल्कः क्वाथोऽथ वा चूर्णस्त्रिफलाया निषेवितः ॥
मधुना हविषा वाऽपि समस्ततिमिरान्तकृत् ॥ ११९ ॥

सुगमम् ॥ ११९ ॥

यस्त्रैफलं चूर्णमपथ्यवर्जी सायं समश्नाति हविर्मधुभ्याम् ॥
स मुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्यः ॥ १२० ॥

सुगमम् ॥ १२० ॥

सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ १२१ ॥

सुगमम् ॥ १२१ ॥

---

१ घ. 'रातुरो न' ।

त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥
जाता रोगा विनश्यन्ति न भवन्ति कदाचन ॥ १२२ ॥

सुगमम् ॥ १२२ ॥

जलगण्डूषैः प्रातर्बहुशोऽम्भोभिः प्रपूर्य मुखरन्ध्रम् ॥
निर्दयमुक्षन्नक्षि क्षपयति तिमिराणि ना सद्यः ॥ १२३ ॥

सुगमम् ॥ १२३ ॥

भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते ॥
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ १२४ ॥

सुगमम् ॥ १२४ ॥

रविरिव भूगततिमिरं विनिहन्ति नार्वनात्सर्पिः ॥
शतवर्षस्थितकठिनं सप्ताहादञ्जनात्प्रियतम् ॥ १२५ ॥

सुगमम् ॥ १२५ ॥

सुखावतीवर्तिमाह—

कतकस्य फलं शङ्खं सैन्धवं त्र्यूषणं सिता ॥
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥ १२६ ॥
सर्वमेतत्समं कृत्वा छागक्षीरेण पेषयेत् ॥
तिमिरं पटलं काचमर्म शुक्रं व्यपोहति ॥
कण्डूक्लेदार्बुदं हन्ति मलं चाऽऽशु सुखावती ॥ १२७ ॥

इयं वर्तिः सपित्तान्वये तिमिरे भद्रा । क्षौद्रमत्राञ्जनार्थम् । सर्वमेतत्सममित्यादिश्लोकस्य स्थाने कुक्कुटाण्डकपालानि वर्तिरेषा व्यपोहतीति पाठान्तरम् ॥ १२६ ॥ १२७॥

चन्द्रोदयां वर्तिमाह—

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च ॥ १२८ ॥
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥
सर्वमेतत्समं कृत्वा छागक्षीरेण पेषयेत् ॥ १२९ ॥
नाशयेत्तिमिरं कण्डूपटलान्यर्बुदानि च ॥
अधिकानि च मांसानि यश्च रात्रौ न पश्यति ॥ १३० ॥
अपि त्रिवार्षिकं पुष्पं मासेनैकेन नाशयेत् ॥
चन्द्रोदया नाम वर्तिर्नृणां दृष्टिविशोधनी ॥ १३१ ॥

१ क. घ. °र्वनं सर्पिः । २ घ. शरत्र° । ३ क. घ. °ष्टिप्रसादनी ।

इयं वर्तिः कफवातजतिमिरे भद्रा । अत्राञ्जनं जलेन । चन्द्रोदया नाम वर्तिः ॥ ॥ १२८ ॥ १२९ ॥ १३० ॥ १३१ ॥

दिवा न तु प्रयोक्तव्यं नेत्रयोस्तीव्रमञ्जनम् ॥
विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥ १३२ ॥
तस्मात्स्राव्यं निशायां तु ध्रुवमञ्जनमिष्यते ॥
रात्रिः स्वप्नगुणाच्चक्षुः पुष्यत्यञ्जनकर्षितम् ॥ १३३ ॥

सुगमम् ॥ १३२ ॥ १३३ ॥

यथा हि कनकादीनां मणीनां विविधात्मनाम् ॥
धौतानां [1]विविधा शुद्धिस्तैलचेलकरादिभिः ॥ १३४ ॥
एवं नेत्रेषु मर्त्यानामञ्जनाश्चोतनादिभिः ॥
दृष्टिर्निराकुला भाति निर्मले नभसीन्दुवत् ॥ १३५ ॥

सुगमम् ॥ १३४ ॥ १३५ ॥

हरीतक्यादिवर्तिमाह—

हरीतकी हरिद्रा च पिप्पल्यो लवणानि च ॥
कण्डूतिमिरजिद्वर्तिर्न क्वचित्प्रतिहन्यते ॥ १३६ ॥

इयं वर्तिः कफजे तिमिरे हिता । लवणानि चेति । तत्र चक्षुष्यत्वात्सैन्धवम् । जातौ(व्यक्तौ) बहुवचनम् । अत्र क्वचिन्न प्रतिहन्यत इत्यनेन पित्तादप्यनिवार्यतामस्य दर्शयति ॥ १३६ ॥

त्रिफला कुक्कुटाण्डत्वक्कासीसमयोरजः ॥
नीलोत्पलं विडङ्गानि फेनं च सरितां पतेः ॥ १३७ ॥
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने ॥
सप्तरात्रस्थितं भूयः पिष्ट्वा क्षीरेण वर्तयेत् ॥
एषा दृष्टिप्रदा वर्तिरन्धस्याभिन्नचक्षुषः ॥ १३८ ॥

भावयेदिति । स्थापयेत् । क्षीरेणेति । आजेनैव ॥ १३७ ॥ १३८ ॥

कुसुमिकावर्तिमाह—

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः ॥ १३९ ॥
जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश ॥
एषा कुसुमिकावर्तिर्गतं चक्षुर्निवर्तयेत् ॥ १४० ॥

कुसुमिकावर्तिः प्रचरति ॥ १३९ ॥ १४० ॥

---

1 क. घ. विमला ।

चन्दनत्रिफलापूगपलाशतरुशोणितैः ॥
जलपिष्टैरियं वर्तिरशेषतिमिरापहा ॥ १४१ ॥

पलाशतरुशोणितं पलाशपुष्पस्वरसः ॥ १४१ ॥

व्योषोत्पलाभयाकुष्ठताक्ष्यैर्वर्तिः कृता हरेत् ॥
अर्बुदं पटलं काचं तिमिरार्माश्रुनिस्रुतिम् ॥ १४२ ॥

सुगमम् ॥ १४२ ॥

त्र्यूषणं त्रिफलावक्रसैन्धवालमनःशिलाः ॥
क्लेदोपदेहकण्डूघ्नी वर्तिः शस्ता कफापहा ॥ १४३ ॥

वक्रं तगरपादिका ॥ १४३ ॥

एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा ॥
वर्तिरियं नयनसुखा तिमिरार्मपटलकाचाश्रुहरी ॥ १४४ ॥

सुगमम् ॥ १४४ ॥

चन्द्रप्रभामाह—

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका ॥
विभीतकस्य मज्जा तु शङ्खनाभिर्मनःशिला ॥ १४५ ॥
एतानि समभागानि अजाक्षीरेण पेषयेत् ॥
छायाशुष्कां कृतां वर्तिं नेत्रेषु च प्रयोजयेत् ॥ १४६ ॥
अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम् ॥
अधिमांसं मलं चैव यश्च रात्रौ न पश्यति ॥
वर्तिश्चन्द्रप्रभा नाम जात्यन्धमपि शोधयेत् ॥ १४७ ॥

अञ्जनं रसाञ्जनम्। श्वेतमरिचं सौभाञ्जनबीजम्। एवं सर्वत्र॥१४५॥१४६॥१४७

नागार्जुनपादानामञ्जनमाह—

त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनम् ॥
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दशम् ॥ १४८ ॥
द्रव्याण्येतानि संचूर्ण्य वर्तिः कार्या नभोम्बुना ॥
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥ १४९ ॥
नाशनी तिमिराणां च पटलानां तथैव च ॥
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम् ॥ १५० ॥
किंशुकस्वरसेनाथ पैल्यं पुष्पकरक्तताः ॥
अञ्जनाल्लोध्रतोयेन आसन्नतिमिरं जयेत् ॥ १५१ ॥

१ क. घ. मध्यं। २ क. नाशयेत्।

चिरं संछादिते नेत्रे बस्तमूत्रेण संयुता ॥
उन्मीलयत्यकृच्छ्रेण प्रसादं चाधिगच्छति ॥ १५२ ॥

जन्तुघ्नं विडङ्गम्। स्तन्यादिविशिष्टद्रवोपादानमञ्जनार्थम्। वर्तिस्तु सर्वत्रैव नभोम्भुना कार्या। किंशुकस्वरसेन किंशुकपुष्पस्वरसेन। नागार्जुनवर्तिः ॥ १४८ ॥१४९॥ ॥ १५० ॥ १५१ ॥ १५२ ॥

पिप्पलीं सतगरोत्पलपत्रां वर्तयेत्समधुकां सहरिद्राम् ॥
एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः ॥ १५३ ॥

तगरं तगरपादिका। उत्पलपत्रमुत्पलपुष्पपत्रम्। सुपर्णसममिति। सुपर्णो गरुडः सुपर्णसमत्वं नयनस्य दूरदर्शनत्वेनोक्तम् ॥ १५३ ॥

व्योषायश्चूर्णसिन्धूत्थत्रिफलाञ्जनसंस्कृता ॥
गुटिका जलपिष्टेयं कोकिला तिमिरापहा ॥ १५४ ॥

सुगमम् ॥ १५४ ॥

हरिद्रामलकीकृष्णकेतकश्वेतसर्षपैः ॥
व्योमवारियुता वर्तिः सर्वनेत्रामयापहा ॥ १५५ ॥

सुगमम् ॥ १५५ ॥

व्याघ्रीमुस्ताम्बुयष्ट्याह्वैः पिप्पलीसैन्धवान्वितैः ॥
अजाक्षीरोषितैस्ताम्रे वर्तिः सर्वाक्षिरोगनुत् ॥ १५६ ॥

सुगमम् ॥ १५६ ॥

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ॥ १५७ ॥
विडङ्गं भद्रमुस्तं च सप्तमं विश्वभेषजम् ॥
सर्वाणि समभागानि गवां मूत्रेण पेषयेत् ॥ १५८ ॥
कोलास्थिमात्रां गुटिकां छायाशुष्कां प्रकारयेत् ॥
वारिणा तिमिरं हन्ति मधुना पटलं तथा ॥ १५९ ॥
सिन्ध्वम्भसा च कण्डूं च स्त्रीस्तन्येन तु वेदनाम् ॥
सद्यः कोपं तु क्षीरेण किंशुकेन च पैच्चटम् ॥ १६० ॥

सुगमम् ॥ १५७ ॥ १५८ ॥ १५९ ॥ १६० ॥

त्रीणि कटूनि करञ्जफलानि द्वे रजनी सह सैन्धवकेन ॥
बिल्वतरोर्वरुणस्य च मूलं वारिधरं दशमं प्रवदन्ति ॥ १६१ ॥
हन्ति तमास्तिमिरं पटलं च पिच्चटशुक्रमथार्जुनकं च ॥
अञ्जनकं जनरञ्जनकं च दृक्क न नश्यति वर्षशतं च ॥ १६२ ॥

१ क. घ. 'तिचरं।

द्वे रजनी इति प्रयोगो रजनीशब्दस्य ह्रस्वेकारान्तस्य सद्भावात्साधुः। वारिधर-पाठे मुस्तकम्। तमस्तिमिरमिति। आन्ध्यकरत्वेन तमसः सधर्मकं तिमिरम् ॥ १६१ ॥ १६२ ॥

नीलोत्पलं विडङ्गानि पिप्पली रक्तचन्दनम् ॥
अञ्जनं सैन्धवं चैव सद्यस्तिमिरनाशनम् ॥ १६३ ॥

सुगमम् ॥ १६३ ॥

पत्रगैरिककर्पूरयष्टीनीलोत्पलाञ्जनम् ॥
नागकेसरसंयुक्तमशेषतिमिरापहम् ॥
त्रिधैवाञ्जनसंयोगो गुटिकारसचूर्णतः ॥ १६४ ॥

सुगमम् ॥ १६४ ॥

संगृह्योपरतानलक्तकरसेनाऽऽमृज्य गण्डूपदा-
ल्लाँक्षारञ्जिततूलवर्तिनिहितान्यष्टीमधून्मिश्रितान् ॥
प्रज्वाल्योत्तमसर्पिषाऽनलशिखासंतानजं कज्जलं
दूरासन्नदिवानिशान्धतिमिरप्रध्वंसकृच्चोदितम् ॥ १६५ ॥

उपरतान्मृतान्। आमृज्य संनीय। गण्डूपदांश्चूर्णितान्। लाक्षारञ्जिततूलमलक्तकम्। उत्तमसर्पिषा गव्यघृतेन ॥ १६५ ॥

भूमौ निघृष्टयाऽङ्गुल्या चाञ्जनं शमनं तयोः ॥
तिमिरकाचार्महरं धूमिकायाश्च नाशनम् ॥ १६६ ॥

एतत्कज्जलेन कोष्णेनाञ्जनम्। तयोरिति। दिवान्ध्यरात्र्यान्ध्ययोः ॥ १६६ ॥

त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे ॥
नागं सप्तनिषिक्तं करोति गरुडोपमं चक्षुः ॥ १६७ ॥

अत्र त्रिफलायाः क्वाथः। भृङ्गराजस्य स्वरसः। महौषधस्य क्वाथः कल्को वा। नागं सीसकम्। त्रिफलाक्वाथादावेकस्मिन्सप्तधा भावयित्वा सीसकशलाकां कुर्यात्। तया तिमिरहराञ्जनलिप्तया केवलया वा घृष्टयाऽञ्जनं भाविप्रयोगानुकारात् ॥ १६७ ॥

त्रिफलसलिलतोये भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधूत्रे ॥
प्रतिदिनमथ तप्तं सप्तधा सीसमेकं
प्रणिहितमथ पश्चात्कारयेत्तच्छलाकाम् ॥ १६८ ॥
सवितुरुदयकाले साञ्जना व्यञ्जना वा
करिकरिकसमेतानर्मपैच्छिल्यरोगान् ॥
असितसितसमुत्थान्संधिवर्त्माभिजाता-
न्हरति नयनरोगान्सेव्यमाना शलाका ॥ १६९ ॥

१ क. ख. रान्ताञ्जन। त्रि

विषकल्क इति । विषं मारकद्रव्यम् । मधुप्र इति । प्रवरे मधुनि व्यवहारात् । साञ्जना तिमिरहराञ्जनसहिता । व्यञ्जना तद्रहिता ॥ १६८ ॥ १६९ ॥

दद्यादुशीरनिर्यूहे चूर्णितं कणसैन्धवम् ॥ १७० ॥
तत्स्रुतं सघृतं भूयो यावत्क्षौद्रं क्षिपेद्घने ॥
शीते चास्मिन्हितमिदं सर्वजे तिमिराञ्जनम् ॥ १७१ ॥

उशीरपलस्य क्काथः । स च कणासैन्धवघृतानि मिलित्वा पादिकान्यष्टमांशे वा दत्त्वा पुनः पाकाद्घनः कार्यः । शीते तत्र पादिकमधुप्रक्षेपः । वैद्यप्रसारके तु लिखितम्—उशीरपलद्वयम् । जलशरावाः ४ शेषशरावः१ पूते प्रक्षेपः कणासैन्धवयोः प्रत्येकं प्रत्येकं माषाः ८ घृतकर्षः१ पुनः पक्के घने मधुकर्षः १ रसक्रियाञ्जनमिति ॥ १७० ॥ ॥ १७१ ॥

धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया ॥
पित्तानिलाक्षिरोगघ्नी तैमिर्यपटलापहा ॥ १७२ ॥

धात्रीक्काथे रसाञ्जनचूर्णं घृतं च पुनः पाकाद्रसक्रिया साध्या शीते मधुप्रक्षेपः । मानं पूर्वयोगवत् ॥ १७२ ॥

शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम् ॥
नस्यमेतेन दातव्यं महापटलनाशनम् ॥ १७३ ॥

यष्टीमधुसाधिततैलेन मिश्रितं शृङ्गवेरभृङ्गराजचूर्णं नस्यं किंवा भृङ्गराजस्य स्वरससमेन तैलेन मिश्रितेन शृङ्गवेरयष्ट्योश्चूर्णं प्रक्षिप्य नस्यम् ॥ १७३ ॥

श्लैष्मिके लिङ्गनाशे शस्त्रकर्म निर्दिशन्नाह—

लिङ्गनाशे कफोद्भूते यथावद्बुद्धिपूर्वकम् ॥
विद्ध्वा दैवकृते छिद्रे नेत्रं स्तन्येन सेचयेत् ॥ १७४ ॥

लिङ्ग्यते ज्ञायतेऽनयेति व्युत्पत्त्या लिङ्गशब्देन दृष्टिरुच्यते । तस्या नाशो लिङ्गनाशस्तस्मिन् । कफोद्भूत इत्यनेन च तेजःपित्तजश्च विद्धो न सिध्यतीति । सुश्रुतेऽप्युक्तम्—

"श्लैष्मिके लिङ्गनाशे तु कर्म वक्ष्यामि सिद्धये ।
न चेदर्धेन्दुघर्माम्बुबिन्दुमुक्ताकृतिः स्थिरः ॥
विषमो वा तनुर्मध्ये राजिमान्वा बहुप्रभः ।
दृष्टिस्थो लक्ष्यते दोषः सरुजो वा सलोहितः" इति ॥

दैवकृते छिद्र इति । अपाङ्गवर्तिनः शुक्लभागस्य मध्ये यत्तद्दैवकृतं छिद्रं तस्मिन् । यदुक्तं सुश्रुते—

"मतिमाञ्छुक्लभागौ द्वौ कृष्णान्मुक्त्वा त्वपाङ्गतः ।
उन्मील्य नयने सम्यक्सिराजालविवर्जिते ॥

नाधो नोर्ध्वं न पार्श्वाभ्यां छिद्रे दैवकृते ततः ।
शलाकया *ताम्रमय्या व्यधयेद्यववक्त्रया" इति ॥

अस्यार्थः । कृष्णात्कृष्णमण्डलात्प्रभृति द्वौ शुक्लभागौ त्यक्त्वाऽपाङ्गपक्षे, एकं शुक्लभागं त्यक्त्वा मध्ये दैवकृतं यच्छिद्रमस्ति । छिद्रमिव च्छिद्रं कर्णच्छिद्रवन्न परमार्थतश्छिद्रमस्ति तस्मिन्विध्येदिति । व्यधश्च तथा कर्तव्यो यथैकैव परं विछिद्यते त्वक्। सम्यग्विद्धलिङ्गं च सुश्रुत एवोक्तम् । तद्यथा—वारिबिन्द्वागमः +सम्यक्शब्दस्य व्यधने भवेदिति । असम्यग्विद्धे तु शोणितागमादि ॥ १७४ ॥

ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥

सुगमम् ॥

शलाकामाहृत्य किं कुर्यादित्याह—

नयनं सर्पिषाऽभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥

वस्त्रपट्टेन वेष्टयेदिति । सद्यः क्षतरोपणं लोध्ररक्तचन्दनत्रिफलापिण्डं दत्त्वा वस्त्रेण वेष्टनम् । महाराष्ट्रकास्तु धत्तूरमूलपिण्डं दत्त्वा वस्त्रेण वेष्टयन्ति ॥

ततो गृहे निराबाधे शयीतोत्तान एव च ॥ १७५ ॥

निराबाधे धूमवातातपरहिते । उत्तानशयनं दृष्टेर्ऋजुकरणार्थम् ॥ १७५ ॥

उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि च ॥
तत्कालं नाऽऽचरेदूर्ध्वं यन्त्रणा स्नेहपीतवत् ॥ १७६ ॥

क्षवथुः क्षुत् । तत्कालमिति । यावच्छलाका नेत्रे तिष्ठति । तत ऊर्ध्वं यन्त्रणा पीतस्नेहस्येवाऽऽहाराचारनियमः स्नेहपानोक्तः कार्य इत्यर्थः ॥ १७६ ॥

त्र्यहात्त्र्यहाच्च धावेत कषायैरनिलापहैः ॥

धावेत प्रक्षालयेत् । अनिलापहैरेरण्डमूलादिवातापहचक्षुष्यद्रव्यैः क्षीराम्बुसाधितैः ॥

प्रक्षालनानन्तरं किं कर्तव्यमित्याह—

वायोर्भयात्त्र्यहादूर्ध्वं स्वेदयेदक्षि पूर्ववत् ॥ १७७ ॥

पूर्ववदिति । अस्वेद्यामपि दृष्टिं वस्त्रेणाऽऽच्छाद्य बाह्यतो मृदु स्वेदयेद्वातश्लेष्मजयायेत्यर्थः ॥ १७७ ॥

दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् ॥
पश्चात्कर्म तु सेवेत लघ्वन्नं चापि मात्रया ॥ १७८ ॥

एवमुत्तानशयनादिना दशाहं नियम्य तदनन्तरं दृष्टिप्रसादनमञ्जनादि हितम् । पश्चात्कर्म तु सेवेतेति । दशाहात्परतो व्यथासद्भावे वातहरक्वाथधावनस्वेदनादि सेवेत किंवा यद्दृष्टिप्रसादनं दृष्टिनैर्मल्यजननं पश्चात्कर्म नावनसेकाश्चोतनतर्पणपुटपाकशिरोबस्त्यभ्यञ्जनप्रभृति तत्सेवेतेति योज्यम् । लघ्वन्नं चापीत्यत्र चकारो दशाहाभ्यन्तरेऽपि लघ्वन्नविधिसमुच्चयार्थः ॥ १७८ ॥

---

* प्रयत्नेन विश्वस्तमिति सुश्रुतपाठः । + भवेच्छब्दस्तथा व्यधे, इति सुश्रुतपाठः ।

इदानीं [illegible]व्यधाहाराचारजान्रोगानाह—

रागः शोफोऽर्बुदं चोषो बुद्बुदं केकराक्षिता ॥[1]
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः ॥
अहिताचारतो वाऽपि

अर्बुदमर्बुदाकारः शोफः । चोष आचूष्यत इव वेदनाविशेषः । बुद्बुदं बुद्बुदाकारः शोफः । केकराक्षिता वक्रदृष्टिता । सूकराक्षितेति पाठान्तरे सूकरस्येवाधोदृष्टिता ॥

तत्र चिकित्सामाह—

यथास्वं तानुपाचरेत् ॥ १७९ ॥

यथास्वं यथात्मीयं यथादोषमित्यर्थः ॥ १७९ ॥

इदानीं कर्कशशलाकाजनिते शूले तथा दुष्टव्यधजे च रोगे चिकित्सामुद्दिशन्नाह—

रुजायामक्षिरोगे वा भूयो योगान्निबोध मे ॥ १८० ॥

निबोध जानीहि । बुधिर्बोधन इति भौवादिकस्यायं प्रयोगः । न तु दैवादिकस्य बुध अवगमन इत्यस्य ॥ १८० ॥

कल्किता सघृता दूर्वा यवगैरिकसारिवाः ॥
मुखलेपे प्रयोक्तव्या रुजारागोपशान्तये ॥ १८१ ॥

सारिवोत्पलसारिवा । मुखलेप इति । नेत्रसमीपे ॥ १८१ ॥

पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि ॥
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ॥ १८२ ॥

पयस्याऽर्कपुष्पी क्षीरकाकोलीत्यन्ये । पत्रं पत्रकम् ॥ १८२ ॥

वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ॥
काकोल्यादिप्रतीवापं तद्युञ्ज्यात्सर्वकर्मसु ॥ १८३ ॥

वातघ्नानि भद्रदार्वादीनि । सर्वकर्मस्विति । नस्यलेपपानादिषु ॥ १८३ ॥

रुजारागयोर्द्वयोर्यद्यपि प्रतीकारः प्रस्तुतस्तथाऽपि प्रत्याबाधकरत्वेन केवलशूलस्यैव प्रतीकारं ब्रूते—

शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत् ॥
ततः शिरां दहेच्चापि मतिमान्कीर्तितं यथा ॥ १८४ ॥

शिरामिति । लालाटीम् । दहेच्चापि मतिमान्कीर्तितं यथेति । शिरामेव दहेद्-गुडोत्प[illegible]दिना । उक्तं च सुश्रुते—क्षौद्रगुडस्नेहास्तु शिरास्नायुसंध्यस्थिगतानामिति ॥ १[illegible] ॥

[illegible]रतः प्रसादार्थमञ्जने शृणु मे शुभे ॥ १८५ ॥

---

१ घ. रागे ।

अञ्जने इति । अञ्जनद्वयम् ॥ १८९ ॥

मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥
मालत्याश्चैव तुल्यानि मुक्तावैडूर्यमेव च ॥ १८६ ॥
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत् ॥
प्रविधाय च तद्वर्तिं योजयेदञ्जने भिषक् ॥ १८७ ॥

मेषशृङ्गस्य पुष्पाणीति । मेषशृङ्गी मेढासिङ्गी । मालती जाती । अ.वो.त्स्य येत् ॥ १८६ ॥ १८७ ॥

स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ॥
मरिचानि च तद्वर्तीः कारयेद्वाऽपि पूर्ववत् ॥ १८८ ॥

स्रोतसि यत्समुत्थितं सिन्धुस्रोतसि वर्णासास्रोतसि वा यत्समुत्थितं तत्स्रोतोञ्जनं तल्लक्षणं विदेहेनोक्तम्—

"वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति ।
स्रोतोञ्जनं प्रशंसन्ति चक्षुर्वेदार्थचिन्तकाः" इति ॥

तद्गुणानाह—

"अञ्जनं मधुरं स्निग्धं कषायं लेखनं हिमम् ।
पित्तरक्तविषच्छर्दिहिक्कां हन्ति सुदृष्टिदम् ॥
तत्र स्रोतोञ्जनं श्रेष्ठं तस्मात्सौवीरकाञ्जनम्" इति ॥

स्रोतोञ्जनं सौवीराञ्जनमित्यन्ये । विद्रुममिति । प्रवालम् । पूर्ववदिति । अजाक्षीं पिष्ट्वा ताम्रपात्रेण सप्ताहं स्थापयित्वा वर्तीः कुर्यादित्यर्थः । मेषशृङ्गस्येत्याद्येकं स्रोतोजमिति द्वितीयम् ॥ १८८ ॥

इदानीं दिवान्धे चूर्णाञ्जनमाह—

रसाञ्जनं रसक्षौद्रतालीसस्वर्णगैरिकैः ॥
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥ १८९ ॥

रसेति । जातीपत्ररस इत्यर्थः । आमलकीपत्ररस इत्यन्ये । स्वर्णगैरिकं दक्षिणापथभवमुत्तमलोहितं रक्तकश्मटगैरिकं वा । अत्र द्रवद्रव्यैः कठिनद्रव्यभावनां विधाय चूर्णाञ्जनं कर्तव्यम् । पित्तोपहतदृष्टये पित्तविदग्धदृष्टये । अन्ये गुटिकाञ्जनमिदं वर्णयन्ति ॥ १८९ ॥

इदानीं दिनरात्र्यन्धयोर्गुटिकाञ्जनमाह—

नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ॥
गुटिकाञ्जनमेतत्स्याद्दिनरात्र्यन्धयोर्हितम् ॥ १९० ॥

---

१ घ. मेढशृङ्गी । २ भ. च. ता वर्तीः

शकृद्रसपिष्टैर्गुटिकाञ्जनं दिनराज्यन्धयोः पित्तकफविदग्धदृष्टपरपर्या
तम् । किंच पित्तविदग्धायां रात्रावञ्जनं श्लेष्मविदग्धायां दिवे
नमीषद्रक्तं पद्मम् । उत्पलं नीलोत्पलम् । किञ्जल्कः केसरः । स
। गोशकृद्रसो गोमयरसः । केचिद्गोशकृद्रसस्थाने गोयकृद्रसेति
ब्दस्य पशुवाचित्वादजादयो गृह्यन्ते । यकृद्रसः कालखण्डरस इति
१९० ॥

न्ध्ये श्लेष्मविदग्धदृष्टपरपर्याये दिवान्ध्ये(न्धे) पित्तविदग्धदृष्टपरपर्याये

म्बित्रिकटून्यथाञ्जनं मनःशिला द्वे च *निशेऽगवां यकृत् ॥
यं गुटिकाऽथ वाऽञ्जनं प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥१९१॥

लवणम् । शम्बिशब्देनात्र हरिता मुद्गा ग्राह्याश्चक्षुष्यत्वात् । अन्ये
पाठं पठन्ति तत्रापि स एवार्थः । अञ्जनं रसाञ्जनं सौवीराञ्जन-
छागादीनाम् । यकृदित्यस्य स्थाने शकृदिति पाठान्तरम् । चन्दनं
ेति । वटीकृत्य । अथवाऽञ्जनमिति । चूर्णाञ्जनमथ वेत्यर्थः ॥१९१॥

छागयकृन्मध्ये पक्वा तद्रसपेषिता ॥
राद्धन्ति नक्तान्ध्यं तद्वत्सक्षौद्रमूषणम् ॥ १९२ ॥

तद्रसपेषिता तदुत्स्वेदाम्बुना पिष्टा । तद्वदिति । छागयकृन्मध्य
। ऊषणं मरिचम् ॥ १९२ ॥

न्ध्ये कफविदग्धदृष्टपरपर्याये प्रयोगमाह—

र्थं हि यकृत्प्रकल्पितं सुपूरितं मागधिकाभिरग्निना ॥
तद्यकृदञ्जनेन वा निहन्ति नक्तान्ध्यमसंशयं खलु ॥ १९३ ॥

प्रकल्पितं पाटितम् । अग्निनेत्यस्य स्थानेऽम्बुनेति पाठान्तरम् ।
यकृत्प्रकल्पितमित्यत्र गोधायकृदर्धपातमिति वा पाठश्छन्दःपूरणाय
तद्यकृदिति । तथाभूतं यकृत्खादितमञ्जने तु सा पिप्पली नक्तान्ध्यं
ः । तथाभूतं यकृद्भक्षितमञ्जनेन वा विहितं नक्तान्ध्यं शमयतीति
तु यकृत्कणाभ्यां मिलित्वाऽञ्जनमात्रेण । शकृदिति पाठान्तरम् ।
र्थे । असंशयमेवेत्यर्थः ॥ १९३ ॥

नि कथ्यन्ते—

* अत्र संधिः प्रामादिकः ।

१ घ. शकृत् ।

मुखनासादौर्गन्ध्यं पलितं चाकालजं हनुस्त [redacted]
श्वासं कासं शोषं हिक्कां स्तम्भं च [redacted]
मुखजाड्यमर्धभेदं रोगं [redacted]
रोगानथोर्ध्वजत्रोः सर्वान् यति [redacted]

अंशुमती शालिपर्णी। अक्षांशकैरिति। कर्षचतुर्भागकैः [redacted] माषकाधिकं पलं भवति। अनेनैव तैलकुडवः सा [redacted] संप्रदायात्। न च कल्कश्च स्नेहपादिक इत्यनेन विरोधः कल्क [redacted] ऽत्रैवोक्तं भृङ्गराजतैले। यष्टीमधुपलेन कल्क [redacted] तरीये कल्कस्य पलमेवोक्तम्।

[redacted] तैलस्य पचेत्कुडवं मधुकस्य पलेन कल्कपिष्टेन [redacted]
आमलकरसप्रस्थं क्षीरप्रस्थेन संयुतं कृत्वा ॥
अजितं नाम्ना तैलम्" इत्यादि।

कुडवश्च द्रवद्रव्याणामष्टपल एवेति बहुसंमतः पन्थाः। वि [redacted] कर्षभागिकैः। अस्मिन्पक्षे तैलप्रस्थ एव साध्यः। पूर्वव्याख्यया प्र [redacted] रिति। पैत्तिके तिमिरे सर्पिः पक्तव्यम्। नृपवल्लभे तैलघृते। [redacted]
॥ २१४ ॥ २१५ ॥ २१६ ॥ २१७ ॥ २१८ ॥

अतः परं शुक्लजानां रोगाणां चिकित्सामाह—

पिप्पली त्रिफला लाक्षा लोहचूर्णं ससैन्ध [redacted]
भृङ्गराजरसे घृष्टं गुटिकाञ्जनमिष्यते ॥
अर्मं सतिमिरं काचं कण्डूं शुक्रं तथाऽर्जुनम्
अजकानेत्ररोगांश्च हन्यान्निरवशेषतः ॥ [redacted]
॥ २१९ ॥ २२० ॥

चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम्
क्रमवृद्धमिदं चूर्णं शुक्रार्मादिविलेखनम् ॥
२२१ ॥

पुष्पाख्यताक्ष्यर्जसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः
पिष्टैस्तु माक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥ [redacted]

पुष्पाख्यं पुष्पकासीसं रीतीमलं वा। अमुना प्रचारः। [redacted]

१ क. 'खजिह्वयम'। घ. 'खजैव्यम'। २ क. घ. अर्म [redacted]

गैरिकमेव । माक्षिकरसेन माक्षिकरूपेण रसेन रसक्रियेयं न
२२२ ॥

क्षौद्रेण चाऽऽलोड्य स्थापितं वेणुगह्वरे ॥
न मधुना यस्मात्क्रियते तु रसक्रिया ॥ २२३ ॥
२ ॥
सामाह—
ष्णस्य सर्पिषः पानैर्विरेकालेपसेचनैः ॥
ातुशीतैः प्रशमयेच्छुक्तिकामञ्जनैस्ततः ॥ २२४ ॥
विरेचनाङ्गत्वेन विहितं *नान्येव ॥ २२४ ॥
ाण्याह—
ालमुक्तावैडूर्यशङ्खस्फटिकचन्दनम् ॥
र्णं रजतं क्षौद्रमञ्जनं शुक्तिकापहम् ॥ २२५ ॥
५ ॥
ने शर्करामस्तुक्षौद्रैश्चाऽऽश्च्योतनं हितम् ॥ २२६ ॥
६ ॥
ः क्षौद्रेण संयुक्तः कतकः सैन्धवेन वा ॥
तयाऽर्णवफेनो वा पृथगञ्जनमर्जुने ॥ २२७ ॥
ानुकारि, अम्बुप्रसादनं फलम् ॥ २२७ ॥
ामधुककट्वङ्गमस्तुक्षौद्राम्लसैन्धवैः ॥
र्णं हन्ति लौहित्यं रक्तराजीमथार्जुनम् ॥

विधिमशेषेण कुर्यादर्जुनशान्तये ॥ २२८ ॥
। पित्तजाभिष्यन्दोक्तं विधिम् । अन्यत्राप्युक्तम्—पित्ताभिष्यन्द-
न्तिकृदिति ॥ २२८ ॥
हीसितमरिचं नागरं सैन्धवं समम् ॥
तुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम् ॥ २२९ ॥
। सितमरिचं सौभाञ्जनबीजम् । इति शुक्लजेषु ॥ २२९ ॥
ामाह—
स्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ॥

---

* नान्येनेति भाति ।

---

१ घ. पिडका° ।

उपनाहस्य केवलकफजत्वादिह कफजमिति स्वरूपपरम् । पिप्प
परं प्रतिसारयेदिति द्रष्टव्यम् । भेदनप्रतिसारणाभ्यामप्रशमेऽस्य
च । डल्लणस्त्वेवं व्याख्याति—किंचित्पक्कः श्लेष्मोपनाहो भेद्यः । म
रक्तानुबन्धश्च प्रस्थनीयः । श्लेष्मोपनाहे भिन्ने लिखिते प्रस्थितेऽ
रेकमेव प्रतिसारणमिति ॥

विलिखेन्मण्डलाग्रेण प्रस्थयित्वा समन्ततः ॥

सुगमम् ॥ २३० ॥

पथ्याक्षधात्रीफलमध्यबीजैस्त्रिद्व्येकभागैर्विदधीत
तयाऽञ्जयेदश्रुमतिप्रवृद्धमक्ष्णोर्हरेत्कष्टमपि प्रकोपम्

त्रिद्व्येकभागैरिति । यथाक्रमेण ॥ २३१ ॥

स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत् ॥
क्षौद्रेणाऽऽज्येन पिप्पल्या मिश्रं विध्येच्छिरां त

स्रावेषु त्रिफलाक्वाथः पेयो न तु सेकैः । क्षौद्रेण पित्ते, आज्
कफे ॥ २३२ ॥

कृमिग्रन्थिचिकित्सामाह—

त्रिफलामूत्रकासीससैन्धवैः सरसाञ्जनैः ॥
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम् ॥ २३३

लोचनोचितस्वेदस्विन्नेऽनन्तरं भेदने सति । प्रतिसारणमिति ।
कोद्दिष्टं वक्ष्यमाणं रसाञ्जनमधुभ्यां प्रतिसारणम् । तदनन्तरं त्रि
कासीसादिप्रक्षेपेण रसक्रिया । सुश्रुते कृमिग्रन्थिचिकित्सायां वि

"सम्यक्स्विन्ने कृमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम्
त्रिफलातुत्थकासीससैन्धवैश्च रसक्रिया" ॥

तत्र त्रिफलाक्वाथेन तुत्थकासीससैन्धवावापेन रसक्रियेति । इति

स्वयं भिन्नाया अञ्जननामिकायाश्चिकित्सामाह—

स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामि
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्

भिन्नां स्वयम् । स्विन्नां भित्त्वा विनिष्पीड्येति । स्वे
कृत्वा । शिला मनःशिला । एला सूक्ष्मैला । नतं तगरम् । सिन्धू
सारयेत्, घर्षयेत् ॥ २३४ ॥

अभिन्नाञ्जननामिकाचिकित्सामाह—

रसाञ्जनमधुभ्यां तु भिन्नां(स्वा) वा शस्त्रकर्म
प्रतिसार्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥

स्वयमभिन्नामञ्जननामिकां पूर्ववत्स्विन्नां शस्त्रकर्मविद्भित्त्वा रसाञ्जनमधुभ्यां प्रतिसार्य बहूत्तरकालं दीपशिखोद्भवैः कज्जलाख्यैरञ्जनैर्योजयेदिति पिण्डार्थः । बहुवचनमत्र पौनःपुन्येनाञ्जनकरणाय ॥ २३५ ॥

स्वेदयेद्घृष्टयाऽङ्गुल्या हरेद्रक्तं जलौकसा ॥
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ॥ २३६ ॥

सुगमम् ॥ २३६ ॥

लगणस्य चिकित्सामाह—

प्रतिसारणमेकैकं भिन्ने लगण इष्यते ॥

रोचना गोरोचना । क्षारो यवक्षारः । एतानि प्रतिसारणान्यल्पे लगणभिन्ने सति योज्यानीति ज्ञेयम् । महालगणस्य भिन्ना चिकित्सा सुश्रुतेनोक्ता ।

तद्यथा—"महत्यपि च युञ्जीत क्षाराग्नी विधिकोविदः ।
प्रतिसारणमेकैकम्" इति ।

एकवचनेन गोरोचनादिभिरेकैकशः प्रतिसारणं विधेयमित्यर्थः । रोचनादिषु क्षौद्रयोगः प्रत्येकम् । प्रतिसारणमिह व्रणमुखे दानं न तु घर्षणम् ॥

निमिषे नासया पेयं सर्पिस्तेन च पूरणम् ॥ २३७ ॥

सुगमम् ॥ २३७ ॥

स्वेदयित्वा बिसग्रन्थिं छिद्राण्यस्य निराश्रयम् ॥
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥ २३८ ॥

बिसग्रन्थिं पक्वं स्वेदयित्वाऽनन्तरमस्य पक्वस्य बिसग्रन्थेः स्विन्नस्य च्छिद्राणि निराश्रयं भित्त्वा सैन्धवेनावचूर्णयेत् । निराश्रयमिति क्रियाविशेषणं निराश्रयं निरुत्सङ्गं यथा भवति तथा भित्त्वेत्यर्थः । आश्रयेऽल्पेऽपि सति व्याधेरस्य पुनः संभवात् ।

उक्तं हि—"बिसग्रन्थिं तथा भिन्द्याद्यथा स्यान्नाऽऽश्रयः क्वचित् ।
पुनः प्रवर्तते यस्मादल्पोऽप्याश्रयसंस्थितः" इति ॥

निराशयमिति पाठेऽयमेवार्थः । सैन्धवेनावचूर्णयेदित्यस्याग्रेऽधिको ग्रन्थः सुश्रुते पठितः—

"कासीसमागधीपुष्पनेपाल्येलायुतेन तु ।
ततः क्षौद्रघृतं दत्त्वा सम्यग्बन्धमथाऽऽचरेत् ॥

अत्र पाठे कासीसादियुक्तेन सैन्धवेनावचूर्णयेत् । ततः प्रतिसारणादनन्तरं संधानार्थं क्षौद्रघृतं दत्त्वा बन्धं सम्यगाचरेत् । सम्यक्शब्देन शिथिलता बन्धस्य व्याख्याता । पुष्पं पुष्पाञ्जनम् । नेपाली मनःशिला ॥ २३८ ॥

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ॥
पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत् ॥ २३९ ॥

वर्त्मावलेखमिति । कर्कशशाखोटकादिपत्रैः प्रलेखनम् ॥ २३९ ॥

पिल्ली स्निग्धो वमेत्पूर्वं शिराव्यधस्रुतेऽसृजि ॥
शिलारसाञ्जनव्योषगोपित्तैश्चक्षुरञ्जयेत् ॥ २४० ॥

स्निग्धो वमेदित्यत्र स्वेदस्याप्यर्थवशादाक्षेपः । नेत्रबुद्बुदगतरोगेषु वमनं नेष्टं वत रोगेषु बुद्बुदानामबाधकरत्वेन हितमेव । रसाञ्जनव्योषगोपित्तैरित्यत्र गोपित्ताभ गोरोचना ग्राह्या । एवमन्यत्रापि । अञ्जयेदिति । प्रतिसारयेत् ॥ २४० ॥

हरितालवचादारु सुरसारसपेषितम् ॥
अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥ २४१ ॥

सुरसारसपेषितमिति । सुरसा पर्णासभेदः । सुरमल्लीति लोके । प्रतिसारणमिदम् तगरं तगरपादिका स्वनामख्यातो वा तरुः ॥ २४१ ॥

भावितं बस्तमूत्रेण सस्नेहं देवदारु च ॥ २४२ ॥

सस्नेहं देवदारु चेति । स्नेहोऽत्र घृतं चक्षुष्यत्वात् । एतदपि प्रतिसारणम् ॥ २४२ ।

काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान् ॥
धूपयेत्पिल्लरोगार्तं पतन्ति कृमयोऽचिरात् ॥ २४३ ॥

काकमाचीफलैकेनेति । काकमाच्याः फलेन केवलेन भावनारहितेनेत्यर्थः । चक्षुषी आच्छाद्य धूपनं कार्यम् ॥ २४३ ॥

रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ॥
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥ २४४ ॥
एतत्समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ॥
अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणां च प्ररोहणम् ॥ २४५ ॥

सुगमम् ॥ २४४ ॥ २४५ ॥

ताम्रपात्रे गुहामूलं सिन्धूत्थमरिचान्वितम् ॥
आरनालेन संघृष्टमञ्जनं पिल्लनाशनम् ॥ २४६ ॥

गुहामूलमिति । पृश्निपर्णीमूलं स्नुहा वा । पृश्निपर्ण्या व्यवहारः ॥ २४६ ॥

हरिद्रे त्रिफला लोध्रं मधुकं रक्तचन्दनम् ॥
भृङ्गराजरसे पिष्ट्वा घर्षयेल्लोहभाजने ॥ २४७ ॥
तथा ताम्रे च सप्ताहं कृत्वा वर्तिं रजोऽथ वा ॥
पिप्पटी धूमदर्शी च तिमिरोपहतेक्षणः ॥
प्रातर्निश्यञ्जयेन्नित्यं सर्वनेत्रामयापहम् ॥ २४८ ॥

घर्षयेल्लोहभाजने ताम्रे वा घर्षयेत् ॥ २४७ ॥ २४८ ॥

मञ्जिष्ठामधुकोत्पलोदधिकफत्वक्सेव्यगोरोचना-
मांसीचन्दनशङ्खपत्रगिरिमृत्तालीसपुष्पाञ्जनैः ॥
सर्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषः
कण्डूक्लेदमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम् ॥ २४९ ॥

चूर्णाञ्जनम् । उदधिकफः समुद्रफेनः । गिरिमृद्गैरिकम् । पुष्पाञ्जनं स्वनामख्यातं किंवा पुष्पकासीसम् । अञ्जनं रसाञ्जनम् । वर्तिरेषा चूर्णाञ्जनं वा ॥ २४९ ॥

तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ॥
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥ २५० ॥
पिल्लानपिल्लान्कुरुते बहुवर्षोत्थितानपि ॥
तत्सेकेनोपदेहाश्रुकण्डूशोथांश्च नाशयेत् ॥ २५१ ॥

सुगमम् ॥ २५० ॥ २५१ ॥

करञ्जबीजं सुरसं सुमनःकोरकाणि च ॥ २५२ ॥
संक्षुद्य साधयेत्क्वाथं पूते तत्र रसक्रिया ॥
अञ्जनं पिल्लभैषज्यं पक्ष्मणां च प्ररोहणम् ॥ २५३ ॥

सुगमम् ॥ २५२ ॥ २५३ ॥

पुष्पकासीसचूर्णं वा सुरसारसभावितम् ॥
ताम्रे दशाहं तत्पिल्लपक्ष्मरोगजिदञ्जनात् ॥ २५४ ॥

सुगमम् ॥ २५४ ॥

याप्यः पक्ष्मोपरोधस्तु रोमोद्धरणलक्षणैः ॥

रोमोद्धरणलक्षणैरित्यतः परं कर्मभिरिति शेषः ॥

वर्त्मन्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥ २५५ ॥

सुगमम् ॥ २५५ ॥

प्रवृद्धान्तर्मुखं रोम सहिष्णोरुद्धरेच्छनैः ॥

सुगमम् ॥

संदंशेनोद्धरेद्दृष्ट्यालक्ष्यरोमाणि बुद्धिमान् ॥
सूच्यग्रेणाग्निवर्णेन रोमकूपं विनिर्दहेत् ॥ २५६ ॥

दृष्ट्यालक्ष्यरोमाणीति । दृष्ट्यभिमुखगतरोमाणि ॥ २५६ ॥

प्रदेहाः शीतला नस्यं क्रिया पक्ष्मापरोधहृत् ॥ २५७ ॥

सुगमम् ॥ २५७ ॥

रक्षन्नक्षि दहेत्पक्ष्म तप्तहेमशलाकया ॥
पक्ष्मकोपे पुनर्नैवं कदाचिद्रोमसंभवः ॥ २५८ ॥

---

१ घ. 'हाटक' ।

सुगमम् । इति वर्त्मजेषु ॥ २९८ ॥

त्रिफलाव्योषसिन्धूत्थैर्घृतं सिद्धं पिबेन्नरः ॥
चक्षुष्यं भेदनं हृद्यं दीपनं कफनाशनम् ॥ २९९ ॥

त्रिफलायाः क्वाथः । व्योषसिन्धूत्थैः कल्कः किंवा त्रिफलादिभिः सर्वैः कल्कः । जलं द्रवम् ॥ २९९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकषष्टितमो नेत्ररोगाधिकारः समाप्तः ॥ ६१ ॥

---

## अथ द्विषष्टितमः शिरोरोगाधिकारः ।

---

आश्रितकर्णनासानयनगतान्रोगानभिधाय संप्रत्याश्रयभूतशिरोरोगाणामभिधानम् ।

वातिके शिरसो रोगे स्नेहस्वेदान्सनावनान् ॥
पानान्नमुपनाहांश्च कुर्याद्वातामयापहान् ॥ १ ॥

सुगमम् ॥ १ ॥

कुष्ठमेरण्डमूलं च लेपात्काञ्जिकपेषितम् ॥
शिरोर्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥ २ ॥

कुष्ठमित्यादिको लेपः कोष्णः प्रयोज्यः । मुचुकुन्दजमिति । मुचुकुन्दो मुचुलिन्द इति ॥ २ ॥

पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ॥ ३ ॥

पञ्चमूलीशृतं क्षीरमिति । पञ्चमूली स्वल्पा महती वा ॥ ३ ॥

शिरोबस्तिमाह—

आशिरो व्यायतं चर्म षोडशाङ्गुलमुच्छ्रितम् ॥
तेनाऽऽवेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ॥ ४ ॥
धारयेदारुजः शान्त्यै यामं यामार्धमेव च ॥
शिरोबस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ॥ ५ ॥
हनुमन्याक्षिकर्णार्तिमर्दितं मूर्धकम्पनम् ॥
तैलेनाऽऽपूर्य मूर्धानं पञ्च मात्राशतानि च ॥ ६ ॥

---

१ क. घ. 'अविस्तृत' ।

तैलैरिति । यथाव्याधिसाधितैः पूरयेदङ्गुलोच्छ्रायेण । यावदङ्गुलं धारयेच्च तमिति तन्त्रान्तरदर्शनात् । पञ्चषडङ्गुलोच्छ्रायेण पूरणं प्रचरति । आरुजः शान्तौ धारयेद्वाते यामं पित्ते यामार्धं कफे । पञ्च मात्राशतानीत्यभिधानं परतन्त्रानुवादादविरुद्धं बोद्धव्यम् । मात्रा तु निमेषोन्मेषणादिः कालविशेषः ।

तथा हि—"निमेषोन्मेषणं पुंसां स्फोटनं वा तथाऽङ्गुलेः ।
अक्षरस्य लघोर्वाऽपि मात्रा तूच्चारणं भवेत्" इति ॥

छोटिकामात्रा(त्रया) तु प्रचारः । कफजे तु शिरोबस्तिर्नस्यादिभिरवशोषिते कफे वातानुबन्धे ज्ञेयः । केवलकफे तस्य यौगिकत्वात् ॥ ४ ॥ ५ ॥ ६ ॥

तिष्ठेच्छ्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी ॥
एष एव विधिः कार्यस्तथा कर्णाक्षिपूरणे ॥ ७ ॥

सुगमम् ॥ ७ ॥

पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ॥
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥ ८ ॥

मृद्वीकादिभिः प्रत्येकं त्रिवृदादिद्रव्ययोगाद्विरेचनम् ॥ ८ ॥

शर्कराक्षीरसलिलैः शिरश्च प्रतिषेचयेत् ॥

सुगमम् ॥

सर्पिषः शतधौतस्य शिरसा धारणं हितम् ॥
निमज्जनं च शिरसः शीतले शस्यतेऽम्भसि ॥ ९ ॥

सुगमम् ॥ ९ ॥

कुमुदोत्पलपद्मानां शीतानां चन्दनाम्बुभिः ॥
स्पर्शाः सुखाश्च पवनाः सेव्या दाहार्तिशान्तये ॥ १० ॥
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ॥
क्षीरपिष्टैः प्रदेहः स्यांच्छृतैर्वा परिषेचनम् ॥ ११ ॥

व्याघ्रनखं नखभेदः ॥ १० ॥ ११ ॥

मृणालबिसशालूकचन्दनोत्पलकेसरैः ॥
स्निग्धशीतैः शिरो दिह्याद्वद्दामलकोत्पलैः ॥ १२ ॥

स्निग्धशीतैरिति । स्निग्धत्वं घृतयोगात् ॥ १२ ॥

यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं हितं घृतम् ॥
नावनं शर्कराद्राक्षामधुकैर्वाऽपि पित्तजे ॥ १३ ॥

---

१ प. स्यात्सृतैः ।

रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम् ॥
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम् ॥ १४ ॥

शीतोष्णयोश्च व्यत्यास इति । शीतां क्रियां कृत्वा, उष्णा क्रिया, उष्णां च कृत्वा शीतेत्यर्थः । अयं च विधिर्व्याधिप्रत्यनीकतया बोद्धव्यः ॥ १३ ॥ १४ ॥

इदानीं कफजशिरोरोगचिकित्सामाह—

कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः ॥
तीक्ष्णावपीडा धूमाश्च तीक्ष्णाश्च कवला हिताः ॥ १५ ॥
अच्छं च पाययेत्सर्पिः पुराणं स्वेदयेत्ततः ॥
मधूकसारेण शिरः स्विन्नं चास्य विरेचयेत् ॥ १६ ॥

अच्छं केवलम् । पुराणं सर्पिरत्र संवत्सरास्थितं दशवर्षास्थितं वा । केचिच्चिरकालस्थितं पुराणमाहुः । तथा च भद्रशौनकः—

"अल्पाभिष्यन्दि मधुरं बल्यं संवत्सरसेवितम् ।
अल्पक्लेदं च दोषाणां पुराणं सर्पिरुच्यते ॥
दशवर्षस्थितं प्रायः कटुकानुरसं स्मृतम् ।
स्थितं वर्षशतं श्रेष्ठं कुम्भसर्पिरुदाहृतम्" ॥

पाययेत्सर्पिः पुराणमित्यनेन कफजे पुराणघृतपानस्योपदेशः कालप्रकर्षसंस्कारेण कफप्रत्यनीकत्वात् । किंच कफजे जीर्णे वातानुबन्धे विधानमिदम् । स्वेदयेदिति । तापोष्मस्वेदादिभिः श्लेष्मघ्नैः ·········॥ १५ ॥ १६ ॥

*पथ्याह्व+शुण्ठीमधुकशताह्वोत्पलपाकलैः ॥
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ १७ ॥
देवदारु नतं कुष्ठं नलदं विश्वभेषजम् ॥
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोर्तिनुत् ॥ १८ ॥
संनिपातभवे कार्या दोषत्रयहरी क्रिया ॥
सर्पिष्पानं विशेषेण पुराणं वा दिशन्ति हि ॥ १९ ॥
*त्रिकटुकपुष्करबीजकरञ्जरास्नातुरङ्गगन्धानाम् ॥
क्वाथः शिरोर्तिजालं नासापीतो निवारयति ॥ २० ॥
नागरकल्कविमिश्रं क्षीरं नस्येन योजितं पुंसाम् ॥
नानादोषोद्भूतां शिरोरुजं हन्ति तीव्रतराम् ॥ २१ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

* पथ्याह्वेतिसप्तदशश्लोकमारभ्य नक्ताह्वशिग्रुबीजैश्च नावनमितिद्वात्रिंशत्तमश्लोकान्तो ग्रन्थः सटीको बहुषु पुस्तकेषु नोपलभ्यते । अतः केवलं मूलमेवात्र लिखितम् । + कृष्णाह्वेति चक्रपाठः, ग. पुस्तकेऽप्येवम् । * त्रिकटुकजीरकरजनीपुष्कररास्नेति चक्रपाठः ।

शताह्वैरण्डमूलोग्रावकव्याघ्रीफलैः शृतम् ॥
तैलं नस्यं मरुच्छ्लेष्मतिमिरोर्ध्वगदापहम् ॥ २२ ॥
जीवकर्षभकौ द्राक्षासितायष्टीद्वयोत्पलैः ॥
तैलं नस्यं पयःपक्वं वातपित्तशिरोगदे ॥ २३ ॥

॥ २२ ॥······ ········जीवकाद्यं तैलम् ॥ २३ ॥

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला ॥
नीलोत्पलं चन्दनं च विदारी शर्करा तथा ॥ २४ ॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे ॥
जाङ्गलस्य तु मांसस्य तुलार्धस्य रसेन तु ॥ २५ ॥
सिद्धमेतद्भवेन्नस्यं तैलमर्धावभेदके ॥
बाधिर्यं कर्णशूलं च तिमिरं गलशुण्डिकाम् ॥ २६ ॥
वातिकं पैत्तिकं चैव शिरोरोगं नियच्छति ॥
दन्तशूलं शिरःशूलमर्दितं चापकर्षति ॥ २७ ॥

जीवकाद्यं तैलम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

एरण्डमूलं तगरं शताह्वा जीवन्तिरास्ना लवणोत्तमं च ॥
भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ॥ २८ ॥
आजं पयस्तैलविमिश्रितं च चतुर्गुणे भृङ्गरसे विपक्वम् ॥
षड्बिन्दवो नासिकया च शीघ्रं सर्वान्निहन्युः शिरसो विकारान्॥२९॥
च्युतांश्च केशांश्चलितांश्च दन्तान्दुर्बद्धमूलांश्च दृढी करोति ॥
सुपर्णदृष्टिप्रतिमं च चक्षुर्बाह्वोर्बलं चाभ्यधिकं ददाति[†] ॥ ३० ॥

षड्बिन्दुतैलम् ॥ २८ ॥ २९ ॥ ३० ॥

क्षयजे क्षयमासाद्य कर्तव्यो बृंहणो विधिः ॥
पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम्[+] ॥ ३१ ॥

············॥ ३१ ॥

कृमिजे व्योषनक्ताह(क्त)शिग्रुबीजैश्च नावनम् ॥ ३२ ॥

················नक्ताह्वशिग्रुबीजैरिति । नक्ताह्वस्यापि बीजम् ॥ ३२ ॥

---

† ख. पुस्तके—एतत्कृतं यत्नत एव तैलं निहन्ति सर्वाञ्छिरसो विकारान् । इत्यधिकमत्र ।
+ ग. पुस्तके—क्षयकासापहं चात्र सर्पिः पथ्यतमं सदा । इत्यधिकमत्र ।

---

१ क. द्राक्षासितायष्टीबलोत्पलैरिति चक्रपाठः । २ क. नासिकया विधेयाः शीघ्रं निहन्युः । चक्रपाठोऽप्येवम् । ३ ग. °यसामान्यः क° ।

अजामूत्रयुतं नस्यं कृमिजे कृमिजित्परम्[†] ॥

कृमिजे यन्नस्यमुक्तं तदजामूत्रयुतमत्यर्थं कृमिजित्स्यात् । तदुक्तम्—समूत्रपिष्टाश्चोद्दिष्टाः क्रियाः कृमिषु योजयेदिति । अन्यस्त्वाह—कृमिजिद्विडङ्गमजामूत्रयुतं नस्यमिति ॥

नावनं सगुडं विश्वं पिप्पली वा ससैन्धवा ॥
भुजस्तम्भादिरोगेषु सर्वेषूर्ध्वगदेषु च ॥ ३३ ॥

सगुडं विश्वं वातानुबन्धे नस्यं ससैन्धवा पिप्पली कफानुगे ॥ ३३ ॥

सूर्यावर्तकचिकित्सामाह—

सूर्यावर्ते विधातव्यं नस्यकर्मादिभेषजम् ॥
पाययेत्सगुडं सर्पिर्घृतपूरांश्च भक्षयेत् ॥ ३४ ॥

नस्यकर्मादिभेषजमिति । कारणभूतदोषप्रत्यनीकं नस्यपरिषेकलेपकवलग्रहशिरोबस्त्यादिभेषजमित्यर्थः । अन्ये तु नस्यकर्म, आदौ यस्य तन्नस्यकर्मादि । तच्च वमनं विहाय विरेकादिकर्मचतुष्टयम् । ये तु सूर्यावर्तकविपर्ययं पठन्ति तत्रापीदमेव चिकित्सितम् ॥ ३४ ॥

सूर्यावर्ते शिरावेधो नावनं क्षीरसर्पिषा ॥ ३५ ॥
हितः क्षीरघृताभ्यासस्ताभ्यां चैव विरेचनम् ॥
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ ३६ ॥

यथोक्तकर्मणां पुनरप्रशमे शिराव्यधः । क्षीरसर्पिषेति । क्षीरोत्थेन सर्पिषा । ताभ्यामिति । क्षीरघृताभ्यां विरेकद्रव्ययुक्ताभ्यां विरेचनम् ॥ ३५ ॥ ३६ ॥

सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे ॥
भ्रूशङ्खकर्णाक्षिशिरोर्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥ ३७ ॥

सशर्करं कुङ्कुमं घृते भृष्ट्वा घृतेनैवाऽऽलोड्य नस्यम् ॥ ३७ ॥

शिरीषमूलकफलैरवपीडं च योजयेत् ॥

शिरीषमूलकफलैरिति । शिरीषमूलकयोर्बीजम् । अयं च तीक्ष्णेऽवपीडः । अवपीड्य दीयत इत्यवपीडो नस्यभेदः ॥

अवपीडो हितो वा स्याद्वचापिप्पलिभिः कृतः ॥ ३८ ॥

तथा वचापिप्पलीभिः कृतश्च सूर्यावर्ते वातपित्तोत्तरे विकारप्रत्यनीकतया वा हितः ॥ ३८ ॥

---

† ख. पुस्तके—अपमार्गफलव्योषनिशाक्षवकरामठैः । सविडङ्गैः शृतं मूत्रे तैलं नस्यं कृमीजयेत् ॥ १ ॥ इत्यधिकमत्र ।

जाङ्गलानि च मांसानि कारयेदुपनाहनम् ॥
तेनास्य शाम्यते व्याधिः सूर्यावर्तः सुदारुणः ॥ ३९ ॥
महौषधं सस्वरसं वचापिप्पलिभिः कृतम् ॥
अवपीडं प्रदातव्यं सूर्यावर्तनिषूदनम् ॥
एष एव विधिः कृत्स्नः कार्यश्चार्धावभेदके ॥ ४० ॥

॥ ३९ ॥ ४० ॥

इदानीं शिरोलेपमाह—

सारिवोत्पलकुष्ठानि मधुकं चाम्लपेषितम् ॥
सर्पिस्तैलयुतो लेपः सूर्यावर्तार्धभेदयोः ॥ ४१ ॥

सारिवा प्रसिद्धा । उत्पलं नीलोत्पलम् । अम्लपेषितमिति । काञ्जिकपिष्टम् । अयमपि शिरोलेपो वातपित्तोत्तरावस्थायां प्रयोक्तव्यः ॥ ४१ ॥

एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥ ४२ ॥

यद्यपि कफजशिरोरोगस्य चिकित्सोक्ता तथाऽप्यवसरप्राप्तत्वात्पुनरुक्ता । अन्ये शिरोरोगे कफात्मक इत्यत्र क्षयात्मक इति पठन्ति । तन्नेच्छति जैज्जटाचार्यः । अपरे तु—एभिरेव प्रयोक्तव्यः शिरोरोगेऽनिलात्मके, इति पठन्ति । एभिरेवेति । अनन्तरोक्तं सारिवोत्पलकुष्ठादिभिः ॥ ४२ ॥

पिबेत्सशर्करं क्षीरं नीरं वा नालिकेरजम् ॥
सुशीतं वाऽपि पानीयं सर्पिर्वा नस्ततस्त(नासया त)योः ॥४३॥

तयोरिति । सूर्यावर्तार्धावभेदकयोः ॥ ४३ ॥

अनन्तवाते कर्तव्यः सूर्यावर्तहितो विधिः ॥
शिरावेधश्च कर्तव्योऽनन्तवातप्रशान्तये ॥ ४४ ॥

शिरावेध इति । विध व्यध(विधा)ने, इत्यस्य धातोरयं न पुनर्व्यधेः ॥ ४४ ॥

आहारश्च विधातव्यो वातपित्तविनाशनः ॥
मधुमस्तकसंयावघृतपूरैश्च यः क्रमः ॥ ४५ ॥

पाकघनीकृतमधुगर्भो गोधूमपिष्टकवेष्टितः पक्वः स चतुर्जातकादिभक्ष्यविशेषो मधुमस्तकः । अन्ये तु गोधूमशमितां घृतयुक्तां तोयैर्मर्दयित्वा वृत्तमपूपं कृत्वा घृतेन पक्त्वा सितायुक्तं कुर्यादित्येष मधुमस्तकः । स च लोकेषु मण्डकापरनामा । संयावो भक्ष्यविशेषः । तद्यथा—गोधूमशमितां जलदुग्धेन मर्दयित्वा घृतोत्तरे खण्डे पक्त्वा मरिचैलालवङ्गकर्पूरयुक्तां कुर्यादित्येष संयावः । एषां भेदा बहवः सूदशास्त्राद्विज्ञेयाः । गोधूमपट-

शुद्धिकां क्षीरेण संमर्द्य सर्पिषा विस्तार्य पक्त्वा सितायुक्तां कुर्यादित्येष हविष्पूरः, घेवर इति लोके। क्रम आहारक्रमः ॥ ४५ ॥

मूर्यावर्ते हितं यच्च शङ्खके स्वेदवर्जितम् ॥
क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके ॥ ४६ ॥

सुगमम् ॥ ४६ ॥

शिरोलेपमाह—

शतावरीं कृष्णतिलान्मधुकं नीलमुत्पलम् ॥
दूर्वां पुनर्नवां चापि लेपं साध्ववचारयेत् ॥ ४७ ॥

शतावर्यादिभिः क्षीरपिष्टैः शिरोलेपः ॥ ४७ ॥

शीततोयावसेकांश्च क्षीरसेकांश्च शीतलान् ॥

सुगमम् ॥

कल्कैश्च क्षीरिवृक्षाणां शङ्खकस्य प्रलेपनम् ॥ ४८ ॥
क्रौञ्चकादम्बहंसानां शरार्याः कच्छपस्य च ॥
रसैः संबृंहितस्याथ तस्य शङ्खस्य संधिजाः ॥
ऊर्ध्वं तिस्रः शिराः प्राज्ञो भिन्द्यादेव न ताडयेत् ॥ ४९ ॥

भिन्द्यादिति। सूच्या। ताडयेन्न कुठारिकया संधिभेदभयात् ॥ ४८ ॥ ४९ ॥

यष्टीमधुबलारास्नादशमूलाम्बुसाधितम् ॥
मधुरैश्च घृतं सिद्धमूर्ध्वजत्रुगदापहम् ॥ ५० ॥

यष्ट्याद्यं घृतम् ॥ ५० ॥

मयूराद्यं घृतमाह—

दशमूलबलारास्नामधुकैस्त्रिफलैः सह ॥
मयूरं पक्षपित्तान्त्रशकृत्पादास्यवर्जितम् ॥ ५१ ॥
जले पक्त्वा घृतप्रस्थं तस्मिन्क्षीरसमं पचेत् ॥
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् ॥ ५२ ॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम् ॥
मयूराद्यमिदं ख्यातमूर्ध्वजत्रुगदापहम् ॥ ५३ ॥

दशमूलादीनां प्रत्येकं पलत्रयम्। पक्षपित्तान्त्रादिवर्जितं मयूरगुडकम्। जलद्रोणः पाकार्थम्। पादशेषः कषायः। चक्रस्त्वाह—

"दशमूलादिमांसेन सममत्र प्रदीयते।
घृतमानानुसारेण मांसमानानुकल्पना ॥
अन्ये त्वाकृतिमाने तु मयूरग्रहणं विदुः" ॥

दशमूलादिभिस्तुल्यमायूरमांसं मिलित्वा तु यावत्काथ्यं भवति तत्र 'काथ्याच्चतुर्गुणं वारि' इत्यादिपरिभाषया जलादिव्यवस्थेति पूर्वव्याख्यया व्यवहारः । मधुरैरिति । जीवनीयदशकेन । अन्यान्यपि यथालाभं मधुरद्रव्याणीति तु वैद्यप्रसारके ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ॥ ९४ ॥
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा ॥
सर्वानूर्ध्वगदान्हन्ति पलितानि च शीलितम् ॥ ९५ ॥

प्रपौण्डरीकाद्यं तैलम् ॥ ९४ ॥ ९५ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां द्विषष्टितमः शिरोरोगाधिकारः समाप्तः ॥ ६२ ॥

---

## अथ त्रिषष्टितमः प्रदराधिकारः ।

---

पुंस्त्रीसाधारणरोगानभिधाय पुंप्र(स्प्र)तिनियतस्योपदंशादेरुक्तत्वात्संप्रति स्त्रीप्रतिनियतप्रदरारम्भः ।

दध्ना सौवर्चलाजाजीमधुकं नीलमुत्पलम् ॥
पिबेत्क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥ १ ॥
पिबेदैणेयकं रक्तं शर्करामधुसंयुतम् ॥
वासकस्वरसं पैत्ते गुडूच्या रसमेव च ॥ २ ॥

पिबेदैणेयकं रक्तमिति । एण्या इदमैणेयं स्वार्थे कः । रक्तपानं चाऽऽर्तवातिस्रुतौ । एतच्च कुशमूलेना....पेयं तेन स्त्यानता न स्यादित्याहुः । शर्करामधुसंयुतमिति । वासकस्वरसेन गुडूचीरसेन च योज्यम् ॥ १ ॥ २ ॥

रोहीतकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिबेत् ॥
जलेनाऽऽमलकाद्बीजकल्कं वा ससितामधु ॥ ३ ॥

पाण्डुर इति । कफजे ॥ ३ ॥

धातक्याश्चाक्षमात्रं वा आमलक्यां मधुद्रवम् ॥

धातक्याः कल्कमक्षमात्रम् । मधुद्रवमामलक्या वा कल्कं तथा मधुद्रवं पिबेत् । मधु द्रवं यत्रेति विग्रहादन्यपदार्थता ॥

काकजान्धकमूलं वा मूलं कार्पासमेव वा ॥
पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा ॥ ४ ॥

काकजान्धकः काकजङ्घा ॥ ४ ॥

अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम् ॥
यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनम् ॥ ५ ॥

अशोकवल्कलक्वाथशृतं दुग्धमिति । षडङ्गकल्पनयाऽर्धशृतक्वाथं कृत्वा क्षीरं साध्यमित्येके । पेयक्वाथपरिभाषयाऽर्धपलादिद्रव्यक्वाथेन यथार्हं क्षीरं साध्यमित्यन्ये । क्षीरपरिभाषया द्रव्यदुग्धतोयानां मानं व्यवस्थाप्य द्रव्यतोयाभ्यां कल्पितक्वाथेनेत्यपरे । व्यवहारस्तु प्रायेण क्वाथमकृत्वैव क्षीरपरिभाषया षडङ्गकल्पनया पुनः प्रचारो युज्यते ॥ ५ ॥

दार्वीरसाञ्जनकिरातवृषाब्दतिक्ता-
भल्लातकारविकृतो मधुना कषायः ॥
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥ ६ ॥

भल्लातकारविकृत इति । कारवी कृष्णजीरकम् । कैरवपाठे तु कुमुदम् । इदं च युक्तं शैत्यात् । अनेन प्रचारः ॥ ६ ॥

रसाञ्जनं तण्डुलकस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम् ॥
असृग्दरं सर्वभवं निहन्ति श्वासं च भार्गी सह नागरेण ॥ ७ ॥

तण्डुलकस्येति । लोहितस्य । सर्वभवमिति । वाताद्येकदोषजं सर्वं न तु त्रिदोषजं तस्यासाध्यत्वात् । वचनं हि—

"सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषम् ।
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक्चिकित्साम्" इति॥

श्वासं च भार्गी सह नागरेणेत्यतःश्लोकपूरणानुरोधाल्लिखितम् । सनागरभार्गीकल्कश्चोष्णाम्बुना पेयः । श्वासी हिक्की पिबेद्भार्गी सविश्वामुष्णवारिणेति तन्त्रदर्शनात् ॥ ७ ॥

कुशमूलं समाहृत्य पेषयेत्तण्डुलाम्बुना ॥
एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते ॥ ८ ॥

सुगमम् ॥ ८ ॥

क्षौद्रयुक्तं फलरसं काष्ठोदुम्बरजं पिबेत् ॥
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥ ९ ॥

सुगमम् ॥ ९ ॥

---

१ क. घ. 'नतृषाब्दकिरातबिल्वम' । २ क. घ समुद्धृत्य । ३ क. घ. त्र्यहात्नारी ।

प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम् ॥
कुशवाट्यालकमूलं तण्डुलसलिलेन रक्ताख्यम् ॥ १० ॥

रक्ताख्यमिति । वातकृतं प्रदरम् ॥ १० ॥

शमयति मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ ॥ ११ ॥

मदिरया पीयत इति मदिरापानम् । तदुभयमिति । कुशवाट्यालकमूलम् ॥ ११ ॥

गुडेन बदरीचूर्णं मोचमार्जं तथा पयः ॥
पीता लाक्षा च सघृता पृथक्शोणितनाशिनी ॥ १२ ॥

सुगमम् ॥ १२ ॥

यस्या यद्रूपं यादृशेन प्रकारेणोपचरणीयं तदाह—

तरुण्या हितसेविन्यास्तदल्पोपद्रवं भिषक् ॥
रक्तपित्तविधानेन यथावत्समुपाचरेत् ॥ १३ ॥

तरुण्याः षोडशवर्षप्रमाणायाः । हितसेविन्याः पथ्यसेविन्याः । रक्तपित्तविधानेनेति । अधोगतरक्तपित्तविधानेन ॥ १३ ॥

पुष्यानुगं चूर्णमाह—

पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदं रसाञ्जनम् ॥
अम्बष्ठकीमोचरसं समङ्गा पद्मकेसरम् ॥ १४ ॥
बाह्लीकातिविषे मुस्तं बिल्वं लोध्रं सगैरिकम् ॥
कट्फलं मरिचं शुण्ठीमृद्वीकारक्तचन्दनम् ॥ १५ ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम् ॥
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥ १६ ॥
तानि क्षौद्रेण संयोज्य पाययेत्तण्डुलाम्बुना ॥
अर्शस्सु चातिसारेषु रक्तं यश्चोपवेश्यते ॥ १७ ॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत् ॥
योनिदोषं रजोदोषं श्वेतं नीलं च पीतकम् ॥ १८ ॥
स्त्रीणां श्यावारुणं यच्च तत्प्रसह्य निवर्तयेत् ॥
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ १९ ॥

अम्बष्ठा दक्षिणे ख्याता गृह्णन्त्यन्ये च लक्ष्मणाम् । शिलाभेदः पाषाणभेदः । अम्बष्ठकी दक्षिणापथे ख्याता । तदभावे पाठैव द्विगुणा । बाह्लीकं कुङ्कुमम् । मृद्वीकास्थाने माचीक इति पाठान्तरे । माचीकं देवदारु । पुष्येणेति । पुष्यनक्षत्रेण । पुष्यानुगं चूर्णम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

मुद्गाद्यं घृतमाह—

मुद्गमाषस्य निर्यूहे रास्नाचित्रकनागरैः ॥
सिद्धं सपिप्पलीविश्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ २० ॥

सुगमम् । मुद्गाद्यं घृतम् ॥ २० ॥

शतावरीरसप्रस्थं क्षोदयित्वाऽवपीडयेत् ॥
घृतप्रस्थसमायुक्तं क्षीरद्विगुणितं भिषक् ॥ २१ ॥
अतः कल्कानिमान्दद्यात्स्थूलोदुम्बरसंमितान् ॥
जीवनीयानि यान्यष्टौ यष्टीचन्दनपद्मकैः ॥ २२ ॥
श्वदंष्ट्रा चाऽऽत्मगुप्ता च बला नागबला तथा ॥
शालिपर्णी पृष्ठपर्णी विदारी सारिवाद्वयम् ॥ २३ ॥
शर्करा च समा देया काश्मर्याश्च फलानि च ॥
सम्यक्सिद्धं च विज्ञाय तद्धृतं चावचारयेत् ॥ २४ ॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च ॥
वातरक्तं क्षयं श्वासं हिक्कां कासं च दुस्तरम् ॥ २५ ॥
अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम् ॥
असृग्दरं सर्वभवं मूत्रकृच्छ्रं च दारुणम् ॥
एतान्रोगाञ्शमयति भास्करस्तिमिरं यथा ॥ २६ ॥

स्थूलोदुम्बरसंमितानिति । प्रत्येकं कर्षसंमितान् ॥ २१ ॥ २२ ॥ २३ ॥२४॥ ॥ २५ ॥ २६ ॥

शीतकल्याणकं घृतमाह—

कुमुदं पद्मकोशीरं गोधूमा रक्तशालयः ॥ २७ ॥
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम् ॥ २८ ॥
विदारी शतपु(प)त्री च शालिपर्णी सजीवका ॥
फलं त्रपुसबीजानि प्रत्यग्रं कदलीफलम् ॥ २९ ॥
एषामर्धपलान्भागान्गव्यक्षीरं चतुर्गुणम् ॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत् ॥ ३० ॥
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥
बहुरूपं च यत्पित्तं कामलायां सशोणिते ॥ ३१ ॥
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति ॥ ३२ ॥

अहन्यहनि च स्त्रीणां भवति प्रीतिवर्धनम् ॥
शीतकल्याणकं नाम परमुक्तं रसायनम् ॥ ३३ ॥

रक्तशालीनां मूलं फलं वा । पयस्या क्षीरकाकोली, अर्कपुष्पी वा । फलं त्रिफला । प्रत्यग्रं परिणतम् । शीतकल्याणकं घृतम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥

हितश्चात्र विशेषेण लेह्यो यः कुटजाष्टकः ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां त्रिषष्टितमः प्रदराधिकारः समाप्तः ॥ ६३ ॥

---

## अथ चतुःषष्टितमो योनिरोगाधिकारः ।

---

प्रदरस्य योनिः प्रवृत्तिमार्ग ईरितोऽतो योनिव्यापदुच्यते ॥

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ॥
बस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ॥ १ ॥

सुगमम् ॥ १ ॥

वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ॥
अजमोदायवक्षारचित्रकं शर्करान्वितम् ॥ २ ॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत्तद्घृतभर्जितम् ॥
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ३ ॥

सुगमम् ॥ २ ॥ ३ ॥

रास्नाश्वदंष्ट्रावृषकैः शृतं शूलहरं पयः ॥

शृतं पयः परिषेकार्थं पानार्थं वा ॥

गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥ ४ ॥

सुगमम् ॥ ४ ॥

नतवार्ताकिनीकुष्ठसैन्धवामरदारुभिः ॥
तैलात्प्रसाधिताद्धार्यः पिचुर्योनौ रुजापहः ॥ ५ ॥

नतवार्ताकिनीति । कण्टकारी बृहती ॥ ५ ॥

---

१ क. °पभैः शृ° ।

पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥
शीतपित्तहराः कार्याः स्नेहनार्थं घृतानि च ॥ ६ ॥

सुगमम् ॥ ६ ॥

योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ॥ ७ ॥

सुगमम् ॥ ७ ॥

पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ॥
वर्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधनी ॥ ८ ॥

तुल्या प्रदेशिन्येति । परिणाहेन दैर्घ्येण च प्रदेशिन्यङ्गुलिसमा ॥ ८ ॥

लक्ष्मणालक्षणं तद्विधानं चोच्यते—

पुष्योद्धृतं लक्ष्मणाया मूलं पिष्टं च कन्यया ॥
ऋत्वन्ते घृतदुग्धाभ्यां पीत्वाऽऽप्नोत्यबला सुतम् ॥ ९ ॥

"पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छितच्छदा ॥
लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत्" ।

तां च शरत्काले पुष्पफलोपेतां दृष्ट्वा शनिदिने संध्यायां तस्याश्चतुर्षु भागेषु खादिरकीलकान्निखाय परेद्युर्हस्तमूलपुष्यैर्योगं गते दिवाकरे मन्त्रवद्गृहीत्वा समानवर्णवत्सगोक्षीरेण यथाविधि नस्यं दद्यादिति तन्त्रान्तरे ॥ ९ ॥

क्वाथेन हयगन्धायाः साधितं सघृतं पयः ॥
ऋतुस्नाताऽबला पीत्वा गर्भं धत्ते न संशयः ॥ १० ॥

सुगमम् ॥ १० ॥

फलघृतमाह—

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ॥
मेदा पयस्या काकोली मूलं चैवाश्वगन्धजम् ॥ ११ ॥
अजमोदा हरिद्रे द्वे हिङ्गुकं कटुरोहिणी ॥
उत्पलं कुमुदं द्राक्षाकाकोल्यौ चन्दनद्वयम् ॥ १२ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
शतावरीरसं क्षीरं घृताद्देयं चतुर्गुणम् ॥ १३ ॥
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ॥
पुत्राञ्जनयते नारी मेधाढ्याम्प्रियदर्शनान् ॥ १४ ॥
या च वाऽस्थिरगर्भा स्याद्या वा जनयते मृतम् ॥
अल्पायुषं च जनयेद्या च कन्यां प्रसूयते ॥ १५ ॥

निदोषे रजोदोषे गर्भस्रावे च शस्यते ॥
आवर्धनमायुष्यं सर्वग्रहनिवारणम् ॥ १६ ॥
म्ना फलघृतं चैतदश्विभ्यां परिकीर्तितम् ॥
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥ १७ ॥

दारी । द्राक्षाकाकोल्याविति । काकोल्यत्र क्षीरकाकोली काकोल्या आवरीरसक्षीरयोः प्रत्येकं चातुर्गुण्यम् । अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र म् । चक्रः पुनराह—

जीवद्वत्सैकवर्णाया घृतमत्र तु गृह्यते ।
अरण्यगोमयेनेह चाग्निज्वालां प्रदीपयेत् " इति ।

फलघृतम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

कुष्ठं मुस्तं हरिद्रे द्वे पिप्पली कटुरोहिणी ॥
काकोली क्षीरकाकोली विशाला त्रिफलोत्पलम् ॥
मेदारास्नाविडङ्गानि देवदारु सहिङ्गुकम् ॥ १८ ॥
द्वे सारिवे शताह्वा च वचा यष्टी प्रियंगुका ॥
अजमोदा महामेदा चन्दनं रक्तचन्दनम् ॥ १९ ॥
जातीपुष्पं तुगाक्षीरी कट्फलं सितशर्करा ॥
एतैरक्षसमैः कल्कैर्घृतप्रस्थं भिषक्तमः ॥ २० ॥
चतुर्गुणेन पयसा विपचेद्गोमयाग्निना ॥
शुभेऽह्नि पुष्यसंयुक्ते भाण्डे ताम्रमये दृढे ॥ २१ ॥
कलशे हेमकल्याणे कृतकौतुकमङ्गले ॥
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ॥ २२ ॥
या च वन्ध्या भवेन्नारी या च कन्याप्रजायिनी(न्यां प्रसूयते) ॥
या च वाऽस्थिरगर्भा स्याद्या च सूत्वा पुनः स्थिता ॥ २३ ॥
अल्पायुषं च जनयेद्या वा जनयते मृतम् ॥
तादृशं जनयेत्पुत्रं वेदवेदाङ्गपारगम् ॥ २४ ॥
रूपलावण्यसंपन्नं शतायुं विगतज्वरम् ॥
नाम्ना फलघृतं ह्येतद्भारद्वाजेन निर्मितम् ॥ २५ ॥

बृहत्फलघृतम् । सुगमम् ॥१८॥१९॥२०॥२१॥२२॥२३॥२४॥२५॥

सिद्धार्थकं वचां ब्राह्मीं शङ्खपुष्पीं विषाणिकाम् ॥
पयस्यां मधुकं कुष्ठं तथा कटुकरोहिणीम् ॥ २६ ॥

---

१ घ. मूत्या ।

सारिवां त्रिफलां चैव चोरकं सुमनोलताम् ॥
वृषपुष्पं समञ्जिष्ठं देवदारु महौषधम् ॥ २७ ॥
पिप्पल्यौ भृङ्गराजं च निशां श्यामां सुवर्चलाम् ॥
दशमूलमपामार्गमश्वगन्धां शतावरीम् ॥ २८ ॥
जलद्रोणे पचेदेतान्भागैर्द्विपलिकैः पृथक् ॥
तत्कषायं परिस्राव्य घृतस्यार्धाढकं पचेत् ॥ २९ ॥
युक्त्या प्रदापयेदेतद्गायत्र्या चाभिमन्त्रितम्
द्विमासगर्भिणी नारी
सर्वज्ञं जनयेत्पुत्रं सर्वामयविवर्जितम् ।
अस्य प्रयोगात्कुक्षिस्थः स्फुटवाग्भ्या।
योनिदुष्टाश्च या नार्यः शुक्रदुष्टाश्च ये
वन्ध्या च लभते पुत्रं शूरं पण्डितमानिनम् ॥ ३२ ॥
जडगद्गदमूकं च पानादेव प्रशाम्यति ॥
सप्तरात्रप्रयोगेण सुस्वरं कुरुते नरम् ॥ ३३ ॥
मासत्रयोपयोगेन कुर्याच्छ्रुतिधरं नरम् ॥
नाग्निर्दहति तद्वेश्म न वज्रमुपहन्ति च ॥
न तत्र म्रियते बालो यत्राऽऽस्ते सोमसंज्ञितम् ॥ ३४ ॥

सोमघृतम् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥
॥ ३४ ॥



[illegible] च पित्तप्रभवं च गुल्मं ॥३[illegible]॥

मंडूकस्य फलम् । कुशपञ्चमूलं तृणपञ्चमूलम् । शतावरीरसस्य प्रस्थाश्चत्वारः ।
क्षीरस्यैकः प्रस्थः । द्विगुणं वा प्रत्येकम् । नीलोत्पलाद्यं घृतम् ॥ ३५ ॥ ३६ ॥

आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं य-
त्तैलं पाच्यं द्रवति नियतं यावदेतन्न सम्यक् ॥
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति व्रीडाकरभगफलं नात्र संदेहबुद्धिः ॥ ३७ ॥

आखोर्मांसमिति। मूषकगुडकस्यैकस्य मांसं दत्त्वा तैलं कुडवमात्रमेव मन्दं पचेत् ॥ ३७ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्त-
कृतायां व्याख्याकुसुमावल्याख्यायां चतुःषष्टितमो
योनिव्यापदधिकारः समाप्तः ॥ ६४ ॥

---

## अथ पञ्चषष्टितमः स्त्रीरोगाधिकारः।

---

संप्रति स्त्रीरोगस्तदधिकारात् ॥

मधुकं शाकबीजं च पयस्या सुरदारु च ॥
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ १ ॥
वृक्षादनी पयस्या च तथैवोत्पलसारिवा ॥
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥ २ ॥
बृहतीद्वयकाश्मर्यक्षीरिशुङ्गास्त्वचो घृतम् ॥
पृथक्पर्णी बलाशिग्रुश्वदंष्ट्रामधुयष्टिकम् ॥ ३ ॥
शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ॥
मासेषु सप्त योगाः स्युरर्धश्लोकास्तु सप्तसु ॥
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥ ४ ॥

शाको महावृक्षः कर्कशमहापत्रः प्रसिद्धः। तस्य बीजम् । पयस्या, अर्कपुष्पी क्षीरविदारी वा क्षीरकाकोली वा। अश्मन्तकः कोविदारसदृशोऽम्लपत्रोऽम्ललोहितः। मालु आवा, इति लोके। ताम्रवल्ली रामतरुणी मञ्जिष्ठा वा । वृक्षादनी वन्दाकः। वृक्षफलंधुकेत्यपरे। तथैवेत्यस्य स्थाने सुश्रुते लता वेति पाठान्तरम्। लता दूर्वा मञ्जिष्ठा वा। प्रियंगुरिति [illegible]। उत्पलसारिवा श्यामलता। अनन्ता यवासकः। सारिवा, उत्पलसारिवा। पद्मा पद्मचारिणी । भार्गीत्यपरे पद्मा वा । बृहतीद्वयस्थाने क्वापि फलपाठो न युक्तः। सुश्रुते बृहत्यौ काश्मरी चापीति पाठात्स्थूलफला चणकबृहती च। क्षीरिशुङ्गाः क्षीरिवृक्षाणां वटादीनामविकसिताः प्रवालाः। त्वचः क्षीरिणामेव । एते योगाः कल्करूपाः। यथाक्रमं प्रथममासादारभ्य सप्तमासान्यावदनुक्रमेणेत्यर्थः। पयोयुता इति। चूर्णादिप्रयोग एते योगाः पयसा युताः प्रयोज्या इत्यर्थः ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥

---

१ ख. 'रर्धश्लोकसमापनाः। च'।

कपित्थाबिल्वबृहतीपटोलीक्षुनिदिग्धिकाः ॥
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥ ५ ॥

कपित्थादीनां सर्वेषां मूलानि क्षीरसिद्धान्यष्टमे मासि ॥ ५ ॥

नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥

अयं योगः क्वाथः । किंवा मधुकादीनां कल्कं क्षीरेण पिबेत् । पयस्या क्षीरविदारी ॥

पयस्तु दशमे शुण्ठ्याः शृतशीतं प्रशस्यते ॥ ६ ॥

**पयस्तु दशम इति ।** क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितमिति सुश्रुतपाठे दशमे मासि शुण्ठीपयस्याभ्यां क्षीरपाककल्पनया सिद्धं क्षीरं हितं भवति । अथवा सक्षीराः शुण्ठ्यादयः प्रशस्यन्ते । वाग्भटेऽप्येतैः सिद्धं क्षीरं प्रतिपादितम् ॥

तथा च—"कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकाः ।
मूलैर्शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ॥
नवमे सारिवानन्तापयस्यामधुयष्टिभिः ।
योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ॥
अथवा यष्टिमधुकनागरामरदारुभिः" इति ॥ ६ ॥

सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ॥
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ७ ॥

सक्षीरेत्यादियोगेऽपि दशममासक इति । नवमदशममासकयोस्तु गर्भपुष्ट्यर्थमौषधं विधीयते ॥ ७ ॥

समधुच्छागदुग्धेनकुलालकरकर्दमः ॥
अवश्यं स्थापयेद्गर्भं चलितं पानयोगतः ॥ ८ ॥

सुगमम् ॥ ८ ॥

कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च ॥
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ ९ ॥

सुगमम् ॥ ९ ॥

कसेरुशृङ्गाटकजीवनीयैः पद्मोत्पलैरण्डशतावरीभिः ॥
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥ १० ॥

सुगमम् ॥ १० ॥

कसेरुशृङ्गाटकपद्मकोत्पलं समुद्गयष्टीमधुकं सशर्करम् ॥
सशूलगर्भच्युतिपीडिताङ्गना पयोविमिश्रं पयसाऽन्नभुक्पिबेत् ॥ ११ ॥

समुद्रयष्टीमधुकमिति । मुद्रो मुद्रपर्णी । समुद्रपर्णीमधुकमिति तु पाठः सुगम एव ॥ ११ ॥

पाठासुरससिंहास्यमयूरकुटजैः पृथक् ॥
नाभिबस्तिभगालेपात्सुखं नारी प्रसूयते ॥ १२ ॥

सुरसा निर्गुण्डी । मयूरोऽपामार्गः । कुटजः स्वनामख्यातस्तरुः । मयूरकजटैरिति पाठे जटीमूलम् ॥ १२ ॥

परूषकशिफालेपः स्थिरामूलकृतोऽथवा ॥
नाभिबस्तिभगाद्येषु मूढगर्भापकर्षणः ॥ १३ ॥

सुगमम् ॥ १३ ॥

मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ॥
घृतेन सह पातव्यं सुखं नारी प्रसूयते+ ॥ १४ ॥

सुगमम् ॥ १४ ॥

इन्द्रोऽमृतं च सोमश्च चित्रभानुश्च भामिनि ॥
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ १५ ॥
इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं विमुञ्चतु स्त्रि ॥
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥ १६ ॥
मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्येण रश्मयः ॥
मुक्तः सर्वभयाद्गर्भ एह्येहि मा चिरं स्वाहा ॥ १७ ॥

केचिदाचार्या मन्त्रव्याख्यानं न कुर्वन्ति केचित्कुर्वन्ति तदाह—अमृतं समुद्रमथनोद्भूतम् । चित्रभानुरादित्यः । भामिनि हे वरस्त्रि । उच्चैःश्रवा अमृतमथनोत्पन्नस्तुरगः शक्रवाहनः । लघु शीघ्रम् । दिशन्तु प्रयच्छन्तु ॥ १५ ॥ १६ ॥ १७ ॥

जलं[2] च्यावनमन्त्रेण सप्तवाराभिमन्त्रितम् ॥
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम् ॥ १८ ॥

जलं च्यावनमन्त्रेण सप्तवाराभिमन्त्रितम् । पीत्वेति । प्रचारोऽयं वृन्देन लिखितः । सुश्रुते तु च्यावनमन्त्रानुपशृणुयादित्युक्तम् ॥ १८ ॥

---

+ ख. पुस्तके—तुषाम्बुपरिपिष्टेन मूलेन परिलेपयेत् । लाङ्गल्याश्चरणौ सूते क्षिप्रमापन्नगर्भिणी ॥ १ ॥ सुदर्शना पृष्ठि(श्नि)पर्णी अपामार्गस्य वा पृथक् । नाभियोनिप्रलेपात्सा क्षिप्रमेव प्रसूयते ॥ २ ॥ इत्यधिकमत्र ।

---

१ क. इहामृ° । २ क. °लं च्याव° ।

*नाड्यृतुवसुभिः पक्षदिगष्टादशभिरेव च ॥
अर्कभुवनाब्धिसहितैरुभयत्रिंशकमाश्चर्यम् ॥ १९ ॥

नाड्यः षोडश । ऋतवः षट् । वसवोऽष्टौ । पक्षौ द्वौ । दिशो दश स्वरूपतः । अर्का द्वादश । भुवनानि चतुर्दश । अब्धयश्चत्वारः । एतेऽङ्का गणकस्यै(केनै)व नव कोष्ठकान्कृत्वा तदभ्यन्तरे लेख्याः । उभयपञ्चदशकमपि चक्रेण दर्शितम्—

"वसुगुणाब्ध्येकबाणनवषट्सप्तयुगैः क्रमात् ।
सर्वैः पञ्चदश द्विस्तु त्रिंशकं नवकोष्ठके" इति ।

एतद्द्वयं फलकादौ लिखित्वा दर्शयितव्यम् ॥ १९ ॥

कटुतुम्ब्यहिनिर्मोककृतवेधनसर्षपैः ॥
कटुतैलान्वितैर्योनिधूपः पातयतेऽपराम् ॥ २० ॥
कचवेष्टितयाऽङ्गुल्या घृष्टे कण्ठे सुखं पतत्यपरा ॥
मूलेन लाङ्गलिक्याः संलिप्ते पाणिपादे वा ॥ २१ ॥
उपकुञ्चिकां पिप्पलीं च मदिरां लाभतः पिबेत् ॥
सौवर्चलेन संयुक्तां योनिशूलनिवारिणीम् ॥ २२ ॥
सूताया हृच्छिरोबस्तिशूलं मकल्लसंज्ञितम् ॥
यवक्षारं पिबेत्तत्र सर्पिषोष्णोदकेन वा ॥ २३ ॥
पिप्पल्यादिगणक्वाथं पिबेद्वा लवणान्वितम् ॥ २४ ॥
पारावतशकृत्पीतं शालितण्डुलवारिणा ॥
गर्भपातानन्तरोत्थरक्तस्रावनिवारणम् ॥ २५ ॥

सुगमाः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

अमृतानागरसहचरभद्रोत्कटपञ्चमूलजलदजलम् ॥
शृतशीतं मधुयुक्तं निवारयति सूतिकातङ्कम् ॥ २६ ॥

भद्रोत्कटो भद्रवेकड इति ख्यातस्तरुः । किंवा भद्रं मुस्तकम् । इत्कटा, इत्कटाङ्कुरः । सूतिकातङ्कं गजाडिकामाहुः ॥ २६ ॥

---

* ख. पुस्तके—नाड्यृ१६तु६वसुभिः८पक्ष२दिग१०ष्टादश१८भिरेव च ।
अर्क१२भुवना१४ब्धि४सहितैरुभयत्रिंशकेनाऽऽश्चर्यम् ॥१॥
नागटरामा३ब्धि४भिर्यथा तथा चन्द्र१शर५ग्रहैः९ ।
रसा६श्व७पक्षैः२सूक्ष्मौ दृष्ट्वा पञ्चदशोभयम् ॥ २ ॥
इति पाठः ॥

| | | |
|---|---|---|
| १६ | ६ | ८ |
| २ | १० | १८ |
| १२ | १४ | ४ |

| | | |
|---|---|---|
| ८ | ३ | ४ |
| १ | ५ | ९ |
| ६ | ७ | २ |

सहचरपुष्करवेतसमूलं वैकङ्कतदारुकुलत्थसमम् ॥
जलमेतससैन्धवहिङ्गुयुतं सद्यो ज्वरसूतिकाशूलहरम् ॥ २७ ॥

वैकङ्कतं विकङ्कतमूलम् । विकङ्कतो वैकङ्कडिरिति लोके । जलं क्वाथः ॥ २७ ॥

दशमूलीरसः पूतः सद्यः सूतीरुजापहः ॥
पञ्चमूलस्य वा क्वाथं तप्तलोहेन संयुतम् ॥
सूतिकारोगनाशाय पिबेद्वा तद्धितां सुराम् ॥ २८ ॥

तप्तलोहेन संयुतमिति । तप्तलोहसंयोगात्क्वाथीकृतम् । तद्धितामिति । तेन ...रेण हिताम् । तेनेहापि तप्तलोहयोगः कार्य इति ॥ २८ ॥

वज्रकाञ्जिकमाह—

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यवानिका ॥
जीरके द्वे हरिद्रे द्वे विडं सौवर्चलं तथा ॥ २९ ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ॥
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥ ३० ॥
काञ्जिकं वज्रकं नाम स्त्रीणां बलविवर्धनम् ॥
मकल्लशूलशमनं परं क्षीराभिवर्धनम् ॥ ३१ ॥

पिप्पल्यादिद्रव्यस्य कर्षत्रयम् । काञ्जिकस्य शराव एकः । पानीयमप्यलमेवं प्रचारः । चक्रस्त्वाह—क्षीरपाकविधानेन काञ्जिकस्यापि साधनमिति ॥ २९ ॥ ३० ॥ ३१ ॥

वनकर्पासिकेक्षूणां मूलं सौवीरकेण वा ॥ ३२ ॥
विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्धनम् ॥
हरिद्रादिं वचादिं वा पिबेत्स्तन्यविशुद्धये ॥ ३३ ॥

सुगमम् ॥ ३२ ॥ ३३ ॥

तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ॥
पित्तदुष्टेऽमृताभीरुपटोलीनिम्बचन्दनम् ॥
धात्री कुमारश्च पिबेत्क्वाथयित्वा ससारिवम् ॥ ३४ ॥

ससारिवमित्यत्र स्थाने सशर्करमिति पाठान्तरम् । कफदुष्टस्तन्ये तु कफहरो विधिरुच्यते ॥ ३४ ॥

शोफं स्तनोत्थितमवेक्ष्य भिषग्विदध्या-
द्विद्रधावभिहितं बहुधा विधानम् ॥

सुगमम् ॥

---

१ म. 'मधुरं' ।

आमे विदह्यति तथैव गते च पाकं
तस्याः स्तनौ सततमेव हि निर्दुहीत ॥ ३५ ॥

आमे विदग्धतापरिहाराय विदह्यति विदाहिनि पाकपरिहाराय पक्के नाडीव्रणपरिहाराय स्तनौ निर्दुहीत ॥ ३५ ॥

विशालामूललेपस्तु हन्ति पीडां स्तनोत्थिताम् ॥ ३६ ॥

सुगमम् ॥ ३६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चषष्टितमः स्त्रीरोगाधिकारः समाप्तः ॥ ६५ ॥

---

## अथ षट्षष्टितमो बालरोगाधिकारः ।

---

दुष्टस्तन्यपानाद्बालानां रोगसंभवादनन्तरं बालरोगाधिकारः । तत्र प्राशस्त्यादादौ स्वस्थ एव बाले विधिमाह—

कुष्ठं वचाऽभया ब्राह्मी कनकं क्षौद्रसर्पिषा ॥
वर्णायुष्कान्तिजननं लेहं बालस्य दापयेत् ॥

कनकं स्वर्णचूर्णम् । लेहोऽयं जातदिने तदुपरि च प्रचरति । हिरण्याख्यवर्णादिकृल्लेहान्तरस्य संवत्सरं यावदुपयोग उक्तः ।

यथा—"ब्राह्मयन्तो(न्तं) हेमचूर्णं च समं कृत्वा निधापयेत् ।
घृतेन पाययेन्मात्रां तस्य संवत्सरं शिशुम्" इति ॥

बालस्य भैषज्यमात्रां विश्वामित्रः प्राह—

"विडङ्गफलमात्रं तु जातमात्रस्य भेषजम् ।
एतेनैव प्रमाणेन मासि मासि प्रवर्धते ॥
कोलास्थिमात्रं क्षीरादे दद्याद्भैषज्यकोविदः ।
क्षीरान्नादे कोलमात्रं कुमारे भेषजं हितम् ॥
अन्नादे मधुसर्पिर्भ्यां ह्रस्वोदुम्बरसंमितम्" इति ॥

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥ १ ॥

तद्गुणमिति । संस्कारेण लघुतमम् ॥ १ ॥

मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा ॥
स्वेदयेदुच्छ्रितां नाभिं शोफस्तेनोपशाम्यति ॥ २ ॥

नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम् ॥
तैलमभ्यञ्जने शस्तमेभिर्वाऽप्यवचूर्णितम् ॥ ३ ॥

॥ २ ॥ ३ ॥

हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः ॥
शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषजित् ॥ ४ ॥

सिंही पृश्निपर्णी । हरिद्रादिगणो ह्येष श्लोकेन निम्बस्तत्र कलशीति पठिता(?) । यस्तु क्षीरपः कषायं पातुमक्षमस्तस्य धात्रीं पाययेत । कषायोक्तद्रव्यस्य कल्केन लिप्तस्तनपानमपि दर्शितं सुश्रुतेन ।

तद्यथा—"येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदंकराः ।
तेषु तत्कल्कसंलिप्तौ कुमारं पाययेत्स्तनौ" इति ॥ ४ ॥

घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ॥
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम् ॥ ५ ॥

अरुणाऽतिविषा ॥ ५ ॥

धातकीबिल्वधान्याकलोध्रेन्द्रयववालकैः ॥
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिनुत् ॥ ६ ॥

लोध्रं लतावल्कं तनुत्वक्क(न तु त)रुवल्कं तस्य विरेचकत्वात् ॥ ६ ॥

रजनीदारुसरलश्रेयसीबृहतीद्वयम् ॥
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥ ७ ॥
ग्रहणीदीपनं हन्ति मारुतार्तिं सकामलाम् ॥
ज्वरातीसारपाण्डुत्वं बालानां सर्वरोगजित् ॥ ८ ॥

श्रेयसी हस्तिपिप्पली ॥ ७ ॥ ८ ॥

मिशिकृष्णाञ्जनैर्लाजशृङ्गीमरिचमाक्षिकैः ॥
लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः ॥ ९ ॥

मिशिकृष्णाञ्जनैरिति । मिशिर्मधुरिका ॥ ९ ॥

शृङ्गी समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् ॥
कासज्वरच्छर्दिभिरर्दितानां समाक्षिकां वाऽतिविषामथैकाम् ॥ १० ॥

सुगमम् ॥ १० ॥

आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण च्छर्दिनुत् ॥ ११ ॥
पीतं पीतं वमेद्यस्तु स्तन्यं तं मधुसर्पिषा ॥
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ॥ १२ ॥

---

१ क. 'के शिलालो'। २ क. 'द्रायवपष्ट्याह्व'।

द्विवार्ताकीफलरसं पञ्चकोलं चेत्येको योगः । द्विवार्ताकी बृहतीद्वयम् ॥११॥१२॥

ज्वरे विशेषमाह—

एकद्वित्राणि घस्राणि वातपित्तकफज्वरे ॥
क्षीरपस्याहितं सर्पिरन्ययोर्मध्यदेहवद् ॥ १३ ॥

स्तन्यपोयाहितं सर्पिरितराभ्यां यथार्थत इति डल्लणपाठः । स्तन्यपायाहितं सर्पिर्धात्र्या दत्तमिति वाक्यशेषः । इतराभ्यां क्षीरादान्नादाभ्यां यथार्थतो यथाप्रयोजनतो हितं सर्पिरित्यर्थः ॥ १३ ॥

बिल्वं च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च ॥
क्राथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥ १४ ॥

जलं सलोध्रमिति । जलं वालकम् ॥ १४ ॥

समङ्गाधातकीलोध्रसारिवाभिः शृतं जलम् ॥
दुर्धरेऽपि शिशोर्देयमतिसारे समाक्षिकम् ॥ १५ ॥
नागरातिविषामुस्तावालकेन्द्रयवैः शृतम् ॥
कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् ॥ १६ ॥
मोचरसः समङ्गा च धातकी पद्मकेसरम् ॥
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥ १७ ॥
कल्कः प्रियङ्गुकोलास्थिमध्यमुस्तरसाञ्जनैः ॥
क्षौद्रलीढः कुमारस्य च्छर्दिस्तृष्णातिसारनुत् ॥ १८ ॥
लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्कितः ॥
बालस्य रुन्ध्यान्नियतं रक्तास्रावं प्रवाहिकाम् ॥ १९ ॥

रक्तास्रावं प्रवाहिकामिति । प्रवाहिकायामेव यत्र रक्तस्रुतिस्तत्रायं योगो न तु केवलरक्तस्रावे तैलतिलयोस्तीक्ष्णयोस्तथा(द)नर्हत्वात् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

लाजा सयष्टिमधुकं शर्करा क्षौद्रमेव च ॥
तण्डुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥ २० ॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत्क्रियाम् ॥
रसाञ्जनं विशेषेण पानाभ्यञ्जनयोर्हितम् ॥ २१ ॥
कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः ॥
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥ २२ ॥

---

१ क. °पस्य हि° । २ क. °पाय हि° । ३ क. °पाय हि° । ४ क. °बालेषु° ।

घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन् ॥
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः ॥ २३ ॥

सुगमम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ॥
पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात् ॥ २४ ॥

सुगमम् ॥ २४ ॥

गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः ॥
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः ॥ २५ ॥

सुगमम् ॥ २५ ॥

पञ्चमूलीकषायेण सघृतेन पयः शृतम् ॥
सशृङ्गवेरं सगुडं शीतं हिक्कार्दितः पिबेत् ॥ २६ ॥

पञ्चमूली महत्यत्र । कफवातहरत्वात् । घृतमिह पानकाले प्रयोक्तव्यम् ॥ २६ ॥

द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ॥
लीढं श्वासं निहन्त्याशु कासं च तमकं तथा ॥ २७ ॥

सुगमम् ॥ २७ ॥

पुष्करातिविषाशृङ्गीमागधीधन्वयासकैः ॥
चूर्णं तु मधुना लीढं बालानां पञ्चकासजित् ॥ २८ ॥

सुगमम् ॥ २८ ॥

भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु ॥
कार्यं गदेषु बालानां तेषु दाहादिकं विना ॥ २९ ॥

दाहादिकं विनेति । अग्निक्षारवमनविरेचनशिराव्यधनादिकं विनेत्यर्थः । अतियातिनि रोगे तु दाहादिकमपि कर्तव्यम् । यदाह सुश्रुतः—"न दद्याद्बस्तिवमनविरेकांश्चात्ययादृते" इति ॥ २९ ॥

त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते ॥
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ ३० ॥

सुगमम् ॥ ३० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां षट्षष्टितमो बालरोगाधिकारः समाप्तः ॥ ६६ ॥

---

१ घ. प्रक्षेप्तव्यम् । २ घ शिशूनां ।

## अथ सप्तषष्टितमो बालग्रहाधिकारः ।

अतः परं ग्रहोपसर्गचिकित्सामाह—

**सहामुण्डितिकोदीच्यक्वाथस्नानं ग्रहापहम् ॥**

**सहामुण्डितिकेति** । सहा माषपर्णी । ग्रहप्रभावेण ग्रहाविष्टे बाले वाय्वादिदोषाः कुप्यन्तीति तत्प्रतिषेधार्थं सहादिक्वाथस्नानं कार्यम् । अथवा सहादिक्वाथः स्वभावेन ग्रहावेशमपि निवर्तयति । अचिन्त्यशक्तित्वात् । यतोऽचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति । सर्वग्रहाणां सामान्यविधिः सुश्रुतोक्तो यथा—

"ग्रहे पुराणे हविषाऽभ्यज्य बालं शुचौ शुचिः ।
सर्षपान्प्रकिरेत्तेषां तैले दीपं च कारयेत्" ॥

शुचौ पवित्रे देशे । शुचिर्भिषगिति शेषः । तेषां तैले सर्षपाणां तैले दीपं प्रज्वालयेदित्यर्थः ॥

**सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ॥ १ ॥**

सुगमम् ॥ १ ॥

**सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः ॥**
**विडालविडजालोम मेषशृङ्गी वचा मधु ॥**
**धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ॥ २ ॥**

मेषशृङ्ग्यजशृङ्गी छगलविषाणिका । उत्तरवारुणीति लोके ॥ २ ॥

**बलिशान्तीष्टिकर्माणि[1] कार्याणि ग्रहशान्तये ॥ ३ ॥**

**बलिशान्तीष्टिकर्माणीति** । बलिकर्म शुचिना वैद्येन कृतस्नानेन शस्त्रहस्तेन रात्रौ कर्तव्यम् । तदुक्तम्—'सोपवासः शुचिर्नक्तं सशस्त्रो निर्हरेद्बलिम्' इति ॥ ३ ॥

**मन्त्रश्चायं प्रयोक्तव्यस्तत्राऽऽदौ सार्वकार्मि(मि)कः ॥**

**ॐ नमो भगवते गरुडाय त्र्यम्बकाय ॐ सत्यं सत्यवते स्वाहा ॐ**
**कं[2] टं यं शं वैनतेयाय नमः । ॐ ह्रां ह्रीं क्षः ॥ ४ ॥**

**सार्वकार्मि(मि)क इति** । मन्त्राणामचिन्त्यशक्तित्वात् । तत्राऽऽदावित्यस्य स्थाने सूत्रादाविति पाठान्तरे बालस्य हस्ते कट्यां च सूत्रबन्धादावित्यर्थः ॥ ४ ॥

**बालदेहप्रमाणेन पुष्पमालां तु सर्वतः ॥**
**प्रगृह्य मुष्टिकाभक्तं बलिर्देयस्तु शान्तिकः ॥**
**ओंकारी स्वर्णपक्षी बालकं रक्ष रक्ष स्वाहा ॥ ५ ॥**

---

१ ङ. °न्तीष्टक° । २ क. ष्कं । ३ घ. रं । ४ ख. °काशा सुवर्ण° ।

अपरोऽप्ययं भक्तशरावदानमन्त्रः सद्भिः स्मृत इत्यधिकः क्वापि पाठः ॥ ५ ॥

वचाकुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि वा ॥
सारिवा सैन्धवं चैव पिप्पली घृतमष्टमम् ॥ ६ ॥
मेध्यं घृतमिदं सिद्धं पातव्यं च दिने दिने ॥
दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान्भवेत् ॥ ७ ॥
न पिशाचा न रक्षांसि न भूता न च मातरः ॥
प्रबाधन्ते कुमाराणां पिबतामष्टमङ्गलम् ॥ ८ ॥

सुगमम् । अष्टमङ्गलं घृतम् ॥ ६ ॥ ७ ॥ ८ ॥

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ॥
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्धनम् ॥ ९ ॥

सुगमम् । अश्वगन्धाद्यं घृतम् ॥ ९ ॥

लाक्षारससमं सिद्धं तैलं मस्तुचतुर्गुणम् ॥
रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशायुगैः ॥ १० ॥
शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः ॥
बालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत् ॥ ११ ॥

सुगमम् । लाक्षाद्यं तैलम् ॥ १० ॥ ११ ॥

पिष्ट्वा कर्कटकं तैलं सक्षीरं साधितं तु तत् ॥
पादाभ्यङ्गेन बालस्य दन्तध्वनिनिवारणम् ॥ १२ ॥

सुगमम् ॥ १२ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तषष्टितमो बालग्रहाधिकारः समाप्तः ॥ ६७ ॥

---

## अथाष्टषष्टितमो विषाधिकारः ।

---

बालस्याज्ञानाद्विषोपघातस्यापि संभवाद्विषचिकित्सितम्—

मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासंभवं
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ॥
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपं
स्थाने तत्र तदैव याति नियतं वक्त्रं यमस्याचिरात् ॥ १ ॥

---

१ क. च । २ क. प्रभवन्ति । ३ क. मूलयं । ४ क. घ. मे यत्र स एव । ५ क. वक्रं ।

प्रत्यङ्गिरासंभवमिति । प्रत्यङ्गिरा कण्टकशिरीषः । स्वल्पहिंलेत्यन्ये । पूर्वेण प्रचारः । शुचिभद्रयोगदिवस इति । शुचेराषाढस्य शुभयोगनक्षत्रादिके दिने ॥ १ ॥

मयूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ ॥
अब्दमेकं न भीतिः स्याद्विषार्तस्य न संशयः ॥ २ ॥

मयूरं निम्बपत्राभ्यामिति । मयूरगुडकमेकं निम्बस्य द्वे पत्रे संख्याविशेषस्यापि प्रयोजकत्वात् । तृतीया च सहयोगे । मेषगते रवौ वैशाखे मासि ॥ २ ॥

दंशस्योपरि बध्नीयात्तत्क्षणाच्चतुरङ्गुले ॥
क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥ ३ ॥

सुगमम् ॥ ३ ॥

अम्बुवत्सेतुबन्धेन बन्धेन स्तभ्यते विषम् ॥
न वहन्ति शिराश्चास्य मर्मसंधिगता अपि ॥
न जायते विषोद्वेगो बीजनाशादिवाङ्कुरः ॥ ४ ॥

सुगमम् ॥ ४ ॥

सत्त्वमालम्ब्य दष्टव्यस्तत्क्षणादुरगो रिपुः ॥
*कोमलं वा यदन्यच्च पेयं शीतं घृतं गवाम् ॥ ५ ॥

दष्टेन पुरुषेण सत्त्वमालम्ब्य हस्ताभ्यामुपसंगृह्य पुच्छे वक्त्रे च सर्पः सम्यग्दष्टव्यस्तद्रक्षणं तु तत्रैव संक्रमणहेतुरित्यर्थः। तथा चाऽऽलम्बायनः—

"संगृह्य सर्पं हस्ताभ्यां पुच्छे वक्त्रे च सात्त्विकः ।
स दष्टव्यस्ततः सर्पो द्वित्रिश्चतुरथापि च ॥
तत्र संक्रामति विषं दष्टो नैव विषायते ।
व्यवसायद्वितीयानां नास्त्यसाध्यं कृतात्मनाम्" इति ॥

कोमलं यदन्यदपीति । कूष्माण्डफलादि । पेयं शीतं गवां घृतम् ॥ ५ ॥

वाच्यो वा नीलकण्ठोऽहं ध्येया वा गारुडी तनुः ॥

सुगमम् ॥

शून्यताध्यानमात्रेण शून्यतां याति तद्विषम् ॥ ६ ॥

सुगमम् ॥ ६ ॥

श्लेष्मणः कर्णगूथस्य वामानामिकया कृतः ॥
लेपो हन्याद्विषं घोरं नृमूत्रासेचनं तथा ॥ ७ ॥

श्लेष्मणः कर्णगूथकस्य पृथग्लेपः ॥ ७ ॥

---

* अत्र टीकानुरोधेन 'कोमलं यदन्यदपि' इति पाठोऽपेक्षितः ।

कुलिकमूलनस्येन कालदष्टोऽपि जीवति ॥ ८ ॥

कुलिकमूलनस्येनेति । कुलिकः स्वल्पहिंस्रा ॥ ८ ॥

पिण्डीतगरकमूलं पुष्येणोत्पाट्य योजितं दंशे ॥
मृतमपि दष्टकपुरुषं चालयतीत्यत्र नो चित्रम् ॥ ९ ॥

सुगमम् ॥ ९ ॥

शिरीषपत्रस्वरसे सप्ताहं मरिचं सितम् ॥
भावितं सर्पदष्टानां पाने नस्याञ्जने हितम् ॥ १० ॥
नक्तमालफलव्योषबिल्वमूलनिशाद्वयम् ॥
सौरसं पुष्पमार्जं च मूत्रं बोधनमञ्जनम् ॥ ११ ॥

सौरसं पुष्पमार्जं च मूत्रमिति । सुरसः सिन्दुवारः । आर्जः श्वेतपर्णासः । अस्यापि पुष्पम् । मूत्रं तु मानुषम् । मानुषं तु विषापहमिति वचनात् ॥ १० ॥ ११ ॥

वैन्ध्याकर्कोटकीमूलं छागमूत्रेण भावितम् ॥
नस्यं काञ्जिकसंपिष्टं विषोपहतचेतसः ॥ १२ ॥

सुगमम् ॥ १२ ॥

इदानीमगदकोशमाह—

त्रिवृद्विशल्या मधुकं हरिद्रे माञ्जिष्ठवर्गो लवणं च सर्वम् ॥
कटुत्रिकं चैव विचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि ॥ १३ ॥
एषोऽगदो हन्त्युपयुज्यमानः पानाञ्जनाभ्यञ्जननस्ययोगैः ॥
अवार्यवीर्यो विषवेगहन्ता महागदो नाम महाप्रभावः ॥ १४ ॥

त्रिवृत्त्रिभण्डी । विशल्या दन्ती काष्ठपटेला वा । विशालेति पाठान्तरं सुबोधम् । मञ्जिष्ठासहितो वर्गो माञ्जिष्ठवर्गः । अत्रोक्तत्रिवृतादिरेव वर्गः । रक्ता नरेन्द्रो लवणश्च वर्ग इति तु पाठः सुश्रुते । तत्र रक्ता मञ्जिष्ठा नरेन्द्रः कृतमालकः । शृङ्ग इति । गोशृङ्गे प्रधानकल्पनया शृङ्गेऽवस्थापनं च पक्षम् । अतः परस्मिन्योगे पक्षमुपेक्षिते वेति वचनात् । अवार्यवीर्योऽप्रतिहतशक्तिः । महाप्रभावग्रहणेनैतज्ज्ञापयति न कदाचिदस्य प्रतिहन्यते शक्तिः ॥ १३ ॥ १४ ॥

कटभ्यर्जुनशैरेयशेलुक्षीरिद्रुमत्वचः ॥
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ १५ ॥

सुगमम् ॥ १५ ॥

---

१ क. घ. 'षपुष्पस्व' । २ क. ख. वन्ध्यकर्कोटजं मू' । ३ क. 'मशैलेय' ।

आगारधूममञ्जिष्ठारजनीलवणोत्तमैः ॥
लेपो जयत्याखुविषं कर्णिकायाश्च पातनम् ॥ १६ ॥

कर्णिकायाश्च पातनमिति । कर्णिकाऽऽखुविषकृता मांसकन्दी वरट्यादिकीटवक्त्रशृङ्गो वा ॥ १६ ॥

यः कासमर्दमूलं वदने प्रक्षिप्य कर्णफूत्कारम् ॥
मनुजो ददाति शीघ्रं जयति विषं वृश्चिकानां सः ॥ १७ ॥

सुगमम् ॥ १७ ॥

रजनीसैन्धवक्षौद्रसंयुक्तं घृतमुत्तमम् ॥
पानं मूलविषार्तस्य दिग्धविद्धस्य चेष्यते ॥ १८ ॥

दिग्धविद्धस्येति । दिग्धो विषाक्तो बाणः ॥ १८ ॥

चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तक्षतं तु यत् ॥
शूयते पच्यते चापि स्रवति ज्वरयत्यपि ॥ १९ ॥

द्विपाद्भिरिति (+वचनं) । मानुषवानरादिभिः ॥ १९ ॥

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपाद्यपि ॥
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ २० ॥

सोमवल्कोऽश्वकर्णश्चेति । सोमवल्कः कट्फलः । अश्वकर्णः शालभेदो गर्दभाण्डो वा । गोजिह्वा दार्वीपत्रिका । हंसपादी स्वनामख्याता ॥ २० ॥

दशाङ्गमगदमाह—

वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली ॥
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २१ ॥

अयमगदः कल्कश्चूर्णो वा ॥ २१ ॥

कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥ २२ ॥

जलौकसामिति । सविषाणामिन्द्रायुधादीनां षण्णाम् ॥ २२ ॥

छत्री [1]झर्झरपाणिश्च चरेद्रात्रौ तथा दिवा ॥
तच्छायाश[2]ब्दसंत्रस्ताः प्रणश्यन्तीह पन्नगाः ॥ २३ ॥

+ इदमधिकम् ।

१ क. जर्जरपाणिश्च । घ. सञ्चारपाणिश्च । २ क. 'ब्दवित्र' ।

[illegible] सज्वारः····इति ख्यातः । तच्छायाशब्दसंत्रस्ता इति । छत्रस्य छाया झर्झरस्य शब्दस्ताभ्यां संत्रस्ताः प्रणश्यन्त्यपयान्ति ॥ २३ ॥

सोत्कम्पः पुलकावृतः प्रति मुहुर्वक्त्रं समालोकते
दन्तेनाधरपल्लवं दशति चेत्सीत्कान्वितं कूजति ॥
यस्तापं जडतां च याति नितरां दष्टः स उत्कण्ठते
र(ग)न्तुं त्वस्थिकलामलाम्बरवर्ती रौद्रां श्मशानस्थलीम् ॥२४॥

सीत्कान्वितं कूजतीति । सीत्कारान्वितं यथा स्यात्तथा कूजतीत्यर्थः ॥ २४ ॥

विरुद्धाध्यशनक्रोधक्षुद्भयोष्णं च मैथुनम् ॥
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥ २५ ॥

विषदूषितस्य वर्ज्यानि सुश्रुतेनोक्तानि ।

तद्यथा—"दिवास्वप्नं व्यवायं च व्यायामं क्रोधमातपम् ।
सुरातिलकुलत्थांश्च वर्जयेद्विषदूषितः ॥
फाणितं शिग्रुसौवीरमजीर्णाध्यशनं तथा ।
वर्जयेच्च समासेन नवधान्यादिकं गणम्" ॥

कुलत्थांश्चेत्यत्र चकारेण पिण्याकमूलकलशुनकलायकुसुम्भातसीशिशुमारकूर्मनिष्पावजम्ब्वाम्रातकचूतादिकानि च वर्जयेत् ॥ २५ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टषष्टितमो विषरोगाधिकारः समाप्तः ॥ ६८ ॥

---

## अथैकोनसप्ततितमो रसायनाधिकारः ।

---

इदानीं रसायनाधिकारः प्रारभ्यते । द्विविधमौषधं व्याधितस्य व्याधिहरं स्वस्थस्योर्जस्करं च । स्वस्थस्योर्जस्करमपि द्विविधं रसायनं वाजीकरणं च ।

यदाह चरकः—"स्वस्थस्योर्जस्करं किंचित्किंचिदार्तस्य रोगजित् ।
स्वस्थस्योर्जस्करं यत्तु तद्वृष्यं तद्रसायनम्" इति ।

व्याधितव्याधिहरस्योक्तत्वात्संप्रति स्वस्थस्योर्जस्करविधिः । तत्राप्यायुरादिप्रकर्षकरत्वेन प्राधान्यादग्रे रसायनमाह—

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥

---

१ क. 'हकारमुत्कूजं' । २ ग. 'द्रवायासवै' ।

जराव्याधिविध्वंसि जराव्याध्युत्पत्तिप्रतिबन्धकम्। आयुर्मेधाप्रकर्षकराणां रसादीनामयनमुपायो रसायनम्। तदुक्तं चरके—"लाभोपायो हि धातूनां रसादीनां रसायनम्" इति।

अत्र श्रीब्रह्मदेवव्याख्यानम्—श्रेष्ठानां रसादीनां शुक्रान्तानां धातूनामयनमाप्यायनम्। अथवा भेषजाश्रितानां रसवीर्यविपाकप्रभावाणामायुर्वर्णवीर्यदार्ढ्यवयःस्थैर्यकराणामयनं लाभोपायो रसायनं वर्धकं स्थापकमप्राप्तप्रापकं चेति। द्विविधं रसायनं कुटीप्रावेशिकं वातातापिकं च। पुनश्च त्रिविधं काम्यं नैमित्तिकमाजस्रिकं च। मेधाकामः श्रीकाम इत्यादि काम्यम्। नैमित्तिकं व्याधेर्निमित्तं शिलाजतुभल्लातकतुवरकादि। आजस्रिकं क्षीरघृताभ्यासादिकमिति ॥

पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ १ ॥

पूर्व इति। यौवनप्रवेश एव मध्ये यौवनशेषे। बालो हि भेषजवेगासहत्वेन रसायनस्याविषयः। वृद्धस्य(श्च) जरापक्वशरीरस्य व्यर्थमेव रसायनमिति वचनादविषयः। पूर्वं वयो मध्यं च मुख्यो विषयस्तेन क्वापि वृद्धोऽपि विषयः। यदुक्तम्—'अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत्पुनर्युवा' इति। शुद्धकायः कृतवमनविरेचनः ॥ १ ॥

अविशुद्धशरीरस्य युक्तो रासायनो विधिः ॥
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ २ ॥

न भाति न दीप्यते यथा मलिने वस्त्रे रङ्गः। मलिनं हि वस्त्रं न रज्यते ॥ २ ॥

सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ॥
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ३ ॥

सुगमम् ॥ ३ ॥

त्रैफलेनाऽऽयसीं पात्रीं कल्केनाऽऽलेपयेन्नवाम् ॥
तमाहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाप्लुतम् ॥ ४ ॥
प्रभूतस्नेहमशनं जीर्णे तस्मिन्प्रयोजयेत् ॥
अजरोऽरुक्समाभ्यासाज्जीवेच्चापि समाः शतम् ॥ ५ ॥

आयसीं पात्रीमिति। कान्तलोहमयीं पात्रीम्। नवां विमलाम् ॥ ४ ॥ ५ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ॥
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥६॥
आयुष्प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्धनानि ॥
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शङ्खपुष्पी ॥ ७ ॥

मण्डूकपर्ण्या इत्यादि योगचतुष्टयम्। मण्डूकपर्णीस्वरसः प्रयोज्यः। दुग्धेन मधु-

१ क. समाम्। २ क. °याभ्यासो र°।

यष्टीचूर्णं प्रयोज्यम् । समूलपुष्प्या इति विशेषणं गुडूच्याः शङ्खपुष्प्या वा । अरुणदत्तस्त्वेवं व्याचष्टे । गुडूच्या रसं प्रयुञ्जीत । तथा सह मूलपुष्पाभ्यां वर्तते समूलपुष्पा तस्याः शङ्खपुष्प्याश्च कल्कं प्रयुञ्जीत । एतानि रसायनान्यायुष्प्रदानि रोगघ्नानि बलादिवर्धनानि मेधायै हितानि च । अतिशयेन शङ्खपुष्पी मेध्या । उपजातिवृत्ते ॥ ॥ ६ ॥ ७ ॥

ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम् ॥
क्षीराशिनस्ते बलवर्णयुक्ताः समाः शतं जीवितमाप्नुवन्ति ॥ ८ ॥

ये मार्कवस्वरसमनुदिनं मासं यावत्पिबन्ति दुग्धभोजनाः सन्तस्ते बलवर्णयुक्ता वर्षशतं जीवितमश्नुवते । भृङ्गरजःसमुत्थमिति निर्देशो भृङ्गरजःशब्दस्य सकारान्तत्वात्साधुः ॥ ८ ॥

असिततिलविमिश्रान्पल्लवान्भक्षयेद्यः
सततमिह पयोशी भृङ्गराजस्य मासम् ॥
भवति स चिरजीवी व्याधिभिर्विमयुक्तो
भ्रमरसदृशकेशः कामचारी मनुष्यः ॥ ९ ॥

सुगमम् ॥ ९ ॥

पीताऽश्वगन्धा पयसाऽर्धमासं घृतेन तैलेन सुखाम्बुना वा ॥
कृशस्य पुष्टिं वपुषो बिभर्ति बालस्य सस्यस्य यथाऽम्बुवृष्टिः ॥ १० ॥

सुगमम् ॥ १० ॥

धात्रीतिलान्भृङ्गरजोविमिश्रान्ये भक्षयेयुर्मनुजाः क्रमेण ॥
ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयोऽप्यामरणाद्भवेयुः ॥ ११ ॥

मनुजाः क्रमेणेति । क्रमेण रसायनविधिक्रमेण ॥ ११ ॥

मासं वचामप्युपसेवमानाः क्षीरेण तैलेन घृतेन वाऽपि ॥
भवन्ति रक्षोभिरधृष्यरूपा मेधाविनो निर्मलमृष्टवाचः ॥ १२ ॥

वचां च मासं क्षीराद्यन्यतमेनोपयुञ्जाना राक्षसैरनुपद्रुतरूपा मेधावन्तो निर्मलमृष्टवाचश्च स्युः ॥ १२ ॥

वृद्धदारुकमूलानि सूक्ष्मचूर्णानि कारयेत् ॥
शतावर्या रसेनैव सप्तवारांश्च भावयेत् ॥ १३ ॥

---

१ क. 'तपनप' ।

अक्षमात्रं तु तच्चूर्णं सर्पिषा सह योजयेत् ॥
मासमात्रोपयोगेन मतिमाञ्जायते नरः ॥
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः ॥ १४ ॥

सुगमम् ॥ १३ ॥ १४ ॥

हस्तिकर्णरजः खादेत्प्रातरुत्थाय सर्पिषा ॥
यथेष्टाहारचारोऽपि सहस्रायुर्भवेन्नरः ॥ १५ ॥
मेधावी बलवान्कामी स्त्रीशतानि व्रजत्यसौ ॥
मधुना त्वश्ववेगः स्याद्बलिष्ठः स्त्रीसहस्रगः ॥ १६ ॥

हस्तिकर्णरजः खादेदिति । हस्तिकर्ण[रजः] पलाशमूलचूर्णम् ॥ १५ ॥ १६॥

अयं मन्त्रः प्रयोक्तव्यो भिषजा चाभिमन्त्रणे ॥
ॐ नमो विनायकाय अमृतं रक्ष रक्ष मम फलसिद्धिं
देहि देहि रुद्रवचनेन स्वाहा ॥ १७ ॥

ॐ नम इत्यादिमन्त्रो हस्तिकर्णेत्यादियोगविषय एव ॥ १७ ॥

पुनर्नवस्यार्धपलं नवस्य पिष्टं पिबेद्यः पयसाऽर्धमासम् ॥
मासद्वयं तत्त्रिगुणं समां वा जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥ १८ ॥

पुनर्नवायाश्छन्दोनुरोधाद्ध्रस्वत्वम् । मासद्वयं तत्त्रिगुणमिति । तत्त्रिगुणं षण्मासान् ॥ १८ ॥

धात्रीचूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिः समांशं
कृष्णामानीसिताष्टप्रसृतियुतमिदं स्थापितं भस्मराशौ ॥
वर्षान्ते तत्समश्नन्भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिवचनबलस्थैर्यसत्त्वैरुपेतः ॥ १९ ॥

कंसं चतुःषष्टिपलानि । स्वरसपरिगतमामलकस्य रसभावितं भावना चैकविंशतिवारान् । क्षौद्रसर्पिः समांशं मधुघृतयोः प्रत्येकं कंसमित्यर्थः । स्थापितं भस्मराशौ प्रावृडारम्भे वर्षान्ते शरदि । अत्र योगे चरकः—"आमलकचूर्णाढकमेकविंशतिरात्रमामलकसहस्रस्वरसपरिपीतं मधुघृता[ढका]भ्यामेकीकृत्याष्टभागपिप्पलीशर्कराचूर्णचतुर्भागसंयुतं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात्तद्वर्षान्ते प्रयोजयेदिति ॥ १९ ॥

गुडूच्यपामार्गविडङ्गशङ्खिनीवचाभयाशुण्ठिशतावरीसमम् ॥
घृतेन लीढं प्रकरोति[१] मानवं त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥ २० ॥

विडङ्गशङ्खिनीति । शङ्खिनी शङ्खपुष्पी ॥ २० ॥

---

१ क. 'भो महावि'।

ब्राह्मी वचा अश्वगन्धापिप्पल्यो मधुसंयुताः ॥
आसां प्रयोगात्सप्ताहात्किंनरैः सह गीयते+ ॥ २१ ॥

सुगमम् ॥ २१ ॥

तीव्रेण कुष्ठेन परीतदेहो यः सोमराजीं नियमेन खादेत् ॥
संवत्सरं कृष्णतिलद्वितीयां स सोमराजीं वपुषाऽतिशेते ॥२२॥

यः सोमराजीमिति । सोमराज्यवल्गुजस्तस्य बीजं ग्राह्यम् । सोमराजीं चन्द्रपङ्क्तिमतिशेते कान्त्याऽ[भि]भवति ॥ २२ ॥

पञ्च भल्लातकांश्छित्वा साधयेद्विधिवज्जले ॥ २३ ॥
कषायं तु पिबेच्छीतं घृतेनाक्तोष्ठतालुकः ॥
पञ्चवृद्ध्या पिबेद्यावत्सप्ततिं ह्रासयेत्ततः ॥ २४ ॥
जीर्णेऽद्यादोदनं शीतं घृतक्षीरोपसंहितम् ॥
एतद्रसायनं मेध्यं वलीपलितनाशनम् ॥ २५ ॥
कुष्ठार्शःकृमिदोषघ्नं दुष्टशुक्रविशोधनम् ॥
भल्लातकक्वाथपाने मन्त्रोऽयं पठ्यते क्वचित् ॥ २६ ॥
वरुण त्वं हि देवानाममृतं परिकल्पसे ॥
आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव ॥ २७ ॥

पञ्च भल्लातकांश्छित्वा साधयेद्विधिवज्जल इति । एकभल्लातके सुश्रुते कषायशुक्तिमानमुक्तम् । तद्यथा—एकं भल्लातकमादाय द्विधा त्रिधा चतुर्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायशुक्तिमनुष्णां घृताभ्यक्तताल्जिह्वोष्ठः प्रातः प्रातरुपसेवेतेति । कषायशुक्तिश्च जलपलद्वयक्वथितपादशेषे भवति । शुक्तिरर्धपलम् । पञ्चभल्लातकेष्वपि तदनुसारेण दशजलपलानि दत्त्वा कषायः पादशेषः कार्यः । कषायस्य तु वृद्धिर्णापुररक्षितेन चतुष्पलं यावदुक्ता ।

तद्यथा—"बीजं भल्लातकस्यैकं पूते निक्षिप्य वारिणि ।
क्वाथयेत्षोडशगुणे शुक्तिशेषं हिमं पिबेत् ॥
एकैकं वर्धयेद्बीजमा पञ्चभ्यो विचक्षणः ।
आ सप्ततेः पञ्चवृद्ध्या वर्धयेन्मतिमांस्ततः ।
शुक्तिवृद्ध्या कषायं च वर्धयेदा चतुष्पलात्" इत्यादि ॥

---

+ एतदग्रे ख. पुस्तके—हन्त्यम्लपित्तवमनारुचिदाहमोहखालित्यमेहतिमिरव्रणशुक्रदोषान् । भुक्त्वा नरः सततमामलकीरसेन वृद्धोऽप्यनेन च भवेत्तरुणीरिरंसुः ॥ १ ॥ इत्यधिकम् ।

---

१ क. 'बाभयाधात्रीत्रिपिप्पल्यो मधुसैन्धवम् । अस्य प्र' । २ क. तं ।

अत्रोत्तरो(र)भल्लातकवृद्धिक्रमेऽपि कषायस्य चतुष्पलत्वं तरतमभावेन सान्द्रकरणात्प्रत्येतव्यम् । अत्र योगे मन्त्रोऽपि क्वचिद्दृश्यते । यथा वरुण त्वं हि देवानामित्यादि ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

तैलं भल्लातकानां तु पिबेन्मासं यथाबलम् ॥
सर्वोपद्रवनिर्मुक्तो जीवेद्वर्षशतं दृढः ॥ २८ ॥

तैलं भल्लातकानामिति । भल्लातकतैलस्य कर्षः पेयः ॥ २८ ॥

कासश्वासातिसारज्वरपिटककटीकोठकुष्ठप्रमेहा-
न्मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशङ्खाक्षिरोगान् ॥
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥ २९ ॥

पिटककटी[कोठ]कुष्ठेति । पिटकः पिडिका । कटीशब्देन कटीगता गृध्रस्यादय उच्यन्ते । पयः पीतमिति । पयः पानीयं क्षीरं वा । सुश्रुते प्रातः क्षीरेण नस्यस्यापि दर्शितत्वात् ।

यथा—"शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः ।
त्रिशः समस्तमथ वा प्राक्पीतं स्थापयेद्वयः" इति ।

अस्यार्थः । प्रकृतिभेदेन चतुर्विधं वयःस्थापनमाह—शीतोदकमित्यादि । शीतोदकपयःक्षौद्रसर्पिषामेकशश्चत्वारः प्रयोगा द्विशः षट्त्रिशश्चत्वारश्चतुर्भिरेकः । एवं पञ्चदश प्रयोगाः । उदकं पयः क्षौद्रं सर्पिरित्येकशश्चत्वारः । उदकपयसी उदकक्षौद्रे उदकसर्पिषी पयःक्षौद्रे पयःसर्पिषी क्षौद्रसर्पिषी एवं द्विशः षट् । उदकपयःक्षौद्राण्युदकपयःसर्पींष्युदकक्षौद्रसर्पींषि पयःक्षौद्रसर्पींष्येवं त्रिशश्चत्वारः प्रयोगाः । उदकप[य]-क्षौद्रसर्पींषीत्येक एव प्रयोगः । मानविरुद्धानामेषां विषमाणामुपयोगः कार्य इति ज्ञेयं शीतोदकं समपित्तकफवातप्रकृतौ । पयः पुनरधिकपित्तप्रकृतावेव । क्षौद्रं कफप्रकृ[तौ] सर्पिः पुनरधिकवातप्रकृतौ । अत्रैवैकाद्वित्रिचतुर्द्रव्यसंयोगा हिताहितविभागमवेक्ष्य [द्व]न्द्वदोषभेदप्रकृतिषु स्वबुद्ध्या विभजनीयाः । प्रागिति प्रातः । आजन्मिकास्त्रि-प्रयोगाः ॥ २९ ॥

विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति खलु नरो यो घ्राणरन्ध्रेण वारि ॥
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
वलिपलितविहीनः सर्वरोगैर्विमुक्तः ॥ ३० ॥

---

१ घ. च । २ घ. °पतापनि° । ३ ख. °रःकुक्षिशूलाक्षि° । ४ क. °क्षयज° ।

विगतघननिशीथ इति । अपगतघनान्धकारे । एतच्च प्रातरित्यस्य स्वरूपसंकीर्तनम् ॥ ३० ॥

अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिबन् ॥
वातपित्तगदान्हन्ति जीवेद्वर्षशतं नरः ॥ ३१ ॥

अम्भसः प्रसृतान्यष्टाविति । अभ्यासक्रमेणाष्टप्रसृतादधिकं तु न पेयम् । आकृतिमात्रमिदम् ॥ ३१ ॥

व्यङ्गवलीपलितघ्नं पीनसवैस्वर्यकासशोषघ्नम् ॥
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिजननं च ॥ ३२ ॥
तद्वत्त्रिफलाम्बु निशिस्थं वलिपलितहरं दृष्टिदं श्रेष्ठम् ॥
प्रसृतिद्वयं तु पातव्यं नासया नाधिकं मतम् ॥ ३३ ॥

सुगमम् ॥ ३२ ॥ ३३ ॥

न केवलं दीर्घमिहाऽऽयुरश्नुते रसायनं यो विधिवन्निषेवते ॥
गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षरम् ॥ ३४ ॥

न केवलमित्यादिश्लोकश्चरकेणाभयामलकीये रसायनपादे पठितः । वृन्दस्तु सकलरसायनसाधारणोऽर्थ इति मन्यमानः सामान्यरसायनशेषे पठितवान् । प्रपद्यते प्राप्नोति । ब्रह्म मोक्षः । अक्षरमविनाशि । मोक्षावाप्तिश्च रसायनेन विशुद्धसत्त्वजननात् ॥ ३४ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकोनसप्ततितमो रसायनाधिकारः समाप्तः ॥ ६९ ॥

---

## अथ सप्ततितमो वाजीकरणाधिकारः ।

---

तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ॥
ध्वजः पतत्यथो नृणां क्लैब्यं समुपजायते ॥ १ ॥

पूर्वोक्तादेव संबन्धादनन्तरं वाजीकरणमुच्यते वाजीवात्यर्थमैथुनसामर्थ्याद्वाजी । किं वा वाजः शुक्रं तदस्यास्तीति वाजी वाजी क्रियते येन पुरुषस्तद्वाजीकरणम् ।
यदुक्तं चरके—"येन नारीषु सामर्थ्यं वाजिवल्लभते नरः ।
येन चाभ्यधिकं बीजं वाजीकरणमेव तत्" इति ।

१ क. 'तिचयं । २ क. 'त्यतो नृ' ।

तच त्रिविधं प्रवर्तकं +जनकं जनकप्रवर्तकं च ।

उक्तं हि—"शुक्रच्युतिकरं किंचित्किंचिच्छुक्रविवर्धनम् ।
च्युतिवृद्धिकरं किंचित्त्रिविधं वृष्यमुच्यते" इति ।

तत्र शीते युवतीस्पर्शादि च्युतिकरं क्षीरादि वृद्धिकरं माषो जनकः प्रवर्तक[illegible] माषोऽत्र माषगुणे 'वृष्यः शीघ्रं पुंस्त्वं दधाति' [इति] पदद्वयकरणादुभय[illegible]

ब्रह्मदेवस्त्वेवं वक्ति–वाजीकरणं त्रिविधं जनकं प्रवर्तकं जनकप्रवर्तकं चेति । [illegible] जनकं मांसघृतादिकं यद्रसादिधातुक्रमेण परिणतं प्रधानधातुपुष्टिं करोति । प्रवर्तकमुच्चटा[illegible]र्णादिकं शुक्रविरेचनकम् । न च तस्य वैरेचनिकोक्त्या शुक्रक्षयकारित्वं स्यात्, यतो विरेचनं शुक्रस्य पातनायाभिमुखीभावमात्रकरणम् । जनकप्रवर्तकं तु गव्यघृत[illegible] माषकाकाण्डफलादिकम् ।

डल्हणस्त्वेवं व्याचष्टे—केवलदेहबलकरं जनकं गोधूमादि । केवलमनोबलकरं संकल्पादि तु प्रवर्तकम् । घृतक्षीरादि तु देहमनोबलकरं तदुभयकरमिति । वृष्यादिद्रव्याणां सद्यःशुक्रादिकरणे प्रभावोऽयम् ।

तथा च वाग्भटः—"केचिदाहुरहोरात्रात्षडहादपरे परे ।
मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः ॥
वृष्यादीनि प्रभावेण सद्यःशुक्रादि कुर्वते ।
प्रायः करोत्यहोरात्रात्कर्मान्यदपि भेषजम् ॥

क्लीबानां वाजीकरणं हितमित्यतः क्लीबमाह—

तैस्तैर्भावैरहृद्यैरिति । भयाविश्रम्भसंत्रासस्त्रीदोषदर्शनादिभिः । एषां च षाण्ढ्यकराणां भावानामसंख्येयत्वात्तैस्तैरिति सर्वनाम्ना निर्देशः कृतः । रिरंसोरिति । रन्तुमिच्छोः । मनोभिघातजं क्लैब्यमिदम् ॥ १ ॥

आहारजं क्लैब्यमाह—

अन्नैरम्लोष्णलवणैरतिमात्रोपसेवितैः ॥
सौम्यधातुक्षयो दृष्टः क्लैब्यं तदपरं स्मृतम् ॥ २ ॥

कटुकाम्लोष्णलवणैरिति पाठान्तरम् । सौम्यधातुः शुक्रम् । तदपरमिति । अन्नकृत[illegible] शुक्रक्षयजम् ॥ २ ॥

विशिष्टविहारजं क्लैब्यमाह—

अतिव्यवायशीलो वा न च वाजीक्रियारतः ॥
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥ ३ ॥

---

+ तत्र जनकं क्षीरादि न च धातुपरिणामक्रमेण तज्जनकं किंतु पुष्णात्यागमेव । उक्तं च तन्त्रान्तरे—वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हीति जेज्जटः । इति घ. टिप्पणी ।

। ध्वजभङ्गलक्षणीयं क्लैब्यम् । ध्वजभङ्गो मेढ्रानुत्थानम् । शुक्रक्षय-
विहारविशेषकृतशुक्रक्षयजम् ॥ ३ ॥

असाध्यं सहजं क्लैब्यं मर्मच्छेदात्तु यद्भवेत् ॥
साध्यानामवशिष्टानां कार्यो वाजीकरो विधिः ॥ ४ ॥

सहजं क्लैब्यमिति । तथा च—"जन्मप्रभृति यः क्लीवः क्लैब्यं तत्सहजं
। सुश्रुते—शारीरोक्तमासेचकादिकं पञ्चविधम् ।
-"पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् ।
स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्" ।

पित्रोः । आसेक्यः पुरुषो भवेदासेक्यनामा पुरुषो जायते । स शुक्रं प्राश्येति ।
रुषान्निजमुखेन व्यवायं कारयित्वा तत्र सिक्तं शुक्रं प्राश्याऽऽस्वाद्य ।
ङ्गोत्थानम् । आसेक्यनामाऽयं षण्ढो मुखयोन्यपरपर्यायः ।

"यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ।
स योनिशेफसोर्गन्धमाघ्राय लभते बलम्" ।

। योनिशेफसोर्गन्धमाघ्राय शिङ्घित्वा । अयं सौगन्धिकनामा षण्ढो नासा-
: ।

'स्वगुदेऽब्रह्मचर्याद्यः स्त्रीषु पुंवत्प्रवर्तते ।
कुम्भीकः स तु विज्ञेयः' ।

स्वे गुदे स्वकीये पायावब्रह्मचर्यादन्यपुरुषपार्श्वाद्व्यवायं कारयित्वा पश्चात्स्त्रीषु
। प्रवर्तते पुरुषवद्व्यवायं करोति स कुम्भीकनामा षण्ढो ज्ञेयः । अन्ये तु
विषये तासामेव स्वकीयगुदविवरे पशुवत्पृष्ठभागे शिथिलेनैव मेहनेन
क्तमेतादित्याह । ब्रह्मचर्यात् । क्लैब्यवशसंजाताप्रवृत्तित्वात् । ततश्चानया
जोच्छ्राये संजाते स एव स्त्रीषु पुरुषवत्प्रवर्तते स कुम्भीकनामा नपुंस-
निरयम् । अस्योत्पत्तिहेतुः सूत्रान्तरे वर्णितो यथा—'माता व्यवायं प्रति
बीजदौर्बल्यतया पितुश्च" । गयी तु कुम्भीकोत्पत्तिहेतौ काश्यपोक्तं

'अरजस्कां यदा नारीं श्लेष्मरेता व्रजेदृतौ ।
अन्यसक्ता भवेत्प्रीतिर्जायते कुम्भिकस्तदा" इति ।
ईर्ष्यकं शृणु वा परम् ।
दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्तते ।
ईर्ष्यकः स तु विज्ञेयः' ।

द्वयोनिरयमीर्ष्यकापरपर्यायः । अत्रापि तन्त्रान्तरे पठितो हेतुर्यथा—"ईर्ष्याभिभूतावपि मन्दहर्षावीर्ष्याह्वयस्यापि वदन्ति हेतुम्" इति । षण्ढकं शृणु पञ्चमम् ।

"यो भार्यायामृतौ मोहादङ्गनेव प्रवर्तते ।
ततः स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञितः" ।

यः पुमान्मोहवशादृतौ भार्यायां विषयेऽङ्गनावदुत्तानो भूत्वा व्यवहरति तत्र स्त्रीचेष्टिताकारः षण्ढो जायते स पुमान्स्त्र्याकृतिः स्त्रीचेष्टितश्च स्त्रीवदधोभूतः स्वमेढ्रस्योर्ध्वप्रदेशेऽपरपुरुषाद्वीर्यच्युतिं कारयति । मर्मच्छेदादिति । विटपमर्मच्छेदात् । तेन हि शुक्रवहनाड्युपघातो वङ्क्षणवृषणयोरन्तरे विटपे ॥ ४ ॥

**पिप्पलीलवणोपेतौ बस्ताण्डौ क्षीरसर्पिषा ॥**
**साधितौ भक्षयेद्यस्तु स गच्छेत्प्रमदाशतम् ॥ ५ ॥**

पिप्पलीलवणे संस्कारके । बस्ताण्डौ छागाण्डकोशौ । क्षीरसर्पिषा क्षीरोत्थितसर्पिषा न तु क्षीरेण सर्पिषा चेत्ययमत्रार्थ एकवद्भावेन कल्प्यः । क्षीरपक्षे लवणस्य संयोगविरुद्धत्वात् । प्रमदाशतमिति बहुवनितोपलक्षणम् ॥ ५ ॥

**बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ॥**
**यः खादेत्स नरो गच्छेत्स्त्रीणां शतमपूर्ववत् ॥ ६ ॥**

**बस्ताण्डसिद्धे पयसीति** । बस्तश्छागस्तस्याण्डो मुष्कः । क्षीरपरिभाषया बस्ताण्डेन क्षीरं साध्यं तस्मिन्पयसि सप्ताहं भावितांस्तिलान्खादेत् । तत्रानुपानं क्षीरमेव । परिभाषामाह—

"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः" इति ।

स नर इत्यस्य स्थाने ससितानिति पाठो वाग्भटे । तत्र ससितान्सशर्करान् । अजाविकमांसेत्यादिना यद्यपि क्षीरेण बस्तमांसस्य विरोधो दर्शितस्तथाऽपि विशिष्टवस्तस्याविरोधो वचनाद्देष्टव्यः । **असकृदिति** । सप्तधा । अपूर्ववत्प्रथमसुरतवत् ॥ ६ ॥

**चूर्णं विदार्याः सुकृतं स्वरसेनैव भावितम् ॥**
**सर्पिःक्षौद्रयुतं लीढ्वा दश गच्छेन्नरोऽङ्गनाः ॥ ७ ॥**

सुकृतमित्यस्य स्थाने बहुशः पाठः । **स्वरसेनेति** । विदार्या एव । लीढ्वाऽनन्तरमनुपानं शीतलं जलम् ॥ ७ ॥

**एवमामलकं चूर्णं स्वरसेनैव भावितम् ॥ ८ ॥**
**शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत् ॥**
**एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ॥ ९ ॥**

पञ्चत्रिंशन्मधुनो व्योषस्याष्टौ पलानि दश वह्नेः ॥
तद्द्विगुणा वाराही सप्तगुणा शर्करा दहनात् ॥ १६ ॥
मध्वर्धं घृतमेतत्परिमृज्य स्निग्धभाजने निहितम् ॥
अद्याद्यथाग्नि हन्तुं रोगानीकं क्षयं कासम् ॥ १७ ॥
अश्मर्युदरभगंदरकुष्ठवलीपलितपीनसं षाण्ढ्यम् ॥
नृसिंहसदृशविक्रममपत्यमभिवाञ्छितं लभते ॥ १८ ॥
बलवर्णस्वरकान्तिबुद्ध्युत्साहसत्त्वसंयुक्तम् ॥
उपयुज्य चूर्णमब्दं शुद्धतनुर्नारसिंहाख्यम् ॥ १९ ॥
वराहमूर्धवत्कन्दो वाराहीकन्दसंज्ञितः ॥
भिषजां तदलाभेन चर्मकारालुको मतः ॥ २० ॥

त्रिकण्टो गोक्षुरकः । चतुष्प्रस्थमिति । मिलित्वा । तेन त्रिकण्टादीनां प्रत्येकं प्रस्थः । तत्सप्तोनमिति । तत्प्रस्थयुगं सप्तपलोनं पञ्चविंशतिपलानीत्यर्थः । इति नृसिंहचूर्णम् ॥ १९ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

शतावरीघृतमाह—

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ॥
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुच्यते ॥ २१ ॥

अत्र शर्करापिप्पलीक्षौद्रयुक्तत्वं सिद्धे घृते ॥ २१ ॥

गोधूमाद्यं घृतमाह—

गोधूमात्तु पलशतं निष्क्वाथ्य सलिलाढके ॥
पादावशेषे पूते च द्रव्याणीमानि दापयेत् ॥ २२ ॥
गोधूममुञ्जातफलं माषा द्राक्षा परूषकम् ॥
काकोली क्षीरकाकोली जीवन्ती सशतावरी ॥ २३ ॥
अश्वगन्धा सखर्जूरा मधुकं त्र्यूषणं सिता ॥
भल्लातकं स्वयंगुप्ता समभागानि कारयेत् ॥ २४ ॥
घृतप्रस्थं पचेदेवं क्षीरं दत्त्वा चतुर्गुणम् ॥
मृद्वग्निनाऽथ सिद्धे च द्रव्याण्येतानि निक्षिपेत् ॥ २५ ॥
त्वगेले पिप्पली धान्यं कर्पूरं नागकेसरम् ॥
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥ २६ ॥
दत्त्वेक्षुदण्डेनाऽऽलोड्य विधिवद्विनियोजयेत् ॥
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥ २७ ॥

केवलस्य पिबेदस्य पल[illegible]तः ॥
न तस्य लिङ्गशैथिल्यं [illegible]यो भवेत् ॥ २८ ॥
बल्यं परं वातहरं शुक्र[illegible] ॥
मूत्रकृच्छ्रप्रशमनं वृद्धाना[illegible]ते ॥ २९ ॥
[illegible] ॥
[illegible]जुते [illegible]पिबेत्पयः ॥
[illegible]रसायनम् ॥ ३० ॥

निष्[illegible]गोधूमस्य पलशते क्वाथार्थं जलद्रोणः पादशेष आढकं प्रचरति चेत्थम् । अन्ये पु[illegible]धाज्जलाढकेनैव क्वाथः पादशेषः प्रस्थ इत्याहुः । मुञ्जातफलमौत्तरापथिकं तद[illegible]मस्तकम् । मधुकस्य फलम् । त्वगेलादीनां कल्कद्रव्यसमानं मानम् । अ[illegible]स्य टिप्पणी—

"जलद्रोणेऽत्र गोधूमक्वाथ[illegible]कम् ।
मुञ्जातकफलस्थाने तद्गु[illegible]म् ।
कल्कद्रव्यसमं मानं त्वग[illegible]तः" इति ॥

इक्षुकाण्डेनेक्षुखण्डेन । पलमात्रमिति[illegible] पलद्वयं तदश्नीयादित्याधिकमात्रानिरासार्थमुक्तम् ॥ [illegible] ॥ २६ ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥

महासुगन्धितैलमाह—

कर्पूरागुरुचोचवोलनलिका[illegible]धातकी-
पुष्पैः सप्तदलैलवालुस[illegible]मांसीपुरैः ॥
एलाकुङ्कुमरोचनादमनक[illegible]जातीफलैः
कङ्कोलक्रमुकोजटाम[illegible]लवङ्गामयैः ॥ ३१ ॥
तैलोशीरहरेणुकामलयज[illegible]डानखै-
र्जातीकोशकुलीरप[illegible]कान्वितैः पालिकैः ॥
लाक्षायोजनवल्लिलोध्रस[illegible] विपाच्याऽऽढकं
तेनाभ्यज्य तनुं ज[illegible]स्त्रीणां परं वल्लभः ॥ ३२ ॥
शुक्राढ्यो द्युतिमानन[illegible]ढोऽपि रत्युत्सुको
वन्ध्या गर्भवती [illegible] वृद्धाऽपि सूते सुतम् ॥
कण्डूस्वेदविचर्चिका[illegible]यकुष्ठापह-
मभ्यिभ्यां परिक[illegible] तैलं सुगन्ध[illegible]

चोचं गुडत्वक् । बोलो गन्धरसः । सप्तदलः सरघवीति नाम्नाऽऽख्य।
उजटा सूक्ष्मैला । मदः कस्तूरिका । कान्ता प्रियंगुः । तैलं सिह्वकम् ।
पर्णम् । नतं तगरपादिका । योजनवल्ली मञ्जिष्ठा ! ...............मह।
॥ ३१ ॥ ३२ ॥ ३३ ॥

गुडकूष्माण्डकमाह—

कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ॥
प्रस्थं च घृततैलस्य तस्मिंस्तप्ते प्रदापयेत् ॥ ३४ ॥
त्वक्पत्रधान्यकव्योषजीरकैलाद्वयानलम् ॥
ग्रन्थिकं चव्यमातङ्गपिप्पल्यः शृङ्गवेरकम् ॥ ३५ ॥
शृङ्गाटकं कसेरुं च प्रलम्बं तालमस्तकम् ॥
चूर्णीकृतं पलांशं तु गुडस्य तुलया पचेत् ॥ ३६ ॥
शीतीभूते पलान्यष्टौ मधुनः संप्रदापयेत् ॥
कफपित्तानिलहरं मन्दाग्नीनां च दीपनम् ॥ ३७ ॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् ॥
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः ॥ ३८ ॥
क्षयेण च गृहीता[illegible]रमेतद्भिषग्जितम् ॥
कासं श्वासं ज्वरं हिक्कां हन्ति च्छर्दिमरोचकम् ॥ ३९ ॥
गुडकूष्माण्डकं ख्य[illegible]मश्विभ्यां समुदाहृतम् ॥
खण्डकूष्माण्डवत्पात्रं स्विन्नकूष्माण्डकद्रवः ॥ ४० ॥

जीरकद्वयमेलाद्वयं च । प्रलम्बं तालाङ्कुरः । अत्र खण्डकूष्माण्डकवत्स्विन्नकूष्माण्डद्रवपात्रं च ज्ञेयम् । खण्डकूष्माण्डवत्पात्रं गुडकूष्माण्डकद्रव इत्यत्र द्रवः स्विन्नकूष्माण्डकस्य ज्ञेयः । गुडकूष्माण्डकम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

यत्किंचिन्मधुरं स्निग्धं बृंहणं जीवनं गुरु ॥
हर्षणं मनसश्चैव तत्सर्वं वृष्यमुच्यते ॥ ४१ ॥

यत्किंचिद्वस्तु मधुरादिगुणं चित्तहर्षजननं च तत्सर्वमपि वृष्यं कथ्यते ॥ ४१ ॥

सुरूपा यौवनस्था या भूषणैश्च विभूषिता ॥
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ॥ ४२ ॥

शिक्षितेति । कामशास्त्रोक्तचतुःषष्टिप्रज्ञा(कला)कुशला ॥ ४२ ॥

नान्तर्वै षोडशाद्वर्षात्सप्ततेः परतो न च ॥
[illegible]कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥ ४३ ॥

नान्तर्वै षोडशाद्वर्षादिति । असंपूर्णधातुत्वात् । सप्ततेः परतो न चेति । क्षीयमाणधातुत्वात् ॥ ४३ ॥

प्रवर्तनादिकारणान्युद्दिशन्नाह—

भोजनानि विचित्राणि पानानि विविधानि च ॥
वाचः श्रोत्रानुगामिन्यस्त्वक्सुखस्पर्शनानि च ॥ ४४ ॥
गन्धा मनोज्ञा रूपाणि विचित्रोपवनानि च ॥
मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् ॥ ४५ ॥

श्रोत्रानुगामिन्य इति । श्रोत्रसुखाः । अप्रतिघात इति । अप्रातिकूल्यम् ॥ ४४ ॥ ४५ ॥

जरया चिन्तया शुक्रं व्याधिभिः कर्मकर्शनात् ॥
क्षयं गच्छत्यनशनात्स्त्रीणां चातिनिषेवणात् ॥ ४६ ॥
क्षयाद्भ‍्या(या)दविस्रम्भाच्छोकात्स्त्रीदोषदर्शनात् ॥
नारीणामरसज्ञत्वादभिघातादसेवनात् ॥ ४७ ॥

अविस्रम्भादिति । अविश्वासात् ॥ ४६ ॥ ४७ ॥

भल्लातकास्थिजलशूकमथाक्ष(ब्ज)पत्र-
मन्तर्विदह्य मतिमान्सह सैन्धवेन ॥
एतद्विरूढबृहतीफलतोयपिष्ट-
मालेपनं महिषविड्विमलीकृताङ्गे ॥ ४८ ॥
स्थूलं महद्वरतुरंगमतुल्यमाशु
शेफः करोत्यभिमतं न हि संशयोऽस्ति ॥ ४९ ॥

जलशूको जलनीलिका जलान्तर्वर्ती रोमयुक्तः सविषः प्राणी वा । जलशूको जलसंस्थस्तृणसक्तो जन्तुविरचितः शूकसंघातवान्निवासान्दुक इत्यन्ये । जलचारी कृष्णकीट इति लक्ष्मणटिप्पणेनोक्तम् ॥ ४८ ॥ ४९ ॥

कासीसतुरगगन्धासावरगजपिप्पलीविपक्वेन ॥
तैलेन यान्ति वृद्धिं नियतं स्तनकर्णवराङ्गलिङ्गानि* ॥ ५० ॥

सुगमम् ॥ ५० ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्ततितमो वाजीकरणाधिकारः समाप्तः ॥ ७० ॥

---

* एतदग्रे ख. पुस्तके—"दौर्बल्यं मुखशोषश्च पाण्डुत्वमदसंभ्रमाः । क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम्" । इत्यधिकम् ।

## अथैकसप्ततितमः स्नेहाधिकारः ।

---

रसायनमित्यत्र शुद्धकाय इत्युक्तं कायशुद्धिश्च पञ्चकर्मभिः पञ्चकर्माणि तानि वमनविरेचनानुवासननिरूहनस्यानि तानि च स्नेहस्वेदपूर्वाणि कार्याण्यतः संशोधनानि प्रतिपादयितुकामः स्नेहस्वेदौ निर्दिशति स्नेहस्वेदयोरपि स्नेहश्चाग्रे क्रियत इति स्नेहाध्यायः—

**यथादोषं यथाव्याधि यथाकालं यथाबलम् ॥**
**स्नेहं पक्वमपक्वं वा पातुं युञ्ज्याच्चिकित्सकः ॥ १ ॥**

**स्नेहमिति । उक्तं च—**

"द्वियोनिर्द्विवीर्योऽभिहितश्चतुःसंज्ञो विकल्पनात् ।
षट्प्रयोगाश्रितः स्नेहश्चतुःषष्टिविचारकृत्" ॥

तत्र द्वियोनिः स्थावरो जङ्गमश्च । द्विवीर्यं उष्णः शीतश्च । विकल्पनात् सर्पिस्तैलवसामज्जानश्चत्वारो विकल्पा अस्य । तत्र तैलं स्थावरयोनि घृतवसाम जङ्गमयोनयः । तत्र तैलं तिलादिफलोद्भवत्वात्फलस्थं देवदारुशिंशपागुरुसारं घृतमपि द्विधा क्षीरोत्थं दध्युत्थं च । शुद्धमांसाश्रया वसाऽस्थ्याश्रया मज्जा जङ्गमेभ्यो गव्यं घृतं प्रधानं स्थावरेभ्यस्तिलतैलमिति । षट्प्रयोगाश्रित इति जनबस्तिनस्याभ्यङ्गमूर्धतैलभेदेन षट्प्रयोगाः । चतुःषष्टिविचारकृदिति ।

तथा च—"दोषाणामल्पभूयस्त्वं संसर्गं समवेक्ष्य च ।
युञ्ज्यात्त्रिषष्टिधाभिन्नैः समासाद्व्यासतो रसैः" ॥
**अन्यत्रापि**—"रसैश्चोपहितः स्नेहः समासव्यासयोगिभिः ।
इत्थं त्रिषष्टिधायुक्तिं प्राप्नोत्येकश्च केवलः" ॥

इति····पक्वस्नेहवत्स्नेहो गुणवन्त···· ॥ १ ॥

**केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥**
**देयं बहुकफे चापि व्योषक्षारसमायुतम् ॥ २ ॥**

केवलमसहायमन्यद्रव्यैरसंयुक्तमित्यर्थः । तच्च संस्कृतमसंस्कृतं वा सत्यप्यन्यद्रव्यासंयोगे संस्कृतत्वं लभत एव संयोगसंस्कारयोर्भिन्नाभिधानत्वात् । एतेन संस्कृतमसंस्कृतं वा केवलं क्वाथचूर्णादिप्रक्षेपरहितं सर्पिः पातव्यमिति ज्ञेयम् । गयी तु पित्तहरद्रव्यसाधितमेव केवलमित्याह । **वातिके लवणान्वितमिति** । वातस्य समानगुणमपि सर्पिर्लवणेनोष्णवीर्येण च युक्तं श्रेष्ठं स्यात् ॥ २ ॥

अच्छपानविषयमुपदिशन्नाह—

**स्नेहसात्म्यः क्लेशसहो दृढः काले च शीतले ॥**
**अच्छमेव पिबेत्स्नेहमच्छपानं च शोभनम् ॥ ३ ॥**

**क्लेशसह इति** शक्तिलक्षणं बलमुक्तम् । **काले च शीतल इति** । चकारो वातकफयोः शैत्याद्दोषे च शीतल इति गमयति । दृढः काले च शीतल इत्यस्य स्थाने काले नात्युष्णशीतल इति पाठान्तरम् । **चरके**ऽप्युक्तम्—नात्युष्णशीते स्नेहं पिबेन्नर इति । **अच्छमिति** । केवलं भक्ष्याद्यसंसृष्टम् । **शोभनमिति** । अचिरस्नेहनेन ।

"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमा ।
जघन्यस्य पलार्धेन स्नेहक्वाथौषधेषु च ॥

इति परिभाषा प्रचरति ।

"अहोरात्रमहः कृत्स्नं दिनार्धं च प्रतीक्षते ।
उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति" ॥

इति **चरकपरिभाषा** तु न व्यवहरति । कालविशेषे दोषविशेषे च स्नेहपानक्रमः **सुश्रुते** दर्शितः ॥

तद्यथा—"शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि ॥
वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" ॥

अत्र वातपित्ताधिक इत्यनेन वाताधिकः पित्ताधिकश्च गृह्यते । एवं वातश्लेष्माधिक इत्यत्रापि व्याख्येयम् । पित्ताधिकस्तु नात्युष्णशीत एव काले पिबेदिति द्रष्टव्यम् । **रात्राविति** सायम् । अस्य श्लोकस्य **डल्लणोक्ता** व्याख्या लिख्यते । **निशीति** । **संशमनमेव** । उष्णकाले च सह भक्तेन पाययेदिति वक्ष्यमाणवचनात् । **वातपित्ताधिक इति** । वातपित्ते अधिके यस्य स वातपित्ताधिकः । वातपित्तयोर्व्यस्तसमस्तयोर्ग्रहणाद्वाताधिकः पित्ताधिको वातपित्ताधिकश्च रात्रौ संशमनं स्नेहं पिबेत् । तत्रापि वातपित्ताख्यसंसर्गस्यापरसंसर्गोपलक्षणत्वात्पित्तश्लेष्माधिकोऽपि रात्रौ पिबेदिति गम्यते । **वातश्लेष्माधिक इति** । वातः श्लेष्मा च वातश्लेष्माणौ समासान्त्यपादलोपात् । तावधिकौ यस्य स वातश्लेष्माधिकः । एतेन वातकफाधिकः कफाधिकश्च दिवा स्नेहं पिबेदिति गम्यते । अत्रार्थे च **वृद्धवाग्भटः**—

"सर्वं सर्वस्य च स्नेहं युञ्ज्याद्भास्वति निर्मले ॥
ऋतौ साधारणे दोषसाम्येऽनिलकफे कफे ।
दिवानिश्यनिले पित्ते संसर्गे पित्तवत्यपि" ॥

---

१ क. हि ।

यदा च ग्रीष्मे वातकफोत्थो रोगः स्नेहसाध्यस्तदा कालमाश्रित्य तदर्तु(द्दतु) विहितः स्नेहो निशि प्रयोज्यो दोषादीन्वीक्ष्य वा ॥

तथा च वृद्धवाग्भटः—

"त्वरमाणस्तु शीतेऽपि दिवा तैलं प्रयोजयेत् ॥
उष्णेऽपि रात्रौ सर्पिस्तु दोषादीन्वीक्ष्य वाऽन्यथा" इति ॥ ३ ॥

उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
ऋते भल्लातकस्नेहात्तत्र तोयं सुशीतलम् ॥ ४ ॥

सुगमम् ॥ ४ ॥

तत्र तृष्णाप्रतीकारमुद्दिशन्नाह—

स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः ॥
एवं चानुपशाम्यन्त्यां स्नेहमुष्णाम्बुनोद्धरेत् ॥ ५ ॥

उद्धरेदिति । वमेत् ॥ ५ ॥

मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्यति ॥
विष्टभ्य चापि जीर्येत वारिणोष्णेन वामयेत् ॥ ६ ॥

मिथ्याचारादिति । अत्यम्बुसेवनादेः । समुचितस्नेहाचारस्तु चरकेणोक्तस्तद्यथा—

"उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः ।
शकृन्मूत्रानिलोद्गारानुदीर्णांश्च न धारयेत्" ॥ ६ ॥

मिथ्याचारादिजस्य स्नेहाजीर्णस्य प्रतीकारे कृते स्नेहसाध्ये व्याधौ पुनरप्यस्य स्नेहो देय इत्याह—

ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने ॥

ततः स्नेहं पुनर्दद्यादिति । दिनान्तरे बले जाते ॥

जीर्णाजीर्णविशङ्कायां पिबेदुष्णोदकं नरः ॥
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्नं भवेत्प्रति ॥ ७ ॥

जीर्णाजीर्णविशङ्कायामिति । अल्पस्नेहशेषे । तेन जीर्णेन स्नेहेन ॥ ७ ॥

पच्यमानस्नेहस्य लक्षणमाह—

स्युः पच्यमाने तृड्दाहभ्रमसादारुचिक्लमाः ॥ ८ ॥

स्युर्भवेयुः ॥ ८ ॥

अतः परं जीर्णस्नेहस्याऽऽहारोपचारः—

**परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम् ॥**
**यवागूं पाययेदुष्णां क्लिन्नामत्यल्पतण्डुलाम् ॥ ९ ॥**

**यवागूमिति** । पेयाम् । क्लिन्नां सुसिद्धाम् । अयं च पेयाविधिरतिमन्देऽग्नौ स्तोकमन्दे तु विलेपी तथा मध्ये सात्म्याद्यपेक्षया पेया रसो वा बोद्धव्यः । तथा च **सुश्रुते** यवागूं पाययेदुष्णामित्याद्यनन्तरं पठ्यते ॥

"देयौ यूषरसौ वाऽपि सुगन्धी स्नेहवर्जितौ ।
कृतौ वाऽप्यल्पसर्पिष्कौ विलेपी वा विधीयते" इति ।

अस्यार्थः । स्नेहवर्जितावित्यनेनाकृताविति गम्यते । कृतौ स्नेहादिसंस्कृतौ यूषरसौ । यूषरसाविति । अत्र यूषः कफे तैलपाने च देयो रसो वाते घृतपाने च विलेपी पुनर्विलेपीसात्म्याय मध्यमाग्नये देया । क्लिन्नामत्यल्पतण्डुलामित्यत्र कामं क्लिन्नाल्पतण्डुलामिति पाठः । काममतिशयेन क्लिन्नाऽल्पतण्डुला स्विन्नाल्पतण्डुला । **गयी** तु कामं यथेष्टमाचष्टे ॥ ९ ॥

तस्य स्नेहपानस्य कोष्ठापेक्षया कालनियमं दर्शयन्नाह—

**पिबेत्त्र्यहं चतुरहं पञ्चाहं षडहं तथा ॥**
**सप्तरात्रात्परं स्नेहः सात्म्यीभावाय कल्पते ॥ १० ॥**

त्र्यहं मृदुकोष्ठः स्निह्यति चतुरहं षडहं वाऽपि मध्यकोष्ठः सप्ताहं क्रूरकोष्ठः ।

**चरके**ऽप्युक्तम्—"मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः" इति ॥

अत्र कोष्ठत्रित्वस्य तारतम्यमपि व्याचष्टे **जैज्जटः** । मृदुतरकोष्ठो द्व्यहं पिबेदेकाहं मृदुतमः पञ्चाहं मध्यतरः षडहं मध्यतमः क्रूरतरोऽष्टाहं नवाहं क्रूरतमः । अत एव **तन्त्रान्तरे** नवरात्रपर्यन्तं स्नेहपानमुपन्यस्तम् ।

तद्यथा—"तत्रिषण्नवरात्राणि स्नेहपानं विधीयते ।
मृदुमध्यादिकोष्ठत्वान्मृदुमध्यादिदेहतः" इति ॥

सात्म्यीभावं············मपि परेणेच्छन्ति । त्र्यहादिकालभेदोऽयं **भोजे** तु दोषभेदेनोक्तः ।

तथा हि—"त्र्यहेण श्लैष्मिकः स्निह्यात्पञ्चरात्रेण पैत्तिकः ।
वातिकः सप्तरात्रेण सात्म्यतां यात्यतः परम्" इति ॥

---

१ क. °च्याम्बुभिः शीतैर्जी° ।

सात्म्यीभावाय कल्पत इत्यत्र सात्म्यी भवति सेवित इति पाठो डल्लणे । तत्र सात्म्यीभवतीत्यात्मना सह वर्तत इति सात्मं तस्य भावः सात्म्यमसात्म्यं यत्र सात्म्यं भवति सात्म्यी भवतीति । आत्मशब्दोऽत्र देहपर्यायः । अयमर्थः । आत्मनि काये यद्वर्तते यदुपशेते न विकाराय भवति सुखं करोतीत्यर्थस्तत्सात्म्यी भवतीत्युच्यते । एतेन स्नेहकार्यमुत्क्लेशनादिकं न करोत्याहारवत्सात्म्यी भवति । अत एव हि सेवित इत्युक्तम् । विषमपि स्वल्पं प्रतिदिनमुपयुज्यमानं न मारणात्मकं भवति तच्च सात्म्यीभवनं वातप्रकृतावूर्ध्वाङ्गमारुते बोद्धव्यं वातकफप्रकृतौ पुनरुत्क्लेश एव ॥ १० ॥

**शुद्ध्यर्थं पुनराहारे नैशे जीर्णे प्रयोजयेत् ॥**
**पिबेत्संशमनीयं वा अन्नकाले प्रकाङ्क्षितः ॥ ११ ॥**

शुद्ध्यर्थं स्नेहं बिन्दुघृतादि नैशे दिवान्तभक्षित आहारे जीर्णे दोषोत्क्लेशार्थं प्रातरेव पिबेत् । अन्नकाले द्विप्रहरादिलक्षणे बुभुक्षा नावश्यं भवतीति विशेषणं कृतं प्रकाङ्क्षित इति । प्रकाङ्क्षितो बुभुक्षितः । एतच्च कालकथनमुत्सर्गतः । तेन पित्ताधिको रात्रावित्युक्तः कालविरोधो नोद्भावनीयः । संशमनस्य विचारणास्नेहस्य विषयोपदर्शनम् ११

इदानीं विचारणामावस्थिके नित्यगे च काले निर्दिशन्नाह—

**स्नेहद्विषः कृशान्वृद्धान्सुकुमाराञ्शिशूनपि ॥**
**तृष्णालुं चोष्णकाले च सह भक्तेन पाययेत् ॥ १२ ॥**

**स्नेहेत्यादि** । इति डल्लणात् । **सह भक्तेनेति** । भक्तमिश्रम् । भक्तशब्दश्चोपलक्षणम् । तेन चरकोक्ता ओदनश्च विलेपी च यूषः काम्बलिकः खड इत्याद्याश्चतुर्विंशतिः स्नेहविचारणा ग्राह्याः ॥ १२ ॥

सद्यःस्नेहनयोगानाह—

**भृष्टा मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला ॥**
**सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥ १३ ॥**

स्निग्धा घृतयोगात् । सद्यस्तदहरेव । सुकुमारादौ त्वरया च यत्र कर्म तत्रायं विधिः । चक्रस्त्वाह । सद्यः स्नेहनमपि त्र्यहेणैव स्नेहयति स्तुत्यर्थं तु सद्यःशब्दप्रयोगः । सूपकल्पिता । प्रक्षुद्रा पीयमाना तु, इति पाठो डल्लणे । प्रक्षुद्रा क्षुद्रावगाढा । क्षुद्रं फाणितं काकब, इति लोके ॥ १३ ॥

**सर्पिष्मतीं बहुतिलां यवागूं स्वल्पतण्डुलाम् ॥**
**पिबेत्सुखोष्णां मनुजः सद्यो रौक्ष्यात्प्रमुच्यते ॥ १४ ॥**
**शर्कराघृतसंसृष्टे दुग्धाद्गां कलशे तथा ॥**
**पाययेदक्षमेतद्धि सद्यः स्नेहनमुच्यते ॥ १५ ॥**

॥ १४ ॥ १५ ॥

पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तकम् ॥
पीतामैकध्यमेतद्धि सद्यःस्नेहनमुच्यते ॥ १६ ॥

लवणमत्र प्रधानकल्पनया सैन्धवम् । स्नेहाश्चत्वारः सर्पिस्तैलवसामज्जानः । दधिमस्तको(कं) दधिसरः । पिप्पलीलवणयोर्यावत्या मात्रया नातिकटुत्वं नातिलवणत्वं च तावती मात्रा ॥ १६ ॥

विवर्जयेत्स्नेहपानमजीर्णी तरुणज्वरी ॥
दुर्बलोऽरोचकी स्थूलो मूर्छार्तो मदपीडितः ॥ १७ ॥
छर्द्यर्दितस्तु तृषितः श्रान्तः पानक्लमान्वितः ॥
दत्तबस्तिर्विरिक्तश्च वान्तो यश्चापि मानवः ॥
अकाले च प्रसूता स्त्री स्नेहपानं विवर्जयेत् ॥ १८ ॥

अजीर्णेऽजीर्णमेव पचन्नग्निरास्ते कः स्नेहं पक्ष्यति तरुणज्वरेऽप्येवमतिस्रोतोरोधश्च । दुर्बले ग्लान्यादयः । अरोचकेऽरोचकाभिवृद्धिः । स्थूलस्यातिस्थौल्यं स्रोतोरोधश्च । मूर्छाद्यार्तानां मूर्छातिवृद्धिः । दत्तबस्तेर्विरिक्तवान्तयोश्च सद्यःशुद्धत्वेनाग्निमान्द्यं तृष्णाक्लमाद्यतियोगश्च । अकालप्रसूताया गर्भाशयेऽवशेषा रक्तक्लेदमलाः स्नेहकोपिता असाध्यं रोगं कुर्युः । अन्ये तरुणज्वरीत्यत्र जठरज्वरीति पठित्वा व्याख्यान्ति । उदरिणः स्नेहपानं प्रागवस्थायामुदरचिकित्सिते प्रोक्तं छिद्रोदकोदरिणोः पुनरत्र निषेधः । ज्वरिणस्तरुणावस्थायां प्रतिषेधः । जीर्णज्वरस्य स्नेहपानं प्रयुज्यत एवेति ॥१७॥१८॥

यथाक्रममस्निग्धसम्यक्स्निग्धातिस्निग्धानां लक्षणमाह—

रूक्षं पुरीषं ग्रथितं कृच्छ्रादन्नं विपच्यते ॥ १९ ॥
उरो विदह्यते वायुः कोष्ठादुपरि धावति ॥
दुर्वर्णो दुर्बलश्चैव रूक्षो भवति मानवः ॥ २० ॥

उपरि धावति, ऊर्ध्वं गच्छतीत्यर्थः । इदं कृतपाचनस्य रूक्षस्य लक्षणमुक्तमिति वृद्धवैद्याः ॥ १९ ॥ २० ॥

ग्लानिः सदनमङ्गानामधस्तात्स्नेहदर्शनम् ॥
सम्यक्स्निग्धस्य लिङ्गानि स्नेहद्वेषस्तथैव च ॥ २१ ॥

स्नेहद्वेष इति । स्नेहारुचिरुदकादितृप्तस्येवोदकाद्यरुचिः ॥ २१ ॥

भक्तद्वेषोऽसुखास्रावो गुदे दाहः प्रवाहिका ॥
पुरीषातिप्रवृत्तिश्च भृशं स्निग्धस्य लक्षणम् ॥ २२ ॥

प्रवाहिकाऽतिसारभेदः । केचिदस्निग्धसम्यक्स्निग्धलक्षणयोर्मध्ये जीर्णाजीर्णस्नेह-लक्षणमधीयते—

"ग्लानिः सदनमङ्गानामधस्तात्स्नेहदर्शनम् ।
स्नेहे जीर्यति लिङ्गानि जीर्णस्तैः शान्तिमागतैः" इति ॥

तैर्ग्लान्यादिभिः । शान्तिमागतैरुपशमं गतैः स्नेहो जीर्ण इति ज्ञायते ॥ २२ ॥

तत्रास्निग्धातिस्निग्धयोः प्रतीकारं दर्शयन्नाह—

**रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम् ॥**
**श्यामाक[illegible]सक्तुभिः ॥**

सुगमम् ॥

**स्नेहात्प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत् ॥ २३ ॥**

स्नेहादुपरतस्त्रिरात्राज्जन्तुः प्रस्कन्दनं विरेचनं पिबेत् । किमर्थं पुनस्त्रिरात्रोपरतः स्रंसनमुपयुङ्क्ते न स्नेहविसर्गसमकालम् । ब्रूमः । स्निग्धस्य कफोत्क्लेशशमाय त्रिरात्रोपेक्षणम् । वचनं हि—विरिच्यते मन्दकफस्तु सम्यगिति । अथ किं तत्र कर्तव्यम् । उच्यते—

"स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम् ।
एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत् ॥

शास्त्रं हि—"रसैस्तथा जाङ्गलजैर्मनोज्ञैः स्निग्धैः कफावृद्धिकरैर्विरेच्यः" ॥

एकाहमुपरतो निवृत्तः स्नेहो यस्य सः । तद्वद्भुक्त्वा तेन स्रंसनेन तुल्यं स्नेहद्रवोष्णत्वं तत्र तुल्यता कफवर्धनं च तदिष्यते श्लेष्मोत्तरश्छर्दयति ह्यदुःखमित्यार्षात् । पुनश्चोक्तम्—नरः श्वोवमनं पाता भुञ्जीत कफवर्धनमिति ॥ २३ ॥

संशमनस्नेहस्य शीलितस्य गुणमाह—

**दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ॥**
**दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषो भवेद्धि ॥ २४ ॥**

अन्तराग्निर्जठराग्निः । परिशुद्धकोष्ठो निर्दोषोदरः । प्रत्यग्रा नवाः । दृढानि स्वकार्यकरणक्षमाणीन्द्रियाणि यस्य सः । स्नेहोपसेवीति । यो नर आभीक्ष्ण्येन स्नेहं सेवते । अन्ये तु, अनेन श्लोकेन च स्वस्थविषये स्नेहकर्मफलं दर्शयन्ति ॥ २४ ॥

**स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥**
**नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ॥ २५ ॥**

सुगमम् ॥ २९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकसप्ततितमः स्नेहाधिकारः समाप्तः ॥ ७१ ॥

## अथ द्विसप्ततितमः स्वेदाधिकारः ।

स्निग्धस्य स्वेद्यत्वादथ स्वेदाध्यायः । उक्तं हि चरके—

"स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम् ।
स्नेहस्वेदोपपन्नस्य संशोधनमनन्तरम्" इति ॥

स्वेदाश्चत्वारस्तापोपनाहद्रवबाष्पभेदात्तान्क्रमादाह । एतेष्वेव चतुर्षु यथासंभवं चरकोक्तशंकरस्वेदाद्यवरोधः । शंकरादिस्वेदास्त्रयोदश ।

तद्यथा—"शंकरः प्रस्तरो नाडी परीषेकोऽवगाहनम् ।
जेन्ताकोऽश्मघनः कर्षूः कुटी भूः कुम्भिरेव च ।
रूपो होलाक इत्येते स्वेदयन्ति त्रयोदश" इति ॥

**तप्तैः सैकतपाणिकांस्यवसनैः स्वेदोऽथ वाऽङ्गारकै-
र्लेपाद्वातहरैः सहाम्ललवणस्नेहैः सुखोष्णैस्तथा ॥
एवं तप्तपयोऽम्बुवातशमनक्वाथादिसेकादिभि-
स्तप्तैस्तोयनिषेचनोद्भवबृहद्बाष्पैः शिलाद्यैः क्रमात् ॥ १ ॥
तापोपनाहद्रवबाष्पपूर्वाः स्वेदास्ततोऽन्त्यप्रथमौ कफे स्तः ॥
वायौ द्वितीयः पवने कफे च पित्तोपसृष्टे विहितस्तृतीयः॥ २ ॥**

सैकतं वालुका। वातहरै रास्नैरण्डमूलादिभिः। अम्लं काञ्जिकम् । उपनाहशब्दस्त्विह णह बन्धन इत्यस्यार्थः (समात्सिद्धः)। तेनोपनह्यते बध्यतेऽनेनेत्युपनाहः। **पवने कफे च पित्तोपसृष्ट इति** । एतेन पवनकफौ सर्वथा स्वेदविषयौ । तदुक्तं चरके—'वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते' इति । पित्तं तु, आग्नेयत्वान्न स्वेदविषयम् । तेन वातकफयोरेव प्रबलयोरल्पपित्तसंसर्गे द्रवः स्वेदः । स चोष्णत्वात्प्रबलौ वातकफौ हन्ति । हीनं तु पित्तं प्रति द्रवत्वेन सौम्यत्वादितरस्वेदवन्न तथा विरुध्यते । न च वाच्यं यत्सौम्यत्वाद्वातकफावुष्णत्वात्पित्तं कुतो न वर्धयत्येवेति । पथ्यानां शमनैकस्वभावत्वात् । दशमूलं हि कषायतिक्तमधुरोष्णं दोषत्रयशमनमुक्तम् । न च तत्कषायत्वादिभिर्वातादीञ्जनयतीति । **तृतीय इति** । द्रवस्वेदः ॥ १ ॥ २ ॥

आदावन्ते तथोभयथा प्रधानकर्माङ्गत्वेनावचारणात्स्वेदस्य त्रैविध्यमाह—

**येषां नस्यं विधातव्यं बस्तिश्चापि हि देहिनाम् ॥**
**शोधनीयाश्च ये केचित्पूर्वं स्वेद्याश्च ते मताः[1] ॥ ३ ॥**

**शोधनीया इति** । वमनविरेचनार्हाः । विरेचने कर्तव्ये त्र्यहं स्नेहादुपरमः । वमने पुनरेकाहम् । उपरमदिने स्वेदः ।

यदाह सुदान्तसेनः—"स्निग्धद्रवोष्णधन्वोत्थरसभुक्स्वेदमाचरेत् ।
स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेचनं वमनं पुनः ॥
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः" इति ॥ ३ ॥

**पश्चात्स्वेद्या हृते शल्ये मूढगर्भाऽनुपद्रवा ॥**
**सम्यक्प्रसूता काले च पश्चात्स्वेद्यैव जानता ॥ ४ ॥**

**अनुपद्रवेति** । रक्तस्रावाद्युपद्रवरहिता ॥ ४ ॥

**स्वेद्यः पूर्वं च पश्चाच्च भगंदर्यर्शसस्तथा ॥**
**अश्मर्या चाऽऽतुरो जन्तुः शेषाञ्शस्त्रेषु वक्ष्यते ॥ ५ ॥**

**अर्शसस्तथेति** । पूर्वं पश्चात् । स्वेदः पुनरर्शासि दाहानन्तरमुष्णाम्बुपूर्णकटाहोपवेशनरूपो ज्ञेयः ॥ ५ ॥

स्नेहस्वेदपूर्वकमेव शोधनं धात्वादिलीनान्दोषान्निहन्तुं क्षममित्याह—

**स्नेहक्लिन्ना धातुसंस्थाश्च दोषाः**
**स्वस्थानस्था ये च मार्गेषु लीनाः ॥**
**सम्यक्स्वेदैर्योजितास्ते द्रवत्वं**
**प्राप्ताः कोष्ठं शोधनैर्यान्त्यशेषाः ॥ ६ ॥**

मार्गेषु स्रोतस्सु स्वेदैर्द्रवत्वं प्राप्ता द्रवत्वाच्च कोष्ठं प्राप्ताः शोधनैर्निःशेषं यान्ति बहिर्निःसरन्तीत्यर्थः ॥ ६ ॥

इदानीं स्वेदगुणानाह—

**अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं भक्तश्रद्धां स्रोतसां निर्मलत्वम् ॥**
**कुर्यात्स्वेदस्तान्द्रिनिद्रे च हन्यात्संधींस्तब्धांश्चेष्टयेदाशु युक्तः ॥ ७ ॥**

स्तब्धान्स्थिरान् । केचिदाचार्या एवं वदन्ति द्विविधः स्वेदः संशमनीयः संशोधनाङ्गभूतश्च । तत्र संशमनीयः सामेषु व्याधिषु रूक्ष एव प्रयोज्यः । तद्गुणाः पुनरग्नेर्दीप्तिमित्यादिश्लोके ज्ञातव्याः । संशोधनाङ्गभूतस्तु स्नेहपूर्वो योज्यः । तस्य गुणास्तु स्नेहक्लिन्ना इत्यादिश्लोकेन प्रोक्ता इति ज्ञेयम् ॥ ७ ॥

---

१ ङ. हं स्वेदात् ।

**सर्वान्स्वेदाभिवाते तु जीर्णेऽन्ने चावचारयेत् ॥**
**स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ॥**

अन्ने जीर्ण इति प्रायेण । तेन विष्टब्धाजीर्णेऽपि स्वेदः । उक्तं हि—विष्टब्धे स्वेदनं कार्यमिति । शीतैराच्छाद्य चक्षुषी इत्येतत्सर्वाङ्गेषु स्वेदेषु क्रियमाणेषु चक्षूरक्षणार्थमुक्तम् । शीतैरिति । पद्मपत्रादिभिः । अत्र चक्षुषी इत्युपलक्षणम् । तेन हृदयादिरक्षाऽप्येवं कार्या ॥

**हृदयं वृषणौ दृष्टी स्वेदयेन्मृदु वा न वा ॥ ८ ॥**

**मृदु वा न वेति ।** हृदयादिगते व्याधौ स्वेदैकसाध्ये मृदुः । *उत्पादानन्तरसंभवे तु न वेति व्यवस्था । बाष्पचन्द्रस्तु, एवं व्याचष्टे । वाशब्दो व्यवस्थितविकल्पः । वृषणौ मृदु स्वेदयेद्वृध्यादिषु हृदयदृष्टी नैव स्वेदयेत् ।

"पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी ॥
मुक्तावलीभिः शुद्धाभिः शीतलैर्भाजनैरपि ।
जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् ॥

इत्यनेन हृदयदृष्ट्यो रक्षणोपदेशात् । यत्तूत्तरतन्त्रेऽक्षिशूलादिषु स्वेदो विहितस्तत्तु संमीलिताक्ष्णोर्बाह्ये क्रियते न दृष्टौ ॥ ८ ॥

अथ कियन्तं कालं यावत्स्वेदयेदित्याह—

**शीतशूलेषूपरमे स्तम्भगौरवनिग्रहे ॥**
**संजाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ ९ ॥**

स्तम्भः शरीरस्तब्धता । **स्वेद इति ।** घर्मे । स्वेदनाद्विरतिर्मता स्वेदनाद्विरमेदित्यर्थः ॥ ९ ॥

तस्य सम्यग्युक्तस्यायोगातियोगयुक्तस्य च लक्षणं चिकित्सितं च दर्शयन्नाह—

**स्वेदास्रावो व्याधिहानिर्लघुत्वं शीतार्थित्वं मार्दवं चाऽऽतुरस्य ॥**
**सम्यक्स्विन्ने लक्षणं प्राहुरेतन्मिथ्यास्विन्ने व्यत्ययेनैतदेव ॥ १० ॥**

**स्वेदास्रावः** स्वेदस्य जलरूपत्वात्समन्ततः स्रावः । व्याधिहानिर्व्याधेर्ज्वररूपस्य हानिः । लघुत्वं शरीरस्य । **मिथ्यास्विन्न इति ।** अयोगस्विन्ने । व्यत्ययेन विपर्ययेण ॥ १० ॥

---

* उपायान्तरसाध्ये तु, इति मम भाति ।

**स्फोटोत्पत्ती रक्तपित्तप्रकोपो**
**मदो मूर्छा भ्रान्तिदाहौ क्लमश्च ॥**
**स्विन्नेऽत्यर्थे संधिपीडा तृषा च**
**क्रियाः शीतास्तत्र कुर्याद्विधिज्ञः ॥ ११ ॥**

सुगमम् ॥ ११ ॥

**अतिस्विन्नमथाऽऽश्वास्य शीताम्बुत्रासनं हितम् ॥ १२ ॥**

**आश्वास्येति** । तैलादिना संतर्प्य । मिथ्यास्विन्ने तु स्वेद एव ज्ञेयः । यदाह **निमिः**—अस्विन्नं स्वेदयेद्धीरं पुनरास्विन्नलक्षणादिति ॥ १२ ॥

**स्नातमुष्णाम्बुना चापि निवातं च लयं नयेत् ॥**

स्नातमुष्णाम्बुनेत्यादि विधानं सम्यक्स्विन्नस्य बोद्धव्यम् । यदुक्तं **सुश्रुते**—

"सम्यक्स्विन्नं विमृदितं स्नातमुष्णाम्बुभिः शनैः ।
भोजयेच्चानभिष्यन्दि सर्वं चाऽऽचारमादिशेत्" इति ॥

उष्णाम्बुना स्नानं शीताम्बुना स्रोतोरोधकत्वात् । स्वेदेन विलीनं शोणितं शीताम्बुस्नातस्य देहिनः स्त्यानत्वमापन्नं न सुखयति । अत उक्तम्—**स्नातमुष्णाम्बुनेति** । **सुश्रुतसूत्रस्थाने**ऽप्युक्तम्—

"शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ।
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यपि शोणितम् ।
तस्मात्सुखयति ह्युष्णं न तु शीतं कथंचन" इति ॥

**भोजयेच्चानभिष्यन्दि सर्वमाचारमादिशेत् ॥ १३ ॥**

अनभिष्यन्दि भोजनमग्निरक्षार्थम् । सद्यो व्याधिकरणीयामवस्थां स्यन्दयत्यापादयति यद्द्रव्यं तदभिष्यन्दि स्रोतसामुपलेपकारि वा तद्विपरीतमनभिष्यन्दि । **आचारमिति** । आहाराचारनियमनम् ॥ १३ ॥

इदानीं स्वेदस्य पूर्वकर्म नियमयन्नाह—

**नानभ्यक्ते नापि चास्निग्धदेहे स्वेदो योज्यः स्वेदविद्भिः कथंचित् ॥ १४ ॥**

अभ्यङ्गेन बाह्यस्नेहक्रियापूर्वकत्वं नापि चास्निग्धदेह इत्यन्तरस्नेहपूर्वकत्वं स्वेदस्य ॥ १४ ॥

अस्निग्धे स्वेददोषमुपमानेन दर्शयितुमाह—

**दृष्टं लोके काष्ठमस्निग्धमाशु यायाद्भङ्गं स्वेदयोगैर्गृहीतम् ॥ १५ ॥**

सुगमम् ॥ १५ ॥

पाण्डुर्मेही रक्तपित्ती तृषार्तः क्षतक्षीणो दुर्बलोऽजीर्णभुक्तः ॥
दकोदरी गर्भिणी पानपश्च नैते स्वेद्या यश्च मर्त्योऽतिसारी ॥ १६ ॥

पानप इति । मद्यपः ॥ १६ ॥

स्वेदादेषां याति देहो विनाशं नो साध्यत्वं यान्ति चैषां विकाराः ॥१७॥

सुगमम् ॥ १७ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठ-
दत्तकृतायां व्याख्याकुसुमावल्याख्यायां द्विसप्ततितमः
स्वेदाधिकारः समाप्तः ॥ ७२ ॥

---

## अथ त्रिसप्ततितमो वमनाधिकारः ।

---

स्निग्धस्विन्नस्य वमनविरेकावुचितौ तयोरेव वमनमेव पूर्वभावीत्यनन्तरं वमनाध्यायः । अत एवाऽऽह सुश्रुतः—विरेचनमपि स्निग्धस्विन्नाय वान्ताय वा देयम् । अवान्तस्य हि सम्यग्विरिक्तस्याप्यधःस्रस्तः श्लेष्मा ग्रहणीमाच्छादयति गौरवमापादयति प्रवाहिकां वा जनयतीति ।

वमनं रेचनं नस्यं निरूहं सानुवासनम् ॥
ज्ञेयं पञ्चविधं कर्म विधानं तस्य कथ्यते ॥ १ ॥

सुगमम् ॥ १ ॥

संशोधनस्य संशमनप्रकाराल्लङ्घनपाचनात्प्रकर्षमाह—

दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ॥
जिताः संशोधनैर्ये तु न तेषां *पुनरुद्भवः ॥ २ ॥

**कदाचिदिति** । स्वल्पहेतुलाभेन जिता इव जिता दोषमूलानुच्छेदान्मूलभूतापगतदोषसद्भावान्न सम्यगवजिताः स्वल्पमपि हेतुं प्राप्य पुनः शीघ्रं कुप्यन्तीति भावः । **न तेषां पुनरुद्भव इति** । संशोधनेन समूलदोषावजयादल्पहेतुना न कदाऽपि तेषां पुनः प्रकोपो बलवद्धेतुना भवत्येव ।

अथ चन्द्रनन्दनभाष्यकारव्याख्यानम्—अत्यर्थसंचितानां प्रधानोपक्रमः शोधनाख्यो यतः शीघ्रमेव तेनोपशमो जायते चिरेण पुनर्लङ्घनपाचनाभ्यां संचितप्रायाणां लङ्घनपाचने प्रधानोपक्रम ईषत्संचितानां लङ्घनमेव प्रधानोपक्रमः । एवं क्वचित्संशोधनं प्रधानं क्वचि-

* क्वचित्पुस्तके पुनरुद्गम इति पाठः ।

लङ्घनपाचने क्वचिच्च लङ्घनमेव प्रधानोपक्रमः। यत एवं ततोऽयं ग्रन्थ आरब्धुं न्याय्यो दोषाः कदाचिदित्यादिः। दोषा वातादयो लङ्घनपाचनैर्जिताः सन्तः कदाचित्कुत्रचित्कुप्यन्ति कोपं यान्ति। ये पुनर्दोषाः संशोधनैर्वमनादिभिः शुद्धास्तेषां दोषाणां प्रधानशुद्ध्या शुद्धानां न पुनरुद्भवो न पुनर्जन्म भवेच्छिन्नमूलत्वात्पुनस्ते न प्ररोहन्ति। तस्माल्लङ्घनपाचनयोः कृतयोरपि संशोधनमुपक्रमः किमुताकृतयोः। एवं तावल्लङ्घनपाचनविषये संशोधनमप्युपक्रमः संशोधनविषयेऽपि देशकालशरीरादीनपेक्ष्य लङ्घनपाचने निष्प्रत्ययायोपात्ततयोपक्रमः कार्य इति॥ २॥

**कफजे वमनं शस्तं रेचनं पित्तजे गदे॥**
**बस्तिर्वातगदे कार्यमामजे पाचनादिकम्॥ ३॥**

सुगमम्॥ ३॥

**स्निग्धस्विन्नं नरं सम्यग्जानुमात्रासनस्थितम्॥**
**कण्ठमेरण्डनालेन स्पृशन्तं वामयेद्भिषक्॥ ४॥**

स्नेहपानादेकाहमुपरतमुपरमदिन एव स्विन्नं स्निग्धद्रवोष्णरसौदनं भुक्तवन्तं च वामयेत्।

**उक्तं हि**—"स्नेहात्प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत्।
स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम्।
एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत्" इति।

अत्र प्रस्कन्दनं विरेचनम्। तद्वद्भुक्त्वेति। स्नेहद्रवोष्णरसौदनं भुक्त्वा। भालुकिना तु स्नेहपानात्त्र्यहेण वमनं दर्शितम्।

तद्यथा—"स्निग्धस्विन्नशरीरस्य दद्यात्प्रच्छर्दनं त्र्यहात्।
दशरात्रे गते दद्याद्वान्ते भूयो विरेचनम्" इति॥ ४॥

**कृष्णेन्द्रयवसिन्धूत्थराढकल्कयुतं पिबेत्॥**
**यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम्॥ ५॥**

राढो मदनफलम्। कृष्णादीनां मिलित्वा कर्षः। मदनफलस्यापि कर्षः। यष्टीकषायं यष्टीमधुकषायम्। कषायश्च—

"क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके।
चतुर्भागावशिष्टं तु वमनेष्ववचारयेत्"॥

इति परिभाषया कर्तव्यः। अत्र चतुर्भागेत्यस्य स्थानेऽर्धभागेति पाठान्तरम्। क्वाथ-

---

१ घ. 'राठक'। २ घ. राठो।

बहुत्वे तु सत्ययं गुणो यद्ययोगः स्यात्तदा स एव पुनः पेयः । चरकेऽन्तर्नखं मुष्टिं जर्जरीकृत्येति कल्कमानं दर्शितं कषायेऽपि चूर्णं शरावं पाययेदित्युक्तं तथेहापि कल्कः कषायश्चात्र सर्वः कोष्णः कार्यः । सुखोष्णं सर्वत्र ज्ञेयम् ॥

तदुक्तम्—"यथा विकारविहितां मधुसैन्धवसंयुताम् ।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम्" ॥

अत्र कोष्णेन सह मधुसंबन्धो न विरोधी । वमनस्यापक्कस्यैवोर्ध्वगमनात् । जठरजातवेदसा हि पाके विरोधसंभवः ॥

तदुक्तम्—"यात्यधो दोषमादाय पच्यमानं विरेचनम् ।
गुणोत्कर्षाद्व्रजत्यूर्ध्वमपक्कं वमनं पुनः" ॥ इति ।

विद्यात्स्वयोगे पाकसंभवं मद्यपानां मध्वेव ॥

मन्त्रश्चात्र—"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु ते ॥
रसायनमिवर्षीणाममराणामिवामृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते" ॥

इति बोद्धव्यः ॥ ५ ॥

**कृशरां राढसंसिद्धां तद्बीजैर्वा शृतं पयः ॥**
**पीत्वा राढकषायं वा सिन्धुकृष्णान्वितं वमेत् ॥ ६ ॥**

सुगमम् ॥ ६ ॥

**तण्डुलसलिलनिपिष्टं यः पीत्वा वमति नरः पूर्वाह्णे ॥**
**फलिनीवल्कलमुष्णं हरति गरं सकफपित्तरुजम् ॥ ७ ॥**

पीत्वेति । तण्डुलजलेनैव । फलिनीवल्कलमिति । कर्षमानम् ॥ ७ ॥

**आटरूषं वचां निम्बं पटोलं फलिनीत्वचम् ॥**
**क्राथयित्वा पिबेत्तोयं वान्तिकृन्मदनान्वितम् ॥ ८ ॥**

आटरूपकादिद्रव्यं कुडवं जलाढकं पादशेषः कषायः । मदनफलकल्कस्य कर्षः । पञ्चकषायः ॥ ८ ॥

**क्राथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके ॥**
**चतुर्भागावशिष्टं तु वमनेष्ववचारयेत् ॥ ९ ॥**

सुगमम् ॥ ९ ॥

---

१ घ. राठसं । २ घ. राठकं । ३ घ. अर्धभागावशिष्टं ।

जीमूतकस्तथेक्ष्वाकुः कुटजः कृतवेधनः ॥
धामार्गवश्च संयोज्या वमने राढवत्पृथक् ॥ १० ॥

जीमूतको देवदाली । इक्ष्वाकुः कटुकालाबूः । कुटजः प्रसिद्धः । कृतवेधनो घोषिका कोशातकी । धामार्गवः पीतघोषो राजकोशातकी । एषां क्वाथकल्कादीन्कृत्वा राढवन्मदनफलवद्देशकालादीन्वीक्ष्य प्रयोक्तव्याः । मदनफलविधानं सुश्रुतोक्तम्—निर्वृत्तानां नातिहरितपाण्डूनां कुशमूटावबद्धमृद्गोमयप्रलिप्तानां महति यवतुषमुद्गमाषशाल्यादिधान्यराशावष्टरात्रोषितक्लिन्नभिन्नानां फलानां फलपिप्पलीरुद्धृत्याऽऽतपे शोषयेत् । तासां दधिमधुपललविमृदितपरिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टिमुष्णे यष्टीमधुककषाये कोविदारादीनामन्यतमे वा कषाये विमृद्य रात्रिपर्युषितं मधुसैन्धवसंयुक्तमाशीभिरभिमन्त्रितमुदङ्मुखः प्राङ्मुखमातुरं पाययेतानेन मन्त्रेणाभिमन्त्र्य—

"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते" ॥

अस्यार्थः । निर्वृत्तानां परित्यक्तशि(श)लाटुभावानां किंचित्पक्वानामित्यर्थः । कुशमूटः कुशपुटः । फलपिप्पल्यो मदनफलमज्जानः । अन्तर्नखमुष्टिनखानां मध्ये मुष्टिर्न तु पारिभाषिकी पलाभिधा । यष्टीमधुकषाये कोविदारादीनां संशोधनसंशमनीयोक्तानामेकादशानामन्यतमकषाये वा विमृद्य फलपिप्पलीनामन्तर्नखमुष्टिं रात्रिपर्युषितं मधुसैन्धवसंयुक्तमाशीभिराभिमन्त्रितमुदङ्मुखो वैद्यःप्राङ्मुखमातुरं पाययेदिति संबन्धः । आशीभिरभिमान्त्रितमिति । इष्टाशानिष्पादनमन्त्रोऽप्याशीस्ताभिर्वेदोक्ताभिरभिमन्त्रितम् । अभिमन्त्रणमन्त्रमाह—ब्रह्मदक्षेत्यादि । मन्त्रार्थस्त्वसंदर्शनीय आवृत्त्यैव केवलया मन्त्राणां फलदत्वात् । एवं राढवज्जीमूतकादीनां प्रयोगः ॥ १० ॥

निम्बकषायोपेतं फलिनीगदमदनमधुकसिन्धूत्थैः ॥
मधुयुतमेतद्वमनं कफपरिपूर्णाशये शस्तम् ॥ ११ ॥

गदः कुष्ठम् । फलिनीमधुककुष्ठानां मिलित्वा कर्षः । मदनफलस्य च कर्षः । *मदनफलमज्जा मदनफलमध्यस्य स्निग्धो भागस्तत्सिद्धं क्षीरं दधितां दधिभावमुपगतं तत्सरं दध्युत्तरं वा कफप्रसेकादिषु वमनाय प्रयुञ्जीत ॥ ११ ॥

---

* मदनफलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेकच्छर्दिमूर्छातमकेष्विति सुश्रुतस्येयं व्याख्येति मम भाति ।

१ ङ. °मूलाव° । २ घ. राठव° ।

श्लेष्मलैर्विविधैरन्नैर्दोषानुत्क्लेश्य यत्नतः ॥
स्निग्धस्विन्नाय वमनं दत्तं सम्यक्प्रवर्तते ॥ १२ ॥

श्लेष्मलैर्विविधैरन्नैरिति । स्निग्धद्रवोष्णरसौदनादिभिः । पेशलैर्विविधैरिति डल्लणपाठे पेशलैः कोमलैरकठिनैरभिष्यदिभिरिति यावत् । तथा च—श्लेष्मोत्तरश्छर्दयते ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यगिति ॥ १२ ॥

तत्रायोगातियोगयोरेव व्यापत्संभवेन प्रलिङ्गं दर्शयन्नाह—

कफप्रसेकं हृदयाविशुद्धिं शीतज्वराध्मानमथाविपाकम् ॥
शिरोगुरुत्वं मधुरास्यतां च कण्डूं च दुर्वामितलिङ्गमाहुः ॥ १३ ॥

सुगमम् ॥ १३ ॥

शून्यं शिरस्तीव्रमतीवकम्पं पार्श्वोरसोर्धूपनमेव चापि ॥
पित्तातियोगं च विसंज्ञतां च हृत्कण्ठपीडामपि चातिवान्ते ॥ १४ ॥

पित्तातियोगं पित्तातिप्रवृत्तिम् ॥ १४ ॥

पित्ते कफस्यानु सुखं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि ॥
लघौ च देहे कफसंस्रवे च स्थिते सुवान्तं पुरुषं व्यवस्येत् ॥ १५ ॥

सुवान्तलक्षणमाह—पित्ते कफस्यानु सुखमित्यादि । इति डल्लणोक्ता शङ्का । अथ श्रीकण्ठपण्डितस्त्वे वमाशङ्कां विधाय व्याचष्टे । अत्र कैश्चिच्चतुर्विधा शुद्धिरुक्ता लैङ्गिकी मानिकी वैगिक्यान्तिकी चेति । तासां मध्ये लैङ्गिकीमेव शुद्धिमाह—पित्ते कफस्यानु सुखमित्यादि । कफस्यानु पश्चाच्छुद्धेष्वगौरवादिलक्षणयुक्तेषु व्यवस्येज्जानीयात् । सम्यग्वान्तलक्षणं कार्यत्वेन दुर्वान्तातिवान्तलक्षणं परिहार्यत्वेन व्यापत्परिहारार्थमुक्तम् । ननु वमने सुश्रुतेन कुतो लैङ्गिकीपरमियं शुद्धिरुच्यते नापरास्तिस्रः । चतुर्विधा हि शुद्धिश्चरके वमने विरेचने चोक्ता । यथा—वैगिकी मानिक्यान्तिकी लैङ्गिकी ॥

"जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥
पित्तान्तमिष्टं वमनं विरेकादर्धं कफान्तं च विरेकमाहुः ।
द्वित्रान्सविट्कानपनीय वेगान्मेयं विरेके वमने तु पीतम् ॥
क्रमात्कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः ।
हृत्पार्श्वमूर्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे ॥
दुश्छर्दिते स्फोटककोठकण्डूहृत्खाविशुद्धिं गुरुगात्रतां च ।
तृण्मोहमूर्छानिलकोपनिद्राबलातिहानिं वमितेऽति विद्यात् ॥

स्रोतोविशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जाग्निरनामयत्वम् ।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत्क्रमेण" इति ।

विरेकेऽपि सुश्रुतेन चतुर्विधैव शुद्धिर्दर्शिता । तथा हि—गतेषु दोषेषु कफान्तिकेष्वित्यनेनाऽऽन्तिकी । नाभ्यां लघुत्वे मनसश्च तुष्टावित्यादिना लैङ्गिकी । वैगिकी च कुष्ठे सूचिता ।

यथा—"प्रातः प्रातश्च सेवेत योगान्वैरेचनाञ्शुभान् ।
यैरुत्थानानि जायन्ते षडष्टौ पञ्च सप्त वा" इति ॥

मानिक्यातुरोपद्रवे दर्शिता ।

"त्रीणि चात्र प्रमाणानि प्रस्थोऽर्धाढकमाढकम् ॥
तत्रावरं प्रस्थमात्रं शेषे द्वे मध्यमोत्तमे" इति ।

उच्यते—तिसृणां शुद्धीनामनैकान्तिकत्वप्रतिपादनार्थं वमने न विधानम् । अत्र वैगिकी तावद्व्यभिचरति हीनयोगे यथोक्तैरपि वेगैः शुद्धेरदर्शनात् । वमनमित्यन्यस्य कस्यचित्तैरन्यैरपि शुद्धेश्च । मानिक्यपि व्यभिचरति यतो दोषवृद्धेरुत्कर्षापकर्षतारतम्यादधिकन्यूनेनापि मानेन शुद्धिः संभवत्येव । न हि निदानानुरूपकोपभाजां दोषाणां प्रतिनियतं प्रमाणमस्ति । अत एव सुश्रुतेन विरेके धारप्रस्थो मध्ये प्रस्थद्वयं दर्शितम् । चरके त्वधारप्रस्थद्वयं मध्येप्रस्थत्रयमुक्तम् । आन्तिक्यपि नैकान्तिकी कफाशयगते पित्ते कदाचिद्द्वित्रवेगैरेव वमने पित्तान्तत्वे जातेऽपि न शुद्धेरुदयः । लैङ्गिकी तु न सर्वथा व्यभिचरति तेन सैव सुश्रुते वमने दर्शिता। यद्येवमपरास्तिस्रः शुद्धयः सुश्रुतेन विरेके चरकेण तु वमने कुतोऽभिहिताः । उच्यते । वैगिकीमानिक्योर्जघन्यादिभेदस्य पेयादिक्रमभेदस्य प्रतिपादनार्थमित्यभिधानम् । आन्तिकी च प्रायोभावित्वेनोक्तेति समाधेयम् । सुश्रुते निबन्धकारडल्लणाचार्य एवं व्याख्याति । तत्र कैश्चित्त्रिधा शुद्धिरभिहिता यथा लैङ्गिकी वैगिकी मानिकी चेति । तत्र लिङ्गैर्वान्तविरिक्तसम्यक्चिह्नैर्ज्ञायत इति लैङ्गिकी । हीनमध्योत्तमैर्वमनवेगैश्चतुःषडष्टभिर्दशविंशतित्रिंशद्भिर्विरेचनैर्ज्ञायत इति वैगिकी । मानेन श्लेष्मपित्तयोः प्रस्थार्धाढकाढकप्रमाणेन हीनमध्यमोत्तमेन ज्ञायत इति मानिकी । तत्र न तावन्मानिकी शुद्धिः । दीर्घह्रस्वस्थूलकृशदेहसंहतिप्रकृतिसारादिभिर्विविधलक्षणशरीराणां प्राणिनां दोषधातुमलानां परिमाणाभावात् । नापि वैगिकी यतो बहुभिर्वेगैः कदाचित्कस्यचिच्छुद्धिः प्रकृतिवयोबलशरीरदोषव्यपेक्षया कस्यचित्कतिपयैरपि वेगैः शुद्धिरिति । अतस्तृतीयां कफप्रसेकमित्यादिभिर्लिङ्गैर्लैङ्गिकीं शुद्धिमत्रोक्तवान्सुश्रुताचार्य इति ॥ १९ ॥

आहारं सेव्यमाचाराभिहितं प्रतिपादयन्नाह—

**ततोऽपराह्णे सुविशुद्धदेहमुष्णाभिरद्भिः परिषिक्तगात्रम् ॥**
**कुलत्थमुद्गाढकिजाङ्गलानां यूषै रसैर्वाऽप्युपभोजयेत्तम् ॥ २० ॥**

कुलत्थादीनां यूषैर्जाङ्गलानां मांसरसैर्वा लघुभक्तमेव भोजयेत्। यूषमांसरसविकल्पश्चायं दोषकालसात्म्याद्यपेक्षः। ननु वान्तस्य सहसा मन्दोऽग्निः स्यात्।

तदुक्तम्—"स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः।
निरूढस्य च कायाग्निर्मन्दो भवति देहिनः". इति।

मन्दे चाग्नौ पेयादिक्रमो न्याय्यस्तत्कथमिह तथा नोक्तम्। उच्यते। वान्तस्य नावश्यं विरिक्तस्येवात्यन्तमग्नेरुपघातः। किंच। प्रवृद्धकफापगमाय वमनं तस्यां चावस्थायां पेयादिक्रमोऽनुचितः पेयायाः कफवर्धकत्वात्।

यदुक्तम्—"पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम्।
तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्धिनी" इति।

मनाङ्मन्देऽग्नावनतिक्षीणे च कफे यूषादिना भोजनविधिः। यदा तु भृशं मन्दोऽग्निरतिक्षीणश्च कफस्तदा पेयादिक्रमो विहितः। अत एवाऽऽह दृढबलः—

" पेयां विलेपीमकृतं कृतं च यूषं रसं द्वित्रिरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः" इति।

अथ डल्लणाचार्यस्य व्याख्या—वान्तस्य हि मन्दाग्निः पेयादिक्रमयोग्यस्य कथं यूषमांसरसोपदेशः। अत्रोच्यते। अपिशब्दात्पेयादिक्रमोऽत्राप्युक्त एव। तत्रात्यन्तक्षीणकफानां पेयादिस्तेषामपि वातभूयिष्ठानां दीप्ताग्नीनां सात्म्यापेक्षया मांसरसोपयोगः। दोषर्तुप्रकृत्यपेक्षया किंचित्कफयुक्तानां यूषोपयोगः। न तु विलेपीयवागूनाम्।

उक्तं च—"पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम्।
तथा श्लेष्मणि संदुष्टे यवागूः श्लेष्मवर्धिनी" इति॥ १६॥

अतः परं वमनफलाभिधानम्—

**कफप्रसेकस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गाः।**
**गुरुत्वकण्डूग्रहणीप्रदोषा न सन्ति जन्तोर्वमनात्कदाचित्॥ १७॥**

केचित्—**"कासोपलेपस्वरभेदतन्द्रा निद्रास्यदौर्गन्ध्यकफोपसर्गाः। कफप्रसेकग्रहणीप्रदोषा न सन्ति जन्तोर्वमतस्तथाऽन्ये"** इति पठन्ति। उपलेपः स्रोतःसु मलवृद्धिः। उपसर्गाः शीतलिकादयः॥ १७॥

अस्यैवार्थस्य द्रढनार्थं दृष्टान्तमाह—

**छिन्ने तरौ पुष्पफलप्ररोहा यथा विनाशं सहसा व्रजन्ति॥**
**तथा हृते श्लेष्मणि च्छर्दनेन तज्जा विकारा विलयं व्रजन्ति॥ १८॥**

॥ १८॥

अतः परमवम्यानाह—

न वामयेत्तैमिरिकं न गुल्मिनं
न चापि पाण्डूदररोगपीडितम् ॥
स्थूलक्षतक्षीणकृशातिवृद्धा-
नर्शोर्दिताक्षेपकपीडितांश्च ॥ १९ ॥

रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्ध्वं रुधिरे च तीव्रे ॥
दुष्टे च कोष्ठे कृमिभिर्मनुष्यं न वामयेद्वर्चसि वाऽतिवृद्धे ॥ २० ॥

पाण्डूदररोगपीडितमिति । रोगशब्दः पाण्डूदराभ्यां सह संबध्यते । केचित्—"न वामयेत्तैमिरिकोर्ध्ववातगुल्मोदरप्लीहवमिश्रमार्तान् । स्थूलक्षतक्षीणकृशातिवृद्धान्मूत्रातुरान्केवलवातरोगान् । स्वरोपघाताध्ययनप्रसक्तदुश्छर्दद्दुष्कोष्ठतृडर्तिबालान् । ऊर्ध्वास्रपित्तक्षुधितातिरूक्षगर्भिण्युदावर्तनिरूहितांश्च" । इति पठन्ति । ऊर्ध्वं वातं केचिच्छ्वासं मन्यन्ते तन्न श्वासिनो मृदुवमनार्हत्वात् । ऊर्ध्ववातस्तन्त्रान्तरे प्रोक्त एव—

"अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन वा ।
करोत्यनिशमुद्गारमूर्ध्ववातः स उच्यते" इति ॥

अन्यत्राप्युक्तम्—

"भुक्ते भुक्ते तथा सुप्ते यस्योद्गारः प्रवर्तते ।
ऊर्ध्ववातं तु तं विद्यादुदानव्यानसंभवम्" इति ॥ १९ ॥ २० ॥

एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ॥
अतीव चोल्बणकफास्ते च स्युर्मधुकाम्बुना ॥ २१ ॥

एषामजीर्णपीडायां स्थावरजङ्गमे कृत्रिमविषबाधायां चात्यर्थोद्धृतकफाश्चैते वाम्या वमनार्हाः । तत्रैषां वमने चिराद्बाधाऽजीर्णेन विषैश्च सद्य एव । उल्बणकफानां च गलामयादिषु सद्य एव विनाशः । अत्रापि द्रव्यविशेषमुपदिशन्नाह—मधुकाम्बुनेति । यष्टीमधुकषायेण वमनाङ्गप्रधानेन वामयेत् । जैज्जटः पुनराह—मध्वेव मधुकं स्वार्थे कः, तेन मधुकाम्बुना क्षौद्राम्बुना । एष प्रतिप्रसवो ह्यवाम्यानामप्युक्तः ॥ २१ ॥

अवमनार्हाणां वमने व्याधिपरिवृद्धिमसाध्यतां च दर्शयन्नाह—

अवाम्यवमनाद्रोगाः कृच्छ्रतां यान्ति देहिनः ॥
असाध्यतां वा गच्छन्ति नैते वाम्यास्त्वतः स्मृताः ॥ २२ ॥

अत्रावाम्यानामनिर्देशो यथास्वं तत्प्रत्यनीकव्याधिषु वमननिर्देशादिति ॥ २२ ॥

अतिवान्तं घृताभ्यक्तमवगाह्य हिमे जले ॥
उपाचरेत्सिताक्षौद्रमिश्रैर्लेहैश्चिकित्सकः ॥ २३ ॥

लेहैरिति । लाजसक्तुलेहैः शर्करामधुमिश्रैरुपाचरेत् । क्वचिल्लाजसक्तुभिः प्रकल्पितैः क्वचिच्छर्करामिश्रैः क्वचिन्मधुमिश्रैरित्यर्थः ॥ २३ ॥

वमनेऽतिप्रवृत्ते च हृद्यं कार्यं विरेचनम् ॥
विरेकेऽतिप्रवृत्ते तु वमनं योजयेद्भिषक् ॥ २४ ॥

सुगमम् ॥ २४ ॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां त्रिसप्ततितमो वमनाधिकारः समाप्तः ॥ ७३ ॥

---

## अथ चतुःसप्ततितमो विरेचनाधिकारः ।

---

वमनपूर्वकत्वाद्विरेचनस्याथ विरेकाध्यायः । विरेचनविधानमाह—

स्निग्धस्विन्नाय वान्ताय प्रदातव्यं विरेचनम् ॥
अन्यथा योजितं ह्येतद्ग्रहणीरोगकृन्मतम् ॥ १ ॥

स्निग्धस्विन्नायेति । वमनानन्तरमपि स्निग्धस्विन्नाय देयम् ।
यदुक्तम्—"कर्मणां वमनादीनामन्तरे त्वन्तरे पुनः।
स्नेहस्वेदौ प्रयुञ्जीत संशोधनमनन्तरम्" ॥ इति ।

तच्च पक्षादूर्ध्वं पक्षाद्विरेको वान्तस्येत्युक्तत्वात् । तत्रान्नसंसर्गेणापि दिनानि षट् स्नेहेनापि ततः स्विन्नं त्र्यहमेव लघूष्णभोजिनं रेचयेत् ।

"वान्तं षडहसंसृष्टं पुनः संस्नेहितं क्रमात् ।
उष्णं लघु त्र्यहं भुक्तं षोडशेऽह्नि विरेचयेत्" इति ॥

तत्र वमने स्नेहादेकाहमेवोपरमो विरेके त्र्यहम् । तथा हि चरकः—
"एकाहोपरतः स्नेहाद्भुक्त्वा प्रच्छर्दनं पिबेत् ।
त्रिरात्रोपरतस्तद्वत्स्नेहात्प्रस्कन्दनं पिबेत्" इति ॥

अवान्ते हि विरेकदाने को दोष इत्याह—अन्यथेति । तथा च सुश्रुतः—अवान्तस्य हि सम्यग्विरिक्तस्यापि सतोऽधःस्रस्तः श्लेष्मा ग्रहणीं छादयति गौरवमापादयति प्रवाहिकां वा जनयति । तस्मात्स्निग्धस्विन्नाय वान्ताय च देयमिति ॥ १ ॥

मृदुक्रूरमध्यभेदेन त्रिविधं कोष्ठमाह—

**पित्तेन स्यान्मृदुः कोष्ठः क्रूरो वातकफाश्रयात् ॥**
**मध्यमः समदोषत्वान्मात्रा योज्याऽनुरूपतः ॥ २ ॥**

पित्तेन पित्ताधिक्येन मृदुः । स दुग्धेक्षुरसाम्लतक्रमस्तुगुडकृशरासर्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिरपि विरिच्यते । वातकफाश्रयाद्वातश्लेष्माधिक्यात्क्रूरः । स त्रिवृत्त्रिफलातिल्वकनीलिनीफलादिभिरपि दुःखेन विरिच्यते । **मात्रा योज्याऽनुरूपत इति** । मृदौ मृद्वी मृदुगुणोपेता वैरेचनिकद्रव्यगुणानां तीक्ष्णत्वादीनामपकर्षेण । क्रूरे तीक्ष्णगुणोपेता वैरेचिकगुणानां तीक्ष्णत्वादीनां प्रकर्षेण । मध्ये मध्या मात्रा कर्तव्येत्यर्थः ॥ २ ॥

**शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ॥**
**रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥ ३ ॥**

शर्कराक्षौद्रं च लेहार्थम् । त्रिवृच्चूर्णं कोष्ठाद्यपेक्षया । अष्टादशमाषकमानं त्रिवृच्चूर्णं तदवचूर्णितं वेति । त्रिवृच्चूर्णावचूर्णितं त्वक्पत्रादिभिः । **त्वक्पत्रमरिचांशकमिति** । त्वक्पत्रमरिचानामंशश्चतुर्थो भागः । त्रिवृच्चूर्णापेक्षया त्वक्पत्रादिमिलितं पादिकमित्यर्थः । त्वक्पत्रसुरभीकृतमिति पाठे तु त्वक्पत्रचूर्णेन यावता सौरभ्यं स्यात्तावद्देयमिति ॥ ३ ॥

**भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः परिवेष्ट्य रज्ज्वा ॥**
**पक्वं तु सम्यक्पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम् ॥ ४ ॥**

भित्त्वा विदार्य । त्रिभण्डी शुक्ला त्रिवृत् । पुटपाकयुक्त्या पुटपाकक्रमेण काश्मर्यादिपत्राच्छादनकुशपरिवेष्टनमृदावलेपननिर्धूमाङ्गारान्तरुपस्वेदनादिरूपया ।

अन्ये त्वेवं पठन्ति—

"इक्षुं द्विधा पाटयित्वाऽवलिप्य त्रिवृत्कल्कैः प्रतिसंधाय चापि ।
पक्वं सम्यक्पुटपाकक्रमेण खादेच्छीतं पित्तरोगाभिभूतः ॥

व्याख्यानयन्ति च । त्रिवृत्कल्कैरिति बहुवचनात्त्रिवृदादिकल्कैरिति, आदिशब्दो लुप्तो द्रष्टव्यः । तेनान्येषां वैरेचनिकानामयमेव पुटपाकविधिरिति द्योतयति । प्रतिसंधाय कुशादिभिर्वेष्टयित्वेति ॥ ४ ॥

वैरेचनमाह—

**पिप्पलीनागरक्षारश्यामास्त्रिवृतया सह ॥**
**लेहयेन्मधुना सार्धं कफव्याधौ विरेचनम् ॥ ५ ॥**

श्यामा श्याममूला त्रिवृत् । त्रिवृदरुणमूला । पिप्पलीनागरयोः प्रत्येकं माषकद्व-

यम् । यवक्षारस्य माषकाश्चत्वारः । श्यामात्रिवृतयोः प्रत्येकं तथा । एवं मिलित्वा कर्षो लेह्यः । एवमन्यत्रापि मानमूह्यम् ॥ ५ ॥

हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ॥
मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम् ॥ ६ ॥

तत्सर्वमिति । मात्राप्रमाणं मध्येषु कोष्ठवयोबलेषु चूर्णकर्षः । उत्तमाधमयोर्बुद्ध्या विकल्पनीयः । हरीतक्यादियोगः कफव्याधावेव ॥ ६ ॥

त्रिवृच्छाणत्रयसमा त्रिफला तत्समानि च ॥
क्षारकृष्णाविडङ्गानि तच्चूर्णं मधुसर्पिषा ॥ ७ ॥
लिह्याद्गुडेन गुटिकां कृत्वा वाऽप्युपकल्पयेत् ॥
कफवातकृतान्गुल्मान्प्लीहोदरभगंदरान् ॥
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥ ८ ॥

त्रिवृच्छाणत्रयसमा त्रिफलेति । त्रिवृच्छाणत्रयं त्रिफलाया अपि मिलित्वा शाणत्रयम् । क्षारकृष्णाविडङ्गानामपि मिलित्वा तावदेव मानं शाणत्रयमित्यर्थः ।

तत्र तन्त्रान्तरम्—

"त्रिवृतः शाणमात्रा हि तिस्रश्च त्रिफलात्वचः ।
विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः ॥
लिह्यात्सर्पिर्मधुभ्यां तु मोदकान्वा गुडेन च" इति ॥

निरपायं व्यापद्रहितम् ॥ ७ ॥ ८ ॥

अभयाद्यमोदकमाह—

अभया पिप्पलीमूलं मरिचं विश्वभेषजम् ॥
त्वक्पत्रपिप्पलीमुस्तविडङ्गामलकानि च ॥ ९ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत् ॥
त्रिवृदष्टगुणा देया षड्गुणा चात्र शर्करा ॥ १० ॥
मधुना मोदकान्बद्ध्वा चाक्षमात्रं प्रमाणतः ॥
एकैकं भक्षयेत्प्रातः शीतं चानु पिबेज्जलम् ॥ ११ ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ॥
पानाहारविहारेषु भवेच्चापि नियन्त्रणः ॥ १२ ॥
पाण्डुत्वकासविषमज्वरवह्निसादा-
ञ्जङ्घोरुपृष्ठजघनोदरपार्श्वशूलान् ॥
दुर्नामकुण्डलभगंदरशोफगुल्मा-
न्यक्ष्मोदरभ्रमविदाहकमूत्रकृच्छ्रान् ॥ १३ ॥

प्लीहाक्षिरोगपवनाश्मरिकुष्ठमेहा-
न्हन्याद्रसायनमिदं भिषजा प्रयुक्तम् ॥
अल्पव्ययं बहुफलं सततं प्रयोज्य-
मायुष्करं पलितनाशनमग्निवृद्धम् ॥ १४ ॥

त्वग्गुडत्वक् । दन्ती त्रिगुणैकभागापेक्षया । एवमष्टगुणत्वं षड्गुणत्वं च । मधुनेति । मोदककरणोचितमानेन । शीतं चानु पिबेज्जलमिति । योगप्रभावोऽयमन्यत्र शीताम्बुना स्तम्भ एव स्यात् । रसायनमिदमिति । रसायनसाधर्म्याद्रसायनं रसायनं यथा प्रशस्तरसाद्युत्पादात्पुष्टिवर्णादिकृत्तथेदमपीत्यर्थः । किंवा रसायनाङ्गमिदं विरेचनमिति रसायनम् । अभयाद्यो मोदकः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥१४॥

पथ्यासैन्धवकृष्णानां कल्कमुष्णाम्बुना पिबेत् ॥
विरेकः सर्वदोषघ्नः श्रेष्ठो नाराचसंज्ञितः ॥ १५ ॥

नाराचयोगस्तन्त्रान्तरस्य ॥ १५ ॥

विडङ्गसारामलकाभयानां पलं पलं स्यात्त्रिवृतात्रयं च ॥
गुडस्य षड्द्वादशभागयुक्ता मासेन त्रिंशद्गुटिका विधेयाः ॥१६॥
निवारणे यक्षवरेण सृष्टः स माणिभद्रः किल शाक्यभिक्षवे ॥
अयं हि कासक्षयकुष्ठनाशनो भगंदरप्लीहजलोदरार्शसाम् ॥१७॥

पलं पलं प्रत्येकं पलमित्यर्थः । त्रिवृतात्रयमिति । त्रिवृताया अपि पलत्रयम् । गुडस्य षट्पलानि । द्वादशभागयुक्तेति । अतो मिलित्वा द्वादशपलरूपभागविभागेन युक्ता कृता । मासेनेति । मासेनोपयुक्तम् । अयमर्थः । द्वादश पलानि विभज्य मासोपयोगार्थं त्रिंशद्गुटिकाः कुर्यात् । एकगुटिकाया मानं षड्रक्तिकाधिकनवमाषकोपेतः कर्ष इत्यर्थः । षट्किंचिदधिकरक्तीत्रयोपेतनवमाषकाधिककर्षमानैका गुटिकेत्यर्थः । प्रत्यन्तरे रक्तिकाभिर्माषमानमाहुः । काश्मीरास्तु गुडस्य च द्वादश पलानि पठन्ति । अत एव चन्द्रटोऽपि 'गुडस्य च द्वादश एष योगः' इति पठति । इति माणिभद्रो मोदकः ॥ १६ ॥ १७ ॥

एरण्डतैलं त्रिफलाक्काथेन त्रिगुणेन च ॥
युक्तं पीतं पयोभिर्वा न चिरेण विरिच्यते ॥ १८ ॥

पयोभिर्वेति । वाशब्दश्चार्थे । तेन त्रिफलाक्काथदुग्धाभ्यामेरण्डतैलं पेयमिति गदाधरः । पयसैव केवलेन द्विगुणेनेत्यन्ये । प्रचारोऽप्येवमेव । युक्तं पीतं तथा क्षीररसाभ्यां तु विरेचयेत्, इति पाठः । तत्र त्रिगुणेन त्रिफलाक्काथेन युक्तं तथा क्षीररसाभ्यां युक्तमेरण्डतैलं विरेचयेत् । रसो मांसरसः ॥ १८ ॥

विरेचनस्यैव लिङ्गज्ञानेनायोगातियोगौ निर्दिशन्नाह—

**हृत्कुक्ष्यशुद्धिः परिदाहकण्डूविण्मूत्रसङ्गाश्च न सद्विरिक्ते ॥**

कफपित्तकोपो दाहोऽरुचिर्गौरवमग्निसाद इत्येके पठन्ति ॥

**मूर्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम् ॥ १९ ॥**

सुगमम् ॥ १९ ॥

**गतेषु दोषेषु कफान्तिकेषु *नाभ्यां लघुत्वे मनसश्च तुष्टौ ॥**
**गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तं मनुजं व्यवस्येत् ॥ २० ॥**

दोषोऽत्र पित्तस्थानगतं दोषोपलक्षितं पुरीषं कफः पित्तं च । **कफान्तिकेष्विति** । कफान्तिकेषु(?) । **गतेऽनिले चाप्यनुलोमभावमिति** । अन्ते वायावानुलोम्यात्प्रवृत्ते सतीत्यर्थः । तथा च **दृढबलः**—प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत्क्रमेणेति । न चैवं कफान्तत्वव्याघातः । कफान्तत्वस्यैव वायुनाऽपि सूचनात् । वायुर्हि निःशेषहृते कफे, आशयशून्यतया केवलः सरति । एवं वमनस्य पित्तान्तत्वेऽपि समाधिः ॥ २० ॥

अत्रैव पश्चात्कर्मण्यवस्थाविशेषेण विशेषमुद्दिशन्नाह—

**मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेत्तद्दिवसे यवागूम् ॥**
**क्षीणं तृषार्तं सुविरेचितं च तन्वीं सुखोष्णां लघु पाययेत्तु ॥ २१ ॥**

**तन्वीमिति** । यवागूविशेषणम् । तन्वी च यवागूः पेया । लघ्विति क्रियाविशेषणम् । मात्रालघु तेन विलेप्यादिविधिरिति ज्ञेयः ॥ २१ ॥

इदानीं विरेचनफलमाह—

**बुद्धेः प्रसादं बलमिन्द्रियाणां**
**धातुस्थिरत्वं +ज्वलनस्य[1] दीप्तिम् ॥**
**चिराच्च पाकं वयसः करोति**
**विरेचनं सम्यगुपास्यमानम् ॥ २२ ॥**

बुद्धिप्रसादश्च कायमनसोरन्योन्यानुविधानेन कायशुद्ध्या मनसोऽपि शुद्धिः प्रसादो बुद्धेरिन्द्रियाणां च बलं तात्कालिकं विशिष्टमौत्तरकालिकम् । एतदेव **डल्लणेन** स्पष्टीकृत्योक्तम्—कायमनसोरन्योन्यानुविधानात्कायमपि मनोऽनुविधत्ते मनश्च काय इति । शरीरशुद्धिकारणं हि विरेचनं तच्छुद्धौ मनसो विशुद्धिः । मनःशुद्धौ बुद्धिप्रसाद

* ग्लान्यां लघुत्वे, एवं पाठो बहुषु पुस्तकेषु । + बलमग्निदीप्तिमिति घ. पुस्तके बहिर्लिखितपाठः ।

१ घ. ज्वलनातिदी॰ ।

उपपन्न एवेत्यतो बुद्धेः प्रसादं करोतीत्युक्तम्। धातुस्थिरत्वमुपचयलक्षणबलेन। बलशब्देनोत्साहलक्षणं बलम्। केचिद्बुद्धिप्रसादादयस्तात्कालिका विरेचनस्य गुणाः। अग्निदीप्तिप्रभृतयस्तु केचित्संसर्जनक्रमानन्तरभाविन इति। उपस्तम्भादिकारिणो मलस्य क्षयकार्यपि विरेकः स्रोतःशुद्ध्या बलमादधाति तक्रपानवत्।

उक्तं च—"स्रोतस्सु तक्रशुद्धेषु रसो धातूनुपैति यः।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते" ॥ २२ ॥

दृष्टान्तमाह—

**यथौदकानां भुवि जङ्गमानां सेतौ विदीर्णे ध्रुव एव नाशः ॥**
**पित्ते हते त्वेवमुपद्रवाणां पित्तात्मकानां नियतो विनाशः ॥ २३ ॥**

**यथौदकानां भुवि जङ्गमानां सेतौ विदीर्णे इति।** औदकानां जङ्गमानां जलजन्तूनां सेतौ विदीर्णे भुवि स्थले यथा ध्रुवो विनाशस्तथेत्यर्थः। किंवा औदकानां पद्मादीनां भुवि जङ्गमानां च मत्स्यादीनां सेतौ विदीर्णे इति व्याख्येयम्। यथौदकानामुदकेऽपवीते* चरस्थिराणां भवति प्रणाश इति वा पाठः। औदकानां स्थावरजङ्गमानां पद्मादीनां मत्स्यादीनां चेति। उपद्रवाणां व्याधीनां पित्तात्मकानां पित्तकारणकानाम् ॥ २३ ॥

अविरेच्यानाह—

**क्षीणक्षतोरूक्षितबालवृद्धा दीनोऽथ शोषी भयशोकतप्तः ॥**
**श्रान्तस्तृषार्तोऽपरिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य वाऽसृक्॥२४॥**
**नवप्रतिश्यायपरीतदेहो नवज्वरी या च नवप्रसूता ॥**
**कषायनित्या न विरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च ॥ २५ ॥**

**शोषीति।** धातुशोषी। **कषायनित्या इति।** कषायरसाभ्यासपराः ॥२४॥२५॥

**मन्दाग्न्यतिस्नेहितबालवृद्धस्थूलक्षतक्षीणभयोपतप्ताः ॥**
**श्रान्तस्तृषार्तोऽपरिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य चासृक् ॥२६॥**
**नवप्रतिश्यायमदात्ययी च नवज्वरी या च नवप्रसूता ॥**
**शल्यार्दिताश्चाप्यविरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च ॥**
**अत्यर्थपित्ताभिपरीतदेहान्विरेचयेत्तानपि मन्दमन्दम् ॥ २७ ॥**

मन्दमन्दमित्यत्र केचिन्मन्दवीर्यैरिति पठन्ति तत्र द्रव्यैरिति शेषः ॥ २६ ॥ २७ ॥

अविरेच्यस्याविरेकज्ञैः कृतं दोषं दर्शयन्नाह—

**विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ॥ २८ ॥**

॥ २८ ॥

---

* अपनीते, इति सुश्रुतपाठः।

विरेचनस्य स्निग्धरूक्षस्य पुरुषविशेषेणावधारणमुद्दिशन्नाह—

**न चातिस्निग्धकायस्य दद्यात्स्नेहविरेचनम् ॥**
**दोषाः प्रच्याविता भूयो लीयन्ते तेन वर्त्मसु ॥ २९ ॥**

अतिस्निग्धस्य स्नेहविरेचनं स्नेहनप्रकर्षादतिवेगं गच्छतः प्रचलितानपि दोषान्निहन्तुं न शक्नोति । ते च दोषास्तेन स्नेहविरेचनेन स्वस्थानात्प्रच्याविता भूयः पुनर्वर्त्मसु स्रोतस्सु लीयन्ते । एवं च तस्मादतिस्निग्धान्स्नेहविरेचनेन न शोधयेत् । न चातिस्नेहपीतस्तु पिबेत्स्नेहविरेचनमिति केचित्पठन्ति ॥ २९ ॥

स्वभावतः स्निग्धता न शोधनहेतुरित्याह—

**विरूक्षस्नेहसात्म्यं तु भूयः संस्नेह्य रेचयेत् ॥**
**तेन दोषा हतास्तस्य भवन्ति स्नेहबन्धनाः ॥ ३० ॥**

स्नेहसात्म्यमिति तु विरूक्ष्य पुनः संस्नेह्य विरेचयेत् । तेन तथाकृतेन विरेचनेन । स्नेहबन्धनाः स्नेहोपलिप्तस्रोतोबन्धना इत्यर्थः । पूर्वं ये दोषास्ते तथा हता भवन्ति । बलवर्धना इति केचित्पठन्ति ॥ ३० ॥

रूक्षस्याकृतस्नेहस्वेदस्य शोधने वमने विरेचने च दोषान्दर्शयन्नाह—

**स्नेहस्वेदावकृत्वैव यस्तु संशोधनं पिबेत् ॥**
**दारु शुष्कमिवाऽऽनामेर्देहस्तस्य विदीर्यते ॥ ३१ ॥**

॥ ३१ ॥

शाखागतस्यापि दोषस्य कोष्ठानयनहेतुः स्नेहः स्वेदः कोष्ठगतस्य सुखेन प्रवृत्तिकरश्चेति दर्शयन्नाह—

**स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः ॥**
**दोषाः कोष्ठगता जन्तोः सुखं हर्तुं विरेचनैः ॥ ३२ ॥**

**रसैः स्निग्धैरिति** । मधुराम्ललवणैस्ते हि स्निग्धरसा इति **कार्तिकः** । मांसरसैः स्निग्धैरित्यन्ये । सुखं हर्तुं विशोध(रेच)नैरिति । शक्यन्त इत्यध्याहारः ॥ ३२ ॥

**आस्थाप्य स्नेहितं तीक्ष्णै रेचयेद्धीनरेचितम् ॥ ३३ ॥**

वातवैगुण्येन हीनरेचितमास्थापनपूर्वकं तीक्ष्णैर्दन्त्यादिभिर्विरेचयेत् । मात्राल्पत्वादिना तु हीनरेचिते यथोचितो मात्रादिविधिः । वमनानन्तरं च विरेचनं पक्षात्परतः कर्तव्यम् ।

यदाह सुश्रुतः—"पक्षाद्विरेको वान्तस्य ततश्चापि निरूहणम् ॥
सद्यो निरूढश्चान्वास्यः सप्तरात्राद्विरेचितः" इति ॥

१ घ. °वचार° । २ घ. वान्तवै° ।

अस्यार्थः। वमनानन्तरं पक्षाद्विरेचनं विरेचनानन्तरं च सप्तरात्रादूर्ध्वमुदावर्तप्रशमनार्थं निरूहः। सप्तरात्रोर्ध्वकालत्वं च निरूहस्योत्तरकालव्याख्यायां वक्तव्यम्। निरूढश्च सद्यस्तदहरेवानुवास्यः। किं वा सद्यःशब्दः सप्ताहे। तेन निरूढः सप्ताहादूर्ध्वमनुवास्यः। तथा च तन्त्रान्तरम्—

"आस्थापितं विरिक्तं वा सप्ताहमुपबृंहितम्।
यवाग्वादिभिराहारैर्योजयेत्स्नेहबस्तिना" इति॥

अत्र पक्षे तदहः स्नेहबस्तिर्निरूहाङ्गतया लभ्यते। निरूढोऽपि सप्तरात्राद्विरेच्यो विरिक्तोऽपि सप्तरात्रान्निरूह्यो नार्वाक्। अत्रार्थे चरकाचार्यः—

"नरो विरिक्तस्तु निरूहदानाद्विवर्जयेत्सप्त दिनान्यवश्यम्।
शुद्धो *निरूढोऽपि विरेचनं च तद्ध्यस्य शून्यं विकसेच्छरीरम्" इति॥

जैज्जटव्याख्येयम्। गदाधरस्तु व्याचष्टे। ततश्चापि निरूहणमिति। निरूहोऽपि पक्षादेव विरेचितस्तु सप्तरात्रात्परतोऽनुवास्यः। अतएवोक्तम्—विरेचनात्सप्तरात्रे गत इति। आदिपक्षस्य चेत्थं पूरणम्, उत्तमशुद्ध्यपेक्षया पेयादिक्रमः षडहम्। तत्परं मध्यकोष्ठापेक्षया स्नेहपानमपि षडहम्। ततः स्वेदस्त्र्यहमिति। यत्तु भालुकिना— दशरात्रे गते दद्याद्वान्ते भूयो विरेचनमित्यनेन दशरात्राद्विरेचनं वान्तस्योक्तं तन्मृदुकोष्ठापेक्षया त्र्यहं स्नेहपानं मध्यदोषे चतुरहं पेयादिक्रमेण त्र्यहं स्वेदेन च ज्ञेयम्।

अथ डल्हणोक्ता व्याख्या—पञ्चानां कर्मणां क्रमेण क्रियमाणानां यतो यतो यद्यावता कालेन करणीयं तत्तदुपदर्शयन्नाह—

"पक्षाद्विरेको वान्तस्य ततः पक्षान्निरूहणम्।
सद्यो निरूढोऽनुवास्यः स्यात्सप्तरात्राद्विरेचितः" इति।

अस्यार्थः। सम्यग्योगेन वान्तस्य पुरुषस्य विरेचनं पक्षान्नार्वाङ्नापि परतः। तत्रार्वाक्क्रियमाणं पुरुषानलबलयोरबलत्वाद्व्यापदमावहति। अतिपरतः पुनः स्नेहस्वेदादिगुणोऽन्तरितः स्यात्। तस्मात्पक्षादेव वान्तो विरेचनीयः। तत्र प्रधानशुद्धिमपेक्ष्यान्नसंसर्गेण दिनानि षडतिक्रम्य मधुरादिरससंसर्गमाचरेत्। स्नेहपानेनापि दिनानि षडतिक्रामेत्। ततः स्वेदमाचरेल्लघूष्णं भुज्यमानस्त्र्यहं स्थितश्चतुर्थेऽह्नि विरेकं कुर्यात्। ततस्तस्माद्विरेकादन्नसंसर्गेण दिनानि षडतिक्रम्यानन्तरं मधुरादिरससंसर्गमाचरन्सप्तरात्राद्विरेचित इति वाक्यादष्टमादिदिवसेष्वनुवासनानि यथादोषं विदध्यात्। ततः षोडशेऽह्नि स्नेहाभ्यक्तः स्वेदितश्चाऽऽस्थापनं सेवेत। गयदासस्तु चरकाचार्याभिप्रायेण विरेचनादूर्ध्वं षडहं कृतान्नसंसर्गस्यावस्थाविशेषेण स्नेहपानमनुवासनं च द्वयमपि मन्यते।

* निरूढेण, इति चरकपाठः।

तथा च चरकाचार्यवचनम्—संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वेति । तत्र विरेचनादूर्ध्वमन्नसंसर्गेण दिनानि षट्ततो मधुरादिरससंसर्गमाचरेत् । स्नेहपानेनापि दिनानि षडतिक्रामेत् । ततो दिनत्रयं लघूष्णं भुञ्जानश्चतुर्थेऽह्नि स्नेहाभ्यक्तः स्वेदितश्चाऽऽस्थापनं सेवेत । स्नेहपानपूर्वकस्यानुवासनपूर्वकस्य चाऽऽस्थापनस्यावस्था गयदासेन दर्शिता—यथा हीनविरिक्तस्यावशिष्टपरिपक्वामसंचयावृते वायौ स्नेहपानपूर्वकमास्थापनं क्वचिद्व्याध्यवस्थावशात्प्राक्स्नेहनविरेचितमस्याऽऽस्थापनमिति । निरूढः पुरुषः सद्य एव तद्दिवस एवानुवास्यः । एतेन दत्तनिरूहो यथोक्तं भोजयित्वाऽऽर्द्रपाणिरेवानुवास्यः । विरेचितस्तु सप्तरात्रात्पुरतोऽनुवास्यो नार्वाक् ।

उक्तं हि—"विरेचनात्सप्तरात्रे गते जातबलाय वै ।
कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः" इति ।

केचिदन्यादृशं व्याख्यानं कुर्वन्ति । तच्च गयदासाचार्येण बहुधा दूषितत्वादस्माभिरप्युपेक्षितमिति ॥ ३३ ॥

पद्मकोशीरनागाह्वचन्दनानि प्रयोजयेत् ॥
अतियोगे विरेकस्य पानालेपनसेचनैः ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

सौवीरपिष्टः सहकारकल्को नाभिप्रलेपादतिसारहन्ता ॥ ३५ ॥

सुगमम् ॥ ३५ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां चतुःसप्ततितमो विरेचनाधिकारः समाप्तः ॥ ७४ ॥

---

## अथ पञ्चसप्ततितमो बस्तिविध्यधिकारः ।

---

वान्तविरिक्तस्य निरूहयितव्यस्य स्नेहनेष्वनुवासनमुचितमित्यनन्तरमनुवासनविधिः । अनुवासने निरुक्तिश्च सुश्रुतेन कृता । अनुवसन्नपि न दुष्यत्यनुदिनं वा दीयत इत्यनुवासनम् । अस्यार्थः । अनु, अनुगुणं वासनमपि यस्यासावनुवासनः । अथ वासरं दिवसमनु दीयत इति रेफस्य निरुक्तविधिना नकारेणानुवासन इति रूपम् ।

उक्तं च—"अहोरात्रादनुस्नेहः प्रत्यागच्छन्न दुष्यति ।
कुर्याद्बस्तिगुणांश्चापि जीर्णस्याल्पगुणो भवेत्" इति ॥

स्नेहबस्तेः प्राधान्यमाह—

**बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ॥**
**संसर्गे संनिपाते च बस्तिरेव सदा हितः ॥ १ ॥**

संसर्गो दोषद्वयप्रकोपः । प्रकृतिसमसमवेतज्वराद्यारम्भको दोषत्रयप्रकोपः संनिपातोऽत्राभिहितः । ननु वात एव बस्तिर्युक्तो यदुक्तमास्थापनानुवासनं तु खलु सर्वोपक्रमेभ्यो वाते प्रधानतमं मन्यन्त इति । पित्तकफौ तु विरेकवमनविषयौ । विरेकः पित्तहराणां वमनं श्लेष्महराणामित्यागमात् । रक्तेऽपि पित्तसधर्मिणि विरेचनमेवोचितं तत्कथं पित्तकफरक्तेभ्यो हितो बस्तिः । उच्यते । त्रीनपि दोषान्पक्वाशयगतान्बस्तिर्जयतीति । आमाशयगतं कफं वमनं पच्यमानाशयगतं पित्तं विरेक इति सिद्धान्तः ।

तदुक्तम्—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् ।
स्रंसनं त्रीन्मलान्बस्तिर्जयेत्पक्वाशयस्थितान्" इति ॥

रक्तमपि दुष्टं प्रसादनद्रव्यैर्दत्तो बस्तिः प्रसादयति दोषहरणद्वारेण चानुलोमयतीति ॥ १ ॥

अनुवास्यः सप्तरात्राद्विरेचित इति यदुक्तं तद्बललाभ एव नान्यथेति दर्शयन्नाह—

**विरेचनात्सप्तरात्रे गते जातबलाय वै ॥**
**कृताहाराय सायाह्ने बस्तिर्देयोऽनुवासनः ॥ २ ॥**

**विरेचनात्सप्तरात्रे गत इति** । पेयादिक्रमः षड्रात्रं प्रकृतिभक्तमेकाहमेवं सप्तरात्रातिक्रमः । ननु संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वेत्यनेन **चरके** विरेकान्नवमादिदिनेऽनुवासनं निर्दिष्टम् ।

**भद्रशौनकेनापि**—"संसृष्टभक्तः सुमनाः स्नेहपीतो दृढानलः ।
संशुद्धः परतो मासादनुवास्यस्ततो नरः" ॥

इति वदता मासात्परं स्नेहबस्तिर्दर्शितस्तत्कथमिह सप्तरात्रे गत एवानुवासनविधिः । उच्यते । जातबलायेति वचनात्सप्तरात्रे गते जातबलत्वे सति स्नेहबस्तिर्नान्यथा । बलं च पुरुषापेक्षया तेनाग्निबलतारतम्यात्कस्यचित्सप्ताहे गते बलोपचयः कस्यचिन्नवाहतोऽष्टमे नवमेऽपि दिनेऽनुवासनं विहितं न विरुद्धम् । क्षीणाग्नेस्तु क्रमेणाग्निवृद्ध्या बललाभे मासात्परेणापि स्नेहबस्तिरिति न कश्चिद्विरोधः । अन्ये त्वाहुः । विरेचनात्परतः सप्तरात्रे गते नवममेवाहः स्यात् । **भद्रशौनक**वाक्येऽपि संशुद्धइत्यनेनोर्ध्वाधः । उच्यते । आभ्यां च शुद्धिभ्यां मास एव भवति । कथं वा तस्य पक्षाद्विरेकः । वमनस्य च प्राक्कर्म सप्ताहं स्नेहनं तत एकाहमुपरतः । विरेचनादूर्ध्वं सप्तरात्रानुक्रमः । एवं नास्त्यर्थभेद इति । कृतान्नायेति भुक्ताय कृतसंसर्जनक्रमाय च । उक्तं च—आस्थापितं विरिक्तं चेत्यादि । कृताहाराय सततमिति केचित्पठन्ति । तत्र न कदाचिदप्यकृताहारायेति सततग्रहणार्थः । **देयोऽनुवासन इति** । निरूहाङ्गत्वेन ॥ २ ॥

**क्षारं न चेद्वैतरणं प्रदाय द्व्यहे त्र्यहे वाऽप्यनुवासनीयः ॥ ३ ॥**

**क्षारं न चेद्वैतरणं प्रदायेति** । यस्य विरेचनं नोचितं संचितं च मलमस्ति तस्य तन्मलापगमार्थं क्षारं वैतरणं वा बस्तिं दत्त्वाऽनुवासनं देयं विशुद्धस्य स्नेहबस्त्युपदेशात् । तदुक्तम्—स्नेहबस्तिर्विधेयस्तु नाविशुद्धस्य देहिन इति । न चेदिति विकल्पार्थे । द्व्यह इति प्रत्यहम् । त्र्यह इत्येकान्तरम् ॥ ३ ॥

**प्रसुप्तं वामपार्श्वेन कृतान्नमनुवासयेत् ॥ ४ ॥**

कृतान्नमिति भुक्तवन्तम् ॥ ४ ॥

पूर्वकर्म बस्तेरुपदिशन्नाह—

**उत्सृष्टानिलविण्मूत्रे नरे बस्तिं निधापयेत् ॥**
**अन्यथा विहितो बस्तिर्नैवान्तः प्रतिपद्यते ॥ ५ ॥**

**उत्सृष्टानिलविण्मूत्रे नरे बस्तिं निधापयेदिति** । अन्यथाऽन्येन प्रकारेणानुत्सृष्टानिलविण्मूत्र इत्यर्थः । अन्यथा विहित इत्यत्र एतैर्हि विहित इति केचित्पठन्ति । तत्र हि यस्माद्यत एतैरनुत्सृष्टैरनिलविण्मूत्रनेत्रद्वारावरकैर्विहितोऽवरुद्धः स्नेहो नैवान्तः प्रतिपद्यते नैवान्तः प्रविशतीत्यर्थः ॥ ५ ॥

बस्तिपीडनविधिमाह—

**बस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ॥**
**एकेनैवावपीडेन न द्रुतं न विलम्बितम् ॥ ६ ॥**

सुगमम् ॥ ६ ॥

**प्रसारितैकजङ्घायां कार्याऽन्योपरि कुञ्चिता ॥**
**प्रदद्यात्पुटकं तस्मिन्पायौ दोषविशोधनम् ॥ ७ ॥**

**प्रसारितैकजङ्घायां कार्याऽन्योपरि कुञ्चितेति** । वामजङ्घायां प्रसारितायां तदुपरि दक्षिणजङ्घा संकुचिता कार्या ॥ ७ ॥

प्रणिहितस्नेहस्य पश्चात्कर्म निर्दिशन्नाह—

**ततः प्रणिहिते स्नेह उत्तानो वाक्शतं भवेत् ॥**
**प्रसारितैः सर्वगात्रैस्तथा वीर्यं विसर्पति ॥ ८ ॥**

**वाक्शतमिति** । छोटिकाशतम् ॥ ८ ॥

आतुरस्य करणीयमभिधाय वैद्यस्य करणीयं दर्शयन्नाह—

**आकुञ्चयेच्छनैस्त्रिस्त्रिः सक्थिबाहू ततः परम् ॥**
**ताडयेत्तलयोरेनं त्रींस्त्रीन्वाराञ्शनैः शनैः ॥**
**स्फिजोश्चैवं ततः श्रोणीं शय्यां त्रिरुत्क्षिपेत्ततः ॥ ९ ॥**

**आकुञ्चयेच्छनैस्त्रिस्त्रिः सक्थिबाहू इति ।** जङ्घाबाहुतलयोर्गृहीत्वा त्रिरुत्क्षिप्य संकोचयेत्। सक्थिबाह्वाकुञ्चनं स्नेहवीर्यविसर्पणार्थम्। एवं हि शिरामुखानां स्फुटत्वं भवति। तलयोरिति हस्तपादतलयोः । स्फिजोस्ताडनं बस्तिशीघ्रागमनवारणार्थम् । यदुक्तम्— दत्त्वा स्फिजौ पाणितलेन हन्यात्स्नेहस्य शीघ्रागमरक्षणार्थमिति । शय्यां त्रिरुत्क्षिपेदित्यर्थः । 'स्फिजोश्चैनं ततः शय्यां त्रीन्वारानुत्क्षिपेत्पुनः' इति **डल्लणभाष्ये** पाठः । तत्र ताडयेदित्यादि तलयोर्हस्तपादतलयोः शनैः शनैस्त्रींस्त्रीन्वारान्हन्यात्स्नेहशीघ्रागमननिषेधार्थं स्फिजोश्चैनमिति ताडयेदिति संबन्धः । **स्फिजोश्चेति ।** चकारो भिन्नक्रमे । तेन ताडयेच्चेत्यत्र द्रष्टव्यम् । अतस्तलयोर्गृहीतत्वात्कूर्परे जानुनी चोत्क्षिपेदित्यनुक्तो वृद्धवैद्यव्यवहारः शुद्धो भवति । **शय्यामुत्क्षिपेदिति ।** काष्ठफलकादिकृतां सहाऽऽतुरेणोर्ध्वं नयेदित्यर्थः । शय्यास्थमातुरं स्फिग्देश इत्यन्ये ॥ ९ ॥

**एवं प्रणिहिते बस्तौ मन्दायासोऽप्यमन्दवाक् ॥**
**स्वास्तीर्णे शयने काममासीताऽऽचारिके रतः ॥ १० ॥**

कामं यथेच्छम् । अनेनैव चरकोक्तगात्रमर्दनादिकमपि यथेच्छस्थितिहेतुः संगच्छते यदुक्तम्—

"स्नेहेन पार्ष्ण्यङ्गुलिपिण्डिकाश्च ये चास्य गात्रावयवा रुजार्ताः ।
तांश्चाप्य(पि) मृद्यात्स सुखं ततश्च निद्रामुपासीत कृतोपधानः" इति ॥

**आचारिके रत इति ।** क्रोधादिवर्जनेऽवहितः ॥ १० ॥

उत्तममध्यमाधमानलाद्यपेक्षया त्रिविधामनुवासनमात्रामाह—

**षट्पली तु भवेज्ज्येष्ठा मध्यमा त्रिपली भवेत् ॥**
**कनीयस्यर्धपलिका त्रिधा मात्राऽनुवासने ॥ ११ ॥**

अस्यार्थसंगतिमनन्तरवक्ष्यमाणश्लोकव्याख्ययैव दर्शयामः ॥ ११ ॥

**प्राग्दानमाद्ये द्विपलं पलार्धवृद्धिर्द्वितीये पलमक्षवृद्धिः ॥**
**कर्षद्वयं स्याद्वसुमाषवृद्धिर्बस्तौ तृतीये क्रम एष उक्तः ॥ १२ ॥**

यस्योत्तमा षट्पली मात्राऽर्हति तस्य प्रथमं द्विपलं ततः पलार्धेन वृद्धिः । एवं क्रमेण नवभिर्दिनैः षट्पली मात्रा संपूर्णा भवति। तथा यस्य मध्यमा त्रिपली मात्राऽर्हति तस्य प्रथमं पलं देयं ततः कर्षेण वृद्धिः । एवं नवभिर्दिनैः क्रमेण त्रिपली मात्रा स्यात् । यस्य कनीयसी सार्धकपली मात्रोचिता तस्य प्रथममर्धपलं ततोऽष्टमाषकैर्वृद्धिः । एवं नवभिर्दिनैः सार्धं पलं स्यात्। नवभिर्दिनैरित्युत्सर्गः। तेनातोऽर्वागपि स्नेहलक्षणोदयेऽनुवासननिमित्ते कार्या । **आद्य इति ।** बलानलादिभिरुत्तमे पुरुषे। द्वितीये मध्यमे । तृतीयेऽधमे । वसुमाषवृद्धिरष्टमाषकवृद्धिः । कनीयसी(स्या)मात्रा(त्रया)प्रचारः ॥ १२ ॥

सर्वस्नेहबस्तिद्रव्यपूर्वकर्म निर्दिशन्नाह—

स तु सैन्धवचूर्णेन शताह्वेन च संयुतः ॥
भवेत्सुखोष्णश्च तथा निरेति सहसा सुखम् ॥ १३ ॥

स स्नेहस्तु पुनः पक्वोऽपि सैन्धवशतपुष्पासमन्वितो देयः । सहसेति । उक्ताधिककालनिरासार्थम् । सुखमिति । उपादिकं विना ॥ १३ ॥

मध्यंवयस्कमाश्रित्य चूर्णस्य मात्रामाह—

चूर्णमाषः पले स्नेहे सिन्धुजन्मशताह्वयोः ॥
*माषमेकं पले स्नेहे सिन्धुजन्मशताह्वयोः ॥ १४ ॥

प्रत्येकमङ्गुलित्रयमग्रेसंदंशं ग्राह्यं चूर्णेन ॥ १४ ॥

स्नेहस्य शीघ्रागमनहेतुं कर्तव्यं च प्राह—

यस्यानुवासनो दत्तः सकृदन्वक्षमाव्रजेत् ॥
अत्युष्णो वाऽतितीक्ष्णो वा वायुना वा प्रपीडितः ॥ १५ ॥
सवातोऽधिकमात्रो वा गुरुत्वाद्वाऽतिभेषजः ॥
तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति ॥ १६ ॥

सकृत्कदाचित् । अक्षस्य यन्त्रस्यानु पश्चादन्वक्षं तत्क्षणम् । वायुनेति । कोष्ठस्थेन । सवात इति । अनुच्छ्वास्यविहितबन्धादिना बस्तिवटकास्थितवातसहितः । अतिभेषज इति । बहुमात्रसैन्धवशताह्वः । अल्पतर इति । पूर्वदत्तस्नेहलेपस्यापि विद्यमानत्वात् । अल्पग्रहणं चेह सर्वात्युष्णादिविपर्ययसूचकम् । तेनात्युष्णत्वाच्छीघ्रागमेऽत्युष्णो बस्तिरित्यादि सिध्यति । न हि स्निह्यत्यतिष्ठतीति । अतिष्ठति स्नेहे न स्निह्यतीत्यर्थः ।

अथ डल्हणव्याख्यानम्—तस्यानुवासनस्नेहस्य प्रणिधानमात्रप्रत्यावृत्त्याऽस्य निदानपरिहारार्थं हेतुं पुनःकरणीयत्वं च दर्शयन्नाह । यस्येति । सकृदेकवारम् । अक्षस्य यन्त्रस्यानु पश्चादन्वक्षम् । आव्रजेदागच्छेत् । कुतः, अत्यौष्ण्यादुष्णगुणातिरेकात् । अतितैक्ष्ण्यादतितीक्ष्णैः संस्कारकद्रव्यैराहितात् । अनुच्छ्वास्यबन्धनात्सवातो बस्तिर्वायुना प्रपीडितः सन् । अतिमात्रोऽतिभेषजश्च गुरुत्वात् । तस्यान्योऽल्पतर इति । अन्योऽत्यौष्ण्यादिगुणविपरीतः । अल्पतरः प्राचीनमात्रातः । प्रथमस्नेहेनैव किंचित्स्निग्धत्वात् । कुतः पुनरपि देय इत्याह । न हि स्निह्यत्यतिष्ठतीति । अतिष्ठति स्नेहे यतो न स्निह्यति नर इति ॥ १५ ॥ १६ ॥

त्रीन्यस्य यामाननुवर्तते च स्नेहो नरः स्यात्स विशुद्धदेहः ॥ १७ ॥

---

* इदमर्धमधिकम् ।

सुगमम् ॥ १७ ॥

**एकान्तरोपयोगेन धान्यशुण्ठीजलं पिबेत् ॥**
**तेनास्य दीप्यते वह्निर्भक्तकाङ्क्षा च जायते ॥ १८ ॥**

**एकान्तरोपयोगेनेति।** उत्सर्गतः पानादेकान्तरेणानुवासनम्। तद्यत्र दिने न दीयते तत्र दिने धान्यशुण्ठीक्वाथः प्रातः पेयः ॥ १८ ॥

**क्वाथार्धमात्रया प्रातर्धान्यशुण्ठीजलं पिबेत् ॥**

**क्वाथार्धमात्रयेति।** यस्याग्न्याद्यपेक्षया न सम्यक्क्वाथोऽर्हति तस्य ततोऽर्धमात्रया कर्षेण प्रचारः ॥

**पित्तोत्तरे कदुष्णाम्भस्तावन्मात्रं पिबेदथ ॥ १९ ॥**

सुगमम् ॥ १९ ॥

**स्नेहाजीर्णं शमयति श्लेष्माणं च भिनत्ति तत् ॥**
**मारुतस्यानुकूलत्वं कुर्यादुष्णोदकं नृणाम् ॥ २० ॥**

सुगमम् ॥ २० ॥

विण्मूत्रनिर्हरणसादृश्येन कृतशुद्धेरेव स्नेहबस्तिर्विधीयत इति दर्शयन्नाह—

**स्नेहबस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ॥**
**स्नेहवीर्यं तथा दत्ते देहं नानु विसर्पति ॥ २१ ॥**

**तथा दत्त इति।** अतिशुद्धस्य दत्ते। स्नेहवीर्यं तथा दत्ते देहं चानु विसर्पतीति **डल्हणः** पठति। तथा तेन प्रकारेण शुद्धे शरीरे स्नेहबस्तिः स्नेहवीर्यं दत्ते ददातीत्यर्थः। देहे दोषैरपिहितः स्रोतस्यन्तर्न सर्पतीति केचिदर्धं पठन्ति। अपिहित आच्छादित इत्यर्थः ॥ २१ ॥

पूर्वं विशुद्धदेहस्यैव स्नेहबस्तिं विदर्श्य क्वचिदशुद्धेऽपि तस्य सूत्रमाह—

**अशुद्धमपि वातेन केवलेनापि पीडितम् ॥**
**अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ २२ ॥**

केवलेन धातुक्षयहेतुना। रिक्ते हि शरीरे प्रायेण विवृतस्रोतोमुखमेव शरीरम्। तत्र शुद्ध्या पुनरतिधातुक्षयेणातितरामेव वातरोगः स्यात्। तेनाशुद्धेऽपि तत्र स्नेहबस्तिरिति। अहोरात्रस्य कालेषु पूर्वाह्णादिषु जीर्णान्नं भोजयित्वाऽनुवासयेदिति वक्ष्यमाणेन पूरणीयम् ॥ २२ ॥

विशिष्टावस्थायामस्यापोद्धार(नुवासन) माह—

**तीव्रायां रुजि जीर्णान्नं भोजयित्वाऽनुवासयेत् ॥ २३ ॥**

तीव्रायां रुजि नाधिकं जीर्णान्नं भोजयित्वा सर्वेषु कालेष्वनुवासयेदिति । कृत्रिमगुणोपधानं कृत्वेति वाक्यशेषः । प्रागशुद्धस्य केवलवातपीडितस्य सर्वस्य सर्वेष्वहोरात्रावयवेष्वनुवासनमभिहितमिह तु शुद्धस्येति न पौनरुक्त्यम् ॥ २३ ॥

रूक्षस्य वाताधिकस्य वातवेगविधारणाय प्रागेव स्नेहबस्तिं दत्त्वा पश्चाच्छोधनो बस्तिर्देय इति दर्शयन्नाह—

**रूक्षस्य बहुवातस्य द्वौ त्रीन्वाऽप्यनुवासनान् ॥**
**दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥ २४ ॥**

रूक्षस्य बहुवातस्य यदा मृदुकोष्ठत्वं तदा द्वौ त्रयो वा स्नेहबस्तयः । अन्यथा त्वपिशब्दादधिका अपि स्नेहबस्तयः । अत एव बस्तिभिः स्निग्धतनुं ज्ञात्वेति कृतवान् । न हि स्निग्धतनुता द्वित्रि(त्र)स्नेहबस्तिभिरवश्यंभाविनी । नन्वत्र यद्वावित्यनेन युग्मबस्तिदानमुक्तं तदसंगतमयुग्मबस्तिदानस्य चरके विहितत्वात् ।

तद्यथा—"एकं तथा त्रीन्कफजे विकारे पित्तात्मके पञ्च च सप्त वाऽपि ।
वाते नवैकादश वा पुनर्वा बस्तीनयुग्मान्कुशलो विदध्यात्" इति ।

उच्यते । अयुग्मदानं पुनरनुवासनाविषयं न तु निरूहाङ्गानुवासनविषयम् । निरूहाङ्गानुवासने युग्मदानं चरकेणापि दर्शितम् । तद्यथा—त्रीन्पञ्च राज्ञश्चतुरोऽथ षड्वा वाताधिकानामनुवासनीयान् । स्नेहान्प्रदद्यादित्यर्थः । विषमसंख्योपादानं द्विचतुरादिबस्तेरपि मध्यविधया परिग्रहार्थमिति ॥ २४ ॥

किंचित्स्निग्धतायामप्यास्थापनविशेषेणैवाऽऽस्थापनीय इति दर्शयन्नाह—

**अस्निग्धमपि वातेन केवलेनातिपीडितम् ॥**
**स्नेहप्रगाढैर्मतिमान्निरूहैः समुपाचरेत् ॥ २५ ॥**

अस्निग्धमपीषत्स्निग्धमपि । नञ् ईषदर्थे । अनुदरा कन्येति यथा । स्नेहप्रगाढैः स्नेहबहुलैः । एतेन प्राक्स्नेहनविधिविरहितैरिति गम्यते । अस्निग्धमित्यादिविधिर्बलीयासि । रूक्षस्येत्यादि विधानं तु क्षीण इति विषयभेदादविरोधः ॥ २५ ॥

द्वयोरेकस्यातिशीलननिषेधाय दोषं दर्शयन्नाह—

**स्नेहबस्तिं निरूहं वा नैकमेवाभ्यसेच्चिरम् ॥**
**स्नेहात्पित्तकफोत्क्लेशौ निरूहात्पवनाद्भयम् ॥ २६ ॥**

अन्ये त्वेवं पठन्ति—

"स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
स्यातामग्निवधोत्क्लेशावत्यभ्यस्तेऽनुवासने ।
निरूहसेवनाच्चापि भवेयुर्वातजा गदाः ।

तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ।
नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम्" ॥ २६ ॥

**यथोचितात्पादहीनं भोजयित्वाऽनुवासयेत् ॥ २७ ॥**

यथोचितात्पादहीनं भोजयित्वेति विधानमुत्तमाग्न्यपेक्षया मन्दे त्वग्नावर्धभोजनमपीष्टम्। यदाह **निमिः**—अर्धहीनं त्रिभागं वा भोजयित्वाऽनुवासयेदिति। पादहीनभोजनोपदेशोऽजीर्णपरिहारार्थम्। सौहित्यभोजने ह्यजीर्णं स्यात् । तथा च **काश्यपः**—तृप्तस्यान्वासनं दत्तं न सम्यक्परिपच्यत इति । डल्लणस्तु, एवं व्याख्याति—**यथोचितात्पादहीनमिति ।** प्राक्संशुद्धस्य कृतसंसर्जनस्योचिताद्भक्तात्पादहीनमुत्तममध्यममन्दाग्निविशेषेण पादेन पादाभ्यां पादैर्विहीनमिति ज्ञेयम् । अर्धहीनं त्रिभागं वा भोजयित्वाऽनुवासयेदिति **मुनिना** प्रोक्तत्वादिति ॥ २७ ॥

अभुक्तवतः प्रतिषेधमाह—

**न चाभुक्तवतः स्नेहः प्रणिधेयः कथंचन ॥**
**शुद्धत्वाच्छून्यकोष्ठस्य क्षिप्रस्तूर्ध्वमथोत्पतेत् ॥ २८ ॥**

स्नेह ऊर्ध्वं समुत्पतेदिति पाठे सम्यगूर्ध्वं गच्छेदिति । ततश्चातिपीडितवद्व्यापत्स्यात् । शुद्धत्वादित्यत्र सूक्ष्मत्वादिति पठित्वा **गयदासः** सूक्ष्ममार्गानुसरणं शीलत्वात्तस्येति व्याख्याति ॥ २८ ॥

**एकं तथा त्रीन्कफजे विकारे पित्तात्मके पञ्च तु सप्त वाऽपि ॥**
**वाते नवैकादश वा पुनर्वा बस्तीनयुग्मान्कुशलो विदध्यात् ॥ २९ ॥**

सुगमम् ॥ २९ ॥

**विष्टब्धानिलविण्मूत्रः स्नेहहीनेऽनुवासने ॥**

भवतीत्यध्याहार्यम् । **हीनेऽनुवासन इति ।** हीनगुणमाने ॥

**दाहक्लमप्रवाहार्तिकरश्चात्यनुवासने ॥ ३० ॥**

दाहक्लमप्रवाहार्तिकरश्चेति चकाराद्धीनानुवासितविष्टब्धानिलविण्मूत्रलिङ्गविपरीतातिसृष्टानिलविण्मूत्रार्तिकरश्चेति समुच्चिनोति । प्रवाहस्थाने पिपासेति केचित्पठन्ति ॥३०॥

यादृक्स्नेहः सम्यगनुवासितस्तमाह—

**सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वै ॥**
**ऊषाचोषौ विना शीघ्रं स सम्यगनुवासितः ॥ ३१ ॥**

सपुरीषश्चेति चकारेण समूत्रश्चेत्यनुक्तं समुच्चीयते । **प्रत्येतीति ।** निःसरति । **ऊषाचोषौ विनेति ।** ऊषा दाहः । चोषः पिपासा । **डल्लणस्तु—ऊषचोषाविति ।** ऊष ईषद्दाहः । चोष आकृष्यमाणस्येव दाहप्रकारः । **शीघ्रमिति ।** यामत्रयादूर्ध्वम् ॥३१॥

अपरेद्युराहारं नियमयन्नाह—

**जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ॥**
**लघ्वन्नं भोजयेत्कामं दीप्ताग्निः स नरो यदि ॥ ३२ ॥**

स्नेहे प्रत्यागते जीर्णान्नो दीप्ताग्निर्यदि स्यात्तदा पुनः कामं यथेष्टं भोजयेत् । अन्यथा तु लघ्वन्नं भोजयेदित्यर्थः । सायाह्न इति प्रातर्भोजननिरासार्थम् । अन्ये तु व्याचक्षते सायाह्ने दत्ते स्नेहे समधिकरात्रिप्रहरेण प्रत्यागते यो दीप्ताग्निर्जीर्णान्नो बुभुक्षितः स्यात्तं तदैव लघ्वन्नं भोजयेत् । लघ्वन्नमिति । मात्रालघुद्रव्यं चेत्यर्थः ॥३२॥

अनिवृत्तिर्व्यापदुक्ता तत्कियतः कालादित्याह—

**अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ॥**
**कुर्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ३३ ॥**

**अहोरात्रादिति** । प्रणिधानत्रयरात्र्यभिप्रायेण । तेन यामत्रयात्परतोऽपि याममेकमागच्छन्नपि न दुष्यतीति **कार्त्तिकः** । अपिशब्दात्त्रिचतुरादियामनिवृत्तिस्तावन्न दुष्यत्येवाहोरात्रादपीत्यपिशब्दार्थ इति **डल्लणः** । न दुष्यतीत्यापदुक्तविकारं न करोति । **बस्तिगुणानिति** । स्नेहनबृंहणादीन् । **जीर्ण इति** । परिणतः । **अल्पगुण इति** । वाय्वग्निभ्यां भूयः पाकं नीतत्वान्न सम्यक्स्नेहनादिकं करोति वीर्येण देहं भावयित्वा प्रत्यागच्छन्निव स्नेहो न यथोक्तसम्यग्गुणं करोतीति भावः । पाकोऽपि पक्वाशयेऽग्निप्रत्यासत्त्या संगत एव ॥ ३३ ॥

सर्वथानिवृत्तोऽप्यवयवेन वा निरुपद्रवो न व्यापद्यत इत्यपि बोधयन्नाह—

**यस्य नोपद्रवं कुर्यात्स्नेहबस्तिरनिःसृतः ॥**
**सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥ ३४ ॥**

**नोपद्रवमिति** । उपद्रवोऽत्र रोगः । स च मुखकषायत्वादि ।
यदुक्तं **सुश्रुते**—"तत्र वाताभिभूते तु स्नेहे मुखकषायता ।
जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वराद्याः+" इति ॥

**आवृतो रौक्ष्यादिति** । शरीररौक्ष्यादवष्टब्धः । यतो रूक्षशरीरं भावयन्नुपक्षीणः स खलु स्नेहस्ततो नोपद्रवं करोति । अत एवोपेक्ष्य इत्युक्तम् । **उपेक्ष्य इति** । तन्निःसरणाय प्रतिक्रियां न कुर्यादित्यर्थः । **डल्लणस्तु**, एवं व्याख्याति । **आवृतो रौक्ष्यादिति** । आभ्यां वाशब्दः प्रत्येकं संबन्धनीयः । तेनाऽऽवृतो वा रौक्ष्याद्वा स्नेहबस्तिरनिःसृत इति संबन्धनीयम् । तत्राऽऽवृतो दोषत्रयेणात्यशनेन मलसंचयेन वेत्यर्थः । रौक्ष्येण वायुरेव विधारयतीति । उपेक्ष्य उपेक्षणीयस्तदाकृष्यां यत्नं न कुर्यादिति ॥ ३४ ॥

---

+ 'ज्वराः' इति भवेत् ।

अनायान्तमहोरात्रात्स्नेहं सोपद्रवं हरेत् ॥
स्नेहबस्तावनायाते नान्यः स्नेहो विधीयते ॥ ३५ ॥

सोपद्रवं तु स्नेहमहोरात्रादनागच्छन्तं हरेन्निर्हरेत् । सोपद्रवमिति । उपद्रव इह पूर्वोक्त एव ज्ञेयः । हरेदिति । शोधनैरेव बास्तिभिः । सुश्रुते क्वापि शोधनैर्हरेदिति पाठात् । स्नेहबस्तावनायाते नान्यः स्नेहो विधीयत इति । अनायाते सोपद्रवस्नेहे स्नेहबास्तिर्न दीयते स्नेहातियोगभयात् । शोधनार्थो निरूहबस्तिस्तु देय एव नेतरः ॥ ३५ ॥

अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥
तदाऽङ्गसदनाध्मानशूलाः श्वासश्च जायते ॥ ३६ ॥
पक्वाशयगुरुत्वं च तत्र दद्यान्निरूहणम् ॥
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धं वाऽप्यनुवासनम् ॥ ३७ ॥

अशुद्धस्येति । निरूहेण विरेकेण वा । तीक्ष्णमिति । निरूहणमित्यस्य विशेषणम् ॥ ३६ ॥ ३७ ॥

शुद्धस्य दूरानुगते स्नेहे स्नेहस्य दर्शनम् ॥
*मुखे तु सर्वेन्द्रियाणामुपलेपोऽवसादनम् ॥
स्नेहगन्धमुखं वाऽपि कासश्वासावरोचकः ॥ ३८ ॥

उपलेपो मलवृद्धिः । अवसादनं ग्लानिः ॥ ३८ ॥

गलं निष्पीड्य तत्राऽऽशु कम्पयेत्तं प्रयत्नतः ॥
कार्यं तस्य सुतीक्ष्णं च तीक्ष्णं चापि विरेचनम् ॥ ३९ ॥

सुगमम् ॥ ३९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां पञ्चसप्ततितमो बस्तिविध्यधिकारः समाप्तः ॥ ७५ ॥

---

## अथ षट्सप्ततितमो निरूहाधिकारः ।

---

अनुवासनस्निग्धस्य निरूहार्हत्वादथ निरूहविधिः । निरूहनिरुक्तिः सुश्रुत उक्ता । तद्यथा—दोषनिर्हरणाच्छरीरनीरोहणाद्वा निरूह इति । अत्र श्रीब्रह्मदेवव्याख्या—दोषान्निर्हरतीति निरूहः । निष्पूर्वस्य हृञ्धातोर्ऱ्हप्र(रच्प्र)त्ययेऽन्त्यस्वरादेर्लोपे नैरुक्तविधिना निर ऊवर्णागमे रूपम् । अथवा शरीरे निःशेषेण रोहतीति निरूहः । निपू-

---

* गात्रेषु सर्वेन्द्रियाणामिति सुश्रुते पाठः ।

बेस्य रुहधातोः कप्रत्यये नैरुक्तविधिना धातोर्दीर्घत्वे (*निरुपसर्गः स्यान्निरूह)रूपम् । निर्गत ऊहो वितर्को यस्मिन्निति वा निरूहः । आसमन्तादायुर्वयो वा स्थापयतीत्यास्थापनम् ॥

नात्युच्छ्रितं नाप्यतिनीचपादं सपादपीठं शयनं प्रशस्तम् ॥
प्रधानमृद्वास्तरणोपपन्नं प्राक्शीर्षकं शुक्लपटोत्तरीयम् ॥ १ ॥

सुगमम् ॥ १ ॥

अनुवासितमभ्यक्तं स्विन्नदेहं निरूहयेत् ॥
अभुक्तं पीडयेद्वस्तिमतूर्णमविलम्बितम् ॥ २ ॥

अनुवासितं दत्तानुवासनं स्निग्धस्रोतोमार्गतया सुखमेव दोषनिर्हरणार्थं निरूहयेदास्थापयेत् । अनुवासनस्निग्धकोष्ठस्य च तृतीये दिने निरूहः ।

यदुक्तम्—"अनुवासनास्निग्धतनुं तृतीयेऽह्नि निरूहयेत् ॥
मध्याह्ने किंचिदावृत्ते प्रयुक्ते बलिमङ्गले" इति ॥

निरूहस्य स्नेहबस्त्यनभ्यासे कर्तव्येऽन्तरमाहुः शुद्धयर्थं तथा निरूहसाध्ये व्याधौ च ॥ २ ॥

त्रिंशन्मात्रास्थिते बस्तौ ततश्चैवोत्कटो भवेत् ॥

त्रिंशन्मात्रास्थित इति । मात्रार्थोऽग्निवेशपरिभाषितः ।

तद्यथा—"यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।
निमेषोन्मेषकालेन सा मात्रा परिकीर्तिता" इति ॥

त्रिंशन्मात्रास्थापनं च मृदुकोष्ठे वेगिते । वक्ष्यमाणच्छटाशब्दशतस्थापनं तु क्रूरकोष्ठे वेगरहिते ज्ञेयं तेन न विरोधः ॥

जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना ॥
+कृष्टनेत्रच्छटाशब्दशतं तिष्ठेदवेगवान् ॥ ३ ॥

सुगमम् ॥ ३ ॥

द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः ॥
सम्यङ्निरूढलिङ्गे तु प्राप्ते बस्तिं निवारयेत् ॥ ४ ॥

द्वितीयं वेति । बस्तिपुटकम् । चतुर्थं वा यथार्थत इति । अर्थस्य प्रयोजनतोऽनतिक्रमतो यथार्थतः । एतदुक्तं भवति यदा सुनिरूढलिङ्गप्राप्तो भवति तदा तत्र निर्ह-

---

* इदमधिकम् । + वेष्टनेत्र इति डल्लणः ।

---

१ क. °वेगितः । मु° ।

रणीयाभावान्निरूहणमप्रयोजनं देयम् । असम्यग्दानेन क्रूरकोष्ठतया प्रभूतदेयत्वेन वा सुनिरूढमप्राप्तस्य निर्हरणीयो दोषोऽस्तीति । चतुर्थं वा यथार्हत इति पाठे निरूहसाध्यप्रयोजनानुरोधाच्चतुर्थमपि पुटकं निरूढलिङ्गार्थं दद्यात् । अमुमेवार्थं प्रकटीकुर्वन्नाह— **सम्यङ्निरूढलिङ्ग इत्यादि** । केचित्तु रक्तमप्यत्र चतुर्थं शमनीयमस्तीति चतुर्थं बस्तिदानमाहुः । अपरे तु पश्चाद्दाहनिर्वापणार्थं मधुरशीतैश्चतुर्थो बास्तिर्देय इति वदन्ति । नतु(नु) तृतीयाधिकपुटदानं निषिद्धं दृढबलेन ।

तद्यथा-"स्निग्धोष्ण एकः पवने समांसो द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः" इति ॥

नैवम् । निषेधो हि बहुदोषपुरुषविषयतया प्रायिकः । चतुर्थपुटदानं तु कस्मिन्नपि क्रूरकोष्ठे बलीयसि बहुदोषे च पुरुषे ततः कुतो विरोधः । स मध्ये वयसि ज्येष्ठमात्रापरिग्रहेण द्वादशप्रसृतमानो निरूहः स च पञ्चाङ्गः ॥ ४ ॥

मध्वादेरङ्गपञ्चकस्य प्रतिदोषं मानमाह—

**मधुस्नेहनकल्काख्यकषायावापतः क्रमात् ॥**
**त्रीणि षड् द्वे दश त्रीणि पलान्यनिलरोगिणाम् ॥ ५ ॥**
**पित्ते चत्वारि चत्वारि द्वे द्विपश्चचतुष्टयम् ॥**
**षट्त्रीणि द्वे दश त्रीणि कफे वाऽपि निरूहणम् ॥ ६ ॥**

आवाप इत्यावाप्ये निरूहे मधुस्नेहकल्कक्वाथव्यतिरिक्तं क्षीरमूत्रकाञ्जिकादिद्रवमुच्यते । घृतादौ पुनरावापः प्रक्षेपः कल्को वा भण्यते । **द्विपश्चेति** । दश । प्रचारस्तु प्रायो द्वादश द्वादश पलानि कृत्वा पुटकद्वयेन । बस्तियौगिकानि द्रव्याणि सुश्रुतेनोक्तानि ।

तद्यथा—"क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा ।
लवणानि फलं क्षौद्रं शताह्वा सर्षपा वचा ।
एला त्रिकटुकं रास्ना सरलं देवदारु च ।
रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च ।
कटुका शर्करा मुस्तमुशीरं चन्दनं शठी ।
मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ।
बिल्वमध्यं यवानी च फलिनी शक्रजा यवाः ।
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ।
तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका ।
निरूहेषु यथालाभमेव वर्गो विधीयते" ॥ ५ ॥ ६ ॥

**सस्नेह एकः पवने समांसो द्वौ स्वादुशीतौ पयसा तु पित्ते ॥**
**त्रयः समूत्राः कटुकोष्णरूक्षाः कफे निरूहा न परं विधेयाः ॥ ७ ॥**

**समांस इति** । मांसरसावापयुक्तः ॥ ७ ॥

**एकोऽपकर्षत्यनिलं स्वमार्गात्पित्तं द्वितीयस्तु कफं तृतीयः ॥ ८ ॥**

अनिलस्य पक्वाशयः स्थानं तस्य च प्रत्यासन्नत्वादेक एव पुटो युक्तः । पित्ताशयस्यानतिव्यवहितत्वाद्द्वितीयः । आमाशयस्यातिव्यवहितत्वात्तृतीयः ॥ ८ ॥

हीननिरूहितलक्षणमाह—

**अल्पाल्पवेगो विड्वातहीनो हीननिरूहणः ॥**

अल्पाल्पवेगः स्तोकवेगः । **विड्वातहीन इति** । स्तोकविड्वातप्रवृत्तिः ॥

अतिनिरूढलिङ्गमाह—

**मूर्छाशूलकफप्रायो महावेगोऽतिशब्दितः ॥ ९ ॥**

**अतिशब्दित इति** । अतिनिरूढः ॥ ९ ॥

सम्यङ्निरूढलिङ्गमाह—

**यस्य मूत्रं पुरीषं च कफो वायुश्च गच्छति ॥**
**क्रमेण लघुता चैव सुनिरूढः स मानवः ॥ १० ॥**

सुगमम् ॥ १० ॥

सुनिरूढस्य पश्चात्कर्म निर्दिशन्नाह—

**सुनिरूढं ततो जन्तुं स्नातं भुक्तरसौदनम् ॥**
**यथोक्तेन विधानेन योजयेत्स्नेहबस्तिना ॥ ११ ॥**

सुनिरूढं जन्तुं स्नेहबस्तिना योजयेन्न तु दुर्निरूढं तत्र यथादोषं निरूहणमेव कार्यं न चातिरूढं तत्रातिरिक्तभेषजं शीतपरिषेकपिच्छाबस्त्यादिकं न तु स्नेहबस्तिः ।

तथा च विदेहः—

"अतितीक्ष्णैर्निरूढस्य हतदोषस्य सर्वतः ।
कंचिदेवानाभिप्रेतं मार्गं स्नेहोऽनुगच्छति" इति ।

**गयदासस्तु** परिभाषितं षट्पलप्रमाणं स्नेहबस्तिमत्र देयं न मन्यते । किंचानुवासनाख्यं पलत्रयप्रमाणं स्नेहबस्तिं देयमत्र मन्यते । यत्र तु स्नेहबस्तिः स्वतन्त्रस्तत्रैव षट्पलप्रमाणः । **स्नातमिति** । उष्णाम्बुभिः । **यथोक्तेन विधानेनेति** । अनुवासनोक्तविधिना ॥ ११ ॥

अथ कृतनिरूढस्य मन्दाग्नित्वात्तदहरेव कुतो मांसरसः स्नेहबस्तिश्चोपदिश्यत इत्यत आह—

तदहस्तस्य पवनाद्भयं बलवदिष्यते ॥
रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥ १२ ॥

निरूहणाद्विड्वातादिप्रवृत्तिलक्षणेन धातुक्षयेण कुपितानिलस्य बलवदेव भयमतस्तदहरेव रसौदनभोजनं तच्च निरूहणमन्दीकृतानलवधभयान्मात्रावत्। तथा पवनभयात्तदहरेव द्वादशप्रसृतनिरूहचतुर्थांशेन स्नेहेनानुवासनम्। गयदासस्तु सुनिरूढस्य तदहः पलत्रयमेवानुवासनं तथा तदहश्चेति चकारो भिन्नक्रमे तेनानुवासनं चेत्यत्र संबन्धादनुक्तोऽपि मात्राबस्तिश्चात्र समुच्चीयत इति मन्यते न षट्पलप्रमाणं स्नेहबस्तिं भोजदर्शनात् ॥ १२ ॥

सम्यङ्निरूढं तैलाक्तं जलेनोष्णेन सेचितम् ॥
अल्पस्नेहं जाङ्गलस्य[1] रसेनोर्ध्वं[2] तु भोजितम् ॥
योजयेदल्पमात्रेण तत्क्षणं स्नेहबस्तिना ॥ १३ ॥

अल्पमात्रेणेति। सार्धकर्षेण प्रचारः। तत्क्षणमिति। तद्दिनोपलक्षणं तेन सायमेव देयः स्नेहबस्तिः ॥ १३ ॥

प्रथमा मध्यमा ह्रस्वा मात्रा या यैस्तु सेविता ॥
मन्दाग्नित्वान्निरूढानां तदर्धेनानुवासनम् ॥ १४ ॥

सुगमम् ॥ १४ ॥

निरूढस्य पुनरनुवासनविधिमाह—

पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम् ॥
अन्नोपस्तम्भिते कोष्ठे स्नेहबस्तिर्विधीयते ॥ १५ ॥

पश्चात्सान्वा(नुवा)सनान्निरूहणात्। अग्निबलं दीप्तं बलं वयःशक्तिरूपमुपलभ्य। **पवनस्य च चेष्टितं मत्वेति।** संचलनशब्दकरणस्फुरणादिकमवधार्यान्नपानेनावष्टब्धे कोष्ठे स्नेहबस्तिरुत्तममात्रारूपः षट्पलः क्रियते। अथवाऽग्नेर्बलमग्निबलं ज्ञात्वा पवनस्य चेष्टितमित्यनेनाग्नौ बलवति पवने चातिप्रवृत्ते द्व्यहेऽथवा त्र्यहे पञ्चमे वा दिने स्नेहबस्तिर्देय इति दर्शयति। तथा च दृढबलः—

"द्व्यहे त्र्यहे वाऽप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनं तु" इति ॥

भुक्त एवानुवासनोपदेशात्पुनरन्नोपस्तम्भिते कोष्ठ इत्यभिधानेन सर्वदिनभोजनेनाप्युपस्तम्भं दर्शयति ॥ १५ ॥

---

१ ङ. जागल°। २ क. °सेनार्धं च भो°।

निरूहस्नेहबस्त्योर्मिलितयोः सम्यग्योगलिङ्गं निर्दिशन्नाह—

विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः॥
आस्थापिते स्नेहबस्तौ सम्यग्दत्ते तु लक्षणम्॥ १६॥

एतद्यथासंभवं ज्ञेयम्। विविक्तता गौरवशून्यत्वमिति कार्तिकः। सम्यग्विषयविवेक इत्यन्यः। अयं च लक्षणान्तरोपदेशः सत्येतस्मिँल्लक्षणे पूर्वोक्तासमस्तलिङ्गेऽपि सम्यग्योगप्रतिपादनार्थम्॥ १६॥

यथोक्तकालादनिर्गच्छति निरूहे विधानमाह—

अनायान्तं मुहूर्तान्ते निरूहं शोधनैर्हरेत्॥
निरूहैरेव मतिमान्क्षारमूत्राम्लसंयुतैः॥ १७॥

मुहूर्तो नाडिका। निरूहैर्मतिमान्हरेदिति संबन्धः। कथंभूतैर्निरूहैरित्याह। शोधनैस्तीक्ष्णैः। क्षारमूत्राम्लसंयुतैः। क्षारो यवक्षारः। मूत्रं गोमूत्रम्। अम्लं काञ्जिकम्॥ १७॥

विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्॥
शूलारतिज्वराटोपान्मरणं वा प्रयच्छति॥ १८॥

विगुणो विपरीतः। अरतिर्न कुत्रचिदवस्थितिश्चेतसः॥ १८॥

भुक्तवतो निरूहनिषेधमाह—

न तु भुक्तवते देयमास्थापनमिति स्थितिः॥ १९॥
आमं तदुद्धरेद्भुक्तं छर्दिं वा जनयेद्भृशम्॥
कोपयेत्सर्वदोषान्वा तस्माद्देयमनाशिते॥ २०॥

आमं तदुद्धरेद्भुक्तमिति। भुक्तमाहरेद्यस्मात्। आमं तदुद्धरेद्भुक्तं छर्दिं वा जनयेद्भृशमित्यत्र विषूचिकां वा जनयेच्छर्दिं वाऽपि सुदारुणामिति पाठान्तरं दर्शनात्। न तु भुक्तवत इत्यादिना य आस्थापननिषेधोऽभिहितस्तस्य दृढीकरणार्थं भुक्तवतो विषूचिकादिदोषोद्भावनयाऽभोजिते दानमाह। अभोजिते दानगुणं सुश्रुत आह—

"जीर्णान्नस्याऽऽशये दोषाः पुंसः प्रव्यक्तिमागताः।
निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः॥
न चाऽऽस्थापनविक्षिप्तमन्नमग्निं प्रबाधते।
तस्मादास्थापनं देयं निराहाराय जानता" इति॥ १९॥ २०॥

---

१ ङ. °न्दत्तस्य ल°। २ ङ. °ष्टब्धचिरं। ३ ङ. °हणः। शू°। ४ घ. °स्माद्ध्यादना°।

तीव्रशूलाध्मानादिरोगावस्थस्योपक्रमेणापि नोर्ध्वं शुध्यतः फलवर्त्यादिप्रधानपूर्वकं भुक्तवतोऽपि निरूहदानं कर्तव्यं स्यादत आह—

**आवस्थिकं क्रमं चापि मत्वा कार्यं निरूहणम् ॥**

**आवस्थिकं क्रममिति ।** अवस्थात आगत आवास्थिकः क्रमस्तं बुद्ध्वा निषिद्धो निरूहो देयः । तथा हि । भुक्तवतस्तावन्निषिद्धो निरूहस्तस्यापि यदि बहुलशूलवेदना-संभवस्तदा वैतरणरूपो निरूहो देयः ॥

अथ कथं निरूहनिषेधेऽपि तत्र निरूह एव देयो नान्याः क्रिया इत्याह—

**मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥ २१ ॥**

अस्यार्थः । पक्वाशये मलावृतानां दोषाणां मलापहार एव सति बलापहारो बला-पहारे च तत्र निरूह एव प्रधानं न क्रियान्तरमिति ॥ २१ ॥

**अतिप्रपीडितो बस्तिः प्रक्रम्याऽऽमाशयं ततः ॥**
**वातेरितो नासिकाभ्यां मुखतो वा प्रवर्तते ॥**
**छर्दिहृल्लासमूर्छादीन्प्रकुर्याद्दाहमेव च ॥ २२ ॥**

सुगमम् ॥ २२ ॥

**तत्र तूर्णं गलापीडं कुर्याच्चाप्यवधूननम् ॥**
**शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥ २३ ॥**

अतिपीडिते निरूहे गलावपीडनमवधूननं चोर्ध्वप्रवृत्तस्य वायोरधोगमनार्थम् । तीक्ष्णः शिरोविरेको मूर्छाद्यपगमनार्थः । तीक्ष्णश्च कायविरेको बस्तेरनुलोमनाय शीतल-सेकश्च दाहशमनाय ॥ २३ ॥

निरूहेद्रव्याणां मानक्रममाह—

**दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ॥**
**विनिर्मथ्य ततो दद्यात्स्नेहस्य प्रसृतद्वयम् ॥ २४ ॥**
**एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् ॥**
**संमूर्छिते कषायं च पञ्चप्रसृतसंमितम् ॥ २५ ॥**
**वितरेच्च तथाऽऽवापमन्ते द्विप्रसृतोन्मितम् ॥**
**एवं प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत् ॥ २६ ॥**
**न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च ॥**
**न करोति च सीमन्तं स निरूहः सुयोजितः ॥ २७ ॥**

१ क. प्रपद्यते । २ क. °हकालानां-क° ।

अक्षं कर्षमित्यर्थः । मधुनः प्रसृतद्वयं चत्वारि पलानि । हस्ततलेन विनिर्मथ्य ततः स्नेहस्य प्रसृतद्वयं दद्यात् । संमूर्छिते संमीलिते । वितरेद्दद्यात् । आवापः पश्चान्निक्षेप्यं क्षीरकाञ्जिकादिद्रव्यम् । द्विप्रसृतोन्मितं चतुष्पलप्रमाणम् । अत्र सैन्धवाक्षमधिकमपि स्वल्पत्वादविगणय्योक्तं द्वादशप्रसृतो भवेदिति । अयं च निरूहमानक्रमः पित्तोक्त-निरूहमानसंवादात्पित्ते ज्ञेयः । स्नेहस्य प्रसृतद्वयमित्यत्र स्नेहस्य प्रसृतित्रयमिति सुश्रुते पाठः । तथा पञ्चप्रसृतसंमितमित्यत्र चतुष्प्रसृतसंमितमिति सुश्रुते पाठः । तन्त्रान्तरेऽपि निरूहयोजना प्रोक्ता—

"माक्षिकं लवणं स्नेहं कल्कं क्काथमिति क्रमात् ।
*अवाप्योवाप्य पात्रे तन्मथ्नीयादन्तराऽन्तरा ।
सम्यक्पाणितलेनैष निरूहे योजनाविधिः" इति ।

अथ श्रीब्रह्मदेवव्याख्यानम्—दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयमित्या-दिके द्वादशप्रसृते बस्तौ सामान्येन भेषजमभिधाय तन्त्रान्तरार्थतो व्याख्याकारो विशेष-माह । तत्र वाते मधुनः प्रसृतद्वयं स्नेहस्य त्रयः प्रसृताः कषायो मांसरसप्रधानः शेषं यथो-क्तमेव । पित्ते तु मधुतैले समे प्रत्येकं सार्धप्रसृतद्वयसंमिते कषायः क्षीरप्रधानः । कफे मधुनस्त्रयः प्रसृताः स्नेहस्य सार्धप्रसृतः कषायो गोमूत्रप्रधानः शेषं पूर्ववत् । उक्तं च—स्निग्धोष्ण एकः पवने समांसो द्वावित्यादि । न धावत्यौषधं पाणिमित्यादि । तनुतया प्रक्षालितप्रायं हस्तं न करोतीत्यर्थः । सीमन्तमिति । रेखाम् ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥

इति निरूहकल्पनम् ।

---

अथ पिच्छाबस्तिविधिः ।

---

बदर्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ॥
क्षीरसिद्धाः सुशीताः स्युः सास्राः पिच्छिलसंज्ञिताः ॥ १ ॥



अनेन दश पलानि कृत्वा पुटत्रयशेषं पलद्वयं मुखग्रहणार्थं त्रिपुट एव निरूहः प्रायेण। एतच्च क्षीरं क्वाथस्थाने क्वाथश्च प्रतिपुटं दशपल एव । रुधिरमावापः । अत्र कल्कमधुस्नेहा अनुक्ता अपि देयाः । कल्कश्च शाल्मलीनिर्यासादिभिः कार्यः । यदाह पिच्छाबस्तौ च चरकः—

"कल्कः शाल्मलिनिर्यासमञ्जोत्पलचन्दनम् ।
वासकस्य च बीजानि प्रियङ्गुपद्मकेसरम्" इति ॥

पिच्छाबस्तिर्निरूहप्रकारत्वेन द्वादशप्रसृत एव । पञ्चाङ्गश्च । मानविभागश्चेह पित्तनिरूहोक्तकषायादिवट्टीकाकृद्भिर्व्याख्यातः सुश्रुते । वैद्यास्तु—"पिच्छाबस्तिर्भवेत्प्रस्थः पादोनः कीर्तितोऽपरः" इति परिभाषया प्रस्थं द्वादशपलं वा पिच्छाबस्तिं व्याहरन्ति व्यवहरन्ति ते प्रस्थेन पुटद्वयं कृत्वा विषयश्चास्य पित्ताधिकग्रहणीरोगनिरूहातियोगादिः । सुश्रुते डल्लण एवं व्याख्यानयति—बदर्याद्यङ्कुरान्समुदायेन पलत्रयप्रमितांश्चतुर्विंशतिपलप्रमितं दुग्धं दत्त्वा चतुर्गुणं जलं च निक्षिप्य क्वाथयेत् । ततः क्षीरशेषं चतुर्विंशतिपलानि ग्राह्याणि । तत्र सामान्यपरिभाषोक्तत्वान्मधुनश्चत्वारि पलान्यावापद्रव्यत्वाद्रुधिरस्य चत्वारि पलानीत्येवं पिच्छाबस्तेर्द्वात्रिंशत्पलानि भवन्ति ।

तथा चोक्तम्—

"पिछाबस्तेर्भवेत्प्रस्थः पादोनः कीर्तितोऽपरः ।
चतुर्विंशतिमुष्टिश्च निरूहः समुदाहृतः" ॥

एवमपरेष्वपि पुटकेषु पिच्छाबस्तिमानं कल्पनीयम् । सास्रा इति यदुक्तं तत्किमीयमस्रमित्यत आह । वाराहेत्यादि । उरभ्रो मेषः । एणस्येदमैणेयमेणः कृष्णसार इति जैज्जटाचार्यः । ब्रह्मदेवाचार्यस्तु एण्या इदमैणेयं न पुनरेणस्येदं तत्रैणेयमिति प्रयोगो न स्यात् । सद्यस्कं तत्कालीनं तच्च जीववतां ग्राह्यं जीवानुसंधानार्थम् ॥१॥२।

इति पिच्छाबस्तिः ।

---

अथार्धमात्रिकबस्तिः ।

---

अर्धमात्रिकं बस्तिमाह—

**दशमूलीकषायेण शताह्वाक्षं प्रपेषयेत् ॥**
**तत्समं सैन्धवं दद्यान्मधुतैलं चतुष्पलम् ॥**
**मदनस्य फलं चैकं यथायोगेन दापयेत् ॥ १ ॥**



पुनरमुनैव व्यवहारश्चार्धमात्रिकेण ॥ ५ ॥
स्नेहं गुडं मांसरसं पयश्च अम्लानि मूत्रं मधु सैन्धवं च ॥
एतान्यनुक्तान्यपि दापयेत निरूहयोगे मदनात्फलं च ॥ ६ ॥
लवणं कार्षिकं दद्यात्फलमेकं तु मादनम् ॥
वाते गुडं सितां पित्ते कफे सिद्धार्थकादयः ॥ ७ ॥

मधुतैलं चतुष्पलं मिलित्वा । यथायोगेनेत्यनेन वातादिषु निरूहे यावदुक्तं तावतोऽर्धेन दशमूलकषायादिमानं दर्शयति । शताह्वादीनां यथोक्तमेव मानम् । अर्धमात्रया द्रवाय पलद्वयं दुग्धगोमूत्रमांसरसादीनां कल्कश्चाम्बुना गुडादिना *क्षरणीया । भुक्त्वा बस्तिमिति । अभुक्त एव प्रचरति । अपरोऽप्येतावन्मानः पुटो दीयते व्यवहारात् । निरूढयौगिकानि द्रव्याण्याह । स्नेहमित्यादि । अम्लानि काञ्जिकादीनि । कफे सिद्धार्थकादय इत्यत्राऽऽदिशब्दाद्वचात्रिकटुकादयः । अत्र स्थानेऽर्धमात्रिकबस्तेः कल्पनयाऽऽवापादिद्रव्यं मानविभागं च दर्शयितुं क्वचिदधिकः पाठः ।

"कर्षं सिन्धुरजसो द्विपलं पलद्वयं मधुतैलाभ्याम् ।
करतलमथितं पात्रे गूढस्नेहं भवेद्यावत् ॥
दशमूलस्य कषायं दत्त्वा पलपञ्चकं मदननामकम् ।
गुडशताम्लिकानां कर्षं कर्षं तथा कर्षम् ॥
माषकपञ्चसमेतं जम्बीरपूरकमांसरसपयसाम् ॥
तुषजलगोजलयोरपि प्रत्येकं पुटकैकमात्रा" इति ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

इत्यर्धमात्रिकबस्तिः ।

* करणीय इति भाति

१ घ. विचक्षणैः । २ क. वा ।

अथ क्षारबस्तिः ।

पाह—

सैन्धवाक्षं समादाय शताह्वाक्षसमन्वितम् ॥
गोमूत्रस्य पलान्यष्टावम्लिकायाः पलद्वयम् ॥ १ ॥
गुडस्य तु पले द्वे तु सर्वमालोड्य यत्नतः ॥
वस्त्रपूतं सुखोष्णं च बस्तिं दद्याद्विचक्षणः ॥ २ ॥
शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रं च दारुणम् ॥
कृम्युदावर्तगुल्मादीन्सद्यो हन्यान्निषेवितः ॥ ३ ॥

अम्लिकाया इति । सास्थितिन्तिडीकफलस्य । अत्रापि मदनफलगुडकमेकं वैद्या वदन्ति । एवं वैतरणेऽपि । अस्याप्येतावन्मान एव पुरः पुटो देयः ॥१॥ ॥२॥ ॥३॥

इति क्षारबस्तिः ।

अथ वैतरणबस्तिः

वैतरणबस्तिमाह—

पलशुक्तिकर्षकुडवैरम्लीकागुडसिन्धुजन्मगोमूत्रैः ॥
ईषत्तैलयुतोऽयं बस्तिः शूलानाहामवातहरः ॥ १ ॥
भोजयित्वा तु सायाह्ने सर्वस्यायं प्रशस्यते ॥
अथ चेद्बलवाञ्जन्तुरभुक्त्वाऽपि तदा क्वचित् ॥ २ ॥

अम्लीका तिन्तिडीफलम् । गोमूत्रस्य कुडवोऽष्टौ पलानि द्रवद्वैगुण्यात् । निरूहेषु रसादीनां प्रमाणं तु यथाश्रुतीति परिभाषां पुनर्द्रवद्वैगुण्यनिषेधिकां नाऽऽद्रियन्ते । प्रायेण हि निरूहेषु सुश्रुतेन माषू[नमु]पदिष्टं प्रसृ[कृ]ते च द्वैगुण्यमप्रशस्तं प्रतिषेद्धव्यम् । द्वैगुण्यं हि कुडवादावन्यदुत्पादितम्(?) । तत्रापि क्वचित्—

"स्थिरादिवर्गस्य बलापटोलत्रायन्तिकैरण्डयवैर्युतस्य ।
प्रस्थो न सच्छागरसार्धयुक्तः साध्यः पुनः प्रस्थसमतयाऽऽदौ[?]
प्रस्थः श्रूयते तत्रापि टीकाकारैर्द्विगुणे चतुःशरावरूपप्रस्थशेषे व्यवहितः[?] ॥ ॥ १ ॥ २ ॥

इति वैतरणबस्तिः ।

---

१ क. 'न्धवस्याक्षमा' । २ प्रस्थो रसछा(च्छा)गरसार्धयुक्तः सतैलसर्पिर्मधुसैन्धवश्चेति चरकपाठः ।

अयोगजातियोगजव्यापदोर्मध्येऽतियोगजा व्यापन्महात्ययकारिणीति ततो बिभ्य-दाह—

अपि हीनं क्रमं कुर्यान्न तु कुर्यादतिक्रमम् ॥
विशेषात्सुकुमाराणां हीन एव क्रमो हितः ॥ १ ॥

सुगमम् ॥ १ ॥

भयोन्मादतृषाशोषाजीर्णारुचिप्रमेहिणः ॥
मूर्छाकुष्ठोदरस्थौल्यकासश्वासक्षयातुराः ॥ २ ॥
शोफभ्रममदच्छर्दियुता बस्त्यसहाबलाः ॥
नाऽऽस्थाप्या नानुवास्याश्च वातरोगादृते नराः ॥ ३ ॥

मूर्छा चेतनाच्युतिः । भ्रमश्चक्रारूढस्येव भ्रमणम् । मदः पूगफलेनेव मत्तता । वात-रोगादृते क्षीणा नरा नानुवास्याः । उन्मादादिषु सामान्येन बस्तिनिषेधोऽत्राभिहितः । केचित्तु केषांचित्प्रतिप्रसवमपवादरूपेणाऽऽहुः । तत्रोन्मादापस्मारभ्रममदमूर्छासु संज्ञा-नाशापगमे शुद्धस्याऽऽतुरस्यानुबन्धोपचरणाय बस्तिर्देयः । कुष्ठिनामर्शसानां च मूढवा-तानां प्रयोज्यः । वाताद्युदरिषु त्रिषु निषिद्धोऽप्युदया(रा)दिषु पञ्चसु बस्तिः प्रयो-क्तव्यः । शोफिक्षतोरस्कयोरनुवासननिषेधो न निरूहस्य वर्षादर्वाग्बालस्य नवत्यूर्ध्वं वृद्धस्य मृदुरपि बस्तिर्निषिद्धोऽतोऽन्यथा तीक्ष्ण एव । एतेनावस्थावशान्निषिद्धमपि कार्यं स्यात् ।

"उत्पद्यते हि साऽवस्था देशकालबलं प्रति ।
यस्यां कार्यमकार्यं स्यात्कर्म कार्यं च गर्हितम्" ॥ २ ॥ ३ ॥

क्वचिदेवाऽऽस्थापनस्यावस्थायां प्रतिप्रसवमुद्दिशन्नाह—

उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः ॥
अवश्यास्थापनीयास्ते नानुवास्याः कथंचन ॥ ४ ॥

सा चावस्था तन्त्रान्तरादनुसर्तव्या । तत्रोदरे वाग्भटः—

"सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् ।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत्" इति ॥

एवं प्रमेहादिषु चिकित्सितमवलोक्याऽऽस्थापनावस्था ज्ञातव्याः ॥ ४ ॥

सकलावयवगतदोषहरणं बस्तेरेकस्थानास्थितस्य चोपमानेन दर्शयन्नाह—

वीर्येण बस्तिरादत्ते दोषानापादमस्तकात् ॥
पक्वाशयस्थः स्वस्थोऽर्कस्त्वपो यद्वन्महीतलात् ॥ ५ ॥

---

१ क. 'वश्यं स्था' ।

अन्ये त्वत्रामुं श्लोकं पठन्ति—

"स कटीपृष्ठकोष्ठस्थान्वीर्येणाऽऽलोड्य संचयान् ॥
उत्खातमूलान्हरति दोषाणां साधुयोजितः" इति ॥

सुश्रुते तु स्पष्टं कृत्वोक्तम्—

"पक्वाशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्वतः ॥
सम्यक्प्रणिहितो बस्तिः स्थानेष्वेतेषु तिष्ठति ॥
पक्वाशयाद्बस्तिवीर्यं स्वैर्देहमनुसर्पति ॥
वृक्षमूले निषिक्तानामपां वीर्यमिव क्रमम् ॥
स चापि बस्तिः सहसा केवलः सकफोऽपि वा ॥
प्रत्येति वीर्यं त्वनिलैरपानाद्यैर्विनीयते" ॥ ५ ॥

**सर्वाङ्गगतमेकाङ्गस्थितं वाऽपि समीरणम् ॥**
**रुणद्धि केवलो बस्तिर्वायोर्वेगमिवाचलः ॥ ६ ॥**

सुगमम् ॥ ६ ॥

**वायोर्विषहते वेगं नान्या बस्तेर्ऋते क्रिया ॥**
**पवनाविद्धतोयस्य वेला वेगमिवोदधेः ॥ ७ ॥**

यथोदधेः समुद्रस्य पवनाविद्धतोयस्यानिलाभुग्नसलिलस्य वेला कूलमर्यादा वेगं विषहते विशेषेण सहते ॥ ७ ॥

**मूलसेकाद्यथा वृक्षाः स्निग्धशाड्वलपल्लवाः ॥**
**तथा बस्तिप्रदानात्स्यान्नरः कान्तिबलादिमान् ॥ ८ ॥**

सुगमम् ।

"दत्तस्तु प्रथमो बस्तिः स्नेहयेद्बस्तिवङ्क्षणौ ।
सम्यग्दत्तो द्वितीयस्तु मूर्धस्थमनिलं जयेत् ॥
जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ।
रसं चतुर्थो रक्तं च पञ्चमः स्नेहयेत्तथा ॥
षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ।
अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम् ॥
एवं शुक्रगतान्दोषान्द्विगुणः साधु साधयेत्" ।

इति सुश्रुते स्नेहबस्तेः प्रथमादिदानेन कार्यमभिहितम् ॥ ८ ॥

१ क. वृक्षः । २ क. °ल्वः । त° ।

इदानीमेतैरष्टादशभिः स्नेहबस्तिभिः सप्तधातुगतदोषहरणमभिधाय पुनः पुनरभ्यस्तैरेतैरेव विशिष्टं रसायनफलं दर्शयन्नाह—

अष्टादशाष्टादशकान्बस्तीनां यो निषेवते ॥
यथोक्तेन विधानेन परिहारक्रमेण च ॥ ९ ॥
स कुञ्जरबलोऽश्वस्य जवतुल्योऽमरप्रभः ॥
वीतपाप्मा श्रुतधरः सहस्रायुर्भवेन्नरः ॥ १० ॥

अष्टादशाष्टादशकानिति । चतुर्विंशं शतत्रयम् । यथोक्तेनेति । इहैवानन्तरातिक्रान्तेन । परिहारक्रमेणेति । सुश्रुत आतुरोपद्रवीय उक्तेनेति । तत्र स्नेहपीतं वा विरिक्तस्रुतासृग्विरूढेषु परिहार्याणामपरिहारेण किं भवतीत्याशङ्क्य सुश्रुत आह—

"क्रुध्यतः कुपितं पित्तं कुर्यात्तांस्तानुपद्रवान् ।
तांस्तानुपद्रवान्दाहपिपासाप्रभृतीनिति ॥
आयास्यतः शोचतो वा चित्तं विभ्रममिच्छति" ।

विभ्रमं विविधं भ्रमं संमोहमदापस्मारोन्मादादिकं मानसं विकारमिति ।

"मैथुनोपगमाद्घोरान्व्याधीनाप्नोति दुर्मतिः ।
आक्षेपकं पक्षघातमङ्गप्रग्रहमेव च ॥
गुह्यप्रदोषश्वयथुं कासश्वासौ च दारुणौ ॥
रुधिरं शुक्रवच्चापि सरजस्कं प्रवर्तते" इति ॥
"लभते च दिवास्वापात्तांस्तान्व्याधीन्कफात्मकान् ॥
प्लीहोदरं प्रतिश्यायं पाण्डुतां श्वयथुं ज्वरम् ॥
मोहं सदनमङ्गानामविपाकं तथाऽरुचिम्" इति ॥
"तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति" इति ॥
"उच्चैः संभाषणाद्वायुः शिरस्यापादयेद्रुजम् ॥
आन्ध्यं बाधिर्यमघ्रत्वं जडतां मूकतां तथा ॥
हनुमोक्षमधीमन्थमर्दितं च सुदारुणम् ॥
नेत्रस्तम्भं निमेषं वा तृष्णां कासं प्रजागरम् ॥
लभते दन्तचालं च तांस्तांश्चान्यानुपद्रवान्" इति ॥
"जायते यानयानेन च्छर्दिर्मूर्छा भ्रमः क्लमः ॥
तथैवाङ्गग्रहो घोर इन्द्रियाणां च विभ्रमः" ॥

यानयानेनाश्वादिगमनेनेति ।

"चिरासनात्तथा स्थानाच्छ्रोण्यां भवति वेदना" ॥

---

१ 'प्रदेशे, इति सुश्रुते ।

स्थानमूर्ध्वी भवनमिति ।

"अतिचङ्क्रमणाद्वायुर्जङ्घोर्वोः कुरुते रुजः ॥
सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा" ॥

चङ्क्रमणं चक्रक्रियापरिभ्रमणम् । शोफं चेत्यत्र स्वापं चेति पाठान्तरमिति ।

"शीतसंभोगतोयानां सेवा मारुतवृद्धये ॥
ततोऽङ्गमर्दविष्टम्भशूलाध्मानप्रवेपकाः" ॥

संभोगोऽसृक्चन्दनादीनामुपयोगः । गयी तु—शीतसंभोगतोयानामित्यत्र शीतभोजनतोयानामिति पठतीति ।

"वातातपाभ्यां वैवर्ण्यं ज्वरं चापि समाप्नुयात्" ॥

यथाक्रमं वाताद्वैवर्ण्यमातपप्रकुपितात्पित्ताज्ज्वर इति ।

"विरुद्धाध्यशनान्मृत्युं व्याधिं वा घोरमृच्छति" ॥

पयोमत्स्यादिभोजनं विरुद्धाशनम् । अजीर्णभोजनमध्यशनम् । ताभ्यां मरणं भयावहो रोगो वेति ॥

"असात्म्यभोजनं हन्याद्बलवर्णावसंशयम्" ॥

असात्म्यभोजनं देशर्तुजातिप्रकृत्यादिवैपरीत्येन भोजनमिति ।

"अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि" इति ॥

**स कुञ्जरबल इति** । उपचयशक्तिलक्षणं बलम् । **अश्वस्य जवतुल्य इति** । गज इवोपचितधातुरपि क्रियाविशेषप्रभावात्तुरंगवत्तरस्वी । अमरवत्प्रकर्षेण भातीत्यमरप्रभोऽत्यद्भुतवर्णाद्युपेत इत्यर्थः । वीतपाप्मा क्रियाविशेषप्रभावादेव गतप्राक्तनजन्मकृतसकलकल्मषः । **श्रुतधर इति** । चित्तस्य शक्त्युत्कर्षयुक्तः । **सहस्रायुरिति** । शरीरेन्द्रियसत्त्वात्मसंयोगोत्कर्षः । यद्यप्यत्र स्नेहबस्तीनामष्टादशकः, अन्तरा तु निरूहणमिति पूर्ववाक्यादनियतनिरूहान्वितोऽभिहितस्तथाऽपि तन्त्रान्तरदर्शनान्नियतद्वादशयापनाख्यनिरूहोपेतो ज्ञेयः । तादृशस्य च तन्त्रान्तरे कर्मेति संज्ञा ।

तथा हि—"त्रिंशन्मताः कर्म नु बस्तयो हि कालस्ततोऽर्धेन ततश्च योगः ॥
सान्वासना द्वादश वै निरूहाः प्राक्स्नेह एकः परतस्तु पञ्च" इति ॥

ततश्च "अष्टादशाष्टादशकान्बस्तीनां यो निषेवते" इत्यनेन कर्मबस्तीनष्टादशवारान्यो निषेवत इत्यर्थो गम्यते । तथा श्रीवाग्भटेनापि कर्मकालयोगबस्तयोऽभिहिताः ।

तथा च—"प्राक्स्नेह एकः पञ्चान्ते द्वादशाऽऽस्थापनानि च ।
सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥
कालः पञ्चदशैकोऽत्र प्राक्स्नेहोऽन्ते त्रयस्तथा ॥

षट्पञ्चबस्त्यन्तरिता योगोऽष्टौ बस्तयोऽत्र तु ॥
त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ" ॥

यापनबस्तिविषयोऽयं ग्रन्थः । निरूहा एव यापना बस्तयः । अत एवैकान्तारिताः स्नेहाः । यापना बस्तयो हि नातिस्निग्धा नातिरूक्षा नपुंसकबस्तय उच्यन्ते । कर्मकालयोगसंज्ञया यथासंख्यं वातपित्तकफहरो बस्तिप्रयोगो ज्ञेयः । **गयदा-सस्तु** बलवद्विग्रहादिजनितोपचयपूर्वकवातादिदोषप्रकोपे बलीयसि त्रिंशद्बस्तयः । स्वस्थे पुनः कालैकप्रभावजनितवातादिप्रकोपे मध्यबले पञ्चदश । कालेनाप्यकृतदोषकोपस्य स्वस्थस्यापूर्ववृष्यत्वादिलाभार्थमष्टौ ॥ ९ ॥ १० ॥

स्नेहपीतस्येत्याद्येकवाक्योक्तानां पञ्चानां स्नेहपीतादीनां मध्याद्द्वयोः कृतशिराव्यधविरिक्तयोः परिहारकालं गौरवान्निर्दिशन्नाह—

**कृतः शिराव्यधो यस्य कृतं यस्य विशोधनम् ॥**
**स ना परिहरेन्मासं यावद्वा बलवान्भवेत् ॥ ११ ॥**

यस्य शिराव्यधः कृतो यस्य च शोधनं विरेचनाख्यं कृतं तस्योभयस्यापि शोधनानन्तरं सप्तरात्रं कृतसंसर्गस्य सप्ताहादूर्ध्वं परिपूर्णाहारत्वेन मधुरादिरसानां क्रमविपर्ययाभ्यामुपसेवया रसस्य शनैः शनैर्धान्वन्तरानुक्रमतो मासेन शुक्रस्य शनैर्बलावाप्तिरुत्पद्यते । अत उक्तम्—**स ना परिहरेन्मासमिति** । ना पुरुषः । क्रुध्यतः कुपितं पित्तं कुर्यादित्यादिश्लोकैरनन्तरोक्तं **सुश्रुतो**क्तक्रोधादिकं परिहरेत् । तत्र कस्यचिदत्यन्तक्षीणाग्नेर्जलसंतानवद्रसप्रसरणेन मासानन्तरमपि बललाभः कस्यचिद्दीप्ताग्नेः शब्दसंतानवद्रसप्रसरणेन मासादर्वागपि बललाभः स्यादत उक्तम्—**यावद्वा बलवान्भवेदिति** । चतुर्षु स्नेहपीतादिषु पूर्वोक्तोऽन्नसंसर्गकालनियमः । बस्तौ तु तादृशो नास्ति । कथं दोषव्याधिबलापेक्षया बस्तिः पुनः पुनः शीलनात् । तदुक्तम्—अष्टादशाष्टादशकानित्यादि ॥ ११ ॥

अत एकैकं बस्तिमुद्दिश्य विशिष्टं नियमं दर्शयन्नाह—

**त्र्यहं त्र्यहं परिहरेदेकैकं बस्तिमातुरः ॥**
**तृतीये तु परीहारे यथायोगं समाचरेत् ॥ १२ ॥**

एकैकं बस्तिं सेवित्वेति वाक्यशेषं कृत्वा त्र्यहं त्र्यहं क्रुध्यतः कुपितं पित्तं कुर्यादित्यादिश्लोकैः **सुश्रुतो**क्तं परिहार्यं परिहरेत् । तृतीये तु परीहार इत्यादिना विशेषेण परीहारे कृते सति, अनन्तरं चतुर्थपञ्चमदिवसादौ यथायोगं योगानतिक्रमेण सम्यङ्निरूढानुवासितयोगलक्षणानतिक्रमेण समाचरेद्यथासात्म्यमुपसेवेतेत्यर्थः । अन्ये तु व्याख्यानयन्ति—एकैकं बस्तिमनुवासनं दत्त्वा त्रीण्यहानि परिहरेत् । तृतीये तु बस्तौ गते

तृतीयादनुवासनादूर्ध्वं यथायोगं यथावस्थमग्न्यादीनवेक्ष्य चतुष्पञ्चदिवसान्तरा कृत्वाऽनुवासनं योजनीयम् ॥ १२ ॥

**स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः ॥**
**निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥ १३ ॥**

**निरूढस्य चेति** । चकारेणानुवासितमनुक्तं समुच्चिनोति । ननु स्नेहपीतस्याग्निर्मन्दो भवतीति कथमुच्यते—

"दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ।
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषो भवेत्तु" ॥

इत्युक्तत्वात् ॥

"यथा हि सारदार्वग्निः स्थिरः संतिष्ठते चिरम् ।
स्नेहोऽत्र विविधस्तद्वदन्तराग्निर्भवेत्स्थिरः" इति ॥

नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपीति **चरकाचार्यो**क्तत्वात् । वान्तस्यापि कथमग्निर्मन्दः स्यात् । मन्दे हि कटुतिक्तकषायैर्वमनैश्चेत्यग्निमान्द्ये वमनोपदेशादिति । विरेचनमपि वह्निदीप्तिकरमुक्तम् ॥

"बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं बलमग्निदीप्तिम् ।
चिराच्च पाकं वयसः करोति विरेचनं सम्यगुपास्यमानम्" इति ॥

अनेन विरिक्तस्यापि नाग्निमान्द्यसंभवः । निरूहो ह्यग्न्यधिष्ठानमस्पृश्यैव पक्वाशयादेव प्रत्येति । मांसरसाशनस्याऽऽम्नातत्वान्निरूढस्यापि नाग्निमान्द्यमुपपद्यते । सिद्धान्तमाह । स्नेहो हि द्विविधः संशोधनाङ्गः प्रायोगिकश्च । आद्यः शोधनीयः पीतोऽग्निमान्द्यहेतुरुक्तः । कुतः । अनन्तरं वमनाद्युपदेशात् । इतरः प्रायोगिको विचारणास्नेहश्च दीपनः । ततश्च भिन्नविषयत्वान्मिथो भेदः । तथा च **तन्त्रान्तरम्**—

"ये तु वृद्धाश्च बालाश्च सुकुमाराः सुखोदिताः ।
रिक्तकोष्ठत्वमहितं येषां मन्दाग्नयश्च ये ॥
ज्वरातीसारकासाश्च येषां चिरसमुत्थिताः ।
स्नेहमात्रां पिबेयुस्ते ह्रस्वां ये चावरा बले" इति ॥

तस्माद्यत्किंचिदेतत् । स्नेहद्वैविध्याच्च । स्नेहो हि द्विविधः स्थावरो जङ्गमश्च । तद्योनि च तैलमाग्नेयं तद्धि दीपनमेव । तथा च–दीपनमग्निगुणभूयिष्ठं जङ्गमस्नेहो हि घृतवसामज्जानः । तेषु घृतमसंस्कृतं मधुरस्निग्धशीतत्वाच्छ्लेष्मणः समानगुणत्वादेव न दीपनं वसामज्जानौ हि गुरुत्वेनाधिकौ तावुपयुज्यमानावसंस्कृतावत्यर्थमग्निमान्द्यहेतू । तथा चोक्तम्—धातवो रक्तादयः शुक्रान्ता उत्तरोत्तरं गुरव इति । सर्पिषस्तु यद्यपि

दीपनत्वं त्रिदोषघ्नत्वं च तत्संस्कारसव्यपेक्षम् । तथा च तन्त्रान्तरम्—'तेभ्यश्चैवोत्तमं सर्पिः संस्कारस्यानुवर्तनात्' इति । सद्योवान्तस्य वमनाद्धृतावशिष्टकफावरुद्धस्रोतोमुखस्य तात्कालिकमग्निमान्द्यं स्यात् । अनन्तरं स्रोतःशुद्धौ सत्यां कृतसंसर्जनक्रमस्य क्षीणकफस्य वान्तस्याग्निर्दीप्तिः । विरिक्तस्य तु हृतपित्तत्वान्मरुदग्निविक्षेपणाच्च तात्कालिकमग्निमान्द्यम् । अनन्तरं वान्तस्येवाग्निर्दीप्तिः । स्रुतशोणितस्यापि समानयोनिर्हीनो *पित्तमपनीयते तस्माद्युक्तमग्निमान्द्यम् । निरूहस्याप्यशेषदोषमलनिर्हरणाद्युक्तमेवाऽऽपेक्षिकं मान्द्यम् । मान्द्यं ह्यल्पत्वमभिप्रेतं न पुनः श्लेष्मोपहतस्येव मान्द्यमिति । इति श्रीब्रह्मदेवः। कुसुमावलिकारस्त्वेवं पूर्वपक्षयति । ननु स्नेहपानादयोऽनलप्रबोधहेतव इत्युक्तत्वात्कथं तैर्मन्दोऽग्निर्भवति । उच्यते । एते हि तत्कालं धातुक्षयात्कोष्ठसंक्षोभाच्चाग्नेर्मान्द्यमावहन्त्येव तस्मादग्निमान्द्यं युक्तं क्रमेण तु दीप्तोऽग्निर्भवतीति न दोषप्रसङ्ग इति ॥ १३ ॥

स चाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्धते ॥
काष्ठैरणुभिरल्पैश्च संधुक्षित इवानलः ॥ १४ ॥

संसर्जनक्रमः परिशिष्टकारेण सर्वाः शुद्धीरभिसंधायोपकल्पनीयाध्याय उक्तः । तद्यथा । हीनशुद्धिशुद्धस्य पुरुषस्य तावत्प्रथमेऽन्नकाल उचितभक्तकृताष्टभागां पेयां दद्यात् । तस्मिन्नेव दिने द्वितीयेऽन्नकाले प्रकृतिस्थाज्जरणकालोचिताद्भक्ताच्चतुर्थांशेन कृतामविपक्कतण्डुलावयवां मण्डरहितां विलेपीं दद्यात् । द्वितीयेऽह्नि तृतीयेऽन्नकालेऽस्निग्धालवणस्वच्छेनाकृतमुद्गयूषेणोचितादर्धभागतण्डुलकृतं सुस्विन्नमोदनं दद्यात् । तस्मिन्नेव दिने चतुर्थेऽन्नकाले हृद्येनेन्द्रियबोधिना कृतसंज्ञकेन यूषेणोचिततण्डुलांशत्रयकृतमोदनं भोक्तुं दद्यात् । ततस्तृतीयेऽह्नि पञ्चमेऽन्नकाले लावैणहरिणादीनां सुसंस्कृतै रसैरंशचतुष्टयप्रमाणं भक्तं भोक्तुं दद्यात् । तृतीयेऽह्नि षष्ठेऽन्नकाले प्रकृतिभोजनमागच्छेत् । मध्यशुद्धिशुद्धस्य च तावदादौ द्वयोरन्नकालयोः पेयां दद्यात् । द्वितीयेऽह्नि द्वयोरप्यत्र कालयोर्विलेपिकां तृतीयेऽह्नि कालद्वयेऽप्यकृतं यूषं चतुर्थेऽह्नि कालद्वयेऽपि कृतं यूषं पञ्चमेऽह्नि कालद्वयेऽपि मांसरसमित्यतः षष्ठेऽह्नि प्रकृतिभोजनमागच्छेत् । उत्तमशुद्धिशुद्धस्य च तावत्प्रथमेऽह्नि द्वयोरप्यन्नकालयोः पेयां दद्यात् । द्वितीयेऽह्नि प्रथमेऽन्नकाले पेयां द्वितीये विलेपिकां तृतीयेऽह्नि द्वयोरप्यत्र कालयोर्विलेपिकां चतुर्थेऽह्नि द्वयोरप्यन्नकालयोरकृतयूषं पञ्चमेऽह्नि प्रथमेऽन्नकालेऽकृतं यूषं द्वितीयेऽन्नकाले कृतं यूषं षष्ठेऽह्नि द्वयोरप्यन्नकालयोः कृतं यूषं सप्तमेऽह्नि द्वयोरप्यन्नकालयोर्मांसरसमष्टमेऽह्नि प्रथमेऽन्नकाल उचिततण्डुलाष्टभागकृता पेया द्वितीयेऽन्नकाले तूचिततण्डुलचतुर्थभागकृता विलेपी तृतीयेऽन्नकाले तूचिततण्डुलार्धभागकृतेन भक्तेन सह दकलावणिको

* अत्र किंचित्त्रुटितम् ।

यूषो रसो वा यथादोषं चतुर्थेऽन्नकाले तूचिततण्डुलभागत्रयकृतेन भक्तेन सह कृतसंज्ञको यूषः पिप्पलीशृङ्गवेरासिद्धोऽकृतो रसो वा यथादोषं तथा यथोचितं परिपूर्णभक्तं सुसंस्कृतेन यूषेण रसेन वा देयमिति। तृतीये दिने प्रकृतिभोजनम्। एवं मध्यमोत्तमशुद्धौ पेयादीनां द्वित्रिकालदानेन यथाक्रमं पञ्चमे सप्तमे च दिने प्रकृतिभोजनम्। उक्तं च तन्त्रान्तरे—

"पेयां विलेपीमकृतं कृतं च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः" इति॥

अयं पेयादिक्रमः सुश्रुते विरेचन एवोक्तः।

तद्यथा—"हीनमध्योत्तमेष्वेषु विरेकेषु प्रकीर्तितः।
एकद्वित्रिगुणः सम्यगाहारस्य क्रमस्त्वयम्॥

अस्यार्थः। प्रस्थे परिस्रुते हीनो विरेकस्तस्मिन्पेयादिरेकैकमन्नकालं देयः। अर्धाढके परिस्रुते मध्यो विरेकस्तस्मिन्पेयादिः प्रत्येकं द्वौ द्वावन्नकालौ देयः। आढके परिस्रुत उत्तमो विरेकस्तस्मिन्पेयादिः प्रत्येकं त्रींस्त्रीनन्नकालान्देयः। एवमुक्तेष्वपि हीनादिविरेकेषु हृतदोषमानापेक्षयैकद्वित्रिगुणोऽयमाहारक्रमः सम्यक्प्रकीर्तितः। न तु मिथ्याहीनातियोगेनासम्यगित्यर्थः। एतदुक्तं भवति। हीने विरेके चतुर्भिरन्नकालैः सायंप्रातिकभोजनाभ्यां त्र्यहं मध्ये तद्द्विगुणेन चतुरहमुत्तमे तत्त्रिगुणेन षडहमिति। अयं संशोधनोक्तसंसर्जनक्रमोऽशुद्धेऽपि क्वचिदग्निमान्द्यहेतावुक्तः—

"वेदनालाभनियमशोकवैचित्यहेतुभिः।
नरानुपोषितांश्चापि विरिक्तवदुपाचरेत्" इति।

वेदनाया लाभोऽलाभ इष्टस्येति केचित्। लाभोऽनिष्टस्येत्यन्ये। नियम उपवासादिः। वैचित्यमुन्मादाद्विना। एतैर्हेतुभिस्तूपोषितान्नरान्विरिक्तवदुपाचरेत्। तत्रापि लङ्घनमानेन हीनमध्यमोत्तमाभिहितेन त्र्यहं चतुरहं षडहमेवान्नसंसर्जनम्। तथा तत्रैव सुश्रुते प्रस्थादिसंख्यया विरेकैकविषयत्वं कारणमुखेन निराकृतम्।

तद्यथा—"आढकार्धाढकप्रस्थं संख्या ह्येषा विरेचने।
श्लेष्मान्तत्वाद्विरेकस्य न तामिच्छन्ति तद्विदः।
एको विरेकः श्लेष्मान्तो न द्वितीयोऽस्ति कश्चन"॥

अग्न्यधिष्ठानसंप्लवादत्यर्थमग्निमान्द्यहेतौ विरेचन एवाऽऽढकादिसंख्या वमनास्थापनयोस्त्वग्न्यधिष्ठानानभिभवेन तादृशाग्निमान्द्याभावान्माननियमो नास्ति। अत एव तदहरेव वमने कुलत्थमुद्गयूषभोजनम्। आस्थापने मांसरसभोजनमनुवासनं च। एतन्मतं निरस्यन्नाह—श्लेष्मान्तत्वादित्यादि। अयमभिप्रायः। विरेचनं निःशेषपित्तनिबर्हणाय प्रयुज्यते। निःशेषपित्तनिबर्हणं च तदैवानुमीयते यदा पित्तप्रवर्तनानन्तरं तत्प्रदेशस्थ

आमरूपः कफः प्रवर्तते। तस्मात्कफान्तिकत्वाद्विरेकस्य तां प्रस्थादिकां संख्यां विरेचनविदो नेच्छन्ति। एतेन वैगिकोऽपि निराकृतः। लैङ्गिकः पुनरान्तिकेनाविरुद्ध एव यतो लैङ्गिकेऽपि कफान्तिकत्वमस्ति। तथाच—वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति। एवमेव विरेचने पुरीषपित्तौषधकफा इति। अतो वैगिकमानिकौ विरेकौ गौणतया प्रतिपादितौ क्वचिद्बालवृद्धादाववस्थावशात्प्रयुक्तौ कर्तव्यौ मुख्यः पुनरेकः कफान्तिक एवेत्याह—एको विरेक इत्यादि। न द्वितीयोऽस्तीति। तृतीयस्य पुनः का कथा। एवं वमनमप्येकमेव। तथा च भोजः—

"तस्मान्मतिमता नित्यमात्मानं परिरक्षता।
पित्तान्तं वमनं स्थाप्यं कफान्तं च विरेचनम्" इति॥

प्रकारान्तरेणैवान्नसंसर्जनत्रित्वं तदाश्रयमुक्तवान्सुश्रुतः—

"बलं यत्त्रिविधं प्रोक्तमतस्तत्र क्रमास्त्रिधा॥
तत्रानुक्रममेतं तु बलस्थः सकृदाचरेत्।
द्विराचरेन्मध्यबलस्त्रीन्वारान्दुर्बलस्तथा"॥

बलमत्रोपचयलक्षणमेव। केचिदेवं क्रमं प्राहुः "मन्दमध्योत्तमाग्निषु" इति। क्रमेण कृतसंसर्गस्य रसावचारणक्रममाह सुश्रुतः—

"संसर्गेण विवृद्धेऽग्नौ दोषकोपभयाद्भजेत्।
प्राक्स्वादुतिक्तौ स्निग्धाम्ललवणान्कटुकं ततः॥
स्वाद्वम्ललवणान्भूयः स्वादुतिक्तावतः परम्।
स्निग्धान्रूक्षान्रसांश्चैवं व्यत्यासात्स्वस्थवृत्ततः" इति॥

अस्यार्थः। अन्नसंसर्जनक्रमविवृद्धेऽग्नौ दोषकोपभयात्स्निग्धान्मधुराम्ललवणान्रूक्षान्कटुतिक्तकषायान्रसान्व्यत्यासाद्विपर्ययादेवमत्रोक्तपरिपाट्या भजेत्। तत्र प्रवृद्धाग्निहेतुवातपित्तस्यावजयार्थमग्नेः समीकरणार्थं च पूर्वं स्वादुतिक्तकौ ततो वातकफावजयार्थमग्नेः संधुक्षणार्थं च। व्यत्यासादिति। यदा प्रागुक्तरसप्रत्यनीकान्स्निग्धाम्ललवणकटुकांस्ततश्चाम्ललवणकटुजनितपित्तवातावजयार्थं स्वादुतिक्तौ। वृद्धवाग्भटस्त्वाह—

"दद्यान्मधुरमद्यानि ततोऽम्ललवणौ रसौ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः॥
अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः।
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत्" इति॥

अयमन्नसंसर्जनक्रमो डल्लणादुद्धृतः॥ १४॥

युक्तेऽग्नौ जीवति चिरं रोगी स्याद्विकृतिं गते॥
शान्ते पञ्चत्वमायाति देही तस्माद्वरोऽनलः॥ १५॥

सुगमम् ॥ १९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां षट्सप्ततितमो निरूहाधिकारः समाप्तः ॥ ७६ ॥

---

## अथ सप्तसप्ततितमो धूमविध्यधिकारः ।

पञ्चकर्मपारिशेष्यान्नस्ये वक्तव्ये निरूहवन्नेत्रप्रयोज्यतया प्रथमं धूम उच्यते । धूमश्च पञ्चकर्मप्रस्तावे शुद्धिकरत्वेन वमनस्यान्ते चोपयोगादभिधातुमुचित एव ।

**प्रायोगिकः कासहरश्च धूमो वैरेचनः स्नैहिकवामनीयौ ॥**

धूमो धुनोति कम्पयति दोषसंघातमिति धूमः । स पञ्चविधो भवति । प्रायोगिकः प्रयोगः स्वस्थस्य सततोपयोगस्तत्र साधुः प्रायोगिकः । स च प्रायोगिकः श्लेष्माणमुत्क्लेशयति, उत्क्लिष्टं चापकर्षति शमयति वातं स्नेहनविरेचनाभ्यां तुल्यत्वात् । कासहरत्वात्कासघ्नः । स पुनरुरःकण्ठदोषारब्धरोगहरोऽप्यावस्थिक एव । अभिष्यन्नशिरासि शिरो विरेचयतीति विरेचनः । विरेचन एव वैरेचनः [illegible] श्लेष्माणमुत्क्लेश्यापकर्षयति रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च । [illegible] स्नैहिकः । स च स्नैहिको वातं शमयति स्नेहनादुपलेपनाच्च [illegible] स पुनरुत्क्लिष्टकफाभिपन्नकण्ठोरसः ॥

**एलादिना कुष्ठनतोज्झितेन क्षौमं प्रलिप्याङ्गुलक[illegible]**
**प्रायोगिके वर्तिरिदं तु नेत्रमष्टाङ्गुलं षड्गुणितं [illegible]**

कुष्ठनतोज्झितेनेति । कुष्ठनतपरित्यागो मस्तिष्कस्रावभयात् । यदुक्तं कृष्णात्रेयेण—

"नतकुष्ठे स्रावयतो धूमवर्तिप्रयोजिते ।
मस्तुलुङ्गं प्रभावेन तस्मात्ते न प्रयोजयेत्" इति ।

तथा च निमिः—

"धूमो हि वक्रकुष्ठाभ्यां विलालयति शक्तितः ।
मस्तिष्कं ताद्धि विष्यन्नं नाशाय प्रतिपद्यते" इति ।

क्षौमं प्रलिप्येति । कर्पटावयवं पिष्टैर्भेषजैः प्रलिप्य तेनैव द्वादशाङ्गुलं शरकाण्डं कनिष्ठाङ्गुलीसमस्थूलमन्तयोर्ध्यङ्गुलं विहाय वर्तितः शरकाण्डस्य मुखापकर्षणार्थं क्षौमेणाष्टाङ्गुलमानेन वेष्टयित्वा ततः परिशोष्य वर्तिः कार्या । एवमेव चरकसुश्रुतादौ दर्शि-

तत्वात् । एवं स्नैहिकादिष्वपि वर्तिकरणम् । वर्ति च स्नेहेनाभ्यज्याग्निना दग्ध्वा नेत्रे निवेश्य धूमः पेयः । अङ्गुलकाष्ठमानेनाष्टाङ्गुलायता ।

चरकेऽप्युक्तम्—

"पिष्ट्वा लिम्पेच्छरेषीकां तां वर्ति यवसंनिभाम् ।
अङ्गुष्ठसंमितां कुर्यादष्टागुलसमां भिषक् ॥

अष्टाङ्गुलं षड्गुणितमिति । अष्टचत्वारिंशदङ्गुलम् । सुश्रुतेऽप्युक्तम् । "अङ्गुलान्यष्टचत्वारिंशत्प्रायोगिक" इति । ननु जातूकर्णे षट्त्रिंशदङ्गुलं प्रायोगिकनेत्रमानमुक्तम् । यथा—"सार्धत्र्यंशयुतः पूर्णो हस्तः प्रायोगिकादिषु" इति ।

चरकेऽपि—"चतुर्विंशतिकं नेत्रमङ्गुलैः स्वैर्विरेचने ।
द्वात्रिंशदङ्गुलं स्नेहप्रयोगेऽध्यर्धमिष्यते" इति ॥

अत्रार्धमिति हरिश्चन्द्रेण वैरेचनिकनेत्रमानापेक्षया व्याख्याय षट्त्रिंशदङ्गुलं प्रायोगिकनेत्रमानं व्युत्पादितम् । यदि तु संनिहितत्वात्रिंशदङ्गुलापेक्षयाऽध्यर्धमिति व्याख्यायते तदा चरकेऽष्टचत्वारिंशदष्टाङ्गुलमेव प्रायोगिकनेत्रं भवति । किं तु समानतन्त्रजातूकर्णानुरोधः स्यात् । तदेवं विरोधे का समर्थना । ब्रूमः । मतभेद एवायं कार्यविरोधश्च न कश्चिदिह । तेन मतद्वयमप्यविरुद्धम् । अन्यस्त्वाह—श्लेष्मप्रवृत्तौ बहुदोषे च *कीले षट्त्रिंशदङ्गुलम् । अतोऽन्यत्र त्वष्टचत्वारिंदङ्गुलमिति न विरोध इति ॥ १ ॥

बृहत्यौ त्र्यूषणं शृङ्गी चेङ्गुदीत्वङ्मनःशिला ॥
एषा कासहरा वर्तिर्नेत्रं षोडशकाङ्गुलम् ॥ २ ॥

इङ्गुदीत्वगिति । इङ्गुदीफलत्वक् ॥ २ ॥

शिरोविरेचनैर्वर्तिर्नेत्रं हस्तमितं मतम् ॥ ३ ॥

शिरोविरेचनैरिति । विडङ्गमधुशिग्रुसूर्यवल्लीपीलुपिप्पलीसिद्धार्थकसुरसार्जकापामार्गबीजादिभिः । हस्तमितमिति । चतुर्विंशत्यङ्गुलम् ॥ ३ ॥

स्निग्धमज्जमधूच्छिष्टस्नेहगुग्गुलुसर्जकैः ॥
स्नैहिकैर्वर्तिरेभिस्तु नेत्रं द्वात्रिंशदङ्गुलम् ॥ ४ ॥

स्निग्धमज्जेति । एरण्डादिफलमध्यम् । स्नेहो घृतादिः । स च तावान्देयो यावता वर्तेरनवसादः ॥ ४ ॥

वामनीये तु वल्लूरस्नाय्वस्थिखुरचर्मभिः ॥
वर्तिर्दशाङ्गुलं नेत्रं धूमः पञ्चविधो मतः ॥ ५ ॥

---

* काले, इति भाति ।

दशाङ्गुलं नेत्रमिति । सुश्रुते पुनः षोडशाङ्गुलं कासघ्ने वामनीये चेत्युक्तम् ॥ ५ ॥

याद्दशी वर्तिः कार्या यथा च कासहरादिषु मानं तदाह—

अङ्गुल्याः परिणाहेन मध्ये स्थूलाऽन्तयोस्तनुः ॥
षड्भागो धूमनेत्रस्य वर्त्या मानं प्रशस्यते ॥ ६ ॥

मध्ये स्थूलाऽन्तयोस्तनुरित्यतो नेत्रेऽर्पणयोग्यत्वमुक्तम् । सर्वधूमनेत्रेभ्यः षड्भागप्रमाणा वर्तिः कार्या ॥ ६ ॥

धूमोपयोगफलमाह—

धूमोपयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः ॥
दृढकेशद्विजश्मश्रुः सुगन्धिविशदाननः ॥ ७ ॥

सुश्रुतेऽस्य श्लोकस्याग्रेऽधिकं पठ्यते । तथा श्वासकासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुवमथुक्रथनतन्द्रानिद्राहनुमन्यास्तम्भाः पीनसशिरोरोगकर्णाक्षिशूला वातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति । अत्र क्रथोऽकस्माच्छ्वासावरोधः ॥ ७ ॥

प्रगाढं पानमिच्छन्ति धूमस्याऽऽस्येन तद्विदः ॥
उरःकण्ठाश्रये दोषे मुखेनैव पिबेन्नरः ॥ ८ ॥ अभिष्यः....
शिरःकर्णाक्षिनासोत्थे नस्ततः(नासया) शमनं पि[illegible]
निर्वमेत्तु मुखेनैव नासया न कथंचन ॥
विलोमगो ह्याशु धूमः कुर्याद्दर्शनविभ्रमम् ॥ ९ ॥

शमनमिति । प्रायोगिकं स्नैहिकं च । निर्वमेत्तु मुखेनैवे[illegible] तमपि मुखेनैव वमेत् । तदुक्तं मुखेन प्रायो वमेदिति । सु[illegible] धूमनेत्रं सुवर्णरूप्यत्रपुसीसताम्रकांस्यादिमयं कनिष्ठासमस्थूलमग्रे मरव[illegible] स्थाने कलायमात्रस्रोतस्कं मूले वर्तिसंचरणस्थानेऽङ्गुष्ठसमस्थूलं धूमवर्तिप्रवेशार्थं त्रिकोशाकलितं पर्वत्रयविरचितं विधाय प्रायोगिके दैर्घ्येणाष्टचत्वारिंशदङ्गुलानि शात्स्नेहने चतुर्विंशतिर्विरेचने षोडशाङ्गुलं कासघ्ने वामनीये च कुर्यात् । कासघ्नवामनीये कोलास्थिमात्रच्छिद्रे भवतः । आह च महाविदेहः—

"चत्वारिंशत्तथाऽष्टौ च प्रमाणेनाङ्गुलानि हि ॥
नेत्रं प्रायोगिकं कार्यं द्वात्रिंशत्स्नैहिकं भवेत् ॥
चतुर्विंशत्यङ्गुलकं वैरेचनिकमिष्यते ॥
कासघ्ने छर्दनीये च कर्तव्यं षोडशाङ्गुलम्" इति ॥

तेषां प्रायोगिकं धूमनेत्रं दीर्घम् । प्रायोगिको हि धूमः सततं ह्रस्वनेत्रेण

---

१ क. रोगे ।

पीयमान इन्द्रियं बाधते। दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतो नेन्द्रियं बाधते धूम इति चरकाचार्योक्तत्वात्। सुश्रुताद्धूमनेत्रमभिधाय धूमपानविधानमाह— अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः प्रायोगिकस्नैहिकवैरेचनिकेषु [*वार्तिं व्यपेच्छरकाण्डानि वातातपशुष्कां] स्नेहाक्तां दीप्ताग्रां नेत्रमूलस्रोतसि प्रणिधाय धूमं पिबेत्। इतरयोः कासघ्नवामनीययोर्व्यपेतधूमाङ्गारे स्थिरे समाहिते शरावे प्रक्षिप्य वर्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिंश्छिद्रे नेत्रमूलं संयोज्य धूममासेवेत। शान्ते धूमे वर्त्यवबोधं घृतं वर्तिचूर्णं वा प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धये। एष धूमपानोपायविधिः। विशेषतस्तु प्रायोगिकं घ्राणेनाऽऽददीत स्नैहिकं मुखनासाभ्यां नासिकया वैरेचनिकं मुखेनैवेतरौ। अस्यार्थः। विशेषतस्त्वित्यादि। शिरोरोगसंभवानां लक्षणविशेषमाश्रित्य प्रायोगिकं घ्राणेनाऽऽददीत। सामान्यतः पुनरुरःशिरोरोगसंभवानामुभयमार्गेणापि तन्त्रान्तरदर्शनात्। तथा च विदेहः—प्रयोगपाने पूर्वं वा नस्ततो(नासया) धूममाचरेदिति। पूर्वं वा नस्ततो(नासया) धूममाचरेदित्यनेन क्वचिन्मुखेनापि प्राक्पेय इत्यवगन्तव्यम्। स्नैहिकं मुखनासाभ्यामिति। कण्ठोरःसमाश्रिते वाते मुखेन शिरःसमाश्रिते वाते नासयोभयमार्गे पानार्हो मुखेन पूर्वं ...तुकणा... ...गेति। तथा च निमिः—"स्नेहधूमप्रयोगे तु मुखेन वमनीयं न कथ-
...रोधश्च न का...
...द्रदोषे च *र्क...
...त ... ? ॥
...तं मुखेनैव वमेत्पीतं च नासया ॥
...धूममादाय नासिकाभ्यां न निर्हरेत्" इति।

...द्रुदीत्यादि... । उत्क्लिष्टकफाभिव्याप्तकण्ठोरसो नासया, अनुत्क्लिष्टकफे पुनर्वै- ...प्राग्वक्त्रेण। तथा च वाग्भटः—

"प्राक्पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते।
उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कण्ठगे" ॥

...ति। इतरौ कासघ्नवामनीयौ मुखेनैव पिबेत्। कासस्य वामनीयस्य रोगस्य ...तत्वात्। प्रायोगिकादीनां पानमर्यादां सुश्रुतादाह—प्रायोगिकं तु त्रींस्त्रीनुच्छ्वा- ...मुखनासाभ्यां पर्यायांस्त्रींश्चतुरो वेति स्नैहिकं यावदश्रुप्रवृत्तिर्वैरेचनिकमादो- ...वर्तेरनव...तण्डुलयवागूपीतेन पातव्यो वामनीयो ग्रासान्तरेषु कासघ्न इति। अस्या- ...मुखनासाभ्यामिति। दोषस्थानमवेक्ष्योचितमार्गेणाऽऽददीत। त्रींस्त्रीनुच्छ्वासान्कतिसंख्याकानाददीतेत्याह—पर्यायांस्त्रींश्चतुरो वेति। पर्यायः परिपाटी। उच्छ्वा-

* धनुश्चिह्नान्तर्गतो ग्रन्थः सुश्रुते नोपलभ्यते।

सत्रयेणैकः पर्यायः । तान्पर्यायांस्त्रींश्चतुरो वा दोषपुरुषबलमवेक्ष्य । एतदुक्तं भवति । त्रिभिरादानविसर्गैस्त्रीन्वारांश्चतुरो वा धूमः पातव्यः । वाशब्दोऽत्र व्यवस्थायां तेन तन्त्रान्तरव्यवस्थितोऽर्थोऽत्र ज्ञातव्यः । तथा च धूमपानमात्राविधाने **निमिः**—

"धूमपाने तु विज्ञेय उच्छ्वासस्त्रिगुणः कलाः ।
तिस्रः कलाश्चात्र मात्राप्रमाणं स्यात्त्रिमात्रिकम् ॥
पिबेत्स्वस्थविधौ मात्रां दुर्बलस्तु कलां पिबेत् ।
अभिष्यन्ने प्रमाणं स्यात्प्रमाणं च पिबेद्रुजि" इति ॥

**स्नैहिकमित्यादि** । यावदश्रुप्रवृत्तिरिति बलवति पुरुषे दुर्बले च प्रायोगिकवत् । तथा च **भोजः**—

"प्रमाणं स्नैहिके धूमे कृशो मात्रां पिबेन्नरः ।
बलवांस्तु पिबेत्तावद्यावदश्रु न गच्छति" ॥

**वैरेचनिकमादोषदर्शनादिति** । दोषस्य कफाख्यस्य विकृतस्य दर्शनं यावत् । अत एव तन्त्रान्तरे शोधनस्यैकस्मिन्दिने त्रिश्चतुर्वा पानं प्रतिपादितम् । तथा च **तन्त्रान्तरम्**—

"सकृत्पिबेत्स्नेहनीयं प्रयोगे सकृदेव च ॥
द्विर्वा विरेचनीयं तु त्रिश्चतुर्वा पिबेन्नरः ।

विशिष्टधूमपाने पूर्वं करणीयमाह—**तिलेत्यादि** । वमनकाल एवाऽऽकण्ठं तिलादियवागूपीतेन वामनीयो धूमः पातव्यो यावत्पित्ते कफस्यानुसुखं प्रवृत्त इत्यादिवाक्योक्तं सम्यग्वान्तलक्षणमिति । **ग्रासान्तरेष्विति** । कवलयोः कवलानामन्तरे । अन्तरं मध्यमित्यर्थः । ग्रासान्त इत्यन्ये पठन्ति । तथा भोजनस्योत्तर इत्यन्ये पठन्ति । कासघ्नश्च वैरेचनिकवत्त्रिश्चतुर्वा यावद्विकृतकफहरणम् । तथा च **चरकः**—मुखेन वैरेचनवत्कासवान्धूममापिबेदिति । अत्र व्रणनेत्रव्रणधूपनविधानं **सुश्रुतादाह**—व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थवाहि स्रोत इति । कलायपरिमण्डलं गुलिकामुखमित्यर्थः । व्रणधूमं शरावसंपुटोपनीतं नेत्रे व्रणमानयेत् । धूपनाद्वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्च भवतीति । धूमानर्हाणां शोकादियुक्तानां धूमपानाद्व्यापदो **महाविदेहः** प्राह—

"भीतः क्रुद्धः शोकवांश्च दृष्टिहानिं भ्रमं क्लमम् ।
वह्न्यर्ककर्मक्लान्तस्तु तथा दौर्बल्यमाप्नुयुः ॥
तृष्णास्यशोषमोहांस्तु क्षीणधातुः पुनः क्षयम् ।
रुजः पित्तानिलकृतान्व्याधीन्दौर्बल्यमेव च ॥

रक्तोल्बणः पैत्तिकश्च विवृद्धौ रक्तपित्तयोः ।
पिपासार्तस्तालुशोषी मूर्छार्तश्चलचेतनः ॥
तेषां वृद्धिर्विशेषेण वाग्घातं मौनमेव च ।
ज्वरी मदात्ययी मद्यं पीत्वा च लभते नरः ॥
मोहं तृष्णां वक्त्रशोषं दृष्टिहानिं शिरोरुजम् ।
प्रजागरी शिरोरोगं तिमिरी दृष्टिवैक्लवम् ॥
विरिक्तो हृतदोषश्च शोषं तृष्णां शिरोरुजम् ।
दत्तबस्तिर्दृष्टिहानिं क्षतो भूयः क्षतामयान् ॥
धूमो गर्भस्य गर्भिण्याः शोषतापेन्द्रियव्यथाः ।
क्षौद्रसेवी घ्राणरोधं त्वग्दोषं वा समाप्नुयात् ॥
दधिस्नेहं पयोमत्स्यान्भुक्त्वा वा धूममाचरेत् ।
दृग्दोषमूर्छाहृल्लासच्छर्दीः प्राप्नोति मानवः" ॥ ८ ॥ ९ ॥

**इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायां सप्तसप्ततितमो धूमविध्यधिकारः ॥ ७७ ॥**

## अथाष्टसप्ततितमो नस्याधिकारः ।

कर्मशेषं नस्यमाह—

**तिमर्शोऽवपीडश्च नस्यं प्रधमनं तथा ॥**
**शिरोविरेचनं पञ्च नस्यभेदाः प्रकीर्तिताः ॥ १ ॥**

प्रतिमर्शास्त्विहैवाग्रे वक्ष्यते । शृतशीतक्वाथादि* पिचुतत्कल्पानामवपीडनादवपीडः । द्यपि नस्यं निखिलमेव प्रतिमर्शादि तथाऽपि हि नस्यमित्येतद्विशिष्टे स्नेहनार्थे नासाोयमानस्नेहे वर्तते । एतच्च स्वयमेव तत्र यः स्नेहनार्थमित्यादिना दर्शयिष्यति । र्णस्य मुखेन नाड्या वा प्रध्मापनात्प्रधमनम् । शिरोविरेचनद्रव्यैर्यो दीयत इति शिरोरेचनः ॥ १ ॥

**गद्यम्—औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां[1] दीयत इति नस्यम् । औषधमौषधपक्वो वा स्नेह इति ।** औषधमिह द्विविधं शिरोविरेचनस्तम्भनभे-

---

* क्काथादिपिचुनक्तकानामिति पाठो बहुपुस्तकेषु ।

१ ङ. 'सिकपुटाभ्यां ।

दात्। तद्द्वितयं कल्कादिरूपमवपीड्य दीयमानमवपीडः स्यात्। अवपीडो हि द्विविधः शोधनः स्तम्भनश्च। तथा च दृढबलः—"शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः" इति। प्रधमनं तच्छिरोविरेचनद्रव्यमेव विचूर्णितम्। स्नेहश्चतुष्प्रकारः। न च नस्यशिरोविरेचनप्रतिमर्शानामवरोधः। एवमुक्तपञ्चविधनस्य औषधस्नेहाभ्यामवरोधो ज्ञेयः। नासिकाभ्यामिति द्विवचनं पुटद्वयापेक्षया। नासाशब्देन नासासमीपवर्तिनः श्रवणदशननयनादिप्रदेशाः प्रोच्यन्ते। नासायै हितं नस्यम्॥ १॥

संप्रति नस्यशिरोविरेचनयोः शेषाणामवरोधात्प्राधान्यमाह—

**नस्यविकल्पः प्रतिमर्शः शिरोविरेचनविकल्पोऽवपीडः प्रधमनं च।**

"प्रतिमर्शो भवेत्स्नेहो निर्दोष उभयार्थकृत्" इति दृढबलवचनात्प्रतिमर्शः शोधनोऽपि स्यात्तथाऽपि स्नेहनमेवास्य प्रधानकर्म तेनोक्तं नस्यविकल्पः प्रतिमर्श इति। एवं स्तम्भनस्यावपीडस्य शिरोविरेचनेनाव्याप्तौ समाधेयम्। डल्लणस्त्वेवं व्याख्याति चकारः पुनरत्र शिरोविरेचनस्यापि विकल्पः प्रतिमर्श इत्युक्तं समुच्चिनोति। तथाच दृढबलः— "प्रतिमर्शो भवेत्स्नेहो निर्दोष उभयार्थकृत्" इति॥ २॥

**तत्र यः शून्यशिरसां स्नेहनार्थं ग्रीवास्कन्धोरसां च बलजननार्थं दृष्टिप्रसादजननार्थं वा स्नेहो नासया दीयते तस्मिन्वैशेषिको नस्यशब्दः।**

तत्र नस्यविधौ स्नेहः सर्पिस्तैलवसामज्जाख्यः स च यथास्वगुणैर्वातपित्तकफहरः। तत्र तैलं नस्ये वातकफहरं रक्तपित्तहरं तु क्षीरसर्पिरिति ज्ञेयम्॥ ३॥

अथ नस्यविषयप्रदर्शनम्—

**तत्तु देयं वाताभिपन्ने शिरसि तथा दन्तकेशश्मश्रुप्रशाते दारुणके कर्णशूले कर्णक्ष्वेडे तिमिरे स्वरोपघाते नासारोगे मुखशोषेऽवबाहुकाकालवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेन, इति।**

तत्स्नैहिकं नस्यं वातपित्तहरैर्द्रव्यैः सिद्धेन स्नेहेन देयम्। प्रशाते प्रपाते दारुणक इत्युष्फिकायाम्। तस्य चैकाहान्तरेण सप्ताहं कर्तव्यम्। तदुक्तं चरके—

"त्र्यहात्त्र्यहाच्च सप्ताहमेतत्कर्म समाचरेत्"॥

तस्य कालावधिर्भोजेनाप्युक्तस्तद्यथा—

"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः॥
सप्ताहं तु परं देयं विश्रान्तस्य पुनः पुनः॥

---

१ क. 'षिके न'। २ ङ. 'तश्लेष्मिके'।

पक्षं विंशतिरात्रं वा यावद्वा साधु मन्यते" इति ॥

अपरस्त्वाह—

"त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितः।
परं नवाहमूर्ध्वं तु नवाहात्सात्म्यतां व्रजेत् ॥
तन्नस्यं न गुणं कुर्यात्सात्म्यत्वाद्दोषकृन्न च।
तस्मान्नस्यप्रयोगस्तु स्नैहिको न हितः सदा" इति ॥ ४ ॥

शिरोविरेचनविषयावसरः—

**शिरोविरेचनं तु श्लेष्माभिव्याप्ततालुगलशिरसां तथाऽरोचकशिरोगौरवशूलपीनसार्धावभेदककृमिप्रतिश्यायापस्मारघ्राणाज्ञानेष्वन्येषु चोर्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन स्नेहेन,** इति।

विरेचनानि पिप्पलीविडङ्गशिग्रुसिद्धार्थकापामार्गक्षवककफणिज्जकप्रभृतीनि तत्र शिरोविरेचनद्रव्यैः कृतं नस्यमवपीडाभिधं तत्सिद्धस्नेहेन कृतं शिरोविरेकः। गयी तु शिरोविरेचनद्रव्यसिद्धेन स्नेहेनैव पठति ॥ ५ ॥

**एतद्द्विविधमप्युक्तम् ।**

सुगमम् ॥ ६ ॥

**तत्रोच्चारितमूत्रपुरीषायाभुक्तवते व्यभ्रे काले पाणितापोपस्वेदितगलकपोलललाटप्रदेशायोत्तानशायिने किंचित्प्रलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसे दक्षिणहस्तेन धारया सिञ्चेदिति यथा नेत्रे न प्राप्नोति तथा प्रयतेत।**

एतद्द्विविधमप्युक्तमित्यारभ्य यथा नेत्रे न प्राप्नोति तथा प्रयतेतेत्यन्तं सुश्रुते पाठान्तरम्। तद्यथा तत्रैतद्द्विविधमप्यभुक्तवतोऽन्नकाले पूर्वाह्णे श्लेष्मरोगिणां मध्याह्ने पित्तरोगिणामपराह्णे वातरोगिणाम्। अस्यार्थः—तयोर्द्वयोः स्नैहिकवैरेचनिकयोरवधारणमुद्दिशन्नाह। तद्द्विविधमपि नस्यं पूर्वाह्णमध्याह्नापराह्णेषु कफपित्तवातरोगिणां देयमिति स्वास्थ्यवृत्तिकनस्यकालावधारणं तन्त्रान्तराज्ज्ञेयम्। तथा च वृद्धवाग्भट एव—स्वस्थवृत्ते तु शीते मध्याह्ने शरद्वसन्तयोः पूर्वाह्णे ग्रीष्म इत्यपराह्णे वर्षास्वादित्यदर्शने पुण्यकर्माण्यारभतो बस्तिकर्मान्तरकालमेवेति। अथानन्तरं तद्दानविधानम्। अथ पुरुषाय शिरोविरेचनीयायोच्चारितमूत्रपुरीषायाभुक्तवते व्यभ्रकाले दन्तकाष्ठधूमपानाभ्यां विशुद्धवक्त्रस्रोतसे पाणिना परिस्विन्नगलकपोलललाटप्रदेशाय वातातपरजोहीने वेश्मन्युत्तानशायिने

प्रसारितकरचरणाय किंचित्प्रलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धे स्रोतसि दक्षिणहस्तेन स्नेहमुष्णांशुप्रतप्तं रजतसुवर्णताम्रमणिमृत्पात्रशुक्तीनामन्यतमस्थं प्रनाड्या पिचुना वा सुखोष्णं स्नेहमद्रुतमासिञ्चेदव्यवच्छिन्नधारं यथा नेत्रे न प्राप्नोति ।

"स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत् ।
न कुप्येन्न प्रभाषेत न क्षुयान्न हसेत्तथा ॥
एतैर्हि विहितः स्नेहो न सम्यक्प्रतिपद्यते ।
ततः कासप्रतिश्यायशिरोक्षिगदसंभवः" ॥

अस्यार्थः । स्नेहमिति । स्नेहस्योपलक्षणत्वात्कल्कक्काथादिकमप्यनेनैव प्रकारेण देयम् । दत्तमात्रे च यत्कृत्यं तत्तत्रान्तराज्ज्ञेयम् । तथा च वृद्धवाग्भटः—दत्तमात्रे नस्ये कर्णललाटकेशभूमिगण्डमन्यास्कन्धपाणिपादतलान्यनुसुखं मर्दयेच्छनैः शनैश्चोच्छिन्द्यादिति ॥ ७ ॥

स्नेहस्य चाल्पमध्यमोत्तमं प्रमाणमाह—

**नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः ॥**
**प्रत्येकशो नस्त(नासि)कयोर्नृणामिति च निश्चयः ॥ २ ॥**

प्रत्येकं नासापुटयोरष्टौ बिन्दव एवं षोडश बिन्दव इति हीना मात्रा । बिन्दुरिह प्रदेशिनीपर्वद्वयपरिप्लवनपतितो ग्राह्यः । तथा च सुश्रुतः—नस्यप्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृता इति ॥ २ ॥

**शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्तिताः ॥**

शुक्तिश्च पाणिशुक्तिश्च द्वयोर्नासापुटयोर्मिलित्वा । शुक्तिर्द्वात्रिंशद्बिन्दवो मध्यमा मात्रा । पाणिशुक्तिश्चतुःषष्टिबिन्दव उत्तमा मात्रा । मात्रास्तिस्र इति । यथाक्रमं हीनमध्यमोत्तमाः ॥

**द्वात्रिंशद्बिन्दवश्चापि शुक्तिरित्यभिधीयते ॥**
**द्वे शुक्ती पाणिशुक्तिश्च ज्ञेयाऽत्र कुशलैर्नरैः ॥ ३ ॥**

द्वे शुक्ती इति । चतुःषष्टिबिन्दवः । शालाक्यविदोऽत्राऽऽहुः—

"प्रदेशिन्या निमग्ने द्वे पर्वणी च मतोऽखिलः ।
नस्यकर्मणि तैलादि विज्ञेयो बिन्दुसंज्ञितः" ॥

गयी तु भोजदर्शनात्स्वस्थस्यैव प्रायोगिके नस्ये प्रत्येकं नासापुटयोरष्टौ बिन्दव स्नेहनार्थे तद्द्विगुणाः शुक्तिप्रमाणा इति प्रतिपादयति । तथा च भोजः—

"प्रायोगिकं स्नैहिकं च द्विविधं नस्यमुच्यते।
प्रायोगिके बिन्दवोऽष्टौ स्नैहिके शुक्तिरिष्यते॥
दोषोच्छ्रायं समासाद्य दद्याद्द्वित्रिचतुर्गुणम्" इति।

शिरोविरेचननस्यमानं तु सुश्रुतेनोक्तं तद्यथा—

"चत्वारो बिन्दवः षड्वा तथाऽष्टौ वा यथाबलम्।
शिरोविरेचके स्नेहे नस्यमानं विनिर्दिशेत्" इति॥

प्रत्येकमेव नासापुटयोर्हीनमध्यमोत्तमेष्वेषु दोषपुरुषानलबलेषु चतुःषडष्टबिन्दवः स्नैहिकशिरोविरेचनस्य। तथा च विदेहः—

"चतुरश्चतुरो बिन्दूनेकैकस्मिन्समाचरेत्॥
एषा लघ्वी मता मात्रा तथा शीर्षं विरेचयेत्॥
अध्यर्धां द्विगुणां वाऽपि त्रिगुणां वा चतुर्गुणाम्।
यथाव्याधि विदित्वा तु मात्रां समवचारयेत्" इति॥ ३॥

**शृङ्गाटकमभि[1]व्याप्य स्थापयेन्न गिलेद्द्रवम्॥**
**स्वेदये[2]च्च कपोलादि ततः ष्ठीवेत्पुनः पुनः॥ ४॥**

शृङ्गाटकं नासाकर्णस्रोतोक्षिजिह्वातर्पणीनां शिराणां मध्ये शिरःसंगमं न गिलेन्न पिबेत्। तथा च विदेहः—

"निष्ठीवेन्न पिबेन्नस्यं व्यापदः पिबतास्त्विमाः।
भवन्ति कासश्छर्दिश्च कुत्साऽन्ने वमथुस्तथा"॥

क्वचिन्नस्यपानमप्युक्तं विदेहेनैव—

"क्षीणं मांसं बलं यस्य वातार्तिश्चोर्ध्वजत्रुजा॥
सुदीप्ताग्निः स्नेहसात्म्यः स नस्यं नस्ततः(नासया) पिबेत्।
धातूंश्च तर्पयेद्देहे पीतं नस्यं तु नस्ततः(नासया)" इति।

ततः ष्ठीवेदिति। वदनप्राप्तं मुञ्चेत्। वामदक्षिणयोरिति वाक्यशेषः। तथा च वृद्धवाग्भटः—अनभ्यवहरन्वामदक्षिणपार्श्वयोर्निष्ठीवेत्। एकपार्श्वनिष्ठीवने न शिरो भेषजेन सम्यग्व्याप्यत इति॥ ४॥

पश्चात्कर्माऽऽह—

**भोजयेदनभिष्यन्दि जलमुष्णं च शीलयेत्॥**
**रजोधूममनस्तापस्नानक्रोधादि वर्जयेत्॥ ५॥**

अभिष्यन्द्युपलेपकारि। सुश्रुते नस्ये दत्ते पश्चात्कर्म धूमपानमुक्तम्। तथा च—

---

१ क. 'भिप्लाव्य स्था'। २ क. कपालादि।

"दत्ते च पुनरपि संस्वेद्य गलकपोलादीन्धूममासेवेत्" । तथा च भोजः—वाक्शतादूर्ध्वमुत्थाय धूमं प्रायोगिकं पिबेत्" इति ॥ ५ ॥

स्नैहिकनस्यस्य सम्यग्योगलक्षणमाह—

**लाघवं शिरसो योगे सुखस्वप्नावबोधनम् ॥**
**विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥ ६ ॥**

अतियोगायोगलिङ्गं त्वस्य सुश्रुते दर्शितं तद्यथा—

"कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः ।
लक्षणं मूर्ध्न्यतिस्निग्धे रूक्षं तत्रावचारयेत् ॥
अयोगे वातवैगुण्यमिन्द्रियाणां च रूक्षता ।
रोगाशान्तिस्तु तत्रेष्टं भूयो नस्यप्रयोजनम्" इति ॥ ६ ॥

शिरोविरेचनस्य योगायोगातियोगलिङ्गानि क्रमेणाऽऽह—

**लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः ॥**
**चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥ ७ ॥**

सुगमम् ॥ ७ ॥

**कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः ॥**
**हीनं विशुद्धे शिरसि लक्षणं परिकीर्तितम् ॥ ८ ॥**

सुगमम् ॥ ८ ॥

**मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः ॥**
**शून्यता शिरसश्चापि मूर्ध्नि गाढं विरेचिते ॥ ९ ॥**

मस्तुलुङ्गः शिरसोऽन्तर्घृताकारः ॥ ९ ॥

**हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत् ॥**

हीनशुद्धे मूर्ध्नि कफघ्नमतिशुद्धे तु वातघ्नं कर्म कुर्यात् ॥

**सम्यग्विशुद्धे शिरसि सर्पिर्नस्ये तु योजयेत्[1] ॥ १० ॥**

**सम्यग्विशुद्धे शिरसि सर्पिर्नस्य इति ।** विरेचनजनितवातजयार्थं सर्पिर्नस्यं पित्तप्रकृतौ वातप्रकृतौ तु पक्कं तैलमेव ।**"सम्यग्विरेचिते चापि सर्पिर्नस्ये तु योजयेत्"** इति वा पाठः ॥ १० ॥

नस्यानर्हानाह—

**नस्येन परिहर्तव्या भुक्तवानपतर्पितोऽत्यर्थतरुण[2]प्रतिश्यायी गर्भिणी मद्यद्रवपीतोऽजीर्णी दत्तबस्तिः क्रुद्धो गरार्तस्तृषाभिभूतो बालो वृद्धः श्रान्तो वेगावरोधरतः शिरःस्नातः स्नातुकामश्च, इति ।**

१ क. 'र्नस्यं निवेचयेत्' । २ घ. 'रुणः प्र' ।

अनार्तवे चाभ्रे नस्यधूमौ परिहरेदित्यधिकः पाठो डल्लणभाष्ये। तत्र चकारादार्तवे व्यभ्र इति। नस्येन परिहर्तव्या इत्यादिनिषेधोऽयं प्रतिमर्शं विहाय स हि श्रान्तभुक्तवदादिष्वपि सदा पीयत इति मद्यद्रवपीत(तै)श्च शिरःस्नात इत्यत्र शिर इति विशेषणं स्नातेः शौचमात्रवृत्तेः॥ १॥

**प्रतिमर्शश्चतुर्दशसु कालेषूपादेयः। तद्यथा। कल्योत्थितेन प्रक्षालितमुखेन* गृहान्निर्गच्छता व्यायामव्यवायपथिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्दितवता दिवास्वप्नोत्थितेन सायं चेति।**

**कल्योत्थितेनेति।** प्रातरुत्थितेन। कल्योत्थितत्वादिचतुर्दशकालाभिधानं प्राधान्यात्। विदेहे पुनः सर्वदिनमेवास्य कालो दर्शितः।

तद्यथा—"सूर्यस्य उदयात्पूर्वमायामात्प्रथमान्निशः।
कालोऽस्य दाने सर्वः स्यात्सायं प्रातर्विशेषतः" इति॥

प्रतिकालं च गुणः सुश्रुते वर्णितः। तत्र कल्योत्थितेन सेवितः प्रतिमर्शो रात्रावुपचितं नासास्रोतोगतं मलमुपहान्ति मनःप्रसादं च करोति। प्रक्षालितदन्तेनाऽऽसेवितो दन्तानां दृढतां वदनसौगन्ध्यं चाऽऽपादयति। गृहान्निर्गच्छता सेवितो नासास्रोतसः क्लिन्नतया रजो धूमो वा न बाधते। व्यायाममैथुनाध्वपरिश्रान्तेनाऽऽसेवितः श्रममुपहन्ति। मूत्रोच्चारान्ते सेवितो दृष्टेर्गुरुत्वमपनयति। कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति। भुक्तवता सेवितः स्रोतसां विशुद्धिं लघुतां चाऽऽपादयति। वान्तेनाऽऽसेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्ताकाङ्क्षामापादयति। दिवास्वप्नोत्थितेनाऽऽसेवितो निद्राशेषं गुरुत्वं मलं चापोह्य चित्तैकाग्र्यं जनयति सायं चाऽऽसेवितः सुखनिद्राप्रबोधत्वमिति॥ २॥

प्रतिमर्शस्य प्रमाणमाह—

**ईषदुच्छिङ्घनात्स्नेहो यावद्वक्त्रं प्रपद्यते॥
नस्तो निषिक्तस्तं विद्यात्प्रतिमर्शं प्रमाणतः॥ ११॥**

**वृद्धवाग्भटे** चान्यथा प्रतिमर्शप्रमाणम्।

तथा च—"प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते।
बिन्दुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते।
निहितो यत्र वा स्नेहो न साक्षादुपलभ्यते" इति॥ ११॥

---

* दन्तेनेति सुश्रुतपाठः।

---

१ ङ. °मर्शप्र°।

शिरोविरेचनस्नेहवत्प्रतिमर्शस्नेहोऽपि नाभ्यवहरणीय इति दर्शयितुमाह—

**उच्छिङ्घन्न पिबेच्चैनं निष्ठीवेन्मुखमागतम् ॥ १२ ॥**

उच्छिङ्घन्स्नेहं मुखमागतं निष्ठीवेन्न पिबेत् । निष्ठीवेन्मुखमागतमित्यस्याग्रे विदेहोक्तं ग्रन्थमधिकं श्रीब्रह्मदेवः पठति—

"इत्येवं स्नेहनस्याख्यः प्रतिमर्शः प्रकीर्तितः ॥
स्नेहेनासंस्कृतेनैष कर्तव्यः संस्कृतेन वा ॥
नस्यं तु संस्कृतेनैव दातव्यं भिषजां वरैः" इति ॥ १२ ॥

इदानीं सामान्येन नस्यफलमाह—

**नस्येन रोगाः शाम्यन्ति नराणामूर्ध्वजत्रुजाः ॥**
**इन्द्रियाणां च वैमल्यं कुर्यादास्यं सुगन्धि च ॥ १३ ॥**
**हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम् ॥**
**वलीपलितखालित्यव्यङ्गानां चाप्यसंभवम् ॥ १४ ॥**

सुगमम् ॥ १३ ॥ १४ ॥

नस्ये दोषभेदेन स्नेहविभागमाह—

**तैलं कफे सवाते च केवले पवने वसाम् ॥**
**दद्यात्सर्पिः सदा पित्ते मज्जानं च समारुते ॥**
**चतुर्विधस्य स्नेहस्य विधिरेष प्रकीर्तितः ॥ १५ ॥**

मारुतोत्तरे पुरुषे सदा रूक्षित इति केचित् । दद्यात्सर्पिः सदा पित्ते मज्जानं च समारुत इत्यस्य स्थाने दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जां समारुत इति पाठान्तरे मज्जामिति निर्देशो मज्जाशब्दस्यापि सद्भावात्साधुः ॥ १५ ॥

**श्लेष्मस्थानाविरोधित्वात्तेषु तैलं विशिष्यते ॥ १६ ॥**

यथादोषव्याधिप्रत्यनीकसिद्धमित्यध्याहार्यम् । शिरसः श्लेष्मस्थानत्वेन सर्वत्र संसर्गाच्छ्लेष्मणः श्लेष्माणि च प्रत्यनीकत्वादविरोधि तैलम् । घृतादयस्तु कफतुल्यगुणत्वाद्विरोधिनस्तेन तैलं श्रेष्ठम् । अयं भावः । वाते श्लेष्मणि च यौगिकमेव तैलं पित्ते पित्तहरद्रव्यसंयुतं तैलमेव समधिककफानुरोधात्कर्तव्यमिति ॥ १६ ॥

शिरोविरेचनावपीडस्य विषयमाह—

**विषाभिभूतसंन्यासमूर्छामोहापतन्त्रके ॥**
**मदापस्मारशोकार्तिचिन्ताक्रोधभयादिषु ॥ १७ ॥**
**मानसेषु च रोगेषु मूढव्याकुलचेतसाम् ॥**
**संज्ञाप्रबोधहेत्वर्थमवपीडं प्रदापयेत् ॥ १८ ॥**

संपिष्टभेषजमवपीड्य दीयत इत्यवपीडः। संन्यासो मूर्च्छाविशेषः। मानसो रोग उन्मादादिः। मूढव्याकुलचेतसामिति। उक्तरोगेषु मूढव्याकुलमनस्कत्वे संज्ञार्थमवपीडः। मूढं विसंज्ञं व्याकुलं विक्षिप्तम्। पिप्पलीविडङ्गादिशिरोविरेचनद्रव्याणामेकतमं पिष्ट्वा कल्कमथवैषां क्वाथेनाक्तं पिचुनक्तकमवपीड्य शिरोविरेचनवद्यथाक्रमं चतुःषडष्टबिन्दुप्रमाणं हीनादिमात्रावपीडं दद्यात्। तस्य च विषार्तादीनां संज्ञाप्रबोधनत्वेन रक्तपित्तादीनां स्तम्भनत्वेन द्वैविध्यं प्रधमनप्रयोगविषयावधारणम्॥ १७॥ १८॥

नस्ततो(नासया) विधमेच्चूर्णं त्रिमुच्चूटिमितं कटु॥
षडङ्गुलद्विमुखया नाड्या विषादिमूर्छिते॥ १९॥

चूर्णं विधमेत्। विषादिमूर्छित इति। विषचेतोविकारकृमिविसंज्ञे।

अत्राऽऽह विदेहः—

"नाडी षडङ्गुलायामा द्विमुखी च तया धमेत्।
त्रिश्चूर्णं मुच्चुटीमात्रमेष प्रधमने विधिः॥
शुक्तिमात्रं तु जिघ्रेद्वा बद्धं सूक्ष्मेण वाससा" इति।

त्रिमुच्चूटिमितमिति। अङ्गुलीत्रयाग्रपर्वमितम्। एकवारस्य मात्रेयं यावच्च न प्रबुध्यते तावद्दद्यात्। तर्जन्यङ्गुष्ठाग्रमात्रं ग्राह्यं चूर्णं मुचूटीमात्रमिति ब्रह्मदेवः॥१९॥

स्तम्भनावपीडनविधिमाह—

शर्करेक्षुरसक्षीरघृतमांसरसान्पृथक्॥
क्षीणानां नस्ततो(नासया) दद्याद्रक्तपित्तगदेषु च॥ २०॥

सुगमम्॥ २०॥

इति श्रीवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामष्टसप्ततितमो नस्याधिकारः समाप्तः॥ ७८॥

---

## अथोनाशीतितमः कवलाधिकारः।

नस्यवच्छोधनः स्नैहिकश्च कवलो भवत्यतः कवलविधिः। स्नैहिकप्रसादिशोधिरोपणभेदेन चतुर्धा कवलानाह—

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः॥
पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे॥
कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे॥ १॥

---

१ क. 'स्ततः प्रध'।

ननु च तन्त्रान्तरीयैः षड्विधः कवलः पठितः। तथा च कृष्णात्रेयः। तत्र कवलग्रहः स्नैहिको रोपणीयो वैरेचनः स्तम्भनः शोधनो निर्वापणश्च। तत्र सर्पिर्वसामज्जातैलसंयुक्तः स्नैहिकस्तिक्तकषायद्रव्यै रोपणः कट्वम्ललवणो रेचनो मधुकषायशीतैः स्तम्भनः कटुतिक्ताम्लैः शोधनीयो मधुरशीतैर्निर्वापणीय इति। अत्रोच्यते। शास्त्रस्य कर्तुरयमभिप्रायो वैरेचनस्य शोधनेऽन्तर्भावः स्तम्भनस्य प्रसादन इति नातिरेकः॥ १॥

**सुखं संचार्यते या तु मात्रा सा कवले मता॥**

सुगमम्॥

कवलग्रहाद्गण्डूषस्याल्पं भेदमाह—

**असंचार्या तु या मात्रा गण्डूषे सा प्रकीर्तिता॥ २॥**

सुगमम्॥ २॥

कियन्तं कालं धारणीयस्तमाह—

**तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन संचारयितव्यश्च। यावद्दोषपरिपूर्णगलकपोलत्वं नासास्रोतोनयनपरिप्लवश्च भवति तदा विमोक्तव्यः। अन्यश्चान्यो ग्रहीतव्य इति॥**

दोषोऽत्र कफः। नासास्रोतो नासारन्ध्रम्। अन्यश्चान्यो ग्रहीतव्य इति। आ शुद्धिलिङ्गात्। अत्र सुश्रुतेन मुखस्य कफस्थानत्वात्कफहरः शोधन एव कवलस्त्रिकटुकादिभिर्द्रव्यैर्दर्शितः। तद्यथा। तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलशुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुपस्विन्नमृदितगलकपोलललाटप्रदेशो धारयेदिति॥ १॥

इदानीं शोधनकवलस्य विधानं स्नेहादिष्वपि निर्दिशन्नाह—

**एवं स्नेहपयःक्षौद्ररसमूत्राम्लसंभृताः॥**
**कषायोष्णोदकाभ्यां च कवला दोषतो हिताः॥ ३॥**

संभृताः सम्यक्कृताः[1]। कवला इति। त्रीन्पञ्च सप्त कवलान्धारयेदिति तन्त्रान्तरीयाः। दोषत इति। दोषानुरूपा योज्याः। तेन स्नेहो वाते क्षीरं पित्ते क्षौद्रं कफ इति। एवं मांसरसादयोऽपि यथादोषं ज्ञेयाः। डल्हणस्त्वेवं व्याख्याति—दोषत इति। दोषव्याधिप्रत्यनीकभावेन। दोषग्रहणेन व्याधिः परिगृह्यते कार्ये कारणोपचारात्। शालाकिभिस्तु प्रतिदोषं पठितानि द्रव्याणि। तथा च कृष्णात्रेयः—अथ द्रव्यप्रविभाग एष वातघ्नैर्भेषजैः सिद्धः स्नेहः क्षीरं बलेमु(ऽनु)ष्णं क्षीरं चाम्ललवणौ वाते पटोलमधुकशर्करानीलोत्पलक्षीरेक्षुरसशर्करोदकघृतादीनि पैत्तिके त्रिकटुसर्षपसैन्धवैलाशुक्तं किराततिक्तक-

---

१ घ. स्मृता।

तेजोवतीहरिद्रागोमूत्रलवणोष्णोदकानि श्लैष्मिके । एतान्येवोत्कर्षापकर्षतः संसर्गे संनिपाते वा कवलग्रह इति । तस्य दोषबलाबलाभ्यां पञ्चसप्तवा(रं) धारणमिति ॥ ३ ॥

इदानीं योगादिलक्षणमुद्दिशन्नाह—

**व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ॥ ४ ॥**
**इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥**
**हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च ॥ ५ ॥**

सुगमम् ॥ ४ ॥ ५ ॥

**अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः ॥**
**शोधनीयैर्विशेषेण भवत्येतत्तु लक्षणम् ॥ ६ ॥**

अत्र स्थानत्वेन शोधनीयमेव प्रधानं तेन व्याधेरपचय इत्यादि शुद्धिलक्षणं विशेषेण शोधनीयस्य सामान्येन पुनः स्नैहिकादीनामपि मुखपाकादिषु शोधनीयस्यैव शेषाणां तु द्रव्यगुणादूह्यम् ॥ ६ ॥

आगन्तुकस्य क्षारादिदाहस्य कवलमुद्दिशन्नाह—

**तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ॥**
**सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ॥ ७ ॥**

योगोऽयं व्यस्तः समस्तश्च योज्यः । यदाह विदेहः—

"गण्डूषः शर्करा क्षौद्रघृतोत्पलपयास्तिलैः ॥
व्यस्तैः समस्तैर्योज्यस्तु मुखे क्षारादितापितः" इति ॥

**दग्धवक्त्रस्येति** । क्षारादिना ॥ ७ ॥

**कवलस्य विधिर्ह्येष समासेन प्रकीर्तितः ॥ ८ ॥**

समासेन संक्षेपेणेत्यर्थः । विस्तरस्तु विदेहादिष्ववगन्तव्य इति ॥ ८ ॥

कवलवद्योगायोगसंभवात्प्रतिसारणमाह—

**विभज्य भेषजं बुद्ध्या कुर्वीत प्रतिसारणम् ॥**
**कल्को रसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम् ॥ ९ ॥**

प्रतिसार्यते घृष्यतेऽनेनेति प्रतिसारणम् । रसक्रिया फाणिताकृतिः । भेषजं रसवीर्यगुणविपाकैर्वातादिदोषांस्तदारब्धरोगांश्च प्रविभज्य कल्कादिभेदेन चतुर्विधं प्रतिसारणम् ॥ ९ ॥

**अङ्गुल्या घर्षणं यत्तत्प्रतिसारणमुच्यते ॥**
**अङ्गुल्यग्रप्रणीतं तु यथास्वं मुखरोगिणाम् ॥ १० ॥**

अङ्गुल्यग्रप्रणीतमङ्गुल्यग्रोपढौकितम् । यथास्वं यद्यत्र प्रतिसारणं विहितं तत्तत्रैव

१ घ. °शान्नार° ।

मुखरोगिणां कुर्वीत। अङ्गुल्या प्रणीतत्वेन कोलास्थिमात्रत्वं प्रतिसारणस्य सूचयति। तथा च शालाक्ये—कोलास्थिमात्रेण पिण्डेन यथादोषं यथाव्याधि पञ्चसप्तनववारान्हीनमध्यमोत्तमेषु व्याधिषु च प्रतिसारणं कुर्वीत न चैनमतिघर्षयेदतिघर्षणात्तृषाचोषदाहक्लेदश्वयथुतृष्णाभक्तच्छन्दवाक्सङ्गा भवन्त्यसम्यक्प्रतिसारणात्पैच्छिल्यगुरुत्वानन्नाभिलाषप्रमोहविकारानुपशर्माः। सम्यक्प्रतिसारणाद्वैशद्यं लाघवं क्षवथुरप्रसेकोऽन्नाभिलाषश्चेति ॥ १० ॥

तस्मिन्योगमयोगं च कवलोक्तं विभावयेत् ॥
भोजयेच्चानभिष्यन्दि दोषघ्नमशनं परम् ॥ ११ ॥

योगादन्योऽयोगः स पुनर्हीनयोगोऽतियोगश्च। अयोगं चेति चकारेणायोगातियोगचिकित्सितमनुक्तं समुच्चीयते ॥ ११ ॥

तानेव शमयेद्व्याधीन्कवलो यानपोहति ॥ १२ ॥

येन दोषेण वातादिना मुखरोग आरब्धः। कवलग्रहादिषु च विशेषः कृष्णात्रेयेण दर्शितस्तद्यथा—

"सप्तवर्षमुपादाय नस्त(स्य)कर्म चतुर्विधम् ॥
प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते ॥
धूमो द्वादशवर्षस्य कवलः पञ्चमे ततः ॥
दोषव्याधिबलावस्थां वीक्ष्य चैतान्प्रयोजयेत्" इति ॥ १२ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकोनाशीतितमः कवलाधिकारः समाप्तः ॥ ७९ ॥

---

## अथाशीतितमोऽरिष्टाधिकारः।

---

यदेतत्प्राक्प्रतिपादितं चिकित्सितं तदसाध्यपरिहारेण विहितं परं सिध्यति। असाध्यताज्ञानं च प्रायेणारिष्टात्। अतोऽरिष्टाधिकारः ॥

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ॥
ख्यापयन्ति भविष्यत्वं रिष्टानि मरणं तथा ॥ १ ॥

पुष्पादयोऽत्राव्यभिचारिविशेषाद्विवक्षिताः। भविष्यत्वमिति पुष्पाम्बुदापेक्षम्। धूमस्तु वर्तमानमेवाग्निं बोधयति। अथ सोमटिप्पणव्याख्यानम्—नियतानियतभेदेन द्विविधमरि-

---

१ घ. तस्य योगा।

ष्टमाह—फलान्मीत्यादि । पञ्चतामिति पाठे मृत्युं भाविनमिति शेषः । नन्वत्र किमर्थं पुष्पधूमाम्बुदा इति बहवो दृष्टान्ता उक्ता एकेनैवार्थसिद्धेः । उच्यते । पुष्पाम्बुदौ हेतू ज्ञापकावनियतौ न ह्यत्रावश्यं कारणेन कार्यं कर्तव्यमेव कुतोऽपि व्यभिचारदर्शनादित्यनेनानियतदृष्टान्तेन दूतादिनिमित्तजमरिष्टमनियतमुक्तम् । धूमात्कार्यादग्नेः कारणस्य यज्ज्ञानं तन्नियतं नियतप्राक्कालभाविभ्यः कारणेभ्यो नियतोत्तरकालभावित्वात्कार्याणाम् । अत एव यत्र धूमस्तत्र वह्निरित्यावश्यकी व्याप्तिरित्यनेन नियतदृष्टान्तेन दोषजमरिष्टं नियतमुक्तम् । श्रीजैज्जटस्त्वाह—नन्वरिष्टमागामिनो मरणस्य लिङ्गं तत्किं क्वापि व्यभिचरद्दृष्टमुत न । अत्रोच्यते । व्यभिचारानुपपत्तिर्ध्रुवं त्वरिष्टे मरणमिति वचनात् । भट्टारकहरिश्चन्द्रप्रभृतिभिस्तु नियतानियतभेदेन द्विविधं ह्यरिष्टमभिहितम् । तथा हि चरके मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुरित्यत्र नियतमरिष्टमुक्तम् । संयशप्राप्तमात्रेयो जीवितं तस्य मन्यत इत्यनियतम् । तत्र—

"न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।
मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" इति ॥

यत्र व्यभिचारस्तत्र प्रज्ञापराध एव न सम्यग्ज्ञानम् ॥

तदुक्तम्—"मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता ।
अरिष्टं नापि संबुद्धमेतत्प्रज्ञापराधजम्" इति ॥

यत्पुनर्मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुस्तथा संशयप्राप्तमात्रेयो जीवितं तस्य मन्यत इति कृतवान् । अयमुक्तिविशेषो न पुनरर्थकृतस्तत्र भेदोऽस्ति । अत्रायमभिसंधिः । असावेवमरिष्टोपलक्षितः प्रत्यासन्नमृत्युः । यदपि किंचित्कालमायुषः शेषत्वाज्जीवति तदपि तस्य संशयितं परमार्थतस्तु मृत एवासाविति । आधितानां विनाशाय क्लेशाय महतेऽपि वेत्यदः कथमिति चेत् । तन्न । न खल्वस्यायमर्थो यथा सर्वस्यैव वायवी छाया विनाशाय भवति किं तु यस्य पूर्वं प्राकृती छाया सीतां चोल्लङ्घ्य यद्यकस्माद्वायवी जायते तदाऽसौ मारयति । यद्यत्र पुनराप्रसूतेः प्राक्तनकर्मापेक्षजाता विशिष्टभूतपरिणामेन कृता सैव प्राकृती तस्य क्लेशान्महतोऽपि नित्यमेवाऽऽपादयति गर्हितलक्षणत्वात् । वक्ष्यति हि—वायवी गर्हिता तासां चतस्रः स्युः सुखोदया इति । अयं च च्छायालक्षणनिर्देशः पूर्वकृत एव प्राकृतोऽनन्तरं तु वैकृतः प्रकृतिनान्तरीयकत्वाद्विकृत्यवगतेः । स्वस्थस्तु लभते व्याधिं व्याधितो मृत्युमाप्नुयात् । इदं तु कथमिति चेत् । अत्रोच्यते । नेदमरिष्टं व्याधिजनकमात्रमेव चिह्नयति । अपि तु यो हि व्याधितस्तस्य मरणं स्वस्थस्य तु व्याध्युत्पादपूर्वकमरणम् । न ह्यननुपायं जात्वपि मरणं संभवति । गृह्णन्ते नोद्धृतान्यज्ञैर्मुमूर्षोर्नेत्वसंभवात् । ध्रुवं त्वरिष्टे मरणमिति । यच्च तैरेव नियतायुर्विषयाण्यरिष्टानीति व्याख्यायि । नैतदेव । अनियतायुर्विषयाण्येव ह्यरिष्टानि

मन्यामहे। नियतायुःपरिणतिप्रकाशकानि पुनरन्यान्येव लिङ्गानि सन्ति। तथा हि—यानसमायुक्तोऽक्षः प्रकृत्यैवाक्षगुणैरुपेतः सर्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानमुपैति तस्यैवंविधस्यापि तु दीर्घकालप्रवहणादवमृष्यमाणस्य रजःशकलाद्युत्पत्तेः श्लक्ष्णत्वापत्यादीनि लिङ्गान्यवसानगमकानि संभवन्ति। तथाऽऽयुषोऽप्यानिषेकाद्यथावदुपचर्यमाणस्य स्वप्रमाणक्षयादेवावसानमुपेयुषः क्षीयमाणधात्विन्द्रियबलवीर्यत्वादीनि नियतमृत्योः पुरःसराणि लिङ्गानि प्रादुर्भवन्ति। तत्त्वतस्तु निरूप्यमाणान्यनियतायुषा एवारिष्टान्युपलक्ष्यन्ते। यथा तस्यैवाक्षस्यातिभाराधिष्ठितत्वादिभिः पर्यवसानहेतुभिर्वा हन्यमानस्य कटकटायनरथाङ्गस्खलनसंघट्टनादीनि लिङ्गान्यासन्नभङ्गगमकानि लक्ष्यन्ते तद्वदयथाबलमारम्भादिभिरप्यङ्गभङ्गादीनि लिङ्गानि लक्ष्यन्त एव। सति चैवम्—

"एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः" ॥

इत्यपि साधु स्यात्। किं च नियतायुर्विषयाण्यरिष्टानि चेति माता मे वन्ध्येत्यादिवान्यवव्याहतं वचनम्।

अपि च—"अप्येव तु भवेत्पुष्पं फलेनाननुबन्धि यत्।
फलं चापि भवेत्किंचिद्यस्य पुष्पं न पूर्वजम् ॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते।
मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" इति ॥

तस्मान्नियतानियतान्युभयविषयाण्यरिष्टानीति स्थितम्। जलग्रहणं पांश्वादिवृष्टिविच्छेदनाय ॥ १ ॥

यत्र क्वचिदरिष्टानि नोपलभ्यन्ते मरणं च दृश्यते तत्राप्यरिष्टसद्भावं दर्शयन्नाह—

**तानि सौक्ष्म्यात्प्रमादाद्वा तथैवाऽऽशु व्यतिक्रमात् ॥**
**अज्ञानाच्च न गृह्यन्ते मुमूर्षोर्न त्वसंभवात् ॥ २ ॥**

प्रमादादनवधानात्। आशु व्यतिक्रमाच्छीघ्रमपगमात्। अज्ञानादरिष्टत्वेनानवबोधात्। गृह्यन्ते नोद्गतान्यज्ञैरिति पाठे **डल्हणो** व्याख्याति। अवश्यमरिष्टपुरस्सरमेव मरणमाह—**तानीति**। मुमूर्षोर्मर्तुमिच्छोः प्राणिन उद्गतान्यपि प्रकटितान्यप्यरिष्टान्यज्ञैर्मनुष्यैर्न गृह्यन्ते न ज्ञायन्ते। कुतो हेतोरित्याह—**सौक्ष्म्यादिति**। परमाणुवत्। प्रमादादनवधानतो मदिरामदमत्तस्य वस्तुन्यमर्ष इव। **आशु व्यतिक्रमादिति**। तदैवारिष्टमुत्पन्नं तदैव मरणादिति, उत्पलशतपत्रद्युतिभेदवत्। **अन्ये** त्वाशु व्यतिक्रमं तदैवारिष्टमुत्पन्नं तदैव निवर्तत इति मन्यन्ते। **न त्वसंभवादिति**। अत्रायमभिप्रायः। संभवन्त्येवारिष्टानि पूर्वोक्तकारणेभ्यः पुनरज्ञैर्न ज्ञायन्ते ॥ २ ॥

अरिष्टे मरणदोषव्यभिचारमाह—

**न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ॥**
**मरणं चापि तन्नास्ति यन्नारिष्टपुरस्सरम् ॥ ३ ॥**

जातस्य नियतिसंपूर्णस्य । क्वचिदुदिते ह्यसंपूर्णेऽरिष्टे नावश्यं मृत्युरिति चक्रः। जातस्य नियतस्येति केचित् । रिष्टं हि मरणे नियतमनियतं च भवति । नियतं यथा—मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुरिति । अनियतं यथा—संशयप्राप्तमात्रेयो जीवितं तस्य मन्यत इति । नियतं रिष्टमभिप्रेत्य सुश्रुतेनोक्तम्—ध्रुवं त्वरिष्टे मरणमित्यादि । अन्ये रिष्टं मरणे नियतमेवाऽऽहुः—ध्रुवं त्वरिष्टे मरणमिति वचनात् । रसायनादिभिस्तन्निवारणेन रिष्टस्य मरणव्यभिचारो न वाच्यः। रसायनादयो हि प्रभावप्रकर्षशालित्वादसीमकर्माणः किमशक्यं तेषाम् । तथा हि—सोमरसायनं दशवर्षसहस्राणि जीवयति । यदाह भगवान् सुश्रुताचार्यः—

"ओषधीनां पतिं सोममुपयुज्यैवमक्षतः ।
दशवर्षसहस्राणि नवां धारयते तनुम्" इति ॥

तपसा भगवानगस्त्यः समुद्रं गण्डूपपुटपेयमकरोत् । मन्त्रप्रभावश्च प्रसिद्ध एव । अतोऽव्यभिचारेण व्यवस्था शास्त्रे । रसायनादिव्यतिरिक्तचिकित्सया चासाध्यमेवारिष्टम् । संशयप्राप्तमित्यादिरिष्टमपि नियतमरणमेव । यतः प्राप्तरिष्टस्य यदपि जीवितं तदपि संशयितं मृतप्रायः प्राप्तारिष्ट इति वर्णनीयः । भट्टारकहरिश्चन्द्र आह—अजातमरिष्टं न मरणव्यापकमित्यतो लब्धमपि जातस्येति पदं यत्कृतं तद्बोधयति—कालमृत्यौ परं रिष्टं नाकालमृत्यौ त्वरिष्टं भवतीति । यद्यकालमृत्यौ रिष्टं स्यात्तदा सत्यपि रिष्टे शुभक्रियया मृत्युप्रतिबन्धे ध्रुवो भावी रिष्टे मृत्युर्न स्यात् । अकालमृत्युर्ह्युचितानाचरणात्परं भवतीति । अत्राऽऽहुरेके—अकालमृत्यावप्यरिष्टं भवत्येव, अविशेषेण मरणमात्रे रिष्टनियमाभिधानात् । यत्तूक्तमकालमृत्यौ सत्यपि रिष्टे य(त)दा शुभक्रियया मृत्युप्रतिबन्धः स्यादिति । तन्न युक्तम् । न ह्यकालमृत्युः सर्वदैव शुभक्रियया बाध्यः । किं तूचिते कालेऽकालमृत्यौ च तदैवारिष्टं यदा क्रियापथातिक्रान्तदोषता स्यात् । अत एवोक्तम्—क्षणेन हि रिष्टानि प्रादुर्भवन्तीति ॥ ३ ॥

**ध्रुवं त्वरिष्टे मरणं ब्राह्मणैस्तत्किलामलैः ॥**
**रसायनतपोजप्यतत्परैर्वा निवार्यते ॥ ४ ॥**

अमलैर्दोषरहितैः । रसायनमिह स्वाभाविकव्याधिवारणमपेक्षितम् । अथ डल्हणव्याख्यानम्—दोषजमरिष्टमधिकृत्य रिष्टे मरणस्य नियतत्वं दर्शयन्नाह—ध्रुवमित्यादि । रिष्टेऽपि मरणनिवृत्तिमुपायविशेषैराह—ब्राह्मणैरिति । किलशब्दोऽत्राऽऽगमार्थं सूचयति । एवं किलाऽऽगमप्रतिपादितमित्यर्थः । अमलैरिति । रागादिदोषरहितैः ।

ब्राह्मणेभ्योऽपरानपि दर्शयन्नाह—**रसायनेति**। रसायनपरा इति स्वभावव्याधिनिवारणविशिष्टौषधचिन्तकास्ते रसवीर्यौषधप्रभावेन मरणं निवारयन्ति। तथा परं तपःपरा इति तपस्विनः। त इह विशिष्टतपःप्रभावेन मरणं निवारयन्ति। तथा जप्यपराः सिद्धमन्त्रचिन्तकास्तेऽपि मन्त्रशक्तियुक्ताः पञ्चत्वं निषेधयन्ति। एतच्च नियतानियतरिष्टविषयं ज्ञेयम्। अस्यैव श्लोकस्य सोमटिप्पणोक्ता व्याख्या लिख्यते—रिष्टोत्पत्तौ मृत्योर्नियममाह—**ध्रुवं तु मरणं रिष्ट इति**। कदाचिद्दूतस्वप्नादौ निवृत्तिमाह—**ब्राह्मणैरित्यादि**। प्रकारान्तरमाह—**रसायनेत्यादि**। रसायनपराः स्वभावव्याधिप्रतिषेधकविशिष्टौषधचिन्तकाः। तपःपरास्तपस्विनः। जप्यपराः सिद्धमन्त्रचिन्तकाः। एते हि महौषधितपःसिद्धमन्त्रप्रभावैर्मरणं निवारयन्ति ॥ ४ ॥

रिष्टाज्ञाने दोषमाह—

**असिद्धिं प्राप्नुयाल्लोके प्रतिकुर्वन्गतायुषम् ॥**
**तस्माद्यत्नेन रिष्टानि लक्षयेत्कुशलो भिषक् ॥ ५ ॥**

**असिद्धिमिति**। धर्मार्थकामानां हानिम् ॥ ५ ॥

अथाप्रशस्तदूतानाह—

**नपुंसकं स्त्री बहवो नैककार्या असूयकाः ॥**
**पाशदण्डायुधधराः पाण्डुरेतरवाससः ॥ ६ ॥**
**आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवाससः ॥**
**न्यूनाधिकाङ्गा उद्विग्ना विकला रौद्ररूपिणः ॥ ७ ॥**
**रूक्षनिष्ठुरवक्तारस्त्वमङ्गल्याभिधायिनः ॥**
**छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ॥ ८ ॥**
**वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ॥**
**कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ॥ ९ ॥**
**विलिखन्तो महीं किंचिन्मुञ्चन्तो लोष्टभेदिनः ॥**
**तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ॥ १० ॥**
**फलं पक्वमसारं वा गृहीत्वाऽन्यच्च तद्विधम् ॥**
**नखैर्नखान्तरं वाऽपि करेण चरणौ तथा ॥ ११ ॥**
**उपानच्चर्महस्ता वा विकृता व्याधिपीडिताः ॥**
**वामाचारा रुदन्तो वा श्वासिनो विकृतेक्षणाः ॥ १२ ॥**
**याम्यां दिशि प्राञ्जलयो विषमैकपदे स्थिताः ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १३ ॥**

एवंभूताश्च दूता व्याधेरवगाढतां सूचयन्ति। न त्वेतेन तत्त्वतो रिष्टं निमित्तानुरू-

पायाः शीलशरीरविकृतेः। यदाह भगवान्सुश्रुताचार्यः—अरिष्टत्वान्निमित्तानुरूपेति। निमित्तार्थकारिणी, अलक्ष्यमाणविशिष्टनिमित्तार्थं करोतीति यावत्। यां तामनिमित्तां निमित्तमायुषो गतस्य ज्ञानार्थमिच्छन्ति भिषज इति। **नपुंसकमिति**। न पुमान्न स्त्री। **स्त्रीति**। योषिदित्यर्थः। **बहव इति**। प्रभूता इत्यर्थः। नैककार्या इत्यन्यकार्या नैकस्मिन्कार्ये ये दूताः समागता इत्यर्थः। असूयकाः परस्परं कलहकारिणः। वेषमधिकृत्याऽऽह—**पाशेत्यादि**। पाशो दीर्घः पशूनां बन्धनरज्जुः। दण्डो लोहादिवलयैर्निबद्धो निष्ठुरकाष्ठयष्टिः। आयुधानि खड्गशक्त्यादीनि। **पाण्डुरेतरवासस इति**। कृष्णपीतरक्तवस्त्राः। **आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवासस इति**। आर्द्रं स्तिमितम्। जीर्णं पुरातनम्। अपसव्यं दक्षिणाश्रितमुत्तरीयं वासः। *एकमेकवस्त्रधारिणम्। मलिनमधौतम्। उद्ध्वस्तं पाटितम्। अन्ये—**उद्ध्वस्तवासस इति**। ऊर्ध्वक्षिप्तवस्त्राः। उद्धतवासस इति पाठान्तरेऽप्ययमेवार्थः। न्यूनाङ्गा इति हस्ताद्यवयवैर्हीनाः। अधिकाङ्गा इति, एकविंशत्यङ्गुल्यादियुताः। उद्विग्ना उद्भीताः। विकलाः शोकातिदुःखिताः। **रौद्ररूपिण इति**। भैरवोद्धतकर्कशाः। दूतसंभाषणमधिकुर्वन्नाह—**रूक्षनिष्ठुरवक्तार इत्यादि**। रूक्षं मैत्रीरहितं वचः। निष्ठुरं कठोरवचनम्। **अमङ्गल्याभिधायिन इति**। गतमृतनष्टरुदितेत्यादिवचनममङ्गलम्। चेष्टितमधिकृत्याऽऽह—**छिन्दन्तस्तृणकाष्ठानीत्यादि**। वस्त्रान्तो दशाहीनस्य वस्त्रस्यान्तम्। अनामिका पवित्राङ्गुलिः। केशा मस्तकवालाः। रोमाणि शरीरोद्भवा वालाः। दशाः सदशस्य वस्त्रस्य प्रान्ताः। नखरोमदशास्पृश इत्यस्य ग्रन्थस्याग्रे—'स्रोतोवरोधहृद्गण्डमूर्धोरःकुक्षिपाणयः' इति सुश्रुतेऽधिकः पाठः। तत्र स्रोतोवरोधादिषु निक्षिप्तपाणयः। स्रोतः कर्णादिच्छिद्रम्। अवरोधः स्कन्धदेशः। हृत्कमलमुकुलाकारमधोमुखम्। गण्डो गल्लः। मूर्धा मस्तकम्। उरः कण्ठहृदयान्तरालः। कुक्षिर्वङ्क्षणपार्श्वान्तराल इति। **कपालोपलेत्यादि**। करशब्दः कपालादिभिः प्रत्येकं संबध्यते। तेन कपालादिकरा इति बोद्धव्यम्। कपालो बृहद्भाण्डखण्डः। उपलः पाषाणः। भस्मेति दग्धकाष्ठादिक्षारः। अस्थि हड्डम्। तुषो धान्यादित्वचः। अङ्गारो भस्मसात्कृतो दग्धमांसखण्डः। **विलिखन्तो महीमिति**। नखादिना विदारयन्तः पृथिवीमित्यर्थः। **किंचिन्मुञ्चन्त इति**। किंचिद्वस्तु हस्तेन गृहीतं मुञ्चन्तः। **लोष्टभेदिन इति**। मृत्पिण्डस्फोटनशीला इत्यर्थः। **दिग्धाङ्गा इति**। लिप्ताङ्गा इत्यर्थः। रक्तस्रगनुलेपना रक्तमालाधारिणो रक्तविलेपनाश्चेत्यर्थः। **फलमित्यादि**। असारमित्यभ्यन्तरसारवर्जितम्। **अन्यच्च तद्विधमिति**। अन्यदपि वस्तु पक्वमसारं च। असारं निष्प्रयोजनम्। नखैर्नखान्तरं वाऽपि करेण चरणौ तथा, इत्यत्र गृहीत्वेति संबन्धः। **उपानदित्यादि**।

---

+ एकमद्वितीयमित्यपेक्षितम्।

उपानत्पादत्राणं चर्म वर्ध्रमयसन्नाहादि । उपानच्चर्मणी हस्ते येषां ते तथा । विकृता विकृतवेषाः । अथवाऽपि विकृताः पङ्गुकुब्जवामनादयः । विकृतव्याधिपीडिता इति सुश्रुते पाठः । तत्र गलत्कुष्ठादिविकृतव्याधिपीडिताः । **वामाचारा इति** । विपरीतव्यवहाराः । **श्वासिन इति** । अध्वजनितश्वासयुक्ताः । **विकृतेक्षणा इति** । पुष्पितनेत्रादयः । **याम्यामित्यादि** । याम्यां दिशि दक्षिणस्यां दिशि । प्राञ्जलयः प्रसारिताञ्जलयः । **विषमैकपदे स्थिता इति** । विषम एकस्मिन्स्थान ऊर्ध्वीभूताः । उपसर्पन्ति समीपं गच्छन्ति । गमनाय प्रश्नाय वाऽऽगताः पुरुषा दूताः ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

**मांसोदकुम्भातपत्रविप्रवारणगोवृषाः ॥**
**शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ १४ ॥**

मांसमत्राऽऽमम् । उदकुम्भ उदकपूर्णकुम्भः । तुच्छकुम्भमपि जलार्थं नीयमानं मङ्गल्यमाहुः ।

तदुक्तम्—"चिकित्सकस्य चौरस्य तथैवाध्ययनार्थिनः ।
प्रशस्तो यदि दृश्येत जलार्थं रिक्तको घटः" इति ॥

अत्रार्थे डल्लणव्याख्या । **उदकुम्भ इति** । अत्रोदकुम्भशब्देन पूर्णो रिक्तश्च घटो गृह्यते । तत्राऽऽतुरगृहे प्रविशन्पूर्ण आतुरगृहान्निःसरन्रिक्त इति गृह्यते । अथ सोमटिप्पणव्याख्या—**उदकुम्भेति** । आतुरगृहे प्रविशतः पूर्ण आतुरगृहान्निःसरतो रिक्तः शस्तः । अथवोदकार्थं नीयमानो रिक्त एव दृष्ट उदकुम्भः शस्तः । तथा च—**चिकित्सकस्येत्यादि** । आतपत्रं छत्रम् । वृषो वृषभः । शुक्लवर्णाः पदार्थाः कर्पासास्थितक्रभस्मक्षारादिव्यतिरिक्ताः सुमनोदध्यक्षतमौक्तिकादयः । पूज्यन्ते श्लाघ्यन्ते । गताः प्राप्ता दूतस्य वैद्यस्य च ॥ १४ ॥

**स्त्री पुत्रिणी सवत्सा गौर्वर्धमानाः स्वलंकृताः ॥**
**कन्या मत्स्याः फलं वामं स्वस्तिका मोदका दधि ॥ १५ ॥**
**हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः ॥**
**अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा ॥ १६ ॥**
**ब्रह्मदुन्दुभिनिर्घोषः शङ्खवेणुरथस्वनाः ॥**
**सिंहमेघनिनादाश्च हेषितं गजबृंहितम् ॥**
**शस्तं हंसरुतं नृणां वाचश्च हृदयप्रियाः ॥ १७ ॥**

वर्धमानाः शरावाः । स्वलंकृता आलेपनादिचित्रिताः । वर्धमानमलंकृता इति पाठे वर्धमानं शरावः । चषकमित्यन्ये । अलंकृता भूषणवतीति कन्याविशेषणमिति केचिद्ब्रुवते । स्वस्तिकं मुक्तादिकृतं दूर्वामण्डितमक्षतादिकृतं वा । मोदका लड्डुकाः । हिरण्यं स्वर्णम् ।

**अन्ये**—हिरण्यं कपर्दकानाहुः। अक्षता लाजाः। तद्युक्तं पात्रमक्षतपात्रम्। **डल्लण**स्त्वेवं व्याचष्टे। अक्षतं लाजाः। अन्येऽक्षतानि यवधान्यान्याहुः। पात्रं तण्डुलभृतशरावादिकम्। अन्ये तु, अक्षतपात्रमिति, एकमेव तण्डुलभृतशरावमिच्छन्ति। रत्नानि माणिक्यादीनि। **सुमन इति**। शोभनं मानसमित्यर्थः। वैद्यस्येति शेषः। नृपः पृथ्वीपतिः। **अन्ये तु** शोभनचित्तो राजेत्याहुः। अप्रशान्तोऽनलः प्रज्वालितो वैश्वानरः। वाजी घोटकः। चाषः स्वर्णचूड इति ख्यातः पक्षी। शिखी मयूरः। **ब्रह्मदुन्दुभिनिर्घोष इति**। ब्रह्मनिर्घोषो दुन्दुभिनिर्घोषश्च। ब्रह्मनिर्घोषो वेदध्वनिः। दुन्दुभिनिर्घोषो निस्वानध्वनिः। **सिंहेत्यादि**। हेषितं वाजिध्वनिः। गजबृंहितं हस्तिस्वनः। रुतं शब्दः॥ १९॥ १६॥ १७॥

शकुनान्निर्दिशन्नाह—

**पत्रपुष्पफलोपेतान्सक्षीरान्नीरुजो द्रुमान्॥**
**आश्रिता वा नभोवेश्मध्वजतोरणवेदिकाः॥ १८॥**
**दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः॥**
**वामा वा दक्षिणा वाऽपि शकुनाः कर्मसिद्धये॥ १९॥**

**नीरुज इति**। कृमिदावाग्न्याद्यनुपहतान्। आश्रितशब्दो नभःप्रभृतिभिः सह प्रत्येकं संबध्यते। नभ आकाशम्। वेश्म गृहम्। ध्वजः पताका देवादीनाम्। तोरणमार्द्रवंशादिरचितं प्रतोल्याकारम्। वेदिकेति विवाहादिनिमित्तमामेष्टकादिरचितश्चतुरकः(स्रः)। आश्रिताः शकुना इति संबन्धः। शकुनाः पक्षिणः। **दिक्षु शान्तास्विति**। पूर्वासूत्तरासु चेत्यर्थः। अन्ये तु, आलिङ्गिता(त)वधूमि(प्वि)व दीप्तिवर्जितास्वित्याचक्षते।

तथा च—"अङ्गारिण्यर्कनिर्मुक्ता दीप्ता यस्यां च भास्करः।
प्रधूमितैष्यत्सूर्या वै शान्ताः पञ्चेतरा दिशः" इति॥

**वक्तार इति**। शब्दायमानाः। **पृष्ठतोऽनुगा इति**। पृष्ठदेशेऽनुगता इत्यर्थः॥ १८॥ १९॥

**दक्षिणाद्वामगमनं प्रशस्तं श्वसृगालयोः॥ २०॥**
**भासकौशिकयोर्नैव नोभयं शशसर्पयोः॥**
**दर्शनं वा रुतं वाऽपि न गोधाकृकलासयोः॥ २१॥**

दक्षिणपार्श्वाद्वामगमनं श्वशृगालयोः प्रशस्तम्। तथैव वामाद्दक्षिणगमनमप्रशस्तमित्युक्तम्। भासो गोष्ठकुक्कुटः। भासकौशिकयोर्दक्षिणाद्वामगमनमप्रशस्तम्। **नोभयमिति**। उभयमपि वामदक्षिणमपि गमनं न प्रशस्तमित्यर्थः। **दर्शनं वा रुतमित्यादि**। कृकलासः कण्टिकाया, इति लोके। पूर्वदेशीयास्तु गिरिगिटमित्याचक्षते। गोधाकृकला-

सयोर्दर्शनं वा रुतं वामतो दक्षिणतः पुरतः पृष्ठतो वा न प्रशस्तमिति ॥ २० ॥ २१ ॥

**हस्तं वाऽऽकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥**
**न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥ २२ ॥**

न्यसेन्निक्षिपेत् ॥ २२ ॥

संप्रति प्रशस्तं स्वप्नमाह—

**देवान्द्विजान्गोवृषभाञ्जीवतः सुहृदो नृपान् ॥**
**समिद्धमग्निं साधूंश्च निर्मलानि जलानि च ॥**
**पश्येत्कल्याणलाभाय व्याधेरपगमाय च ॥ २३ ॥**

सुहृदो मित्राणि । **समिद्धमग्निमिति** । समिद्धं दीप्तं वह्निम् । **कल्याणलाभायेति** । शुभवस्तुप्राप्तय इत्यर्थः । **अपगमायेति** । अपगमो निवृत्तिः ॥ २३ ॥

**मांसं मत्स्यान्स्रजः श्वेता वासांसि विमलानि च ॥**
**लभते शुभलाभाय व्याधेरपगमाय च ॥ २४ ॥**
**नदीनदसमुद्रांश्च क्षुभितान्कलुषोदकान् ॥**
**तरेत्कल्याणलाभाय व्याधेरपगमाय च ॥ २५ ॥**

नद्यो गङ्गाद्याः । नदाः शोणाद्याः प्रसिद्धाः । क्षुभितान्प्रचलितान्वृद्धिं गतानित्यर्थः । कलुषोदकान्यत एव क्षुभितानत एवाप्रशस्तोदकानित्यर्थः ॥ २४ ॥ २५ ॥

**महाप्रासादसफलवृक्षवारणपर्वतान् ॥**
**आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ २६ ॥**
**शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ॥**
**तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे+ ॥ २७ ॥**

शरीरं चेष्टेन्द्रियाश्रयः । शीलं बाल्यात्प्रभृत्यपरित्याज्या मानसी चेष्टा । तथा प्रकृतेः स्वभावस्य या विकृतिरन्यथाभावस्तदरिष्टं संक्षेपेण । शीलविकृत्या मनोविकृतिर्लक्ष्यते । अथ डल्लुणात्सोमटिप्पणव्याख्या—पूर्वं दूतादिज्ञेयं बाह्यारिष्टं प्रतिपाद्येदानीमाभ्यन्तरमरिष्टमाश्रयभेदेन त्रिविधं संक्षेपेण दर्शयन्नाह—**शरीरशीलयोरित्यादि** । शरीरं पाञ्चभौतिकं प्राणिकायः । शीलं मानसो भावः । **अन्ये** तु शीलं समाधानयुक्तं मन आचक्षते । तच्च शीलं सात्त्विकं ब्रह्मसत्त्वेत्यादिसप्तविधम् । राजसमासुरादिषड्विधम् । तामसं पाशवादित्रिविधम् । प्रकृतिः स्वाभाविकः प्राणिनां निजधर्मः । एतेषां शरीरशीलप्रकृतीनां त्रयाणां भावानां विकृतिर्वैपरीत्यं यद्भवे-

---

+ ख. पुस्तके—अकस्माच्छीलविकृतिरकस्माद्वपुरुत्तमम् । अकस्मादिन्द्रियोत्पत्तिः संनिपाताप्रलक्षणम् । इत्यधिकमत्र ।

त्तदरिष्टं मरणलक्षणं भवति । समासेन संक्षेपेण । अन्ये तु शरीरशीलयोर्द्वयोर्या प्रकृतिस्तस्या या विकृतिस्तदरिष्टं मरणलक्षणं भवतीत्याचक्षते । सा चैवंविधा प्रकृतिः शारीरी वा शीलगता वाऽस्तु । प्रकृतेः प्रस्तावात्किंचिद्विचारः क्रियते । सा हि प्रकृतिर्जात्यादीनुपाधीन्षडपेक्षते । तदुक्तं चरके—प्रकृतिर्हि जातिप्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोनुपातिनी च प्रत्यात्मनियता चेति । सर्वभेदेषु चकारकरणमन्योन्यसमावेशार्थम् । तत्र जातिप्रसक्ता नाम । तद्यथा तासु तासु मनुष्यादिजातिषु ते ते करचरणादयः स्वभावविशेषाः । वचनेषु च नानाविधा एव व्यक्त्यादयो धर्माः । मनसि च धर्माधर्ममैथुनाहारप्रभृतयोऽपि भावाः । कुलप्रसक्ता नाम द्विजकुले तपःप्रियतादयः क्षत्रियकुले समरप्रियतादयो धर्मविशेषा भवन्ति । देशानुपातिनी नाम । तद्यथा—लाटकर्णाटादीनां काये वाचि मनसि च ते ते स्वभावविशेषा भवन्ति । कालानुपातिनी नाम देहादिषु दौर्बल्यादि, आदानाद्यपेक्षा । गदेषु च दोषामताद्यपेक्षिणी । वयोनुपातिनी नाम बाल्याद्यवस्थासु सौकुमार्यादयो धर्माः । एतेषु त्रिष्वनुपातिशब्दप्रयोगात्संचारित्वं स्वभावगुणानामिष्टम् । प्रत्यात्मनियतेति । आत्मन्यात्मनि नियता प्रतिपुरुषं नियतेत्यर्थः । ते पुनः काये वाचि मनसि च स्वभावविशेषाः प्रतिपुरुषं भेदभिन्ना दृश्यन्ते । एवं तावत्षोढा प्रकृतिर्भवत्येव ।

अन्ये तु—"सप्तम्यपि भवेत्प्रायो देहलक्षणहेतुका ।
उत्तमाधममध्यायुर्लिङ्गानां कारणं हि सा"

इति मन्यन्ते । अन्ये तु प्रकृतिं सत्त्वरजस्तमोमयीं वातपित्तश्लेष्ममयीं च मन्यन्ते । तस्या विकृतिर्वैपरीत्यम् । यथा—प्रथमं सत्त्वप्रकृतिरनन्तरं रजस्तमःप्रकृतिरित्यादि । तथा—आदौ वातप्रकृतिस्ततः पित्तश्लेष्मप्रकृतिरित्यादि । आसां प्रकृतीनां विकृतिरन्यथात्वं मुमूर्षूणामुत्पद्यते ।

तथा च—"प्रकोपो वाऽन्यभावो वा क्षयो वा नोपजायते ।
प्रकृतीनां स्वभावेन जायते तु गतायुषाम्" इति ॥

विकृतिः पुनर्लक्षणनिमित्ता निमित्तानुरूपा च । तत्र लक्षणनिमित्ता यस्याः शरीरे लक्षणान्येव हेतुभूतानि दैवाच्छरीरोपनिबद्धानि यानि तस्मिन्काले तां तां विकृतिमुत्पादयन्ति । निमित्तानुरूपा तु तस्मिन्निमित्तार्थकारिणी या तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषज इति ॥ २६ ॥ २७ ॥

**यस्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत् ॥**
**संजातशीतपिटको यश्च दाहेन पीड्यते ॥ २८ ॥**
**स्नातानुलिप्तं यं वाऽपि भजन्ते नीलमक्षिकाः ॥**
**सुगन्धिर्वाऽति वाऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥ २९ ॥**

**संजातशीतपिटक इति** । कफपिटिकायां दाहातिरेको रिष्टम् । स्नातानुलिप्तमित्यादौ बहिर्मलसंबन्धेऽत्र मक्षिकापातनिरासार्थं स्नातानुलिप्तमित्युक्तम् । मक्षिका हि विरसपूतिप्रियास्तासामुपसर्पणेन कालपक्वस्य देहस्य वैरस्यं गम्यते । **सुरभिर्वाऽति वाऽकस्मादिति** । अकस्मादति*सुरभिर्वायुरूपो भवतीत्यर्थः । अथ **डल्हणव्याख्या**— आतुरगतग्राह्यविरुद्धस्पर्शप्रातिपत्तिं दर्शयन्नाह—**यस्तूष्णमित्यादि** । अत्र शीतपिटिका हि कफकृतास्तासां जाड्यादयो वेदनाविशेषाः प्राकृता दाहस्तु वैकृत इति । आतुरगतामेव विरुद्धरसप्रतिपत्तिं दर्शयन्नाह—**स्नातानुलिप्तमित्यादि** । पूर्वं स्नातः पश्चादनुलिप्तः । इत्थंभूतमपि सुगन्धिकायं बहिर्मलवर्जितं यदा नीलमक्षिकाः श्रयन्ते तदाऽसौ कालपक्वत्वादतिमधुरीभूतशरीररसो येन निर्मलशरीरोऽपि मक्षिकाभिः काम्यत इति । स्नातानुलिप्तमित्येतदरिष्टं वर्षावधि । आतुरगतग्राह्यगन्धविरुद्धप्रतिपत्तिं दर्शयन्नाह—**सुगन्धिर्वेति** । सुगन्धिर्वाऽकस्मात्सुगन्धिप्रयोगं विना भवतीति शेषः । इदमपि वार्षिकमरिष्टम् । आतुरगतग्राह्यविरुद्धशब्दप्रतिपत्तिरातुरगतग्राह्यविरुद्धरूपप्रतिपत्तिश्च सुश्रुताज्ज्ञेया—

"शृणोति विविधाञ्शब्दान्यो दिव्यानामभावतः ।
समुद्रपुरमेघानामसंपत्तौ च निःस्वनान् ।
तान्स्वनान्नावगृह्णाति मन्यते चान्यशब्दवत् ।
ग्राम्यारण्यस्वनांश्चापि विपरीताञ्शृणोति च ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ।
वर्णान्यता वा राज्यो वा यस्य गात्रे भवन्ति च" इति ॥२८॥२९॥

रूपग्रहणस्य विप्रतिपत्तिं दर्शयन्नाह—

**नेक्षते मुनिपार्श्वस्थां यश्च देवीमरुन्धतीम् ॥**
**ध्रुवमाकाशगङ्गां वा तं ब्रुवन्ति गतायुषम् ॥ ३० ॥**

अरुन्धतीं वसिष्ठभार्याम् । ध्रुवं तारकविशेषम् । आकाशगङ्गाशब्देन श्लक्ष्णघनतारकसंततिर्नद्याकारोच्यते । एतदरिष्टफलं सुश्रुतादाह—आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयादिति ॥ ३० ॥

ह्रीप्रभृतीनां विप्रतिपत्तिमाह—

**ह्रीश्रियौ नश्यतो यस्य तेजओजःस्मृतिप्रभाः ॥**
**यं वा त्यजन्ति पुरुषं स परासुरसंशयम् ॥ ३१ ॥**

---

* एतट्टीकानुसारी सुरभिरिति पाठो मूले ज्ञेयः ।

ह्रीर्लज्जा । श्रीर्धनम् । तेज उत्साहः । ओजो बलम् । तेजोऽत्र चेष्टालक्षणं बलमभिधीयते । ओजस्तु शुक्लं हृदयस्थं[स्थो] धातुमि[रि] ति डल्लणः । स्मृतिः पूर्वानुभूतस्मरणम् । प्रभा दीप्तिः । प्रभाविकृतिं विहायापराः शीलविकृतयो ज्ञेयाः । केचित्पठन्ति—ह्रीरपक्रामते यस्य प्रभास्मृतिधृतिश्रियः । शेषं समम् । धृतिर्नियमात्मिका तुष्टिः संतोष इत्यर्थः । श्रीः कमनीयता । शोभाधनतेजसां वैपरीत्यं वार्षिकमरिष्टम् । स्मृतिबलादिविपर्ययः षा(ष)ण्मासिकमरिष्टम् ॥ ३१ ॥

ओष्ठादीनामवयवानां विकृतिं दर्शयन्नाह—

यस्याधरौष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः ॥
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ ३२ ॥

अधर ओष्ठोऽधस्थित ओष्ठः पतितो लम्बायमानः । उत्तर उपरितन ओष्ठ ऊर्ध्वं व(व)टित इत्यर्थः । जाम्बवाभासौ जम्बूफलसदृशौ । ओष्ठारिष्टेन सांनिपातिककालप्रमाणेन म्रियते ॥ ३२ ॥

नाऽऽहरत्यन्नमास्यस्थं न धारयति यः शिरः ॥
न स्वाङ्गुलित्रयं याति दन्ताः शुष्यन्ति यस्य वा ॥ ३३ ॥
बलवान्दुर्बलो वाऽपि संमोहं योऽधिगच्छति ॥
उत्थाप्यमानो बहुशस्तं गतायुषमादिशेत् ॥ ३४ ॥

नाऽऽहरति न गिलति । आस्यस्थं मुखस्थम् । न स्वाङ्गुलित्रयं यातीति । अत्राऽऽस्य इति शेषः । ऊर्ध्वीकृतविततसंलग्नं स्वाङ्गुलित्रयं न मुखे संमाति । सद्योरिष्टमिदम् । संमोहं मूर्छाम् । बहुशो वारंवारम् । एतदरिष्टं सप्तरात्रं जीवितावधि ॥ ३३ ॥ ३४ ॥

निवर्तते महाव्याधिः सहसा यस्य देहिनः ॥
न चाऽऽहारफलं यस्य दृश्यते स विनश्यति ॥ ३५ ॥

महाव्याधिरिति । वातव्याधिप्रमेहादिरष्टविधः । अथवा शोषादिः कायचिकित्सापठितः । सहसा वेगेनेत्यर्थः । आहारफलं बलम् ॥ ३५ ॥

नासा भङ्गं गता यस्य सप्तरात्रं स जीवति ॥ ३६ ॥

सुगमम् ॥ ३६ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामशीतितमोऽरिष्टाधिकारः समाप्तः ॥ ८० ॥

---

## अथैकाशीतितमः स्वस्थाधिकारः ।

---

पूर्वनिर्दिष्टचिकित्साकलागे(पे)न रिष्टं प्रकृत्य प्रयुक्तेन यल्लब्धं स्वास्थ्यं तस्यानुपालनार्थमथ स्वस्थरक्षाविधिः । स्वास्थ्यरक्षणस्योपादेयतामाह—

**धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥**
**रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ॥ १ ॥**

आरोग्यं धातुसाम्यम् । मूलमुत्तममिति । प्रधानं कारणम् । आरोग्ये सति धर्माद्यनुष्ठानसाधर्म्यात् । तस्येति । आरोग्यस्य । आरोग्यापहारश्च रोगाणामुत्पाद एव । उत्पन्ना रोगा अपगता आरोग्यम् । श्रेयसो जीवितस्य चेति । श्रेयो यज्जीवितं सुखहेतुतया हितत्वेन तस्य जीवितस्यापहर्तारः । अश्रेयो यज्जीवितं पुनर्दुःखहेतुतयाऽहितत्वेन चानुपादेयमतस्तदपहारो नोक्तः । किंवा श्रेयसोऽभ्युदयस्य जीवितस्य वाऽपहन्तार इति व्याख्येयम् ॥ १ ॥

**तस्मादात्मवता नित्यमाहाराचारभेषजम् ॥**
**धीमता तदनुष्ठेयं स्वास्थ्यं येनानुवर्तते ॥ २ ॥**

सुगमम् ॥ २ ॥

स्वस्थ एव कथं ज्ञेय इत्याह—

**समदोषः समाग्निश्च समधातुमलक्रियः ॥**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ३ ॥**

समा अक्षीणवृद्धा दोषा यस्य स समदोषः । समदोषत्वं यद्यपि तत्त्वहोरात्राहारावस्थाकृतं तद्दोषवैषम्यस्य नित्यानुगतत्वान्न संभवति तथाऽप्यल्पत्वेनाव्यपदेशादिह व्यपदेश्यदोषवैषम्यविरहेण समदोषत्वं ग्राह्यम् । अत एव स्वस्थ इत्यभिधीयत इत्युक्तम् । इत्थंभूतो व्यपदेशश्च दोषवैषम्यवान्स्वस्थो गृह्यत इत्यर्थः । किंवा, ऋत्वादिजं दोषवैषम्यमनागताबाधप्रतिषेधः । स्वस्थवृत्तं च यथा वा प्रयुञ्जानस्य न भवत्येव । अन्यथा तस्य वैयर्थ्यं स्यात् । स्व आत्मनि प्रकृतौ स्वभावे च तिष्ठतीति स्वस्थः । समदोषत्वमेव कुतो ज्ञायत इत्याह—समाग्निश्च समधातुमलक्रिय इति । धातुशब्देन चेहोपधातूनामपि ग्रहणम् । क्रियाग्रहणमिह समक्रिययैव धातुमलानां परोक्षाणां प्रायः साम्यं गम्यत इति सूचनार्थम् । अग्न्यादिसमतयैव दोषाः समा लक्ष्यन्ते । समाग्नित्वाद्यप्यन्तर्हितार्थत्वेन दुर्विज्ञानं कथं ज्ञेयमित्याह—प्रसन्नात्मेन्द्रियमना इति । अत्राऽऽत्मा संसारी ग्राह्य इति परमात्मनो निर्विकारत्वात्समुदायोऽन्यपदार्थः । आत्मादिप्रसन्नता च दुःखरूपाग्न्यादिवैषम्यविरहे सति भवति । आत्मादिप्रसन्नता स्वात्मनि व्यक्तैव परात्मनि पश्चादवगन्तव्या । आत्मादित्रितयाभिधानं च त्रिभिरेव मिलितैर्न

दुःखताज्ञानरूपं प्रसादयते। यदुक्तम्—आत्मज्ञः करणैर्योगी ज्ञानं तस्य प्रवर्तत इति। अत्र करणैरिति ज्ञातृमनःसहितैरिन्द्रियार्थैः। अनेन च व्याख्याक्रमेण यदुच्यते समदोषत्वेनैव लब्धमग्न्यादिसाम्यं तत्किं पुनरुच्यत इति वाक्यं तन्नावतरति। एतेन प्रसन्नात्मेन्द्रियमनस्त्वमेव स्वस्थलक्षणं समदोषत्वादि वैद्यकसिद्धान्ते यदुक्तत्वेन तत्परिकरतयाऽभिहितमिति प्रयुज्यते। अन्ये त्वाहुः—समदोषत्वमेव स्वस्थलक्षणं समदोषत्वेनैव समाग्नित्वादिविशेषणानां लब्धानां यत्पुनरभिधानं तदग्निधातुमलात्ममनइन्द्रियाणां प्रतिपत्त्यपेक्षाचिकित्साविशेषसूचनार्थम्। तेनाग्न्यपेक्षया मात्रावल्लघ्वन्नोपयोगो गुर्वतिमात्रपरित्यागश्च सूचितः। तथा रसादिदुष्ट्यपेक्षया द्रव्यप्रभावनियतरसादिबुद्धिविधिरात्महितपुण्याभिधानं मनस्करक्षीरघृतादिप्रयोगस्तथेन्द्रियहितचक्षुष्यादिविधिश्च सूचितो भवतीति। एतत्तु नातिमनोहरं लक्षणावसरानुपयुक्तत्वात्। शास्त्रे च बहुधा प्रतिपादितत्वादिति। अथ सोमटिप्पणव्याख्या—दोषादिसाम्यकार्यभूतं स्वास्थ्यमाह—समदोष इत्यादि। ननु द्विविधेऽपि काले नित्यदोषचयाद्यनुबन्धात्कथं समदोषत्वं नित्यमेवाऽऽह्निके प्रातः कफः प्रकुप्यति मध्याह्ने पित्तमित्यादि। आर्तवेऽपि हेमन्ते कफश्चीयते वसन्ते च कुप्यतीत्यादि। आवस्थिके च काले बाल्ये विवर्धते श्लेष्मेत्याद्युक्तत्वात्। सत्यम्। दोषचयादेरल्पत्वादतद्व्यपदेश एकतण्डुलाभ्यवहारेऽनशनव्यपदेशवत्। दोषसाम्येनैवाग्न्यादिसाम्यं लब्धं तत्किं पृथगभिधानेनेति चेत्। अत्रोच्यते। न दोषैरेव समाग्न्यादयो भवन्ति पृथक्चिकित्सितत्वात्। तथा हि सर्पिरजापयश्च पित्तहरमप्यग्निं वर्धयति। श्रीमान्माधवः प्राह—

*"लब्धाश्चे समदोषत्वे समाग्नित्वादयस्तदा ॥
पृथगुक्ताः किमर्थं ते तत्किमेतन्निरर्थकम्" ॥

समाधत्ते च—

"दोषेभ्यस्ते यतो भिन्नाः पृथगुक्ता अतस्तु ते" ॥

अनेन प्रत्यक्षेण लिङ्गेन दोषादिसाम्यमनुमीयते। समधातुमलक्रिय इति। समा धातूनां मलानां क्रिया च यस्य। क्रिया वायोः प्रस्पन्दनादिकर्म। पित्तस्य पक्त्यादि। कफस्य संश्लेषणादि। रसादीनां प्रीणनादि। पुरीषादीनामुपस्तम्भादि। यावदोजसः स्थिरोपचयादि। अथवा समा धातवः समा मलाः समाः क्रियाश्च। तत्र क्रिया कायवाङ्मानसी चेष्टा। प्रसन्नान्यात्मेन्द्रियमनांसि यस्य स तथा। आत्मशब्देन देहोऽभिप्रेतः केवलस्याऽऽत्मनो निर्विकारत्वात्। कर्मेन्द्रियाणां बुद्धीन्द्रियाणां च संप्रति स्वविषयग्रहणम्। मनस्त्विन्द्रियानुग्राहकम्। ननु समदोषवचनेनैव समाग्नित्वं लभ्यते दोषदुष्टिनान्तरीयकत्वात्। अग्निदुष्टेन समधातुमलक्रियावचनमप्यनर्थकम्। धातूनां दोषा एव दुष्टा दूष-

* लब्धे च, इति भाति।

थितारः। मलानामपि सङ्गोत्सर्गौ यथाकालं दोषसाम्यवचनेनैव। एवमात्मादिप्रसन्न-वचनेनाप्यलम्। आत्माऽत्रापि मते देहः। अन्ये कर्मात्मा बद्धः पुरुष इत्याहुः। तस्य निर्विकारस्यापि शरीरगुणदोषाभ्यां पटुत्वापटुत्वमाचार्यैर्बहुधोक्तम्। स च दोषधातुमलसंघातः। न च तद्व्यतिरेकेणान्यानीन्द्रियाणि। अथ व्यतिरिक्तानि। तथाऽप्याश्रय-दुष्टिनान्तरीयकत्वात्तद्विकारस्य कुड्यविकारे तदाश्रितचित्रविकारवत्। मनोग्रहणमपि न कर्तव्यं तस्यापीन्द्रियत्वात्। अथवा मनःप्रसत्त्यैवेन्द्रियप्रसादो विपर्यये तत्प्रसा-दाभावात्। तस्मादसांप्रतमेव तल्लक्षणं समदोषवचनमेवास्तु। अथवा तदपि न वक्तव्यं वैषम्यहेतुसंतानस्याऽऽहोरात्रिकस्याऽऽर्तवस्य च नित्यानुषक्तत्वात्। अत्र समाधीयते। यथा हि वैषम्यहेतुसंतानस्य सदाऽनुषक्तिस्तथा साम्यहेतुं यत्त(तुविध्यु)पन्यासोऽपि। आहोरात्रिकस्याऽऽर्तवस्य चानागताबाधप्रतिषेधनीय ऋतुचर्याध्याये च साम्यहे-तुविधेरुक्तत्वात्। य(त)च्चोक्तं समदोषवचनेनैव समाग्नित्वं लभ्यते तन्न पित्तस्य व्यतिरिक्त एवाग्निः, तीक्ष्णः पित्तेनेति वचनात्। एतच्च व्रणप्रश्ने व्याख्यास्यामः। लब्धेऽपि हि दोषसाम्यवचनेन समाग्नित्वे पुनर्वचनमुभयोरग्निदोषयोरन्योन्यानुविधानख्यात्यर्थम्। तथात्र—शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ। अपि च। विषमो वातेन तीक्ष्णः पित्तेन मन्दः श्लेष्मणा॥

"विषमो वातजान्रोगांस्तीक्ष्णः पित्तसमुद्भवान्।
मन्दस्तु कुरुते वह्निर्विकारान्कफसंभवान्"॥

एवमग्निदोषयोरन्योन्यानुविधायित्वम्। न चात्रेतरेतराश्रयो दोषः, तयोर्हि परस्परोपकारकोपकार्यत्वात्। यच्चोक्तं समधातुमलक्रियावचनमप्यनर्थकं तदप्यसमीक्ष्योक्तम्। यतोऽत्रापि पूर्व एव परीहारः। यथा दोषाग्न्योः परस्परानुविधायित्वं तथा दोषाणां धातुमलानां च परस्परानुविधायित्वमेव। अपि च। न केवलं दोषदुष्ट्यैव धातुमलानां क्षयवृद्धी, अपि तु क्रियातो द्रव्यतोऽपि भवत इति हेत्वन्तरमाहारविहारौ। यदप्युक्तमात्मादिप्रसादवचनेनाप्यलम्। मैवं वादीः। आत्मेन्द्रियमनसामप्रसत्तिर्वातादिवैकृतमन्तरेणापि भवति। करणानामप्रसत्तिनिमित्तं हि शारीरा मानसाश्च दोषाः। तथा स्वविषयाणां शब्दादीनामयोगातियोगमिथ्यायोगाश्च।

तदुक्तम्—"कालबुद्धीन्द्रियार्थानां योगो मिथ्या न वाऽति च।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः"॥

अपि च—"कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम्"॥

तथा मनसोऽपीन्द्रियाणां च पृथग्युगपच्च विकाराश्रयत्वम्।

तदुक्तम्—"धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम्"।

चरकेऽपि च—देहेन्द्रियमनस्तापीति। एतदुक्तं भवति दोषवैषम्यमप्यग्न्यादीनां वैषम्यहेतुरात्मेन्द्रियमनसां वाऽप्रसत्तिहेतुः। तथा परेभ्योऽपि कारणेभ्यो भवति। यथा हि कुड्यविकारेऽपि चित्रविकारः। तथा कुड्यविकाराभावेऽपि वृष्टितुषारधूमादिकारणेभ्योऽपि तद्विकारोत्पत्तिरिति सर्वं सूक्तं समदोष इत्यादिकम्। अथवा क्रमप्रतिपादकमिदं वाक्यम्। तत्रायमर्थः। नामी दोषादयो युगपत्साम्येऽवस्थापयितुमुल्लङ्घ्य क्रमं शक्यन्ते। तत्रायं क्रमः। प्राग्दोषाः शमनेन शोधनेन वा समाः कार्याः। समैश्च तैरग्निरपि समः शक्यो विधातुम्। समेऽग्नौ च रसादीनां मलानां क्रियाणां च समत्वं सुखसाध्यमेवेति साम्ये सर्वेषां दोषादीनामापादिते प्रसन्नात्मेन्द्रियमनस्त्वं फलं स्वास्थ्यं च संपद्यत इति ॥ ३ ॥

आरोग्यव्याधी कावुच्येते इत्याह—

**दोषाणां साम्यमारोग्यं वैषम्यं व्याधिरुच्यते ॥**

दोषाणां वातादीनां साम्यं स्वरूपादप्रच्युतिः समभाव आरोग्यं स्वास्थ्यमिति यावत्। दोषाणां स्वप्रमाणादेकस्य द्वयोस्त्रयाणां वा वृद्धिः क्षयो वा व्याधिरुच्यते। वैषम्यं विषमता। **वैषम्यं व्याधिरिति**। दोषाणां वैषम्येण हेतुना जातत्वाद्वैषम्यं व्याधिरुच्यते। वैषम्यमेव वा व्याधिः। अजनितव्याधेरपि वैषम्यस्य बाधितत्वात्। वैषम्यजातेष्वपि रसादिषु वैषम्यरूपताऽस्त्येव। तथा स्वमानक्षीणश्च दोषो न विकारं जनयति। क्षीणलक्षणं तु वैषम्यमेव जनयतीति॥

कैश्चिद्वृद्धिः समानैरित्यादिशमनं च यथाक्रममित्यन्तो ग्रन्थः कैश्चिद्ग्रन्थमध्ये पठ्यते तस्मान्मयाऽपि व्याख्यायते—

**वृद्धिः समानैः सर्वेषां प्रशमस्तु विपर्ययैः ॥ ४ ॥**

सर्वेषां दोषधातुमलानां समानैस्तुल्यसद्भावैर्वृद्धिः स्वप्रमाणाधिक्यं विपर्ययैः प्रशमः।

तथा चाऽऽहुः—"सर्वेषां सर्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियैः।
भावैर्भवति भावानां विपरीतैर्विपर्ययः" ॥

द्रव्यतो यथोक्तम्। रक्तमाप्याय्यते रक्तेन मांसं मांसेन मेदो मेदसा, अस्थि; अस्थ्ना मज्जा मज्ज्ञा शुक्रं शुक्रेण तथा गर्भ आमगर्भेण। तत्र रक्तेन रक्तमित्युभयमप्यौदकमांसं मांसेनेति पार्थिवम्। तथा सलिलात्मकं पयस्तदात्मकमेव श्लेष्माणमभिवर्धयति तद्वत्क्षीराज्जातं घृतं शुक्रम्। तथा जीवन्तिकाकोल्यादयः सोमात्मानो द्रव्यविशेषाः सौम्यधात्वेककारणानि स्नेहबलपुंस्त्वौजांसि मरिचकोलभल्लातकादयो बुद्धिमेधाग्न्यादीन्संवर्धयन्ति। गुणतश्चोचमोचखर्जूराणि पार्थिवानि द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमुदकात्मकमभिवर्धयन्ति स्निग्धगुरुशीतादिगुणसामान्यात्। कर्मापि त्रिविधं कायवाङ्मनोव्यापारात्मकम्। तत्र कायिकं धावनलङ्घनप्लवनादीनि चलत्वसामान्याद्वायोर्वृद्धये।

वाचिकानि भाष्याध्ययनगेयादि। मानसं मनोव्यापारश्चिन्ताकामशोकभयानि। तान्यपि मनसः क्षोभणहेतुत्वाद्वायोर्वृद्धिकराणि। तथा संतापकत्वसामान्यात्क्रोधेर्ष्यादि पित्तस्य। स्वप्नालस्यशय्यासुखादीनि स्थैर्यसामान्यात्कफस्येति। विशेषस्तु क्षयाय। यथाऽऽह— द्रव्यतो गवेधुकाः कर्शनीयानाम्। तत्र वाय्वात्मिकया गवेधुकया पार्थिवानां मांसादीनां कृशिमा क्रियते। तथा तैजसेन क्षारेण श्लेष्मणः। गुणतो यथा। आरनालमौदकं श्लेष्माणं तद्विपरीतैर्लघुरूक्षोष्णतीक्ष्णविशदगुणैः क्षपयति। कर्मतो निद्रालस्यसौमनस्यानि सपरिस्पन्दं वातमपरिस्पन्दस्वभावतयाऽपचिन्वन्ति। तथा परिस्पन्दरूपाश्चिन्ताव्यवायव्यायामा मन्दपरिस्पन्दवैपरीत्यात्कफमिति॥ ४॥

संप्रति साममललिङ्गमाह—

**स्रोतोरोधबलभ्रंशगौरवानिलमूढताः॥**
**आलस्यापक्तिनिष्ठेवमलसङ्गारुचिक्लमाः॥**
**लिङ्गं मलानां सामानां निरामाणां विपर्ययः॥ ५॥**

स्रोतसो रोधः। बलस्य भ्रंशो हानिर्बलभ्रंशः। गौरवं गुरुत्वम्। वायोर्मूढता सम्यगसंचारः। आलस्यं तन्द्रा। अपक्तिराहारस्यापाकः। निष्ठेवो मुखस्रावः। मलस्य पुरीषादेः सङ्गः। अरुचिरन्नानभिलाषः। क्लमो ग्लानिः। इत्येतत्सामानां मलानां लिङ्गं लक्षणम्। निरामाणां विपर्ययोऽस्माद्वैपरीत्यं स्रोतःशुद्ध्यादिरूपम्॥ ५॥

आमलक्षणमाह—

**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्॥**
**दुष्टमामाशयगतं रसमामं प्रचक्षते॥ ६॥**

ऊष्मणो रसाग्नेः। अल्पबलत्वेन दौर्बल्येन। धातुं न दोषं मलं वा। आद्यं न रक्तादिकम्। रसं न रसत्वात्प्रच्युतं रक्तत्वमप्राप्तमपाचितमामं प्रचक्षते वदन्त्याचार्याः। किंभूतं रसम्, आमाशयगतं तथा दुष्टं वाताद्यनुदूषितम्॥ ६॥

सामत्वं व्याचष्टे—

**आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः॥**
**सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः॥ ७॥**

तेन पूर्वोक्तलक्षणेनाऽऽमेन संपृक्ताः संयुक्ता दोषा दूष्याश्च रसादयः। कीदृशा दूषितास्तैर्वातादिभिः। सह, आमेन सामा इत्युपदिश्यन्ते तत्र तत्र प्रदेशे भण्यन्ते। ये च रोगा ज्वरादयः सामैर्दोषैर्धातुभिश्च मलैश्च जनिताः सामा उच्यन्ते। यथा सामे तीव्ररुजि ज्वरे, इत्यादि॥ ७॥

**वायुः सामो विबन्धाग्निसादस्तम्भान्त्रकूजनैः॥**
**वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीडयन्॥ ८॥**

१ घ. 'शोफनि॰'।

विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् ॥
स्नेहाद्यैर्वृद्धिमायाति सूर्यमेघोदये निशि ॥ ९ ॥

सुगमम् ॥ ८ ॥ ९ ॥

निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदनः ॥
विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः ॥ १० ॥

सुगमम् ॥ १० ॥

दुर्गन्धि हरितं श्यावं पित्तमम्लं स्थिरं गुरु ॥
अम्लिकाकण्ठहृद्दाहकरं सामं विनिर्दिशेत् ॥ ११ ॥
आताम्रपीतमत्युष्णं रसे कटुकमस्थिरम् ॥
पक्वं विगन्धि विज्ञेयं रुचिपक्तिबलप्रदम् ॥ १२ ॥
आविलस्तन्तुलः स्त्यानः कण्ठदेशेऽवतिष्ठते ॥
सामो बलासो दुर्गन्धः क्षुदुद्गारविघातकृत् ॥ १३ ॥
फेनवान्पिण्डितः पाण्डुर्निःसारोऽगन्ध एव च ॥
पक्वः स एव विज्ञेयश्छेदवान्वक्त्रशुद्धिकृत् ॥ १४ ॥
पटुतिक्तककट्वम्लस्वादुतिक्तकमृष्टकाः ॥
कषायश्च कषायश्च क्रमात्तेषां त्रयस्त्रयः ॥ १५ ॥
आमेषु पच्यमानेषु पक्वेष्वप्यनिलादिषु ॥
पाचनं पाकसमकृच्छमनं च यथाक्रमम् ॥ १६ ॥

सुगमम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

वातादीनां साम्यमारोग्यं वैषम्यं च रोगं प्रतिपाद्य तेषां लक्षणं च संक्षेपादाह—

रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ॥
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ १७ ॥

वायोरग्रेऽभिधानं प्राधान्यात्। प्राधान्यं चाऽऽशु भूरिदारुणविकारकारित्वात्। वातमनु पित्तं प्रधानं देहमूलभूताग्निहेतुत्वात्। वैशेषिकेऽनुष्णाशीतो वायुरुक्तः। वैद्यके तु शीतेन वृद्धेरुष्णेन प्रशमाच्च शीतोऽङ्गीकृतः। सूक्ष्मः सूक्ष्ममार्गानुसारी। विशदोऽपिच्छिलः। विपरीतगुणैरिति। गुणशब्दोऽत्र धर्मवाची तेन रसवीर्यविपाकप्रभावा अपि विपरीता गृह्यन्ते। एवं पित्ते श्लेष्मणि च व्याख्येयम्। संप्रशाम्यति सम्यक्शीघ्रं शाम्यति। अथेशानदेवव्याख्या—इदानीं वातादीनां पृथक्त्वज्ञापकं लक्षणमुच्यते—रूक्षः शीतो लघुरित्यादि। रूक्षादीनामसमासकरणादनुक्ता अपि वातगुणा दारुणादयो लभ्यन्ते। दारुणादीनां च साक्षादपाठाद्रूक्षादीनां प्राधान्यं दर्शयति।

---

१ घ. 'नुष्णशी'।

स एवंगुणो वायुः प्रकुपितो विपरीतगुणैर्द्रव्यैः प्रशाम्यति । विपरीता गुणा येषां तानि विपरीतगुणानि स्निग्धोष्णगुरुस्थूलस्थिरपिच्छिलमृदूनि तैर्विपरीतगुणैः । कैर्द्रव्यैः सम्यक्शीघ्रं च शाम्यति संप्रशाम्यति । अनेन च संप्रशब्दप्रयोगेण विपरीतगुणभूयिष्ठैरपि द्रव्यैः शाम्यति न तु तथेति ज्ञापयति । अत्र चोदयन्ति । वायोः शीतो गुणो नोपपद्यते योगवाहित्वात् ।

वक्ष्यति—"योगवाहः परं वायुः संयोगादुभयार्थकृत् ॥
दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात्" ॥

यस्य च कफसंयोगाच्छैत्यं पित्तसंयोगाच्चौष्ण्यं जायते स त्वयमनुष्णाशीत उक्तो भवति । यो हि शीतः स स्वत एव शीतं करोति न संयोगमपेक्षते कफवत् । पित्तसंयोगाच्च न दाहं करोति कफवदेव । उत मन्यसे स्वभावेन शीतो वायुः । तस्य कफसंस्पर्शादधिकं शैत्यमुदकस्येव हिमसंपर्कात् । ततश्चाधिकशीतं करोतीत्यर्थप्रदर्शनार्थं शीतकृत्सोमसंश्रयादित्युक्तम् । एवं सति कफस्यापि योगवाहत्वं प्राप्नोति तस्मात्तस्यापि वायुसंसर्गादधिकं शैत्यं भवति शैत्याद्याधिकं(?) शीतं करोति । अथैवं मन्यसे यः स्वं स्वभावं त्यक्त्वा येन युज्यते तत्स्वभावं भजते स योगवाह उच्यते यथा पिप्पलीमध्वादि । एवं सति यत्र पिप्पल्यादीनां प्रयोग उक्तः स निष्प्रयोजनः । यस्मात्पिप्पल्याद्यन्तरेणैव तदौषधं *व्यकार्यकरणे शक्तं पिप्पल्यादीनि तत्र किमधिकं करिष्यन्ति । अत्रोच्यते । स्वभावेनैव शीतो वायुः केवलस्यापि कुपितस्य शीतकरणाच्छ्लेष्मवत् । यत्पुनः शीतकृत्सोमसंश्रयादित्यत्र शीतत्वं वायावाम्नातं तदेवमर्थं वातश्लेष्मभ्यां शीते शीतवेपथुव्याधौ कथं नाम श्लेष्मण एव चिकित्सितं स्यान्न वायोरिति । अथवा श्लेष्मसंयोगाद्वायुः स्वकं शैत्यं मुक्त्वा श्लेष्मणो यच्छैत्यं तद्भजते योगवाहित्वात्पित्तसंयोगात्स्वशीतत्यागाद्दाहकरणवत् । तस्माच्च श्लैष्मिकमेव चिकित्सितमुत वाऽनुष्णाशीत एव वायुः । तस्य तु शीतो गुणः कार्यार्थमुक्तः । कथं नामोष्णेनास्योपशमः स्यात् । यद्येवं तत्केवलो वायुः कुपितः कथं शीतं जनयति । ब्रूमः, प्रभावात्सलिलवदिति ॥ १७ ॥

पित्तलक्षणमाह—

सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु ॥
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ १८ ॥

सस्नेहमितीषत्स्नेहम् । सस्नेहमम्लरसत्वं च पित्तस्य तेजोम्बुबाहुल्यादुचितमेव । सुश्रुतस्तु अविदग्धस्य कटुरसत्वमेव सामतया विदग्धस्य त्वम्लत्वमेवेच्छति । सस्नेहत्वं द्रवत्वेन सुश्रुतेऽपि लभ्यते । तथा च सुश्रुतः—

---

* द्विकार्येति भाति ।

"पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ॥
उष्णं कटु सरं चैव विदग्धं चाम्लमेव च" इति ॥

अस्यार्थः । तीक्ष्णं राजिकामरिचादिवत् । पूति विस्रगन्धि । नीलं सामावस्थायां पीतं निरामावस्थायाम् । कटुरसं प्रकृतिस्थम् । विदग्धं चाम्लविरुद्धपाकोपपन्नं पुनरम्लरसं स्यात् । विदग्धाजीर्णसंसृष्टमम्लरसं भवतीत्यन्ये । विदग्धं पित्तमम्लपित्तं रोगविशेष इति केचित् । द्रवस्थाने सरमिति पाठान्तरम् । नन्वाग्नेयत्वात्पित्तस्यामूर्तत्वाच्च वायोः पाकजननत्वाभावात्का विदह्यमानता । सत्यम्, परमार्थतो न वातादीनां पाकः पाकव्यपदेशश्चैषामामापगमात्तदन्वितत्वादामा इति तदपगमात्पक्का इत्युच्यन्ते । यद्वा विदग्धाजीर्णसंश्लेषात्पित्तमिदमम्लं संपद्यते । इति सोमटिप्पणात् । अथेशानदेवव्याख्या— सस्नेहमुष्णमित्यादि । तत्र सस्नेहमीषत्स्नेहमित्यर्थः । यथा—सतिक्ता यासशर्करेति । सरमित्यधः प्रवर्तते न स्थिरमास्ते । यद्येवं तत्कथं सरणेन पित्तस्योपशमो भवति । सरविपरीतेन स्थिरेण तु पित्तोपशमो युक्तः । विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यतीति वचनात् । ब्रूमः । न विरेचनं पित्तमभ्यन्तर एव पाचनवत्क्षपयित्वा जयति किंतु बहिरेव निष्कासयत्येवमर्थय(इ)ति । अथवा सरेण विरेचनेन सामान्यात्पित्तमतिसरः (रं) क्रियते ततः प्रबले सरत्वे स्वयं देहान्निर्गच्छति । यदा पुनरतीसारादिष्वतिसरत्वं पित्तस्य जायते यदा वा स्वस्थानमस्थितं शमनीयावस्थि(?) पित्तं भवति तदाऽस्य सरविपरीतेन स्थिरेणैवोपशमो भवतीत्याह । यथा कट्वम्लं पित्तं विपरीतगुणत्वान्मधुरतिक्तकषायैः शाम्यति, एवं लवणेनापि कस्मान्न शाम्यति । तदप्यस्य विपरीतं पित्तलवणस्याभावात् । ब्रूमः । न, औष्ण्यात्ततुल्यत्वात् । पित्तमुष्णं लवणमप्युष्णम् । अतः सत्यपि रसविपरीतत्वे तुल्येनोष्णगुणेन लवणं पित्तमभिवर्धयति । तद्यथा । प्रसहादयः सत्यपि माधुर्ये पित्तं वर्धयन्त्युष्णवीर्यत्वात् । यत्तु लवणत्वेऽपि नोष्णं भवति तच्छमयति । यथा सैन्धवम् । तद्धि त्रिदोषघ्नं पठ्यत इति । एवं श्लेष्माऽप्यम्ललवणाभ्यां कटुतिक्तकषायवद्विपरीताभ्यां स्निग्धतुल्यत्वान्न शाम्यति । यत्त्वम्लत्वेऽपि न स्निग्धं तच्छमयत्येव श्लेष्माणं यथाऽऽमलकमिति ॥ १८ ॥

**गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ॥**
**श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ १९ ॥**

विपरीतगुणैः श्लेष्मा प्रशाम्यतीति वक्तव्ये यतः श्लेष्मणो गुणानां..........प्रतिपादनार्थम् । अथेशानव्याख्या—गुरुशीतेत्यादि । आह श्लेष्मणो गुणा विपरीतगुणैः प्रशमं यान्तीति कस्मादधीतं न तु पूर्ववद्विपरीतगुणैर्द्रव्यैः श्लेष्मा शाम्यतीति । उच्यते । विशेषोपलब्ध्यर्थं गुणवृद्ध्या गुणिनो वृद्धिर्गुणोपशमाच्च शम इति ॥ १९॥

क्षुत्संभवति जीर्णेषु रसदोषमलेषु च[1] ॥
उचितोऽनुचितो वाऽपि सोऽन्नकालः प्रशस्यते[2] ॥ २० ॥

उचितोऽनुचितो वेति । यावति काले प्रत्यहं भुङ्क्ते स उचितः ॥ २० ॥

अर्धरात्रेऽपि भुञ्जानः परमार्थे बुभुक्षितः ॥
क्षुधी वैद्यपरित्यागी व्याधिभिर्नाभिभूयते ॥ २१ ॥

सुगमम् ॥ २१ ॥

अहिताशनसंपर्कात्सर्वरोगोद्भवो यतः ॥
अतस्तदहितं त्याज्यं न्याय्यं पथ्यनिषेवणम् ॥ २२ ॥

सुगमम् ॥ २२ ॥

कलमाः शालयो रक्ता नीवारः षष्टिकाङ्कुकाः ॥ २३ ॥
श्यामाककोद्रवोद्दालसतीनयवमुद्गकाः ॥
मसूराढकिगोधूमा हरिणैणकुरङ्गकाः ॥ २४ ॥
तित्तिरिः क्रकरा लावाः श्रेष्ठा वर्तीरवर्तिकाः ॥
सुनिषण्णकवास्तूकचिल्लीमण्डूकपर्णिकाः ॥ २५ ॥
तण्डुलीयकजीवन्त्यो दाडिमामलकं मधु ॥
सैन्धवं गव्यमाज्यं च पथ्यवर्गोऽयमुत्तमः ॥ २६ ॥

कलमः कलिचिरिति लोके प्रसिद्धः । रक्तः स्वनाम्ना ख्यातः । नीवारः प्रसातिका धान्यमध्ये रक्तशूको भवति तुलजीधान्यमिति लोके प्रसिद्धः । षष्टिको गौरषष्टिकः । काङ्कुको गौरकृष्णषष्टिकः । उद्दालोऽरण्यकोद्रवः । सतीनो वर्तुलकः । आढकी तुवरी । हरिणस्ताम्रो मृगः । एणः कृष्णः । कुरङ्गः कृष्णताम्रः ।

तदुक्तम्—"एणः कृष्णोऽथ हरिणस्ताम्रवर्णोऽभिधीयते ।
यो न कृष्णो न ताम्रः स्यात्स कुरङ्ग उदाहृतः" ।

तित्तिरिः कृष्णतित्तिरिः । वर्तिरो घर्घर इति लोके । वर्तिकस्तद्भेदः । सुनिषण्णकः सिरिवालिका चतुष्पर्णीत्यपरे । चिल्ली क्षेत्रवास्तुकः । मण्डूकपर्णी ब्राह्मी । जीवन्ती दोडिका । एते कलमादयः शूकधान्येषु । श्यामाकादयः कुधान्येषु । सतीनमुद्गादयो वैदलसूपेषु । हरिणादयो जाङ्गलमृगेषु । तित्तिर्यादयो जाङ्गलाः पक्षिषु । सुनिषण्णकादीनि शाकेषु । दाडिमामलके फलेषु । सैन्धवं लवणेषु । गव्यमाज्यं घृतेषु । नीवारकोद्रवोद्दालकादीनामल्पवातकरत्वाददोषकरव्यपदेशः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

---

१ घ. या । २ क. °पि अन्नकालस्तु स स्मृतः । उ° ।

व्यायामश्च निशास्वापो निवातोष्णजलं तथा ॥
आयुष्यं भोजनं जीर्णे वेगानामविधारणम् ॥
ब्रह्मचर्यमहिंसा च साहसानां च वर्जनम् ॥ २७ ॥

सुगमम् ॥ २७ ॥

अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं पयः ॥ २८ ॥
पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् ॥
घृतादष्टगुणं तैलं मर्दने न तु भोजने ॥ २९ ॥

॥ २८ ॥ २९ ॥

संयोगविरुद्धानि दर्शयन्नाह—

वल्लीफलैरम्लकुलत्थशाकैर्मत्स्यैः सुरामांसतिलैः करीरैः ॥
पिण्याकजम्बूलवणैश्च दध्ना व्यस्तैः समस्तैश्च पयो विरोधि ॥ ३० ॥

वल्लीफलं कूष्माण्डादिवल्लीजम्। अन्ये शिम्ब्यादिमाहुः। करीरं वंशाङ्कुरम्। अम्लमाम्रातंकादि। जम्बूर्जम्बूफलम्। एतानि वल्लीफलादीनि व्यस्तसमस्तान्यपि पयसा सह नाश्नीयादिति ॥ ३० ॥

कर्मविरुद्धान्याह—

कपिञ्जलो लावकतित्तिरी तु गोधामयूरौ रुबुतैलकाष्ठैः ॥
सिद्धा विरुद्धाश्च तथा कपोतास्तैलेषु भृष्टा अपि सर्षपाक्ताः ॥ ३१ ॥

सुगमम् ॥ ३१ ॥

उष्णेन दिव्यसलिलेन वराहगोधा-
मांसेन याति विकृतिं मधु मूलकेन ॥
तक्रेण चोष्णमपि तुल्यघृतं धृतं च
कांस्ये दशाहमुषितं च तथा घृतं च ॥ ३२ ॥

उष्णेन उष्णस्पर्शद्रव्येण। उष्णस्पर्शत्वं चाग्न्यादिजनितं ज्ञेयम्। दशाहमुषितं दशनिशावासितम्[१] ॥ ३२ ॥

घृतं धानाश्च तक्रेण दध्ना मद्यं च कुक्कुटैः ॥
बलाका न हिता मद्यैः सुराकृशरपायसैः ॥ ३३ ॥

कुक्कुटस्ताम्रचूडः। बलाका बकभेदः। सुरा मद्यभेदः। कृशरा तिलतण्डुलमाषैः कृता यवागूः। पायसं क्षीरसिद्धास्तण्डुलाः। एतानि द्विशस्त्रिशो वा विरुद्धानि। सुराकृशरपायसानैकध्यमश्नीयात्, इति सुश्रुतः ॥ ३३ ॥

---

१ क. 'ष्टा मिशिस°। २ क. °मृ। भृष्टधा°।

मत्स्या उपोदकां चैव विकारैरैक्षवैस्तथा ॥
सौवीरैस्तिलशष्कुल्यः काकमाची गुडेन च ॥

सौवीरं काञ्जिकविशेषः । शेषं सुगमम् ॥

अतिस्निग्धातिरूक्षादीन्वर्जयेदात्मवान्नरः ॥ ३४ ॥

सुगमम् ॥ ३४ ॥

विरुद्धं यत्करोति तदाह—

व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति ॥
विरुद्धरसवीर्याणि भुञ्जानोऽनात्मवान्नरः ॥ ३५ ॥
यत्किंचिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् ॥
रसादिषु यथार्थं वा तद्विकाराय कल्पते ॥ ३६ ॥

**व्याधिमिति** । शोफविसर्पदकोदरविस्फोटकादिकमधिगच्छति प्राप्नोति । **विरुद्धरसवीर्याणि भुञ्जान इति** । रसग्रहणं द्रव्यवीर्यपरिहारार्थम् । तेनोष्णस्यापि दुग्धस्य प्रयोगो भवति । क्षीरद्रव्यस्य ह्युष्णत्वं तद्गतमधुररसशैत्येन विरोधिनाऽपि न दुष्यति । एवमुष्णपानीयस्यापीति । अनात्मवानबुद्धिमान् । अन्ये रसवीर्यादीनिति पठन्ति तेषां मानपाकयोरपि गुरुलघुसंज्ञयोर्विरोधो वर्जनीय इति ॥ ३५ ॥ ३६ ॥

विरुद्धाशनादुत्पन्नानां रोगाणां चिकित्सासूत्रमुद्दिशन्नाह—

विरुद्धाशनजान्रोगान्प्रतिहन्ति विरेचनम् ॥
वमनं शमनं चापि पूर्वं वा हितभोजनम् ॥ ३७ ॥

**प्रतिहन्ति विरेचनमिति** । विरुद्धाशनजव्याधिप्रत्यनीकं विरेचनं प्रतिशब्देनोच्यते । तेन कुष्ठव्याधिप्रत्यनीकं विरेचनं विरुद्धाशनजं कुष्ठं हन्ति ॥ ३७ ॥

विरुद्धाशनं कुर्वतोऽपि कस्यचिद्विरुद्धाशनजा दोषा न भवन्तीत्याह—

सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च ॥
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ ३८ ॥

सात्म्यादिभिर्विरुद्धं वितथं निष्फलं भवतीत्यर्थः । पिण्डः । स्निग्धव्यायामबलिनामपि (मिति) स्निग्धव्यायामाभ्यां बलिनामिति संबध्यते । तेनायमर्थः । स्निग्धद्रव्याभ्यवहारबलिनां बलवदग्नित्वाद्विरुद्धं निष्फलं भवति । केचिद्बलिनामिति पदं भिन्नं मन्यन्ते । तेनायमर्थः—स्निग्धानां व्यायामिनां बलिनां च विरुद्धं वितथं भवेदिति ॥ ३८ ॥

शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ॥
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ३९ ॥

सुगमम् ॥ ३९ ॥

---

१ क. °काश्येन वि° ।

सुगमम् ॥ ६१ ॥

कृशो रूक्षोऽल्पकेशश्च चलचित्तोऽनवस्थितः ॥
बहुवाग्व्योमगः स्वप्ने वातप्रकृतिको नरः ॥ ६२ ॥

सुगमम् ॥ ६२ ॥

अकालपलितो गौरः प्रस्वेदी कोपनो बुधः ॥
स्वप्नेषु दीप्तिमत्प्रेक्षी पित्तप्रकृतिको नरः ॥ ६३ ॥

सुगमम् ॥ ६३ ॥

स्थिरचित्तः सुबद्धाङ्गः सुप्रजः स्निग्धमूर्धजः ॥
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः ॥
संमिश्रैर्लक्षणैर्ज्ञेया द्वित्रि(त्र) दोषान्वया नराः ॥ ६४ ॥

सुगमम् ॥ ६४ ॥

बहूदकनगोऽनूपः कफमारुतरोगवान् ॥
जाङ्गलोऽल्पाम्बुशाखी च वातपित्तगदोत्तरः ॥ ६५ ॥

सुगमम् ॥ ६५ ॥

संसृष्टलक्षणोपेतो देशः साधारणः स्मृतः ॥ ६६ ॥

ननु साधारणस्योभयलक्षणत्वमयुक्तं परस्परपरिहारस्थितिधर्मकत्वात्। न ह्यानूपजाङ्गलयोर्लक्षणानि मिथोत्यन्तविलक्षणानि शीतोष्णवदेकत्र संभवन्ति। अवयववृत्तित्वात्सिद्धिर्भविष्यति। साधारणो हि क्वचिदनूपलक्षणः क्वचिज्जाङ्गललक्षणश्चित्रपटवदिति चेत्। नैवम्। यो हि साधारणस्यावयवोऽनूपलक्षणः सोऽनूप एव यो जाङ्गललक्षणः स जाङ्गल एवातल्लक्षणत्वात्तत्कार्यत्वाच्च। तस्मादेतदेवं प्रतिपत्तव्यं य एतेऽनूपजाङ्गलयोर्बहुनिम्नोन्नतादयो व्यञ्जनविशेषास्तैरेवानतिशयसहितैः साम्यात्रस्थितैः साधारणो मन्तव्य इति ॥ ६६ ॥

अमुमेवाभिप्रायमाह—

समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः ॥
समता चैव दोषाणां तस्मात्साधारणो वरः ॥ ६७ ॥

तस्मादनूपजाङ्गलवेदनानामपि साम्यमेव वेदितव्यम् ॥ ६७ ॥

क्षीरितिक्तकषायाणां द्वादशाङ्गुलमायतम् ॥
दन्तकाष्ठं निषेवेत मुखरोगप्रणाशनम् ॥ ६८ ॥

---

१ क. घ. जलसितालो°। २ क. घ. °प्रशान्तगे। ति°।

तिक्तकषायादि दन्तकाष्ठं प्रत्युषसि कफप्रकोपनिवारणाय। दन्तधावनस्य द्वादशाङ्गुलत्वं सुखग्रहणसंचारणार्थम्॥ ६८॥

नवज्वरास्यशोषादौ न सेव्यं दन्तरोगिणा॥
प्रतिपद्दर्शषष्ठीषु नवम्यां चैव भारत॥ ६९॥

सुगमम्॥ ६९॥

दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥ ७०॥

सुगमम्॥ ७०॥

पत्रैः स्याद्बकुलादीनां तत्र दन्तप्रघर्षणम्॥

सुगमम्॥

जिह्वानिर्लेखनाद्रोगास्तद्गता न भवन्ति हि॥ ७१॥

सुगमम्॥ ७१॥

बहिर्मुखप्रक्षालनमाह—

पित्तरक्तकृता रोगा न स्युर्व्यङ्गादयो मुखे॥
भिल्लोटककषायेण धात्रीक्वाथेन धावनात्॥ ७२॥

आदिशब्दान्नीलिकामुखशोषपिटिका गृह्यन्ते। भिल्लोटकेति। भिल्लोटको हिमवद्वनान्ते केदारभूमौ प्रसिद्धः। गयी तु भिल्लौटककषायम्॥ ७२॥

अन्तर्मुखप्रक्षालनमाह—

आमलकस्य कषायेण नेत्रे प्रक्षालयेत्। उभयं शीतोदकेन वा॥ ७३॥

दृष्टिपरिमार्जनार्थं मुखस्य कान्त्यै त्रिदोषशमनाय॥
सौवीराञ्जनमुक्तं लोचनयो रञ्जनं मुनिना॥ ७४॥

सुगमम्॥ ७३॥ ७४॥

सामान्याञ्जनगुणमाह—

शोभार्थमञ्जनं कृष्णं शलाकाभिर्यथेप्सितम्॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम्॥
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम्॥ ७५॥

पक्ष्मलं घनरोमान्वितम्। कान्तं कमनीयम्। अञ्जनसंयोगादिति। अञ्जनं सौवीराञ्जनादि॥ ७५॥

श्रान्ते प्ररुदिते चैव मद्यपीते नवज्वरे॥
उष्णवेश्मनि दाहे च अञ्जनं नैव शस्यते॥ ७६॥

सुगमम् ॥ ७६ ॥

निर्गदं निर्मलं चक्षुर्भवत्यञ्जनयोगतः ॥
प्रतिमर्शस्ततो देय ऊर्ध्वजत्रुगदापहः ॥ ७७ ॥

सुगमम् ॥ ७७ ॥

मुखशुद्धिश्च पूगादिकर्पूरसुमनःफलैः ॥ ७८ ॥

श्लेष्महननाय कल्पत इति कर्पूरः ॥ ७८ ॥

अभ्यङ्गोत्सादनस्नानगन्धमाल्यादिभूषितः ॥
पादत्रच्छत्रदण्डैश्च विचरेच्च यथासुखम् ॥ ७९ ॥

अभ्यङ्गस्तु विशेषेण कार्यो विपरीतगुणैर्वातं जित्वा वीर्यादिकरत्वात् । उक्तं च—"स्नेहेन रौक्ष्यत्वमपास्य वायोर्यद्गौरवाल्लाघवमाशु तस्य ।
उष्णेन शैत्यं विदधाति तैलं वीर्यं सुवर्णं सुबलं सुपुष्टिम्" इति ॥

स्नेहस्य शिरामुखादिभिः शरीरस्य संतर्पणकालं केचिदत्र पठन्ति—

"रोमान्तेष्वनुदेहस्य स्थित्वा मात्राशतत्रयम् ।
ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ॥
रक्तं व्रजति मात्राणां शतैः पञ्चभिरेव च ।
षड्भिर्मांसं प्रपद्येत मेदः सप्तभिरेव च ॥
शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत् ।
तत्रस्थाञ्शमयेद्रोगान्वातपित्तकफात्मकान्" ॥

उत्सादनं सस्नेहकल्केनोद्धर्षणम् ।

"स्नानालेपनमाल्यानि मनोहर्षं वितन्वते ॥
हर्षणान्मनसो वृष्यं प्रभावादुपजायते" ।

पादत्रच्छत्रदण्डैरिति । पादत्रगुणाः सुश्रुत उक्ताः—

"पादरोगहरं वृष्यमायुष्यं चक्षुषे हितम् ।
सुखप्रचारमोजस्यं सदा पादत्रधारणम्" इति ॥

वृष्यत्वे कारणमाचार्यः प्राह—

"रेतोवहाः पादतलेषु नाड्यः स्थिता उपानद्रहितस्य तासु ।
पित्तानिलाभ्यामभिघातकृच्छ्रामुत्तप्यते वीर्यमवृष्यताऽतः ॥
पादत्रयुक्तस्य तु कारणैः स्वैर्वृद्धं न नाडीषु विशोषमेति ।
हृतेऽपि काम्यादिह वृष्यताकृद्दिष्टः प्रयोगो मुनिभिः प्रदिष्टः" इति ॥ ७९ ॥

श्रोत्रघ्राणशिरःपादतैलनित्योऽथ धूमपः ॥ ८० ॥

कर्णपूरणकालस्य संख्यां वाग्भटः प्राह—

"धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयेत् ।
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने" इति ॥

पादाभ्यङ्गगुणाः सुश्रुत उक्ताः—

"निद्राकरो देहसुखश्चक्षुष्यः पवनापहः ।
पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः" इति ॥

पादचक्षुषोर्व्यवहितावपि पादाभ्यङ्गश्चक्षुष्यः । उक्तं च—

"चक्षुषी प्रतिबद्धे द्वे शिरे पादसमाश्रिते ।
तस्माच्चक्षुष्प्रसादार्थं पादाभ्यङ्गं समाचरेत्" इति ॥

वाग्भटेऽपि—

"द्वे पादमूले पृथुसंनिवेशे शिरे गते ते बहुधा च नेत्रे ।
ता भ्रक्षणोद्वर्तनलेपनादीन्पादप्रयुक्तान्नयनं नयन्ति" ॥ ८० ॥

**पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम् ॥**
**स्वामिनं सर्वभावेन परलोकममायया ॥ ८१ ॥**

सुगमम् ॥ ८१ ॥

**राजन्हरीतकीं भक्ष तक्रं सलवणं पिब ॥**
**भुङ्क्ष्व वास्तुकशाकेन नश्यन्तु तव तेन ते ॥ ८२ ॥**

**तेन त इति** । ते गुदजाः ॥ ८२ ॥

**न वेगान्धारयेन्निद्रावातविण्मूत्ररेतसाम् ॥**
**जृम्भाबाष्पक्षवोद्गारश्वासतृष्णावमिक्षुधाम् ॥ ८३ ॥**

सुगमम् ॥ ८३ ॥

**धारितेषु प्रजायन्ते तन्मार्गस्थानजा गदाः ॥ ८४ ॥**

**तन्मार्गस्थानजा गदा इति** । तेषां मार्गस्रोतसि स्थाने वाऽऽश्रये गदा जायन्त इत्यर्थः ॥ ८४ ॥

**धार्या वेगास्त्वशस्तानां मनोवाक्कायकर्मणाम् ॥**

सुगमम् ॥

**न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ॥ ८५ ॥**

इन्द्रियाणि रसनादीनि कदन्नाशनादिना न पीडयेन्न निगृह्णीयात् । न चैतानीन्द्रियाण्यतिलालयेदतिशयेन विलासयेत् ॥ ८५ ॥

अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ॥
सेवेत विषयान्काले त्यक्त्वा तत्परतां वशी ॥ ८६ ॥
नातिजागरणं निद्रां सर्वभूतहितैषिताम् ॥
देवगोब्राह्मणाचार्यगुरुवृद्धान्सदाऽर्चयेत् ॥ ८७ ॥

सर्वधर्मेषु मध्यमां प्रतिपदं प्रतिपत्तिमनुयायात् । सर्वेष्वाचारेषु मध्यमं मार्गमनुवर्तेत नैकत्राऽऽसक्तिं कुर्यादित्यर्थः ॥ ८६ ॥ ८७ ॥

चतुष्पथे नमस्कर्ता दाता यश्च प्रियंवदः ॥
क्रुद्धानामनुनेता च दीनानामनसूयकः ॥ ८८ ॥
आश्वासकश्च भीतानां बन्धुवत्सर्वदेहिनाम् ॥
रागद्वेषनिदानानां हन्ता धर्मपरायणः ॥ ८९ ॥

दीनानामनसूयक इति । अनसूयकोऽभ्युद्धारकः । बन्धुवदिति । करुणार्द्रमनस्कत्वेन बन्धुरिव । रागद्वेषनिदानानां हन्ता । अहंकारममकारमिथ्याबुद्धयो रागद्वेषहेतवः । रागद्वेषमूलशुभाशुभकर्मप्रसरः प्राणिनाम् । ततो विग्रहसंसारनिगडबन्धः । तं छेदयेत्परं प्रयत्नमाधाय ॥ ८८ ॥ ८९ ॥

नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ॥
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥
शिरश्च पादौ च सदाऽर्चयेद्यः स्त्रियं श्रियं नाभिलषेत्परस्य ॥ ९० ॥

नित्यं सदैव हिताहारविहारौ सेवेत । तच्छीलो यः स एवंभूतो नरः । तथा दाता त्यागी त्यागवान् । तथा समः सर्वेषु भूतेषु समचित्तः । तथा सत्यपरोऽवितथवाक् । तथा क्षमावान्यः शक्तोऽपि कृतापराधदण्डेनानुरूपेण न योजयति । तथाऽऽप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगो भवति । न केवलं प्राक्तनविध्यनुष्ठानेनारोगः संपद्यते । यावदाप्तोपसेवी चेति चशब्दार्थः ।

"येषां त्रिकालमचलं ज्ञानमव्याहतं सदा ।
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्" ॥

इत्याप्तलक्षणमिति ॥ ९० ॥

न कुर्याच्चञ्चलं चेतो न कालमतिपातयेत् ॥ ९१ ॥
प्रणयेनापि नो वाच्यं वचनं परतापि च ॥
अहिंसा सततं कार्या धार्या चित्तस्य नित्यता ॥ ९२ ॥

---

१ क. यष्टा ।

॥ ९१ ॥ ९२ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्रीश्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकाशीतितमः स्वस्थाधिकारः समाप्तः ॥ ८१ ॥

---

## अथ द्व्यशीतितमो मिश्रकाधिकारः ।

---

चिकित्साङ्गभूतप्रशस्तवैद्यादिनिर्देशः पारिशेष्यात् । अतो वैद्यादिपादचतुष्टयं चिकित्सासाधनं निर्दिशन्नाह—

**वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ॥**
**एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥ १ ॥**

व्याध्युपसृष्टो रोगी । परिचारकः शुश्रूषकः पुरुषः । **कर्मसाधनहेतव इति** । आरोग्यहेतव इत्यर्थः । वैद्योऽभिहित आदौ प्राधान्यात् । ततश्च रोगी भेषजस्याधिकरणत्वात् । ततो भेषजं रोगनिवृत्तौ प्रधानकारणत्वात् । शेषात्परिचारकोऽन्ते । **पादा इति** । चत्वारोंऽशाः । पादसंकीर्तनेन च वैद्यादीनामन्यतमवैकल्येऽपि चिकित्सायाः सिद्धिं दर्शयति ॥ १ ॥

वैद्यादीनां गुणानाह—

**तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती ॥**
**लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥ २ ॥**
**प्रत्युत्पन्नमतिर्धीमान्व्यवसायी विशारदः ॥**
**सत्यधर्मपरो यश्च स भिषक्पाद उच्यते ॥ ३ ॥**

**तत्त्वाधिगतशास्त्रार्थ इति** । यथावदधिगतशास्त्रो यथावज्ज्ञाततदर्थश्चेत्यर्थ इति [illegible]लणः । सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । असच्चास[illegible]ति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । तत्त्वेन यथावस्थितोऽधिगतः [illegible]ास्त्रार्थो येनेति सोमः । **दृष्टकर्मेति** । छेद्यादौ स्नेहादौ च कुशल इत्यर्थः । [illegible]यंकृती स्वप्रज्ञया चिकित्सायां प्रवृत्तः । **लघुहस्त इति** । छेद्यादिक्रियासु वेपना[illegible]दोषरहितः । **शुचिरिति** । बाह्याभ्यन्तरशौचयुक्तः । शूरः, अविषादी । **सज्जो[illegible]करभेषज इति** । सज्जानि प्रगुणान्युपस्कराणि यन्त्रशस्त्रादीनि भेषजानि च यस्य [illegible]याप्तथा । **प्रत्युत्पन्नमतिरिति** । यथाकालोचितकार्याभिज्ञः । धीमान्, उक्तदुरुक्तो[illegible]हक्षमः । व्यवसायी, उद्यमपरो गहनेऽपि कर्म कर्तुं व्यवस्यतीत्यर्थः । विशारदः

पण्डितः कृच्छ्रपदमात्रेषु न मुह्यति। सत्यधर्मपर इति। सत्यं मिथ्याभाषणनिवृत्तिः। धर्मः, अनेकसाधनसाध्यः ॥ २ ॥ ३ ॥

**आयुष्मान्सत्त्ववान्साध्यो द्रव्यवानात्मवानपि ॥**
**उच्यते व्याधितः पादो वैद्यवाक्यकृदास्तिकः ॥ ४ ॥**

आयुष्मानिति। प्रधानगुणदोषचिकित्सायाः प्रवृत्तेः। डल्लणस्तु—आयुष्मान्दीर्घायुः। तच्च शारीरलक्षणैरिष्टाभावेन चाभ्यूह्यमिति। सत्त्ववान्क्लेशसहिष्णुः। साध्यः साध्यव्याधियुक्त इत्यर्थः। आत्मवानलोलुपः। वैद्यवाक्यकृत्, वैद्यवचनकरः। आस्तिक इति। दत्तमस्ति हुतमस्ति परलोकोऽस्ति, एवं मतिर्यस्य स आस्तिकः ॥४॥

**प्रशस्तदेशसंभूतं प्रशस्तेऽहनि चोद्धृतम् ॥**
**अल्पमात्रं महावीर्यं गन्धवर्णरसान्वितम् ॥ ५ ॥**
**दोषघ्नमग्लानिकरमविकारि विपर्यये ॥**
**समीक्ष्य काले दत्तं च भेषजं पाद उच्यते ॥ ६ ॥**

अल्पमात्रमित्यत्र युक्तमात्रं मनस्कान्तमिति पाठः। युक्तमात्रं युक्तप्रमाणं मनस्कान्तं मनःप्रियम्। दोषघ्नमिति। दोषशब्देन वातादय उच्यन्ते तद्दूषिता धातुमलाश्च। अथवा दोषघ्नं दुष्टिं हन्ति, अदुष्टिं च कोपयति। अग्लानिकरं हर्षक्षयं न करोतीत्यर्थः। अविकारि विपर्यय इति। विपर्ययेऽयोगादावप्यनतिविकारि। समीक्ष्येति। दोषप्रदेशबलकालविकारसत्त्वसात्म्यौषधानलवयःप्रकृत्यादिकान्परीक्ष्य दत्तमुपयुक्तं काल आवस्थिके वा ॥ ५ ॥ ६ ॥

**स्निग्धोऽजुगुप्सुर्बलवान्युक्तो व्याधितरक्षणे ॥**
**वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥ ७ ॥**

स्निग्धः प्रीतियुक्तः। अजुगुप्सुरातुरव्याधेरगोपको विकारेऽनिन्दकश्च। कष्टबीभत्सव्याधिमत्स्वपि न गर्हां बिभर्ति। बलवानिति। बलवत्त्वात्सर्वक्लेशसहः। युक्तो व्याधितरक्षण इति। युक्त उद्युक्तः। युक्तो निपुण इति डल्लणः। एतेन व्याधितस्य रक्षणे तत्पर इत्यर्थः। वैद्यवाक्यकृत्, वैद्यवाक्य अविकल्पं करोतीत्यर्थः अश्रान्त इति। खेदरहितः ॥ ७ ॥

**स्वदेशे निचिता दोषा अन्यस्मिन्कोपमागताः ॥**
**बलवन्तस्तथा न स्युर्जलजा वा स्थलाहृताः ॥ ८ ॥**
**उचिते वर्तमानस्य नास्ति देशकृतं भयम् ॥**
**आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति ॥ ९ ॥**

स्वदेशे समानगुणदेशे। यथाऽनूपे निचितः कफो जाङ्गलदेशे कुपितो न तथा [illegible] जाङ्गलदेशगुणेनान[illegible]वरोधात्। जलजा वा स्थलाहृता इति। ज[illegible]

जन्तव इव स्थलं नीयमाना अबलवन्तः । वाशब्दोऽत्रेवार्थे । एतच्च वृन्दलिखितक्रमानुरोधाद्व्याख्यातम् । सुश्रुते तु—न तथा बलवन्तः स्युरित्यादिः श्लोकस्याऽऽदौ पाठः । अत्र क्रमे टीकाकाराणां व्याख्या । जलजा अनूपजा रोगाः श्लीपदादयो जाङ्गलदेशं नीता न बलवन्तः । वाशब्दाज्जाङ्गलजा अपि रोगा अनूपं नीता न बलवन्तः । स्वदेशे निचिता इत्यादिनाऽन्°ते वर्तमानस्येत्यादि⋯⋯हेतोश्चितकुपितदोषस्य विसदृशगुणे देश उचि° °°वर्तमानस्या⋯जाङ्गलदेशे यदि⋯स्वप्नादौ वर्तते तद्देशे भवत्येव भयम् । एवमनूपेऽपि व्याख्येयमिति डल्लणः । सुश्रुतपाठक्रमं पठित्वा, एवं व्याख्याति—

"न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः ।
स्वदेशे निचिता दोषा अन्यस्मिन्कोपमागताः ॥
उचिते वर्तमानस्य नास्ति देशकृतं भयम् ।
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति" इति ॥

तुल्यगुणजातस्य रोगस्य विपरीतगुणदोषचिकित्सितं दर्शयन्नाह—**न तथेति** । जलजा अनूपदेशजाः श्लीपदादयः । **स्थलाहृता इति** । जाङ्गलदेशं नीता इत्यर्थः । उक्तव्याधिकारणं दोषचयादि विसदृशदेशाश्रयं प्रथमं दर्शयन्नाह—**स्वदेश इति** । यथाऽनूपदेशे संचितः कफो जाङ्गलदेशे कुपितः । **उचित इति** । न्याय्य इत्यर्थः । यदि पुनराहारादावनुचिते वर्तते न वा भवत्येव भयं यथाऽनूपदेशे संचिते कफे जाङ्गलदेशेऽपि दिवास्वप्नादि कुर्वतः पुरुषस्य भयं भवत्येव । **आहारस्वप्नेत्यादि** । तद्देशस्य गुणे सति जाङ्गलदेशस्य रौक्ष्यौष्ण्यादौ गुणे सत्यप्युचिते वर्तते । एतदुक्तं भवति । यद्यप्याहारस्वप्नचेष्टादयस्तद्देशगुणा अपि सन्ति तथाऽप्युचिते वर्तते कफविपरीतगुणे वर्तत इत्यर्थः । सुश्रुतपाठक्रमे सोम एवं व्याख्याति । अन्यदेशजातस्य व्याधेर्देशान्तरगमनं प्रशमे हेतुमाह—**स्वदेशे निचिता इत्यादि** । स्वदेशे यथाऽनूपे संचितः कफो जाङ्गलदेशप्रकुपित उचिते न्याय्ये यदि पुनराहारादावनुचिते वर्तते तदा भवत्येव भयम् । आहारस्वप्नचेष्टादौ तद्देशस्य जाङ्गलदेशस्य रूक्षोष्णादौ गुणे सत्यप्युचित एव वर्तते । उचिते व्याध्यारम्भकदोषप्रत्यनीक एव वर्तते ॥ ८ ॥ ९ ॥

**विकारेऽल्पे महत्कर्म क्रिया लघ्वी महागदे ॥**
**द्वयमेतदकौशल्यं कौशल्यं युक्तकर्मता ॥ १० ॥**

सुगमम् ॥ १० ॥

**क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ॥**
**पूर्वस्यां शान्तवेगायां न क्रियासंकरो मतः ॥ ११ ॥**

---

१ क. ग. हृतः ।

दोषावस्थाया दुर्लक्षत्वात्......प्रमाणक्रियायोग........तदानीं विश्राम्य तद्वि-परीतगुणाऽन्या क्रिया कार्या। विश्रामो हि पूर्वक्रियाया अशान्त....उभयोरपि निष्फलत्वं स्यात्। अग्निमान्द्यविरोधमौषधपरिमाणेन तथाऽऽहारेणापि पच्यमानेन।

अथ डल्लणव्याख्या—क्रियाफलं यदा न दृश्यते तदाऽन्या क्रिया कर्तव्या। साऽपि विश्रमय्य कालान्तरिता सती कर्तव्येति दर्शयन्नाह—क्रियायास्त्विति। पञ्चरात्रान्तरिता षड्रात्रान्तरिता वाऽन्या क्रिया प्रयोक्तव्या। संकरो युगपद्द्वयोः प्रयोगः॥ ११॥

ब............ममाह—

गुणालाभेऽपि कर्तव्या विश्रामान्तरितक्रिया॥
सैव सैवान्यथा तस्याः पूर्ववत्संकराद्भयम्॥ १२॥

सैव सैवेति वीप्साया दृष्टफलत्वात्। तस्या एवाभ्यासवृत्तिं दर्शयति विश्रामः।

"गुणालाभेऽपि सपदि सैव सैव क्रिया हिता।
कर्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि"॥

इति सुश्रुतपाठक्रमः। तत्र यस्या अपि फलं न दृश्यते साऽपि सप्तरात्राद्विश्रमय्य कर्तव्येत्याह—गुणालाभ इति। सपदि शीघ्रम्। यदा पुनः कृच्छ्रसाध्यो व्याधिस्तदा गुणस्य क्रियाफलस्यालाभेऽपि हिता या क्रिया सैव प्रयोक्तव्या। इति डल्लणव्याख्या॥ १२॥

षड्भिः केचिदहोरात्रैः केचित्सप्तभिरेव च॥
इच्छन्ति मुनयः प्रायो रसस्य परिवर्तनम्॥ १३॥

सुगमम्॥ १३॥

परिवृत्त्या रसस्यैव शान्तवेगा क्रिया मता॥ १४॥

सुगमम्॥ १४॥

चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च॥
सद्वैद्यनृपतिद्वेष्टा तद्विष्टः शोकपीडितः॥
यादृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः॥ १५॥
वैरी वैद्यविदग्धश्च श्रद्धाहीनः सुशङ्कितः॥
भिषजामविधेयश्च नोपक्रम्या भिषग्वरैः॥ १६॥

सुगमम्॥ १५॥ १६॥

एतानुपाचरेद्वैद्यो बहून्दोषानवाप्नुयात्॥
एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः॥ १७॥

---

१ क. घ. भवेत्।

सुगमम् ॥ १७ ॥

चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्मतिः ॥
स यत्करोति सुकृतं तत्सर्वं भिषगश्नुते ॥ १८ ॥

सुगमम् ॥ १८ ॥

नैव कुर्वीत लोभेन चिकित्सापण्यविक्रयम् ॥
ईश्वराणां वसुमतां लिप्सेतार्थं तु वृत्तये ॥ १९ ॥

सुगमम् ॥ १९ ॥

अधुना मानसंख्याया यथासंज्ञासंज्ञिविधानार्थमाह—

गुञ्जाभिः सप्तभिर्माषः शाणो माषचतुष्टयम् ॥
द्वौ शाणौ वटकः कोलस्तौ द्वौ कर्ष उदुम्बरः ॥ २० ॥
अक्षं पाणितलं ज्ञेयं सुवर्णं कवलग्रहः ॥
पिचुर्बिडालपदकं शुक्तिः पाणितलद्वयम् ॥ २१ ॥
तद्द्वयेन पलं मुष्टिः प्रकुञ्चो बिल्वमुच्यते ॥
द्वे पले प्रसृतं विद्यात्तद्द्वयं कुडवोऽञ्जलिः ॥ २२ ॥
मानिकाऽष्टपलं ते द्वे प्रस्थस्तस्माच्चतुर्गुणम् ॥
आढकं कंसपात्रे च चतुर्भिर्द्रोण उच्यते ॥ २३ ॥
तत्पर्याया घटोन्माननल्वणार्मणसूर्पकाः ॥
तुला पलशतं ताभिर्विंशत्या भार उच्यते ॥ २४ ॥

**द्वौ शाणाविति** । द्वौ शाणौ वटकः कोल इति संज्ञाद्वयम् । बदरं द्रङ्क्षणश्चेति संज्ञाद्वयं **वाग्भटा**ज्ज्ञेयम् । अत्र शब्दान्यत्वं न तु तत्त्वतो भेदः । तौ द्वौ कोलौ कर्ष उदुम्बरोऽक्षं पाणितलं सुवर्णं कवलग्रहः पिचुर्बिडालपदकमिति कोलद्वयस्य कर्षाद-योऽष्टौ । तथा तिन्दुको **वाग्भटा**ज्ज्ञेयः । पाणितलद्वयं कर्षौ शुक्तिः । तथा पिचू अष्ट-मिका च **वाग्भटा**ज्ज्ञेया । तद्द्वयेन शुक्तिद्वयेन पलं मुष्टिः प्रकुञ्चो बिल्वमिति संज्ञाचतु-ष्टयम् । आम्रं चतुर्थिकेति संज्ञाद्वयं **वाग्भटात्** । द्वे पले प्रसृतिः । तद्द्वयं कुडवोऽञ्ज-लिश्च । अष्टपलं कुडवद्वयं मानिका । ते द्वे मानिके प्रस्थः । तस्मात्प्रस्थाच्चतुर्गुणमाढकं कंसः पात्रं संज्ञात्रयम् । चतुर्भिराढकैर्द्रोण उच्यते । तस्य पर्याया घट उन्मानं नल्व-णोऽर्मणः सूर्पकश्च । इति संज्ञाः षड्द्रोणादीनां शब्दानां स्वरूपतो भिन्नानां नार्थतो भेदः । पलशतं तुला गद्यते । तानि पलशतानि विंशतिर्भार उच्यते ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥

---

१ क. ध. तत्फलं ।

द्रवार्द्रयोर्विशेषमाह—

**शुष्कद्रव्येष्विदं मानं द्विगुणं तु द्रवार्द्रयोः ॥**
**ज्ञातव्यं कुडवादूर्ध्वं प्रस्थादिश्रुतमानतः ॥ २५ ॥**

वाग्भटेन तु, एवमुक्तम्—

"द्विगुणं योजयेदार्द्रं कुडवादि तथा द्रवम्" ॥

अस्य व्याख्याऽरुणदत्तहेमाद्रिभ्यां सुस्पष्टं कृत्वोक्ता । आर्द्रं त्वौषधं द्विगुणं योजयेत् । पलमित्युक्ते पलद्वयम् । यथा शुष्कार्द्रयोरेकस्मिन्योगे तुल्यपरिमाणेन निर्दिष्टयोः शुष्कद्रव्यादार्द्रं द्रव्यं द्विगुणं दत्त्वा योजयेत् । शुष्कार्द्रयोर्वा द्रव्ययोस्तुल्यपरिमाणनिर्दिष्टयोः शुष्कद्रव्याभावे सति, आर्द्रद्रव्यं द्विगुणं कृत्वा योजयेत् । कुडवादि तथा द्रवमिति । कुडवादि द्रवं च कुडव इत्युक्ते कुडवद्वयम् । यथा शुष्कद्रव्ययोरेकस्मिन्योगे तुल्यपरिमाणेन निर्दिष्टयोः शुष्कद्रव्याद्द्रवद्रव्यं कुडवादिपरिमाणसंज्ञया निर्दिष्टं द्विगुणं कृत्वा योजयेदिति । अनुक्तज्ञानार्थं परिभाषासूत्रं वाग्भटोक्तं यथा—

"पेषणालोडने वारि स्नेहपाके तु निर्द्रवे ।
कल्पयेत्सदृशान्भागान्प्रमाणं यत्र नोदितम् ॥
कल्की कुर्याच्च भैषज्यमनिरूपितकल्पनम्" इति ॥

अस्यार्थः । पेषणालोडने वारि स्नेहपाकेष्वनुक्तद्रवेषु वारि योज्यम् । प्रमाणानुक्तौ समभागत्वम् । कल्पनानुक्तौ कल्कः । अङ्गानुक्तौ मूलम् । प्रसिद्धेषु तदेव । यथा हरीतकीत्युक्ते फलम् । अनिर्दिष्टाप्रसिद्धेषु मूलं ग्राह्यं त्वगादिष्विति संग्रहवचनात् ॥ २५ ॥

**द्वैगुण्यं न तुलामान इति मानविदो विदुः ॥ २६ ॥**

सुगमम् ॥ २६ ॥

मानभेदानाह—

**गोणी द्रोणाढकप्रस्थाः कुडवश्च पलं पिचुः ॥**
**शाणको माषकश्चैव यथापूर्वं चतुर्गुणाः ॥ २७ ॥**

तथा च वाग्भटः—

"शाणं पाणितलं मुष्टिं कुडवं प्रस्थमाढकम् ।
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम्" इति ॥

शाणमानं च संग्रहोक्तम् । षड्वंश्यो मरिचिः । ताः षट्सर्षपः । तेऽष्टौ तण्डुलः । तौ धान्यमाषः । तौ यवः । अतः परं चतुर्गुणवृद्ध्याऽण्डिकामाषकशाणा इति । वंशी

वंशरन्ध्रे प्रविष्टरश्मिस्थं रजः। संग्रहे धरणं तु पलस्य दशमो भागः। माषकस्य पर्यायो हेमधानकश्च। कर्षस्य षोडशिका पलद्वयस्याष्टमानं द्रोणद्वयस्य सूर्प इति। वाग्भटात्कल्पनामाह—

"कषाययोनयः पञ्च रसा लवणवर्जिताः।
रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पनाः।
पञ्च चैव कषायाणां पूर्वं पूर्वं बलाधिकाः" इति॥

अस्यार्थः। द्रव्यादुद्धृतः सारभागः कषायः। लवणस्य तदभावादयोनित्वमिति हेमाद्रिः।

अथेशानस्य व्याख्या—कषायस्य योनय आकरा लवणवर्जिता मधुरादयः पञ्च रसाः। तेभ्यो ये कषायाः स्वरसादयः पञ्च संभवन्ति। आह। कस्माल्लवणस्य कषायत्वं नेष्यते। यावताऽसावपि स्वविषयेषु व्याधिषु च युज्यते। यथा तत्र साध्यमामं प्रदुष्टमलसीभूतमुल्लेखयेत्पाययित्वा लवणमुष्णं वारि तथा क्षौद्राम्बुना रसेनेक्षोरथवा लवणाम्बुनेति। उच्यते। कल्पनासंभवात्प्रयोगासहिष्णुत्वाच्च। या हीमाः कल्पनाः स्वरसाद्यास्तासामन्यतमाऽपि लवणे न संभवति। लवणस्य तु स्वरसकल्पनाया योगो न संभवति। सदैव शुष्करूपत्वात्। कल्ककल्पनाऽपि न संभवति। यतो यद्द्रव्यं द्रवेण सिक्तं पिण्डी भवति न तु विलीयते तत्कल्कसंज्ञामासादयति। न चैवं लवणे संभवति। तथा क्वाथकल्पनाऽपि न संभवति। यस्माद्यद्द्रव्यं क्वाथयित्वा जलादुद्ध्रियते। द्रव्यावयवास्तु केचिदभिषवशिथिला वह्निना प्रच्याव्यमाना जलमनु प्रविशन्ति। केचिद्द्रव्यसक्ता भवन्ति तत्र शृतकल्पना भवति। न चैवं लवणे संभवति। उदकप्रविष्टस्य सर्वात्मना विलयनात्, इति शृतकल्पनाया अप्यसंभवः। शीतकल्पनाऽपि न संभवति। शीतकषायस्य शीतवीर्यैरौषधैः पित्तशमार्थे प्रयोगाल्लवणस्य चोष्णवीर्यत्वात्। फाण्टकल्पनाऽपि न संभवति। यस्मात्सद्योऽभिषुतपूतं यत्तत्फाण्टमभिधीयते। तत्र च कतिपये द्रव्यावयवा जलमनु प्रविशन्ति। भूमानस्तु द्रव्यभाजो भवन्ति। लवणं तु सर्वमेव विलीयते, इत्येवं कल्पनासंभवाल्लवणस्य कषायत्वं नेष्यते। तथा प्रयोगासहिष्णुत्वाच्च। न च लवणस्य केवलस्य प्रयोगः सातत्येन मधुरादीनामिवाऽऽतुरैः शक्येत सोढुम्। अतोऽप्यस्य नैवेष्यते कषायत्वमिति। इत्युक्तं लवणवर्जा रसाः कषाययोनय इति। मुनिनाऽप्युक्तम्—कल्पनावशतः पञ्चानां रसानां कषायसंज्ञा व्यवहरति। न लवणस्य कल्पनायोगाभावात्। मधुरकषायोऽम्लकषायस्तिक्तकषायः कटुकषायः कषायकषायश्चेति तन्त्रसंज्ञेति। पुनः पुनः कषायग्रहणं चात्र मधुरादिषु द्वित्रिचतुष्पञ्चभेदयुक्तेष्वपि कषायसंज्ञासंनिवेशार्थम्। वक्ष्यति—स्वादुरम्लादिभिर्योगमित्यादि। मधुराम्लो मधुरलवण इत्येवंप्रकाराः सर्वे कषायसंज्ञाः। अन्यथा पञ्चेति व्यवस्थाकरणात्केवले-

ष्वेव मधुरादिषु कषायसंज्ञा स्यात्संयुक्तेषु न स्यादिति। रसानां स्वरसादिकल्पनया योगो न संभवति। युक्तं चैतत्। तस्माद्गुणगुणिनोरभेदोपचारादिह रसग्रहणेन तदाश्रयाणां द्रव्याणां ग्रहणं मन्तव्यम्। ननु च मधुराम्लकटुतिक्तकषायाणामपि क्षीरशुक्तमूत्रगुग्गुलुमधूनां स्वरसादिकल्पना न संभवति। मृद्गैरिकाञ्जनादीनां च मधुरादिगुणयुक्तानामपि कषायाभावप्रसङ्गो न केवलं लवणस्येति। नैतदेवम्। मधुरादीनां हि पञ्चानामेकदेशकल्पनासंभवः प्रयोगासहिष्णुत्वं च येषां चासंभवस्ते न ग्रहीष्यन्ते। लवणानां तु सर्वेषामेव कल्पना न संभवति। न च प्रयोगः सोढुं शक्यते। न चैकदेशकल्पनासंभवे कृत्स्नस्य मधुरादेः कषायगणपर्यन्तस्य प्रतिषेधो नोच्यत इति। रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पनाः। पञ्चधैव कषायाणां स्वरसादीनाम्।

तथा च चरकः—

"यन्त्रप्रपीडनाद्द्रव्याद्रसः स्वरस उच्यते।
यः पिण्डः सार्द्रपिष्टानां स कल्कः परिकीर्तितः॥
वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः।
आपोथितं निशाध्युष्टं तोयस्थं शीतमुच्यते॥
चूर्णमुष्णेन संयुक्तं तत्फाण्टमभिधीयते" इति।

तत्र स्वो रसः स्वरसः। य आर्द्रद्रव्यस्य क्षुण्णनिष्पीडितस्य निर्यासः स स्वरसः। कलयतीति कल्को द्रव्यमन्ते नयतीत्यर्थः। कल गताविति पाठात्। क्रियत इति वा कल्कः। श्रपणाच्छृतः। श्रपणं पाकगुणाधानम्। शृतं पाके, इति लक्षणात्। सलिलाभिषवणैः शीतस्पर्शत्वाच्च शीतः। अनायासनिष्पन्नत्वात्फाण्टः। कषायग्रहणं चात्र स्वरसादिकल्पनानामपि कषायत्वोपचारार्थम्। रसेष्वेव मधुरादिषु लवणवर्ज्येषु कषायशब्दो नियमेनावस्थितः। स्वरसाद्यास्वपि कल्पनासु कषायशब्द उपचर्यते मधुरादिस्वभावानतिक्रमात्। यथा चरक उक्तम्। अन्येषां च शीतवीर्याणां यथालाभमोषधीनां कषायं कारयेत्। अत्र शृताख्या कल्पना कषायशब्देनोपचर्यते। एवं द्रव्येष्वपि जीवकादिषु पुनर्नवान्तेषु कषायोपचारो मधुरादिसमावेशादिति। "निशि स्थिता वा परिमर्दिता वा कल्कीकृताश्चूर्णमथ शृता वा" इति चूर्णोपदेशाच्चूर्णकल्पनानुक्तिः कस्मादत्रेति चेन्न। चूर्णस्य कल्केऽन्तर्भावात्पृथगंभणनम्। ननु चूर्णादनन्तरं कल्कः क्रियते न तु कल्कादनन्तरं चूर्णं तस्मात्पञ्चानां कल्पनानां मध्ये चूर्णकल्पनैव निर्देष्टुं युक्ता न तु कल्ककल्पना। युक्तमाह भवान्। किंतु लवणस्य कषायसंज्ञायां समावेशो मा भूदिति कल्पनानां मध्ये कल्क इति निर्देशः कृतो न चूर्ण इति। तस्माल्लवणे न भवति कषायसंज्ञावेश इति। पूर्वं बलावहा इति कल्पनासामान्यात्स्वरसादीनां तुल्यबलत्वे प्राप्त इदमारभ्यते। सा च कल्पना पूर्वं पूर्वं यथापूर्वं बलावहा बलाधिका। एवं फाण्टाख्या कल्पना सबला। ततोऽप्यधिक-

शक्तिः शीताख्या। ततोऽप्यधिकवीर्या शृताख्या। ततोऽप्यधिकशक्तिः कल्काख्या। कल्काख्यायाश्च कल्पनायाः स्वरसाख्याऽधिकशक्तिः। तत्र स्वरसस्य तावत्सर्वेभ्यो बलीयस्त्वमौषधसारत्वाद्द्राक्षेक्षुरसवच्छेषस्य किट्टस्याकिंचित्करत्वात्। कल्कस्य तु कालपरिणामेनाऽऽतपानिलादिभिश्चोपहतरसवीर्यतया स्वरसतो न्यूनबलवत्त्वम्। शृतस्य त्वसकलौषधोपयोगादग्न्यभिभवात्कालपरिणामातपादिभ्यश्च कल्काद्बलावरत्वम्। शीतस्य तु शिशिरजलस्पर्शस्तब्धावयवतया स्वल्पौषधाद्याकृष्टेः शृतादल्पबलवत्त्वम्। फाण्टस्य पुनरल्पकालावस्थायित्वाद्द्रव्यस्य शीतादूनबलत्वमेवेतीशानात्। स्वरसादीनां लक्षणं वाग्भटादाह—

"सद्यःसमुद्धृतक्षुण्णाद्यः स्रवेत्पटपीडितात्।
स्वरसः स समुद्दिष्टः कल्कः पिष्टो द्रवाप्लुतः॥
चूर्णोऽप्लुतः शृतः क्वाथः शीतो रात्रौ द्रवे स्थितः।
सद्योभिषुतपूतस्तु फाण्टस्तन्मानकल्पने॥
युञ्ज्याद्व्याध्यादिबलतस्तथा च वचनं मुनेः।
मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः॥
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना।
मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुष्पलम्॥
पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये।
क्वाथ्यं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम्॥
शीतं पले पलैः षड्भिश्चतुर्भिश्च ततोऽपरम्"।

अस्यार्थः। स्वरसलक्षणमाह—सद्य इत्यादि। यस्मिन्दिने समुद्धृतं तस्मिन्नेव प्रक्षाल्य क्षुण्णं पटपीडितं च यद्द्रव्यं तस्य रसः। कल्कलक्षणमाह—कल्क इत्यादि। शुष्कं द्रवेणाऽऽप्लुत्य पिष्टं कल्कः। अनाप्लुतं चूर्णः। संग्रहे तु—उपलदशनादिपिष्टस्तु कल्कः। सूक्ष्मतान्तवच्युतश्चूर्णः। तस्य समस्तद्रव्यापरित्यागादाप्लुतोपयोगाच्च कल्कादभेदः। दशनपेषणालोडनेनैव द्रवः। कल्कस्य पेषणे पाने चाऽऽप्लुतत्वं चूर्णस्य पान एव समस्तग्रहणेऽप्यशक्यपेषणस्य त्यागान्न कषायलक्षणाभावः। शृतलक्षणमाह—शृत इत्यादि। क्वथनोद्धृतः शुष्कद्रव्यरसः शृतः। संग्रहे तु—स तु भेद्यान्यौषधान्यणुशो भेदयित्वा छेद्यानि च च्छेदयित्वा प्रक्षाल्योदकेन शुचौ रूक्षायामधःप्रतिलिप्तायां ताम्रायोमृन्मयान्यतमस्थाल्यां समावाप्य बहल्पपानीयग्राहितामौषधानामाकलय्य यावता मुक्तरसता स्यात्तावदुदकमासेचयेच्छोषयेच्च। अथ वह्नावधिशृत्य महत्यासने सुखोपविष्टः सर्वतः सततमवलोकयन्दर्व्या च विघट्टयन्मृदुना परितु समुपगच्छताऽनलेन साधयेत्। अवतार्य च सुपरिस्रुतं यथार्हस्पर्शं च प्रयुञ्जीत। क्षीरा-

दिसहितं च द्रव्यं न सम्यङ्मुक्तरसं भवतीति वारिकाथपूर्वकं क्षीराद्यैस्तदुपदेशोऽनुपदग्धं क्काथयेदिति। तदुपदेशे क्षीरादिक्काथोपदेशे वारिक्काथं कृत्वा तं क्काथं क्षीराद्यैः सह समं क्षीरावशेषं क्काथयेत्। एवं ह्यनुपदग्धं द्रव्यम्। केवलक्षीरादिपाके तूपदग्धं स्यात्। शीतलक्षणमाह—शीत इत्यादि। कथनं विना क्काथ्यवत्सकलरात्रिस्थापनोद्धृतः शीतः। फाण्टलक्षणमाह—सद्य इत्यादि। आलोडनसमनन्तरमेव पूतः फाण्टः। अभिषुत आलोडितः। आलोडनं चोष्णोदकेन। उक्तं हि संग्रहे—उष्णाम्भसि क्षुण्णाभिषुतं पूतं फाण्ट इति। उक्तानां कल्पनानां वक्ष्यमाणानां च मानानां विषयभेदमाह—तन्मानेत्यादि। व्याधिबलानुसारेण या कल्पना यया मात्रया यस्योचिता तां तया तस्य युञ्ज्यात्। आदिशब्दादातुरबलानुसारेण या कल्पना यत्रोचिता भवति सा तत्र देया। तेन महति व्याधौ बलवति चाऽऽतुरे स्वरसप्रयोगः। मध्ये कल्कशृतयोः। अल्पे फाण्टशीतयोः। तथा सर्वाणि स्वरसादीनि सर्वस्मिन्व्याधावातुरे च नैव योगीनि। यथा ज्वराणां स्वरसो न युज्यते गुरुतमत्वाज्ज्वरस्याऽऽमाशयसमुत्थत्वाच्च। ग्रहणीरोगिणि शीतफाण्टकषायौ न युज्येते अग्निमान्द्यभयात्। न च सर्वस्मिन्पुरुषे सर्वेषां स्वरसादीनां यौगिकत्वं कस्यचित्कचिन्मनःप्रतीघातात्। किंच न चापि सर्वस्य द्रव्यस्य सर्वाः कल्पनाः संभवन्ति विडङ्गमधुकादीनां स्वरसस्यासंभवात्। किंच, एकस्मिन्द्रव्ये सर्वकल्पनासंभवेऽपि केनचिदपि कल्पनाविशेषेण संस्कृतं द्रव्यमीप्सितार्थसंपादनसमर्थं जायते।

यथा—"मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्या एषोऽनुकल्पः खलु शङ्खपुष्प्याः"॥

अत एव कानि च द्रव्याणि विशिष्टकल्पनापरिग्रहेणोक्तानि तथा तेषां कर्मणि सामर्थ्यात्। अन्यथा तत्र द्रव्यमात्रमेव कल्पनाविरहितमवक्ष्यदिति। मन्दबुद्ध्यर्थं तु मध्यमं मानमुपदिश्यते। तत्र रसस्याऽऽह—मध्यमित्यादि। पेष्यस्याऽऽह—पेष्यस्येत्यादि। कल्कचूर्णयोः कर्षं तदालोडनद्रवस्य पलत्रयम्। शृतस्याऽऽह—क्काथमित्यादि। शृते क्काथ्यस्य पलं द्रवस्य षोडश पलानि चत्वार्यवशेष्याणि। शीतस्याऽऽह—शीतमित्यादि। शीते द्रव्यस्य पलं द्रवस्य षट्पलानि। फाण्टस्याऽऽह—चतुर्भिरित्यादि। फाण्टे द्रव्यस्य पलं द्रवस्य चत्वारि पलानि। अनयोरनवशेष्यत्वं कथनाभावात्। यावत्पूतं तावत्पेयमिति।

"पादशेषः स्नेहविधौ क्काथस्तोये चतुर्गुणः" इति।

"स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम्।
कल्कस्नेहद्रवं योज्यमधीते शौनकः पुनः॥

स्नेहे सिध्यति शुद्धाम्बुनिष्काथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥
पृथक्स्नेहसमं दद्यात्पञ्चप्रभृति तु द्रवम् ।
नाङ्गुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥
वर्णादिसंपच्च यदा तदैनं शीघ्रमाहरेत् ।
घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः ॥
लेहस्य तन्तुमत्ताऽप्सु मज्जनं शरणं न च ।
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥
मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ।
किंचित्सीदति कृष्णे च वर्त्यमाने च पश्चिमः ॥
दग्धोऽत ऊर्ध्वं निष्कार्यः स्यादामस्त्वग्निसादकृत् ।
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः" ॥

अस्यार्थः । स्नेहपाके मानमाह—स्नेहपाक इत्यादि । कल्काच्चतुर्गुणः स्नेहः स्नेहाच्चतुर्गुणं द्रवम् । शौनकमानमाह—अधीत इत्यादि । निष्काथे द्रवे कल्कात्षड्गुणः स्नेहः स्वरसेऽष्टगुणः । अत्र चतुर्गुणः क्षीरादिषु शुद्धाम्बुप्रक्षेपस्यावकाशत्वात् । रसक्वाथयो परस्परमन्यैर्वा संकरे सामान्यपरिभाषाविषयत्वात्संकीर्णे हि द्रवोत्तरम् ।

"शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काढ्यत्वात्प्रशंसन्ति पुष्पकल्कं चतुर्थकम्" ॥

विशेषान्तरमाह—पृथगित्यादि । यत्र चतुर्भ्योऽधिकानि द्रवाणि तत्र पृथक्स्नेहसमानि न तु परस्परसाम्येन मिलितानि स्नेहाच्चतुर्गुणानि । संग्रहेऽप्युक्तम्—समुदितद्रवस्य पादेन स्नेहो योज्य इति । सर्वद्रवाणां युगपत्प्रक्षेपः । तथैकध्यं प्रति संसृज्याधिशृत्य च निर्यूहवत्साधयेदिति संग्रहवचनात् । अनिरूपितकल्पनं च भेषजं कल्की कुर्यात् । कल्कानुक्तौ निरूपितकल्पनमपि । यतः क्वाथस्ततः कल्क इति परिभाषितवचनात् । पक्वस्नेहलक्षणमाह—नाङ्गुलीत्यादि । घृततैलयोः फेनोपशमोद्भवौ विशेषौ । पक्वलेहलक्षणमाह—स्नेहस्येत्यादि । तन्तुमत्त्वमुदकमज्जनमविशीर्णत्वं च । स्नेहलेहौ क्वाथभेदौ । तयोर्मानमुत्तमस्य पलं मात्रेत्यादिनोक्तं क्वाथ्यौषधशब्देन लेहस्यापि ग्रहणात् । स्नेहपाकभेदानाह—पाकस्त्वित्यादि । तत्र कल्कसमे किट्टे मन्दः । पाकेन स्नेहात्पृथग्भूतकल्कः किट्टः । वैवर्ण्याद्यभावात्कल्कसमत्वम् । मदनोपमे चिक्कणः । मदनं मधूच्छिष्टम्[1] । पश्चिमः खराचिक्कणः । सीदति म्लायति ।

१ "स्याऽऽवश्यकत्वादिति पाठः ।

अत ऊर्ध्वं पश्चिमादूर्ध्वं दग्धः स च निष्फलः । मन्दादर्वागामः । स चाग्निमान्द्यकृत् । त्रयाणां विभेदानाह—मृदुरित्यादि ॥ २७ ॥

सम्यक्प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम् ॥
सिद्धिराख्याति सर्वैश्च गुणैर्युक्तं भिषक्तमम् ॥ २८ ॥

कः पुनर्हेतुर्येनावश्यं ज्ञायतेऽनेन भेषजेनेदं कृतमिति । ब्रूमः । सर्वेषां कर्मणां यः सम्यक्प्रयोगस्तं सिद्धिराख्याति प्रथयति । दृश्यन्ते च लोके वक्तारो नूनमनेनेदं सम्यगनुष्ठितं यदमुनाऽस्य सिद्धिर्जातेति । न च केवलं सिद्धिः कर्मणां सम्यक्प्रयोगमाख्याति किं तर्हि सर्वैर्गुणैर्युक्तं भिषक्तममपि सिद्धिरेवाऽऽख्याति ॥ २८ ॥

इति विविधमुनीनां वाक्यमालोक्य यत्ना-
त्स्वमतिपरिमितैर्विख्यातिमद्भिः प्रयोगैः ॥
ग्रथित इह मयाऽयं संग्रहो वृन्दनाम्ना
सपदि स हि लिखित्वा सिद्धयोगः समाप्तः ॥ २९ ॥

सुगमम् ॥ २९ ॥

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां
श्रीश्रीकण्ठदत्तविरचितायां व्याख्याकुसुमावल्या-
ख्यायां द्व्यशीतितमो मिश्रका-
धिकारः ॥ ८२ ॥

श्रीकण्ठदत्तभिषजा ग्रन्थविस्तरभीरुणा ॥
टीकायां कुसुमावल्यां व्याख्या मुक्ता क्वचित्क्वचित् ॥ १ ॥
रत्नं नागरवंशस्य भिषग्भाभल्लनन्दनः ॥
नारायणो द्विजवरो भिषजां हितकाम्यया ॥ २ ॥
भाष्याणि डल्लणादीनि बहुशो वीक्ष्य यत्नतः ॥
टीकापूर्तिं व्यधात्सम्यक्तेन नन्दन्तु साधवः ॥ ३ ॥

समाप्तोऽयं वृन्दमाधवापरनामा सिद्धयोगः ।